हरदत्तः । **श्रितादीति** । श्रितादीनां यद्यपि संबोधने सुबन्तत्वं संभवति तथाऽपि अन्यत्रापि समासस्येष्टत्वात् श्रितादयस्तद्घटितसमुदाये लाक्षणिकाः । प्रायेण समासतद्धितप्रकरणे एवमेव । "खट्वा क्षेपे" "गर्गादिभ्यो यञ्" इत्यादिसामान्यापेक्षज्ञापकात् । न हि खट्वेत्यस्य द्वितीयान्तत्वं गर्गादीनां षष्ठ्यन्तत्वं वा संभवति । "येन विधि"रिति सूत्रस्थभाष्ये वृत्तिग्रन्थोऽपीह मानम् । तत्र कैयटहरदत्तादीनां तु महान् प्रमाद इति शब्दकौस्तुभे प्रपञ्चितमिति भावः ।

यत्तु वदन्ति । श्रितादीनां कृदन्तत्वेन गतिकारकोपपदानामिति सुबुत्पत्तेः प्रागेव समास इष्टः । अन्यथा काष्टश्रितेयो न सिद्ध्येदत एव किल प्राचा श्रितादिभिरित्येव व्याख्यातं न सुबन्तैरिति । तन्न । प्रधानस्त्रीप्रत्यये तदादिनियमाभावेन काष्टश्रितेयस्य निर्बाधत्वात् । यदपि श्रितादिशब्दादपि कदाचित्स्यादिति । तदपि न, सापेक्षत्वेनासामर्थ्यात् । गतिका(१)रकेत्यादेस्तु

---

धने इति । **एवं च तत्रैवानेन समासः स्यादिति शङ्का** । तद्घटितेति । **तत्प्रकृतिकसुबन्तेत्यर्थः** । "गर्गादिभ्य" इति । **तद्धितविधौ सुप इति नाधिकारः । तत्सम्बन्ध्यपत्यमित्यर्थे गर्गादिभ्यः प्रत्यय इत्यर्थे तदर्थबोधस्य सुबुत्पत्तिं विनासम्भवात् परिपूर्णं पदं पदार्थान्तरेणान्वेतीति कुत्सित इति सूत्रोक्तभाष्याच्च । सुबुत्पत्त्यनन्तरं सामर्थ्यात् सुब्व्यवहिता प्रत्ययोत्पत्तिरिति किमर्थं तत्र लक्षणा कथं वा तस्यज्ञापकत्वमिति चिन्त्यम् ।** तत्र कैयटेति । **'समासप्रत्ययविधौ प्रतिषेध' इति वार्तिकव्याख्यावसरे श्रितस्य श्रितान्तस्य च सुबन्तत्वाभावमाशङ्क्य सम्बुद्धौ सम्भव इत्युक्तम् ।** प्रमाद इति । **कष्टं श्रितः कष्टश्रित इत्यत्र यथा स्यात् कष्टं परमश्रित इत्यत्र माभूदिति भाष्यविरोधादिति भावः । समर्थेनेत्यस्य विशेष्यत्वमादाय प्राप्तस्य तदन्तविधौ समासप्रत्ययेति निषेध इति तात्पर्यम् ।**

सुबुत्पत्तेरिति । **स्त्रीप्रत्ययोत्पत्तेरित्यपि बोद्ध्यम् ।** न सिद्ध्येदिति । **श्रितशब्देन समासे ततष्टापि समुदायस्य स्त्रीप्रत्ययान्तत्वात् ढक्सिद्धिः । श्रिताशब्देन समासे तु समुदायस्य टाबन्तत्वाभाव इति तद्भावः** । सापेक्षत्वेनेति ।

---

समासान्तानाम् समासावयवत्वेऽपि तत्प्राग्भागस्य विभक्तिपरकत्वाभावः तद्विशिष्टस्य सरूपत्वम् इति हेतोरेकशेषो न प्राप्नोति इति बुद्ध्या तद्भाष्यस्य सुयोजत्वात् । "अन्त" इति [illegible]पक्षस्य विरुद्धत्वाच्चेति दिक् ।

(१) गतिकारकेति । अनेन कारकतद्विशेषोपादाने एव गतिकारकोपपदानामिति

नायं विषयः। कर्तृकरणे कृता, साधनं कृतेतिवत् "द्वितीया श्रितेति" सूत्रे कारकतद्विशेषयोरनुपादानादिति दिक्।

---

**ननु कारकांशे क्रियाया नित्यसापेक्षत्वेन को दोषः। न च सापेक्षत्वेन कष्टशब्देनैकार्थीभावापन्नत्वेन ढगर्थापत्येन निष्कृष्य तस्य केवलस्यैकार्थीभावो दुरुपपाद इति असामर्थ्यमिति तदर्थ इति वाच्यम्। परमगार्ग्यस्यापत्यार्थे परमगार्ग्यायण इति प्रयोगस्य येन विधिरिति सूत्रभाष्यसंमतत्वेन तदनुपपत्त्या निष्कृष्यैकार्थीभावाभावे ऽपि यथा कथञ्चिदेकार्थीभावमादाय वृत्तेर्भाष्यसंमतत्वादिति चेन्न। समुदायाट्टापि तदादिनियमाभावेन केवलाद्दापत्तेर्दुर्वारत्वमिति दोषस्यानेनोपलक्षणात्।**

दिगिति। **दिगर्थस्तु "उपपदमतिङिति" सूत्रस्थेन षष्ठीसमासादुपपदसमासो विप्रतिषेधेन न वा षष्ठीसमासाभावादुपपदसमास इत्यन्तरङ्गत्वाभिप्रायमुक्त्वा तदुभयप्रत्याख्यानपरेण तदुत्तरेण "अथवा विभाषा षष्ठीसमासो यदा न स तदोपपदसमासो भविष्यतीति" भाष्येण यथा कथञ्चित्कारकोपादाने ऽपि तत्परिभाषाप्रवृत्तेः। षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव 'गतिकारकेति' स्वरश्च षष्ठीसमासे ऽपीत्युभयोः समत्वेनान्तरङ्गत्वाभावे ऽपि न क्षतिः। एकसञ्ज्ञयोरेवोभाभ्यामपि प्रवृत्त्या विरोधाभावेन युगपदेवोभाभ्यां सञ्ज्ञाद्वये जाते यदा न षष्ठीसमासो न तत्कृतैकार्थीभावकृतदो-**

---

परिभाषा प्रवर्तत इतिप्राचोक्तमपास्तम्।

परेतु—कारकतद्विशेषोपादाने एवैषा प्रवर्तते अस्याः विध्येकवाक्यत्वाभावेऽपि यत्र कारकत्वव्याप्यधर्मावच्छिन्नबोधकं पदं, तत्र शास्त्रे सुपेति नानुवर्तते इत्यस्य वक्तुं शक्यत्वात्। न च षष्ठीति सूत्रे कारकतद्विशेषोपादानाभावेन एतदप्रवृत्त्या 'अथवा विभाषाषष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमास' इति भाष्यासंगतिरिति वाच्यम्। विभाषाधिकारस्य पाक्षिकैकार्थीभावबोधकतयैकार्थीभावे समासस्य नित्यत्वेन षष्ठीसमासाभावपक्षे एकार्थीभावस्याभावेनोपपदसमासाप्राप्त्याऽस्य भाष्यस्यैकदेश्युक्तित्वेन तद्विरोधस्याकिञ्चित्करत्वात्। अत एव "पारेमध्ये षष्ठ्यावा" इत्यादौ वाग्रहणं चरितार्थम्। किञ्चैवं "षष्ठीति" सूत्रे एतत्परिभाषया सुपेत्यस्य निवृत्तौ राजपुरुष इत्यादावपि सुबुत्पत्तेः प्राक् समासापत्तिः। वाक्यार्थभेदेनार्थद्वयकरणे तु न मानम्। किंचाथवेतिभाष्यस्योभयप्रत्याख्यानपरत्वमप्ययुक्तम्। प्रत्याख्यानस्थले अथवेतिशब्दस्य भाष्ये क्वाप्यदर्शनात्। "तत्तर्हि वक्तव्यमवक्तव्यम्" इत्यादिरीत्यैव प्रत्याख्यानस्य भाष्यशैलीसिद्धत्वात्। भाष्यकृता तु—षष्ठीसमासादुपपदसमासो विप्रतिषेधेन अथवा विभाषाषष्ठीसमासो यदा न षष्ठीसमासस्तदाउपपदसमास इतिवार्तिकक्कदुक्तप्रकारद्वयस्य न वा षष्ठीसमासाभावादुपपदसमास इत्यनेनोपपदसमासस्यान्तरङ्गत्वोपपादनेन प्रत्याख्यानं कृतम्। अत एव

(१)**कृष्णमिति**। इह श्रितादिषु गत्यर्थत्वात्कर्तरि क्तः। श्रयणं प्राप्तिरापत्तिश्चेह गतिरेव न तु फलम्। अत्यासात्तिस्तु व्यतिक्रमः। सोऽपि गतिविशेषणमेवेति प्राञ्चः। यद्वा श्रित इत्यादावादिकर्मणिक्तः। **ग्रामं गमीति**। गमेरित्यौणादिक इनिः। स च भविष्यत्काले "भविष्यति गम्यादय" इत्युक्तेः। "अकेनोरिति" कृद्योगलक्षणषष्ठीनिषेधात्कर्मणि द्वितीया।

यत्तु गत्यर्थकर्मणीति सूत्रे द्वितीयाग्रहणस्य कृद्योगलक्षणषष्ठीबाधनार्थतामाहुः। तद्भाष्यविरुद्धम्। भाष्ये तत्सूत्रं प्रत्याख्याय कृद्योगे षष्ठ्या एव स्वीकारादित्यन्यत्र विस्तरः।

**खट्वारूढ**(२)**इति**। 'जाल्मोऽसमीक्ष्यकारी स्या'दित्यमरः।

वेदं व्रतानि च समाप्य समावृत्तेन हि खट्वारोढव्या। ब्रह्मचर्य एव भूमिशयनार्होऽपि यः खट्वामारोहति स जाल्मः। रूढश्चायम्। तेन खट्वामारोहतु

---

**पपदसमासस्तत्कृतैकार्थीभावो भविष्यति स्थास्यतीत्यर्थकेन यद्यपि यथा कथञ्चित्कारकोपादानेऽपि तत्प्रवृत्तिरिति लभ्यते, परिभाषायां सामान्यतः कारकपदोपादानेन तस्याः कारकमात्रविषयत्वौचित्यात्। अन्यथा कर्तृकरणोपपदानामित्येव वदेत्। तथाऽपि तदुक्तप्रयोजनासिद्धिरेवात्र दूषणमिति। एवं चेदृशेषु सुपेत्यस्य सम्बन्धेऽपि न क्षतिरिति बोध्यम्।**
न तु फलमिति। **तेन मुख्यगत्यर्थत्वाभावात्कथं कर्तरि क्तः कथं वा कर्मणि द्वितीयेत्यपास्तम्।** यद्वेति। **अत्रापि पक्षे फलानुकूलव्यापारो धात्वर्थ इत्यावश्यकमेव। प्रत्यासत्तेरगतित्ववादिनां मते तदर्थमावश्यकमिदम्।**
द्वितीयाग्रहणस्येति। **चतुर्थी चेत्येव सिद्धे तत्सामर्थ्यात्षष्ठीबाधकत्वमित्याशयः।** प्रत्याख्यायेति। **संदर्शनादिपरत्वे धात्वर्थस्य कर्मतया "कर्मणा यमभि-**

---

(१)**कृष्णमितीति**। "नलोके"ति षष्ठीनिषेधः। ननु कृष्णश्रित इत्यत्र कृष्णकर्मकश्रयणकर्तेति शाब्दोऽर्थः सच कृष्णः श्रितो येनेति बहुव्रीहिणापि सुलभः किमनेन समासारम्भेणेति चेन्न। बहुव्रीहौ कृष्णश्रित इत्यत्र निष्ठान्तस्य पूर्वनिपातप्रसंगात्। शेषाद्विभाषेतिसमासान्तप्रसङ्गाच्चेति दिक्।

(२)**खट्वारुढ इति**। खट्वा अम् आरुढ सु इत्यलौकिकविग्रहः लौकिकस्तुनास्तीति भावः। एतावतैवास्य नित्यसमासत्वम्।

मा वा, निषिद्धानुष्ठानपरः सर्वोऽपि खट्वारूढ इत्युच्यते । अत एवाह—**नित्येति । मासप्रमित इति** । माङ् माने आदिकर्मणि कर्तरि क्तः। इह प्रतिपच्चन्द्रेण नास्त्यत्यन्तसंयोगः। **मुहूर्तमिति** । मुहूर्तव्यापीत्यर्थः । "कालाध्वनोरत्यन्तसंयोगे" ।

## इति द्वितीया ।



(१)**तृतीया तत्कृतार्थेन गुणवचनेन** । तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते । तदर्थकृतत्वं गुणवचनस्यार्थद्वारकं विशेषणम् ।

एवं स्थिते फलितमर्थमाह—**तृतीयान्तार्थेत्यादि** । कृतो यो गुणस्तद्वचनेनेत्यर्थः ।

**धान्येनेति** । करणे तृतीया अर्थ्यते इत्यर्थः प्रयोजनम् । अर्थनमर्थोऽभिलाषो वा अर्थशब्दस्य रूढत्वे तु धान्येनेति हेतौ तृतीया ।

"**पूर्वसदृश**" । इह समसदृशाभ्यां योगे तुल्यार्थैरिति तृतीया, अन्यैर्योगे हेताविति अत एव वचनाद्वा । इह सदृशग्रहणं व्यर्थं षष्ठीसमासेन

---

**प्रैति" इति संप्रदानत्वे चतुर्थ्यास्तदपरत्वे कर्मणि द्वितीयायाश्च सिद्धिमाश्रित्य तत्प्रत्याख्यातमाकरे ।**

नित्येतीति । **समाससमानार्थकवाक्याभावेन तत्त्वाभिमानः ।**

## इति द्वितीया ।



अर्थद्वारकमिति । **गुणवचनस्य शब्दत्वादिति भावः । नन्वेवं कर्तृकरणे इत्येव सिद्धमत आह**—रूढत्वे त्विति । **धनरूढत्वे त्वित्यर्थः । अर्थैर्विभवा अपीत्यमरादिति भावः । एतदभिप्रायेणैवार्थग्रहणमिति तात्पर्यम् ।**

**श्लक्ष्णनिपुणयोगे हेतुत्वसम्भवेऽपि सर्वत्र हेतुत्वोपपादनासम्भवरूपारुचेराह**—वचनाद्वेति । व्यर्थमिति । **सदृशशब्दयोगे प्रतिपदोक्त(२)या तु**

---

(१)तृतीयेति । तृतीयेत्यनेन तृतीयान्तं विवक्षितम् । "तत्कृतेति" लुप्ततृतीयाकं

यद्वा पुरुषेषूत्तम इति निर्द्धारणसप्तम्याः संज्ञायामिति समासः। न चैवं "न निर्धारण" इति व्यर्थम्। स्वरे भेदात्। सप्तमीसमासे हि पूर्वपदप्रकृतिस्वरः। षष्ठीसमासे तु अन्तोदात्तत्वं स्यात्।

**"पूरणगुण"**। अत्र प्राचोक्तम्। तदर्थः षष्ठी न समस्यत इति। तन्न्यूनम्। एवं हि सुहितान्तानामेव ग्रहणं स्यात् तावतामेवार्थशब्देन समस्तत्वादिति ध्वनयन्नाह—**सदादिभिश्चेति**। अत्र व्याचख्युः। पूरणार्थशब्दः प्रत्यय एव गृह्यते कृत्रिमे कार्यसम्प्रत्ययादिति। तन्मन्दम्। न हि प्रत्ययविशेषाणां पूरणार्थत्वं टिघुभादिवत्सञ्ज्ञासूत्रैर्लब्धमस्ति येनोक्तपरिभा-

---

**ऽत्र समास इति भावः। सामान्यत एव षष्ठीसमासनिषेधयोः प्रवृत्तिरिति वैतण्डिकमतमभ्युपेत्याह**—यद्वेति। सञ्ज्ञायामिति समास इति। **'हलदन्तादि'त्यलुक् तु न, अलुकि सञ्ज्ञात्वभङ्गापत्तेः। कृतालुकः सञ्ज्ञात्वे हि तेन तस्य साधुत्वान्वाख्यानम्। अत एव रघुनाथादौ णत्वं न। सर्वनामानीत्यत्र निपातनाण्णत्वाभाव इत्यस्य त्वयमाशयः। स्वायत्तसञ्ज्ञाकरणे शास्त्रानुगताया एव कर्त्तुमौचित्येनाकृतणत्वस्यैव सञ्ज्ञात्वेनोच्चारणं तादृशस्यैव साधुत्वार्थम्। तदुक्तम्—बाधकान्येव निपात(१)नानीति। सञ्ज्ञायां नृद्विज इत्यादि तु नेष्यतएव "अभिधानलक्षणाः कृत्तद्धितसमासा" इति "अकर्त्तरि च कारके" इत्यत्र भाष्योक्तेरिति दिक्।**

पूरणार्थम्। **तत्सञ्ज्ञकत्वम् कृत्रिमाकृत्रिमन्यायस्य स(२)ञ्ज्ञाविषय-**

---

इत्यादौ तु तादृशसम्बन्धेन नरवृत्यभावप्रतियोगिशौर्यमिति बोधः। इत्याहुः। विस्तरस्तु "यतश्च" इतिसूत्रटिप्पणे द्रष्टव्यः।

(१)**बाधकान्येव निपातनानीति**। सर्वनामसञ्ज्ञासूत्रे इदमेव पठितम्। वृत्तिकृता तु पुरातनशब्दस्य लोकेसाधुत्वार्थम् अबाधकान्यपीति पठितम्। अतएव श्रावणी इत्यपिसिद्ध्यति। एतच्च सर्वादिसूत्रस्थभाष्यविरुद्धम्। तत्रहि बाधकानि निपातनानि इतिस्वीकारे अपरस्पराः क्रियासातत्ये इति निपातनात् समो मस्य लोपेन सततशब्दस्य लोके साधुत्वेऽपि सन्ततशब्दस्यासाधुत्वापत्तिरित्याशङ्क्य समो वा हिततयोरिति यत्नान्तरस्वीकारेण समाहितम्। अबाधकानीत्यस्य सत्त्वे तु तेनैव संतत इत्यस्यापि सिद्धिरिति वचनारम्भो भाष्यकृतो व्यर्थः स्यात् श्रावणी इति तु पृषोदरादिरिति भाष्याशयः।

केचित्तु—"विभाषाफाल्गुनी"तिनिर्देशज्ञापितस्य पौर्णमास्यामयं लुब् नेति निषेधस्य तत्रैव सूत्रे श्रवणा इतिनिर्देशेनानित्यत्वज्ञापनात् श्रावणीतिसिद्ध्यतीति वदन्ति॥ "अतिशा·

षाऽवकाशमासादयेत । कुतस्तर्हि पूरणप्रत्ययान्ताः षष्ठादय एवेह गृह्यन्ते, न तु पूरणोम्भनादिशब्दा इति चेत् ? लोपे चेत्पादपूरणमिति निर्देशादित्यवधेहि । तेन 'कुम्भपूरणभवः पटुरुच्चैः' इत्यादि सिद्धम् । कथं तर्हि 'तान्युञ्छषष्ठाङ्कितसैकतानी'ति ? प्रमाद एवायमित्येके ।

वस्तुतस्तु उञ्छेषु षष्ठ उञ्छात्मकः षष्ठ इति वा व्याख्येयम्

यत्तु(१)पूरणेति स्वर्यते तेनाधिकारावगतिः । अयं तु भागार्थक-अन्-प्रत्ययान्त इति । तन्न । अन्प्रत्ययान्तेनापि निषेधस्य द्वितीयतृतीयेति सूत्रे भाष्ये एव स्पष्टत्वात् । अत एव भिक्षाद्वितीयमित्यादावन्यतरस्याङ्ग्रहणसामर्थ्यात् समास इति तत्रोक्तम् ।

ननु ब्राह्मणस्य शुक्ला इत्यत्र समासप्रसङ्ग एव नास्ति, ब्राह्मणशब्दस्य दन्तैरेवान्वयात् । ब्राह्मणस्य ये दन्तास्ते शुक्ला इत्यर्थादत आह—**यद्वेति**। शुक्लशब्द एवेह विशेष्यसमर्पक इति भावः ।

यत्तु भावप्रत्ययान्तो गुणवाच्यत्र निषिध्यते इति प्राचोक्तम् । तन्न । उक्तोदाहरणस्य भाष्यारूढस्यासङ्गतिप्रसङ्गात् । यदपि सदा गुणवाचिनो न निषेध इति । तदपि न । भावप्रत्ययान्तस्य गुणवाचितया पूर्वग्रन्थविरोधात् ।

यत्तु व्याचक्षते भावेत्यादेर्भावप्रत्ययान्त एव निषिध्यत इति नार्थः, किं तु भावप्रत्ययान्त एव सन् यो गुणमाह । तदभावे तु गुणं गुणिनं च सशुक्लादि-

---

**त्वादिति भावः ।** उञ्छेष्विति । **अधिकरणे सप्तमी । पादपूरणमिति निर्देशेन पूरणेन निषेधस्यानित्यत्वं ज्ञाप्यते । तेन कुम्भपूरण इत्यादि, उञ्छषष्ठेत्यादि च सिद्धमित्यन्ये ।** भाष्ये एवेति । **एवञ्च स्वरितत्वकल्पनं भाष्यविरुद्धमिति भावः ।** उक्तोदाहरणस्येति । **ब्राह्मणस्य शुक्ला इत्यस्येत्यर्थः ।**

गुणवाचितयेति । **सदा गुणवाचितयेत्यर्थः ।** पूर्वग्रन्थेति । **पूर्वं तेन समासप्रतिषेधस्योक्तत्वेन पुनः स्वेन तत्स्वीकारो विरुद्ध इति भावः ।**

भावप्रत्ययान्त एवेति । **भावप्रत्ययान्तः सन्यो गुणमेवाहेत्यन्वयः तदाह**-तदभावे गुणं गुणिनं चेति। **घटस्य शुक्लो घटःशुक्ल इत्युभयविधप्रयोगदर्शनादिति भावः ।**

---

(१)**यत्तु पूरणेतीति** । प्रकृतसूत्रे भाष्ये तु सति किमुदाहरणम् ब्राह्मणकुर्वन् इत्युदा-

रेव निषिध्यते । सदेति । अन्तरेणापि भावप्रत्ययं यो गुणमेव वक्ति गन्धादिशब्दस्तस्य न निषेध इति । तदपि क्लिष्टं, पुनरुक्तिग्रस्तं, काकस्य कार्ष्ण्यमित्यादावव्याप्तं च। उक्तव्याख्यायां हि शुक्लादीनामेव निषेधो लभ्यते न तु शौक्ल्यादीनाम् । न हि शौक्ल्यादिशब्दा भावप्रत्ययं लब्ध्वा निष्कृष्टं गुणमाहुः, न वा तदभावे गुणं गुणिनं च; किं तु अन्तरेणापि भावप्रत्ययं गुणमात्रपरत्वाद्रूपरसगन्धादिशब्दतुल्या एव । न च शौक्ल्यमिति कार्ष्ण्यमिति भावप्रत्ययोऽस्त्येवेति वाच्यम् । तस्य शुक्लकृष्णादिशब्दैर्लब्धत्वेऽपि शौक्ल्यादिशब्दैरलब्धत्वात् । अन्यथा तदभावे त्वित्यादिस्वग्रन्थेनैव सह विरोधापत्तेरिति अवहितैराकलनीयम् । यदि तु प्राचो ग्रन्थोऽपि योज्य इत्याग्रहस्तर्हीत्थं योज्यताम्—सदेत्यादि तावद्यथाश्रुतम्। चन्दनगन्ध इत्युदाहरणं च । अस्यापवादं प्रथममाह—भावेति ।

ननु अस्तु नामेयं योजना आकरग्रन्थात्तु कथमेतावान् सिद्धान्तो लब्ध इति चेत् ? शृणु । सूत्रे गुणार्थ इत्यनेन केवलगुणस्य गुणोपसर्जनद्रव्यस्य च प्रतिपादको गृह्यते । व्याप्तिन्यायात् काकस्य कार्ष्ण्यं, ब्राह्मणस्य शुक्ला इति द्वेधा भाष्ये उदाहरणाच्च । चन्दनगन्ध इत्यादौ तु निषेधे प्राप्ते तत्स्थैश्च गुणैरिति वचनेन समासः प्रतिप्रसूयते । गन्धत्वेन हि प्रतीयमा-

---

गुणमेवेति । न गुणिनमित्यर्थः। क्लिष्टमिति । भावप्रत्ययान्तो गुणवाचीति शब्देनाक्षरमर्यादया तदर्थालाभात् क्लेशः । पुनरुक्तीति । शुक्लादिरेवेत्यनेनैव गन्धादिभिर्न निषेध इत्यर्थलाभेन सदेत्यादि पुनरुक्तिग्रस्तमित्यर्थः । निष्कृष्टंगुणमिति । गुणमेव नाहुः किंतु गुणगताञ्जातिमाहुरित्यर्थः । तुल्या एवेति । तेन तत्र निषेधाप्राप्तिः । इष्यते च तत्र स भाष्यादिसम्मतत्वादिति भावः । स्वग्रन्थेनैवेति । तत्र हि स शुक्लादिरेवेत्युक्तम् । अस्यापवादमिति । भावप्रत्ययान्तः सदा गुणवाच्यप्यत्र निषिद्ध्यत इति तदर्थ इति भावः ।

केवलस्य गुणस्येति । भावप्रत्ययान्तोऽन्यश्च गृह्यते इति भावः । तेन ब्राह्मणस्य शुक्लो रूपमित्यत्रापि निषेध इति बोद्ध्यम् । तत्स्थैश्च गुणैरिति । इदं षष्ठीति सूत्रे भाष्ये । तत्र गुणमात्रे तिष्ठन्ति वाचकतया न गुणिनि ते

नो गन्धो न कदापि गुणिसमानाधिकरणः, किं तु स्वप्रधान एव । इदमेव तात्स्थ्य(१)म् ।

ननु 'वहति जलमियं पिनष्टि गन्धानि' ति प्रयोगदर्शनादयुक्तमिदमिति चेन्न । तत्र हि गन्धानिति न गुणशब्दः मालतीकुसुमादिष्वदर्शनात् । किं तु चन्दनत्वादिजातिनिमित्तकोऽन्य एव सः । तस्माच्चन्दनगन्ध इत्यत्र तत्स्थत्वं सुस्थमेव । एवं घटरूपमित्यादावपि । सुरभिशुक्लादयः शब्दास्तु न तत्स्थगुणप्रतिपादकाः । एवमपि शौक्ल्यसौरभादिभिः शब्दैः सह समासो दुर्वार इति चेन्मैवम् । तर्हि शुक्लत्वादिप्रकारक एव गुणबोधः । तद्रूपापन्नानां च द्रव्यसामानाधिकरण्यमस्त्येव शुक्लः सुरभिरित्यादाविति दिक् ।

**फलानामिति** । करणस्य शेषत्वविवक्षायां षष्ठी । **ब्राह्मणस्य कृत्वेति** । तादर्थ्यरूपसम्बन्धस्य सामान्यरूपेण विवक्षायां षष्ठी । ब्राह्मणसम्बन्धिनी या क्रिया तदनन्तरमित्यर्थः । **इत्यादीति** । तथा च भट्टिः ।

---

**निष्ठविशेष्यतावानेव प्रतीयत इत्यर्थः** ।

तात्स्थ्यमिति । **गुणसामानाधिकरण्येनैव गुणवाचकत्वमित्यर्थः** । अदर्शनादिति । **गन्धं मालतीकुसुममित्यप्रयोगादित्यर्थः** । न तत्स्थेति । **घटः शुक्ल इत्यादौ गुणिसमानाधिकरणगुणस्यापि तैः प्रतिपादनादित्यर्थः** । शौक्ल्येति । **तैः सर्वदा गुण्यसमानाधिकरणस्यैव गुणस्य प्रतिपादनादिति भावः** । सामानाधिकरण्यमस्त्येवेति । **गुणिसामानाधिकरण्येन प्रतिपादकशब्दवाच्यगुणवाचकत्वेनैवं शौक्ल्यादिशब्दास्तेषां गुणिसामानाधिकरण्येन प्रतिपादकशुक्लादिति दिक्** ।

तादर्थ्यरूपसम्बन्धस्येति । **अत एव गुर्वर्थशब्दस्य गुरोरिदमिति विग्रहप्रद-**

---

(१)**तत्स्थ्यमिति** । तत्र षष्ठी इति सूत्रस्थभाष्यदर्शनेन प्राधान्येनाप्राधान्येन वा द्रव्याप्रतिपादकत्वे सति गुणप्रतिपादकत्वं तत्स्थगुणवाचित्वमिति लभ्यते । तथाहीत्थं च तत्र भाष्यम् 'तत्स्थैश्च गुणैः षष्ठी समस्यते इतिवक्तव्यम् । ब्राह्मणवर्णः चन्दनगन्धः पटहशब्दः । नदीघोषः,नतु तद्विशेषेणः,इह मा भूत् घृतस्य तीव्रोगन्धः चन्दनस्य मृदुः। किमर्थमिदमुच्यते गुणेन नेति प्रतिषेधं वक्ष्यति तस्यायं पुरस्तादपकर्षः। किमर्थं पुनर्गुणेन नेति उच्यते नपुनर्गुणवचनेन नेत्युच्यते ? नैवंशक्यम् । इह नस्यात् । काकस्य कार्ष्ण्यम् बलाकायाः शौक्ल्यम् इति। एतदेव तस्मिन् योगे उदाहरणम्। यद्धीदम् ब्राह्मणशुक्लाः वृषलस्य कृष्ण इति। असामर्थ्यादत्र न भविष्य-

यत्कृते ऽरीन्निगृह्णीमः । "आदेयाः किंकृते भोगाः कुम्भकर्ण त्वया विने-" त्यादि । "अनेकमन्यपदार्थे" इति सूत्रे सर्वपश्चादिति भाष्यप्रयोगोऽपि इहानुकूलः । **रक्षित इति** । कैयटहरदत्तौ तु अव्ययप्रतिषेधे वृक्षस्योप-रीत्युदाहरन्तौ अकृदव्ययेनाऽपि निषेधं मन्येते । **स्वरे भेद इति** । कृदुत्तरपदप्रकृतिस्वरेण तित्स्वरस्यैवावस्थानाद् अन्तस्वरित इष्टः । तव्येन तु मद्ध्योदात्तत्वं स्यादिति भावः । **तक्षकस्येत्यादि** । यत्तु प्राचा-मुदाहरणम् । राज्ञो नलस्येत्यादि यच्च समर्थनं सति समासे पूर्वानिपाता(१)-नियमः स्याद्विशेषणसमा(२)सस्तु स्यादे(३)वेति ।

अत्रेदं वक्तव्यम् । विशेषणविशेष्यभावे कामचारादव्यवस्थायां प्राप्ता-

---

**र्शनं भाष्ये**। पश्चादिति । **ततः पश्चादिति भाष्यप्रयोगे आद्यादित्वात्षष्ठ्य-न्तात् तसोपपत्तौ तद्योगे पञ्चमीकल्पने मानाभाव इति भावः** । भाष्यप्रयोगो-ऽपीति । **प्रकृतसूत्रस्थभाष्यस्वरसोऽपीत्यस्याप्युपलक्षणमिदम्** । कैयटेति । **उक्तमत्रारुचिबीजम्** । तव्येन त्विति । **यद्यपि शेषषष्ठ्या न स्वरभेदस्तथा ऽपि कारकषष्ठ्यामस्त्येव समासनिषेधश्चाविशेषादुभयोरपीति भावः** । सति समासे इति। **षष्ठीसमासे इत्यर्थः** । **षष्ठ्यन्तत्वेनोभयोरपि प्रथमानिर्दि-ष्टत्वेनोपसर्जनत्वादिति भावः । पाठक्रमादर्थक्रमो बलीयानिति (४)अप्रधा-**

---

तच्च नेष्यते इति आकरे स्पष्टम् ।

(१) **पूर्वानिपातानियमः इति** । उभयोरपि समासशास्त्रीयोद्देश्यतावच्छेदके शास्त्रे प्रथमान्तपदबोध्यत्वेनोपसर्जनत्वादिति भावः ।

(२)**विशेषणसमासस्त्विति** । विशेषणसमासे तु विशेषणस्यैव पूर्वनिपातनिश्चयः इति भावः ।

(३)**स्यादेवेति** । अरुचिबीजमुक्तम् । अनेकमन्यपदार्थे इतिसूत्रे सर्वपश्चात् इत्यत्र-समासदर्शनेन नैतद्युक्तम् ।

(४) **अप्रधानमुपसर्जनम् इति** । अस्यायं भावः—राज्ञः कुमारीं श्रितः राजकुमा-रीश्रितः द्वितीयायाः "द्वितीयाश्रितेति" सूत्रेप्रथमानिर्दिष्टत्वेन कुमारीशब्दस्य पूर्वनिपाता-पत्तिमाशङ्क्य अप्रधानमुपसर्जनम् इतिशास्त्रान्तरोक्तमहासञ्ज्ञाकरणेनास्य तदर्थकतया समा-सशास्त्रे प्रथमानिर्दिष्टमप्रधानत्वसमानाधिकरणोपसर्जनपदवत् इतिवाक्यार्थे निष्पन्नेऽप्रधा-नत्वस्य ससम्बन्धिकत्वात् यं प्रति यदप्रधानं तं प्रति तदुपसर्जनम् इत्यवगते दोषादिति समा-

याऽप्रधानमुपसर्जनमित्यन्वर्थतामाश्रित्य द्रव्याश्रितत्वेन गुणादीनामप्राधा-न्याद् द्रव्यापेक्षया गुणादीनां विशेषणतेति व्यवस्थेष्यते तच्च षष्ठीसमासेऽपि सुवचमिति किं तन्निषेधेन ।

**"क्तेन च पूजायाम्"** ॥ पूजाग्रहणमुपलक्षणमिति व्याचष्टे—**मतिबुद्धीति । भूत इति ।** न च तक्रकौण्डि(१)न्यन्यायेन मत्यादिभ्यः क्तस्य वर्तमानकालो भूतकालतां बाधत इति वाच्यम् । तेनेत्यधिकारे उपज्ञात इति निर्देशेनाबाधज्ञापनात् । न च ज्ञानार्थ एव ज्ञापकम् । 'पूजितो यः सुरासुरैः' इत्यादिप्रयोगानुरोधेन सामान्यविषयकत्वस्यैव न्याय्यत्वादित्य-

---

**नमुपसर्जनमित्यन्वर्थतामाश्रित्यैतत् । तच्च षष्ठीसमासेऽपि सुवचमित्यत्र बोद्ध्यम् ।** व्यवस्थेष्यते इति । **पूर्वनिपातव्यवस्थेष्यते इत्यर्थः ।** तच्चेति । **तद्व्यवस्थारूपम् वस्त्वित्यर्थः । अप्रधानमुपसर्जनमित्यन्वर्थतामाश्रित्य षष्ठीसमासे ऽपि सुवचमिति योजना । एवं चास्याप्यभावो बाहुलकात्स्वीकार्य इति भावः ।**

तक्रकौण्डिन्येति । **आसीदित्यध्याहारेण धातुसम्बन्ध इति भूते क्त इति न वाच्यम् । सुरासुरैः पूजितो ऽस्तीत्यादौ दोषात् ।** तेनेतीति । **अन्यथा वर्तमाने क्तप्रत्यये "क्तस्य च वर्तमाने" इति कर्तरि षष्ठ्या दुर्वारत्वेनोपज्ञातशब्दयोगे तृतीयान्तत्वासम्भवः । न चेयमर्थान्तरे तृतीया पूर्वोत्तरत्र कर्तृतृतीयाया एव निर्णयात् ।** सामान्यविषयकत्वस्यैवेति । **विधेयविषय एव स न्यायो नानुवाद्यविषये इति सामान्यतो ज्ञाप्यत इत्यर्थः ।**

**परे त्वाहुः । तक्रकौण्डिन्यन्यायेन वर्तमाने क्तेन भूते क्तो बाद्ध्यत इति वक्तुमप्ययोग्यम् । यतस्तक्रकौण्डिन्यन्यायो 'येन नाप्राप्ते' इत्यनेन समानविषयः, नाप्राप्ते दधिदाने तक्रदानमारभ्यते इति । तेन युक्तो दधि-**

---

(१) **तक्रकौण्डिन्यन्यायेनेति।** तदीयोद्देश्यतावच्छेदकव्याप्यत्वे सति तत्कृतचारितार्थ्यरूपम् इत्युक्तन्यायस्वरूपम् । बाध्यत्वे बीजन्तु बाधकत्वेन जिघृक्षितशास्त्रीयोद्देश्यदलीयविषयताविशिष्टान्यतमत्ववद्विषयताप्रयोजकपदघटितत्वम् । वैशिष्ट्यं च स्वव्यापकतावच्छेदकत्वम् स्वव्यापकतावच्छेदकवैशिष्ट्याभाववत्त्वम् । अत्र वैशिष्ट्यं च स्वव्यापकत्वम् स्वव्याप्यत्वाभाववत्त्वम् स्वाश्रयव्यधिकरणविषयतावृत्तित्वम् एतत्त्रितयसम्बन्धेन एतत्सर्वमभिप्रेत्य मूलकृताशङ्कितम् । परन्तु तक्रन्यायस्यात्र विषयतैव नास्ति तस्य येननाप्राप्तन्यायसमत्वात् । तदुक्तम्—

नुन्यासकारः ।

अन्ये तु कारकषष्ठ्या एव समासनिषेधोऽयम् । शेषषष्ठ्या तु समास इत्याहुः । एतेन 'कलहं स राममहितः कृतवान्' इति भट्टिप्रयोगो व्याख्यातः । **इदमेषामिति ।** "क्तोऽधिकरणे च" इति क्तः । "अधिकरणवाचिनश्च" इति कर्तरि षष्ठी । अधिकरणे चेत्येव सिद्धे सूत्रद्वयेऽपि वाचिग्रहणं स्पष्टार्थम् । कथं तर्हि किंवृत्तं, यद्वृत्तम्, इति । नायमधिकरणे क्तः किं तु कर्तरि । किमा वृत्तं निष्पन्नमित्यर्थः ।

**"कर्मणि च"** ॥ यद्यत्र या काचन कर्मणि षष्ठी गृह्येत तर्हि तृजकाभ्यां निषेधो व्यर्थः स्यात् । तस्मादव्ययानामनेकार्थत्वादितीत्यर्थे चशब्दोऽयम् । तदाह—**कर्मणीति या षष्ठीति ।** सप्तम्येकवचनान्तं पदमुच्चार्य या षष्ठी विहिता परिशेषिता वेत्यर्थः । नियमसूत्राणां विधिरूपेण निषेधरूपेण वेति द्वेधा प्रवृत्तेः स्वीकृतत्वात् ।

**"तृजकाभ्याम्"** ॥ इह कर्तरीत्यकस्यैव विशेषणं न तु तृचः, अव्यभिचारात् । तथाऽपि उपरञ्जकत्वमात्रमभिप्रेत्याह—**कर्त्रर्थेति** । जयादित्यस्तु कर्तृषष्ठ्या इति व्याचष्टे । तन्मते तृजुत्तरार्थ इति कल्प्यं स्यात् । किं च कर्तृग्रहणं तृजकयोरेव विशेषणमिति युक्तं तयोः श्रुतत्वान्न तु षष्ठ्या इति भावः । **शेषषष्ठ्येति ।**

---

**बाधः । प्रकृते तु न सः । अप्राप्तायामेवान्त्योपधावृद्धौ अचामादिवृद्धिरारभ्यते सौश्रुत इत्यादावतो न तक्रकौण्डिन्यायेन तया तयोर्बाध इति "तद्धितेष्वचाम्" इति सूत्रभाष्योक्तेः । अतो वर्तमानक्तस्य भूतक्ते नाप्राप्ते नारम्भात् वर्तमानत्वभूतत्वयोर्युगपद्विवक्षाया असम्भवात् । यदीदं न स्याद् "वर्तमाने लट्" स्यादिति तस्यैवायमपवादो न्याय्यो न तु भूते क्तस्येति दिक् ।** अनुन्यासकार इति । **मत्यादिसूत्रे कैयटोऽप्येवम् कारकषष्ठ्या एवेति क्तादियोगे तस्याः प्रतिपदविहितत्वादिति भावः ।** एतेनेति । **उक्तप्रकारद्वयेनेत्यर्थः ।** कथं तर्हीति । **किमो वृत्त्यधिकरणमित्यर्थाभिप्रायेण प्रश्नः ।**

व्यर्थः स्यादिति । **कर्त्रर्थतृजकाभ्यां कर्मषष्ठ्यैव समासप्रतिषेधस्तेनेति भावः ।** परिशेषितेति । **कर्मातिरिक्ते निषेधेन कर्मणि परिशेषितेत्यर्थः ।**

केचित्तु "जनिकर्तुः प्रकृतिः" "तत्प्रयोजको हेतुश्च" इति निर्देशादनित्योऽयं निषेध इत्याहुः । न्यासकारस्त्वाह–तृन्नन्तमेतत् । "न लोकेति" षष्ठीनिषेधस्त्वनित्यः । त्रकाभ्यामिति वक्तव्ये तृचः (१)सानुबन्धकस्य ग्रहणाज्ज्ञापकादिति ।

"पूर्वापरा" ।। एकदेशशब्दोऽवयवे रूढः । अत एव तस्य कर्म-

---

**नारुचिः सूचिता । तद्बीजं कर्मणि चेति (२)सूत्रस्थभाष्यविरोधः । तत्र हि कर्मषष्ठीमात्रे तन्निषेधेऽस्य वैयर्थ्यमापादितम्** । आहुरिति । **अत्रारुचिबीजं ताभ्यां कारकषष्ठ्या एव निषेध इति प्रत्यासत्तिलभ्यार्थस्यैव ज्ञापनमुचितम्** । एतत् । **त्रिभुवनविधातुरित्येतत्** । सानुबन्धकस्येति । **तस्य हि तृनेव व्यावर्त्य इति भावः । मतान्तरे सानुबन्धानिर्देशः कर्त्तरीति वत्स्पष्टार्थः । अन्यथा तृच्साहचर्यात्कर्त्रर्थकस्यैव ग्रहणे सिद्धे कर्तरीति व्यर्थमेव ।**

अत एवेति । **अन्यथा न कर्मधार(३)यान्मत्वर्थीय इत्यनेन वृत्तिद्वया-**

---

(१) **सानुबन्धकस्येति** । वस्तुतो धर्मिग्राहकमानात् यत्सूत्रीयपदप्रयोज्योद्देश्यता यद्धर्मावच्छिन्ना तद्धर्मावच्छिन्नविधेयताश्रयस्यैवोद्देश्यवाचकपदेन तत्र ग्रहणमिति । तेन "यतोऽनावः" "पूरणगुण" इत्यादौ यत्तव्यानिष्ठोद्देश्यतावच्छेदकयत्तव्यत्वावच्छिन्नविधेयताश्रययोः यत्तव्ययोः एवग्रहणम् न ण्यत्तव्यत्त्वावच्छिन्नयोः, इत्युच्यते तदा 'सानुबन्धकपरिभाषा' निष्फलेति पण्डितानां परामर्शः ।

(२) **सूत्रस्थभाष्यविरोध इति** । तत्र कथमिदं विज्ञायते कर्मणि या षष्ठी सा न समस्यते इति, आहोस्वित् कर्मणि यः क्त इति ? कुतः सन्देहः । उभयं प्रकृतम् । कर्मणीति षष्ठीनिर्देशश्चेत् अकर्तरि कृता समासवचनम् यथा इध्मप्रव्रश्चनः पलाशशातनः तृजकाभ्यां चानर्थकः प्रतिषेधः । अपां स्रष्टा, पुरां भेत्ता, वनानां लावकः, कर्मणीत्येव सिद्धम् । अस्तु तर्हि कर्मणि यः क्तः इति । ब्राह्मणस्य भुक्तम् , ब्राह्मणस्य पीतम् । क्तनिर्देशेऽसमर्थत्वादप्रतिषेधः । समासस्त्वसामर्थ्यान्न स्यात् ओदनापेक्षत्वेनासामर्थ्यात् प्रतिषिध्यते चेत्कर्तर्यपि प्रतिषेधः। ब्राह्मणस्य-गतः ब्राह्मणस्य ज्ञातः पूजायां च प्रतिषेधानर्थक्यम् । कर्मणीत्येवं सिद्धम् । तस्मादुभयप्राप्तौ कर्मणि षष्ठ्या प्रतिषेधः । तस्मादुभयप्राप्तौ कर्मणीत्येवं या षष्ठी तस्याः प्रतिषेधो वक्तव्यः । स तर्हि वक्तव्यः । न वक्तव्यः इत्यर्थेऽयं चः पठितः "कर्मणि च" कर्मणीत्येवं या षष्ठी–इत्यादि भाष्यविरोधो बोध्यः ।

(३) **न कर्मधारयान्मत्वर्थीय इति** । न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इत्यनुशासनेनेत्यर्थः । तत्र कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वात् ।

धारयत्वेऽपि ततो मत्वर्थीयः, कृष्णसर्पवान् वल्मीक इतिवत्। यद्यपीह "एकगोपूर्वादिति" ठञ् प्राप्तस्तथाऽपि अत एव निर्देशादिनिस्तदेतदाह—**अवयविनेति**।

ननु किमनेन सूत्रेण कर्मधारयेणैव पूर्वकाय इति सेत्स्यति ऊर्ध्वकायवत्। समुदाये वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते इति न्यायादत आह—**षष्ठीत्यादि**। तथा च कायपूर्व इत्यादिप्रयोगव्यावृत्तये सूत्रमिति भावः।

नन्विह षष्ठी तु दुर्लभा "अन्यारादिति" पञ्चमीप्रसङ्गात्। तत्र हि—दिशि दृष्टः शब्दो दिक्शब्द इति व्याख्यानेन सम्प्रत्यदिग्वृत्तिनाऽपि योगे पञ्चमी स्वीकृतेति चेत्सत्यम्। अवयववृत्तिभिर्योगे षष्ठ्येवेष्यते तस्य पर-

---

कल्पनलाघवमूलकेन स न स्यादिति भावः। अत एवापृथुशब्दान्मत्वर्थीयो नेति 'र ऋत' इति सूत्रभाष्ये उक्तम्। रूढत्वे तु न दोषः। कर्मधारयान्मत्वर्थीये कृते योऽर्थः प्रतीयते तस्मिन्बहुव्रीहिणा लभ्ये हि लाघवचिन्ता, नान्यथेति तात्पर्यम्। कृष्णसर्पवानिति। अत्र हि जातिविशेषवान् प्रतीयते न तथा प्रतीतिर्बहुव्रीहौ। सर्वधनीत्यादि तु व्रीह्यादिपाठात्सिद्धम्। अदण्डी अवाग्मीत्यादौ मत्वर्थीयान्तेन नञ्समासः। बहुव्रीहिणा दण्डसंयोगनिषेधस्य सम्यग् बहुभाषितत्वनिषेधस्य चानवगमात्। असुब्वतोऽङ्गस्येति "प्रत्ययस्थात्"सूत्रस्थभाष्यप्रयोगेण क्वचिल्लाघवानादरोपीत्यन्यत्।

ऊर्ध्वाद्यवयवे कायशब्दप्रवृत्तौ बीजमाह—समुदाय इति। तथा चेति। इदं वृत्त्याद्यनुसारेण सूत्राशयवर्णनमात्रम्। परत्वाल्लिङ्गमिति (१)सूत्रस्थभाष्यात्तु सत्यभिधाने षष्ठीसमास इष्यत एवेति लभ्यते। तच्चोपरिष्टा-

---

वृत्तेरभावोऽवृत्तीत्यव्ययीभावानन्तरं साध्याभाववतोऽवृत्तिर्यत्रेति बहुव्रीहिरित्यपि प्रत्युक्तम्। वृत्तौ साध्याभाववतोऽन्वयानुपपत्तेः। अव्ययीभावसमासस्याव्ययतया तेन समं समासान्तरासम्भवाच्च। नञ् उपाध्यादिरूपाव्ययविशेषाणामेव समस्यमानत्वेन परिगणितत्वात् इति दिक्।

(१) **सूत्रस्थभाष्येति**। उक्तं हि भाष्ये—"कथम् अर्धपिप्पलीति, समानाधिकरणे भविष्यतीति अर्धं च सा पिप्पली अर्धपिप्पलीति, परत्वात्षष्ठी समासः प्राप्नोति अथ पुनरयम् एकदेशिसमासः आरभ्यमाणः षष्ठीसमासं बाधते, इष्यते च षष्ठीसमासोऽपि।

मास्रेडितमिति लिङ्गात्। **पूर्वं नाभेरिति**। नाभेर्यः पूर्वो भागः स काय-स्यावयव इत्यर्थः। नाभेरिति दिग्योगलक्षणा पञ्चमी। अत्र पूर्वस्य भागस्य नाभिरवधिः, न त्वेकदेशिनी। अतो नाभ्या सह समासो नेत्यर्थः। कायेन तु स्यादेव पूर्वकायो नाभेरिति। पूर्वशब्दस्य नित्यसापेक्षत्वादप्राधान्याच्च। **पूर्वश्छात्राणामिति**। समुदायसमुदायिसम्बन्धे षष्ठी। बहुवचनं तु उद्भूता-वयवभेदसमुदायविवक्षया। यथा छात्राणां पञ्चम इति। ततश्छात्राणामे-कदेशित्वे सत्यपि एकत्वसंख्यावैशिष्ट्याभावान्न समासः। **सर्वोऽपीति**। पूर्वादिभिन्नोऽपीत्यर्थः। **ज्ञापकादिति**। न ह्यन्यथा सायपूर्वत्वमह्नस्योप-पद्यते। न चोर्ध्वकायवत् सामानाधिकरण्येन निर्वाहः शक्यः। अहः सर्वै-कदेशेत्यादिना विहितस्य समासान्तस्य च "अह्नोऽह्न एतेभ्य" इत्यह्नादे-शस्य चैकदेशिसमासं विना ऽनुपपत्तेरिति भावः। **इत्याहुरिति**। न स्फुटीभविष्यति।

नाभेर्य इति। **नाभ्यवधिक इत्यर्थस्तदाह**—दिग्योगलक्षणेति। **ननु पूर्व-शब्दस्य नाभिसापेक्षत्वात्कथं समासोऽत आह**—पूर्वशब्दस्येति। प्राधा-न्याच्चेति। **प्रधानस्य सापेक्षस्यापि वृत्तिरिति भावः**। समुदायेति। **छात्रस-मुदायावयवः पूर्व इति बोधः**। एकदेशिसमासं विनेति। **लक्षणप्रतिपदोक्तप-रिभाषयैकदेशपूर्वकस्यास्यैव तत्र ग्रहणमिति भावः**। इति भाव इति। **इत्य-भिमान इत्यर्थः। यथाश्रुतसूत्राशयवर्णनाभियुक्तानां ज्ञापकवादिनामिति भावः। एतत्सूत्रप्रत्याख्यातृ(१)भाष्यरीत्या तु तत्र लक्षणप्रतिपदोक्तपरि-भाषाया न प्रवृत्तिः। कर्मधारयेणैव सर्वप्रयोगसिद्धेः। तत्रैवार्थे च सा-**

---

(१) **एतत्सूत्रस्थप्रत्याख्यातृभाष्येति**। कर्मधारयसमासं स्वीकृत्य एतत्सूत्रं भाष्ये प्रत्याख्यातम्, तदा—एतत्सूत्र इत्यारभ्य नोपयोग इत्यन्तेन अत्र भाष्ये कर्मधारयपदेन, द्विगुभिन्नत्वे सति समानविभक्तिमत्प्रकृतिकत्वे सति अभेदबो-धकत्वरूपोऽर्थो विवक्षितः। यथा नीलोत्पलमित्यत्र नीलपदेन नीलगुणविशिष्टं वस्तु उत्पलपदेन उत्पलसामान्यमुपस्थाप्यते अभेदाख्यसंसर्गद्वारा नीलाभिन्नं उत्पल-मितिशाब्दधीः। नामार्थयोरभेदान्वयबोधम्प्रति विरुद्धविभक्तिराहित्यस्यैव कारणत्वम्। एवं कर्मधारये न वा शक्तिर्न वा लक्षणा निषादस्थपतिं याजयेदित्यत्र न षष्ठीतत्पुरुषः नवा बहुव्रीहिः, पूर्वपदे उत्तरपदे वा लक्षणापत्तेः। तथाचात्र कर्मधारयसमासान्निषादाभिन्नस्थपति-

चैवं दिनमद्ध्यो रात्रिमद्ध्य इत्यादि न सिद्ध्येदिति वाच्यम्। ज्ञाप(१)कसिद्धस्यासार्वत्रिकत्वात्।

यत्तु प्राचोक्तम्। सर्वेणैकदेशेनाह्नः समास इति। तन्न। एकदेशस्य तृतीयानिर्दिष्टस्य परनिपातापत्तौ धर्मिग्राहकमानविरोधात्। यदपि पाठान्तरम्। सर्वेण एकदेशिनाऽह्न इति। तदपि न। अह्नरेव ह्येकदेशि। न च तेनैव तस्य समास इति सम्भवति।

**"अर्द्धं नपुंसकम्" ॥ नित्यं क्लीब इति।** अर्द्धमिति निर्देशादेव क्लीबत्वे लब्धे नपुंसकग्रहणं नित्यनपुंसक(२)त्वार्थमित्यर्थः। खण्डमात्रवाची तु त्रिलिङ्गः। भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके इत्यमरः। अत्र वा पुंसीति पूर्वोत्तराभ्यां सम्बध्यते। तत्र शकलखण्डेति रूपभेदात्क्लीबत्वे निर्णीते वावचनाच्च पुंस्त्वविकल्पेऽस्त्रियामिति फलितम्। न च खण्डे इति स्त्रीलिङ्गमेव किं न स्यादिति वाच्यम्। भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्। शकलश्चास्त्रीति निर्देशेनैव निर्णयात्। अर्द्ध इति रूपभेदात् पुंस्त्वावगतौ सत्यामपि "वा पुंसीति" विकल्पेनाविशे-

---

**षुत्वं यथोत्तरं मुनीनां प्रामाण्यात्। षष्ठीसमासस्तु तद्विषयेऽनभिधानाद्वारणीयः। यद्वेष्ट एव सः ज्ञापकस्य च नोपयोगः। तद्ध्वनयन्वक्ष्यति एषां प्रत्याख्यानमिति दिक्।**

निर्देशादेवेति। **न च शब्दपरत्वेऽपि तुर्याणीतिवन्नपुंसकोच्चारणसत्वेन तेन क्लीबग्रहणसिद्धिरिति वाच्यम्। योगविभागपूर्वकमर्धमिति निर्देशेन तल्लाभ इत्याशयात्। भिन्नलिङ्गत्वमुपपादयति**—शकलश्चेति। निर्देशेनेति।

---

(१) **ज्ञापकसिद्धस्यासार्वत्रिकत्वादिति।** स्पष्टमेव पठितव्ये अनुमानाद्बोधनमसार्वत्रिकत्वार्थम्। ज्ञापकसिद्धपरिभाषया अनिष्टं नापादनीयम्, किंत्विष्टमेव कल्पनीयम्। अतएव 'करस्य करभो बहिः' इति सिद्धम्। अन्यथा "अपपरिबहिः" इति सूत्रज्ञापितया बहिर्योगे पञ्चम्या आपत्तेः।

(२) **नित्यनपुंसकत्वार्थमिति।** पूर्वापराधरोत्तरार्धमित्येकयोगकरणेनैव सिद्धे पृथग्योगकरणेनैव नित्यनपुंसकत्वे लब्धे नपुंसकग्रहणवैयर्थ्यस्य तादवस्थ्यात्। वस्तुतस्तु 'एओङ्' "ऐऔच्" इतिसूत्रयोः 'अर्धएकार अर्धओकार' इति भाष्ये समांशवाचिनोऽपि पुँस्त्वदर्शनात् नित्यनपुंसकत्वस्याप्रामाणिकतया चिन्त्यमिदम्।

ीनिपुंसके लभ्येते । **प्राग्वदिति** । अवयविना समस्यते इत्यादी-
: । **अर्द्धं पिप्पलीनामिति** । इहार्द्धपिप्पलीति प्राप्तं परवल्लिङ्गातिदेशे
वचनातिदेशाभावात् विशेष्यैक्याच्चेति भावः । कथं तर्ह्यर्द्धपिप्पल्य
। अर्द्धानि पिपिप्पलीनामिति विग्रहे मा भूत् । खण्डसमुच्चये तु भविष्य-
अर्द्धपिप्पली चार्द्धपिप्पली चेत्यादिविग्रहात् । एकदेशिनेति किम् ।
पशोर्देवदत्तस्य । अत्र देवदत्तः स्वामी न त्ववयवीति न तेन समा-
एतत्सूत्रं परवल्लिङ्गमित्यत्र भाष्ये प्रत्याख्यातम् । तथा हि—अर्द्धपि-
ीति कर्मधारयेण सिद्धम् । समुदाये दृष्टाः शब्दा अवयवेऽपि वर्तन्ते
न्यायात् । समप्रविभागादन्यत्र हि तवाप्येषैव गतिः । अर्द्धाहारः,
जरतीयम्, अर्द्धवैशसम्, अर्द्धोक्तम्, अर्द्धविलोकितम्, इत्यादिद-

---

**ळखण्डे इति निर्देशेनेत्यर्थः** । लभ्येते इति । **तेन खण्डमात्रवाचिनस्त्रि-
त्वं सिद्धम् । अत एव दन्तार्धमास्यात्पतितमित्यादयः प्रयोगा उपप-**
। **अवयववाची पुंल्लिङ्ग इति भाष्यं तूपलक्षणमिति** भावः । (१)**अन्ये तु
ानुरोधेन कोशे वा पुंसीति पूर्वान्वय्येव । दन्तार्धमित्यादौ समा-
रोपाभिप्रायं नपुंसकत्वम् । शरीरार्धहरामितिवत्षष्ठीसमासः ।
ां प्रयोगदर्शनाभावाच्चेत्याहुः** । प्राप्तमिति । **तच्चोक्ते विग्रहेऽनिष्टमि-
ावः** ।

**ननु पिप्पलीनां बहुत्वाद् बहुवचनं कुतो नेत्यत आह**—परवदिति ।
क्यादिति । **अर्द्धस्य विशेष्यैक्यादिति अर्द्धस्य विशेष्यस्यैकत्वाद्-**
: । मा भूदिति । **अवयविन एकत्वाभावादिति भावः** । खण्डसमुच्चये त्विति ।
**ाषेणेति भावः** । एतत्सूत्रमिति । **एतस्यैकदेशिसमासस्य विधायकं सूत्र-
र्थः । जातावेकवचनम् । तेन सूत्रत्रयमित्यर्थः । अर्द्धपिप्पलीत्युपलक्षणं**

---

१) **अन्येस्त्विति** । ग्रामार्द्धो नगरार्ध इत्यादौ "अर्धं नपुंसकम्" इतिसमासवारणाय पुँल्लि-
मर्धशब्दः नपुंसकश्च सूत्रे गृह्यते क्व नपुंसकः क्व च पुंल्लिङ्गो भवति इति उक्त्वा समाहित-
ि । समप्रविभागे नपुंसकलिङ्गः अवयववाची तु पुँल्लिङ्गः । तत्रावयववाची पुँल्लिङ्गः
तीकमुपादाय कैयटेनोक्तम् । नियमेन नपुंसकलिङ्गो भवतीत्येवं परमेतत् । अवयववाची तु
धेयवशात् सर्वलिङ्गः । तथाच प्रयोगो दृश्यते । अपूपार्धं मया भक्षितम्, दन्तार्धमा-
ातितम् इति । तदत्र नपुंसकग्रहणात् यस्मिन्नर्थविशेषे नियमेन नपुंसकत्वम् तदर्थवृत्ति-

र्शनात् । न च समप्रविभागे षष्ठीसमासं बाधितुमिदं सूत्रमिति वाच्यम् । षष्ठीसमासस्यापीष्टत्वादिति । तथा च कालिदासः प्रायुङ्क्त 'प्रेम्णा शरीरार्द्धहरां हरस्य' इति ।

(१)"**द्वितीयतृतीय**"॥ **निषेधं बाधित्वेति** । भाष्यकारास्तु परवल्लिङ्गमिति सूत्रे तत्पुरुषग्रहणं द्विगुप्राप्तेत्यादिवार्तिकं "पूर्वापर"इत्यादित्रिसूत्रीं च

---

**सूत्रत्रयोदाहरणस्य । एकदेशिसमासो नारप्स्यते इति तत्र भाष्ये उपक्रमात् ।** इष्टत्वादिति । **तथा च तत्रैव भाष्यमिष्यत एव पिप्पल्यर्द्धमितीति प्रयोगरूपैतद्भाष्यविरोधादर्धपिप्पलीत्यत्रैकदेशिसमासेन मुक्ते षष्ठीसमासो न भवतीति द्वितीयेतिसूत्रस्थं भाष्यमेकदेश्युरिति आहुः ।**

द्विगुप्राप्तेति । **तद्धि एषु तत्पुरुषेषु परवल्लिङ्गतानिषेधकम् । तत्पुरुषग्रहणप्रत्याख्यानेऽर्थादेव प्रत्याख्यानं तस्येति भावः ।** त्रिसूत्रीमिति । **उक्तरीत्या कर्मधारयेण सिद्धिमाश्रित्येत्यर्थः । एवं हि तत्र भाष्यं 'तत्पुरुषग्रहणं न करिष्यते एकदेशिग्रहणात्सिद्धम् । द्वन्द्वैकदेशिनोरिति वक्ष्यामि । तदेकदेशिग्रहणं कर्तव्यम् । न कर्तव्यम् । एकदेशिसमासो नारप्स्य(२)ते । कथमर्द्धपिप्पलीति ? समानाधिकरणे भविष्यति । अर्द्धं चासौ पिप्प(३)ली**

---

(१) **द्वितीयतृतीयेत्यादि** । एतदुदाहरणम् द्वितीयं भिक्षायाः द्वितीयभिक्षा। एकदेशिनेत्यस्य व्यावर्त्यम् । द्वितीयं भिक्षाया भिक्षुकस्य । अत्र भिक्षायाः द्वितीयं भागं भिक्षुकस्येत्यन्वयः । भिक्षायाः इत्यवयवषष्ठी द्वितीयमित्यत्रान्वेति । द्वितीयमिति भिक्षुकस्येत्यत्र कर्मत्वेनान्वेति । "नलोक" इतिनिषेधान्नषष्ठी, अत्र द्वितीयमित्यस्य भिक्षुकस्येत्यनेन समासो न भवति । द्वितीयं प्रति भिक्षुकस्यैकदेशित्वाभावादित्याहुः ।

ननु महाविभाषया विकल्पे सिद्धेऽपि सूत्रेऽन्यतरस्यां ग्रहणं व्यर्थमित्याह—कौमुद्याम् **अन्यतरस्यांग्रहणसामर्थ्यादिति** । अस्य पक्षे षष्ठीसमास इत्यनेनान्वयः । अन्यथा षष्ठ्यपवादभूतेनानेन समासेन मुक्ते उत्सर्गो न प्रवर्तते । महाविभाषाधिकारे अपवादेन मुक्ते उत्सर्गो न प्रवर्तते इति "पारे मध्ये षष्ठ्या वा" इति वा ग्रहणेन ज्ञापितत्वात् ।

ननु "पूरणगुण"इति निषेधात् कथं षष्ठीसमास इत्याह–"पूरणगुणेति" निषेधं बाधित्वा इति मूलसङ्गतिः कर्त्तव्या ॥

(२) **एकदेशिसमासो नारभ्यते** । पूर्वापराधरेति योगद्वयं नारभ्यते । परवल्लिङ्गं

प्रत्याचख्युः । तन्मते भिक्षाद्वितीयादिसिद्धये पूरणेत्यादिनिषेधस्यानित्यत्वमाश्रयणीयम् । सञ्ज्ञाप्रमाणत्वादित्यादिनिर्देशानां सामान्यापेक्षज्ञापकात् । एवं सति 'तान्युञ्छषष्ठ' इत्यपि सिद्धम् ।

**"प्राप्तापन्ने"** ॥ अत्र चकारेण विधेयसमुच्चयार्थेनाकारप्रश्लेषानुमानात् प्राप्तापन्ने समस्येते, अ च (१)अत्वं च तयोः स्यादिति भाष्ये स्थितम् । अत्र चकारात्पूर्वमेवाकारं छित्वा सौत्रत्वात्प्रकृतिभावो नेति प्राञ्चः । इमं क्लेशं परिहरन्नाह—**द्वितीयया अ इति । प्राप्ता स्त्रीति ।** एकादेशस्य (२)पूर्वान्तत्वेन ग्रहणात् लिङ्गाविशि-

**चेति । षष्ठीसमासोऽपि प्राप्नोति । (३)इष्यत एव षष्ठीसमासः अपूपार्धं पिप्पल्यर्द्धमिति' इति । भक्ष्यादिपरैः स्त्रीलिङ्गैश्चतुर्थ्यादिशब्दैरनभिधानात्समास एव नेति तत्रैकदेशिसमासे चतुर्थीभिक्षेति कर्मधारये तु पुंवत्वे चतुर्थभिक्षेति भेद इति न शङ्क्यम् ।** इत्यादीति । **आदिना लोपे चेत्पादपूरणमित्यादेः सङ्ग्रहः ।**

इमं क्लेशमिति । **न चात्र पक्षे तस्य व्यवहितप्राप्तापन्नाभ्यामन्वयक्लेशः**

---

(१) **अत्वं चेति** । इदं हि तत्र भाष्यम् । "चकारोऽन्यतरस्यामित्यस्यानुकर्षणार्थ इत्यभिधाय किम्प्रयोजम् ? इति पृष्टे समासेन मुक्ते वाक्यमपि यथा स्यादित्युक्ते जीविकां प्राप्त इत्युदाहृतम् । नैतदस्ति प्रयोजनम्, महाविभाषयैव वाक्यासिद्धेः । इदं तर्हि प्रयोजनम्, द्वितीयासमासोऽपि यथा स्यात् जीविकाप्राप्त इति । तदपि न, तत्तु वचनाद् भविष्यति । एवं तर्हि नायमनुकर्षणार्थश्चकारः । किं तर्हि, अत्वमनेन विधीयते, प्राप्तापन्ने द्वितीयान्तेन समस्यते, अत्वं च भवति प्राप्तापन्नयोरिति । प्राप्ता जीविकां प्राप्तजीविका, आपन्ना जीविकां आपन्नजीविका" इत्यादिना स्पष्टम् ।

(२) **पूर्वान्तत्वेनेति** । अन्तादिवत् इत्यस्य एकादेशः एकादेशपूर्वस्थानिचरमावयवकसमुदायस्य अन्तवत्स्यात् । एवमेकादेशः परस्थान्याद्यावयवकसमुदायस्य आदिवत्स्यादिति सूत्रार्थेनेति भावः ।

एकादेशनिष्ठचरमावयवतानिरूपकसमुदाये एकादेशपूर्वस्थानीनिष्ठचरमावयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्ता धर्मा अतिदेष्टव्याः । एवमेकादेशनिष्ठाद्यवयवतानिरूपकसमुदाये एकादेशपरस्थानिनिष्ठाद्यवयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्ता धर्मा अतिदेष्टव्याः । तद्वच्चेत्येवासिद्धे "अन्तादिवच्चेति" करणेन अर्थवत्पर्याप्ततेत्यर्थलाभ इति दिक् ।

(३) **इष्यत एव षष्ठीसमासः** । अयमर्थः—नते प्रयोजनादिष्टम् मुख्यशब्दार्थम्

ष्टपरि(१)भाषया वा प्राप्तापन्नयोष्टाबन्तयोरपि समासः ।

**"कालाः परिमाणिना"** ॥ परिमीयते परिच्छिद्यते येन तत्परिमाणं परिच्छेदकं तद्वान्परिमाणी; तदाह—**परिच्छेद्यवाचिनेति** । **काला इति** । कालविशेषवाचका इत्यर्थः । कालसामान्यस्यापि परिच्छेदकत्वाद् मासो जातस्येति षष्ठीसमासे प्राप्ते वचनम् । ननु जातः पुरुषस्तस्य च हस्तवितस्त्यादिकं परिच्छेदकं न कालस्तस्य क्रियामात्रपरिच्छेदकत्वादिति चेत्सत्यम् । साक्षात् क्रियां परिच्छिन्दन्नपि कालस्तद्द्वारा देवदत्तं परिच्छिनत्ति । यस्य हि जननादूर्ध्वं मासो गतः स मासजात इति व्यवह्रियते । तत्र व्यवहारकालजननलक्षणयोरन्तरालभावी मासो जननद्वारा जातमपि परिच्छिनत्त्येव । इह विग्रहे षष्ठीनिर्दिष्टस्यापि वृत्तौ प्राधान्यं द्योतयितुं यस्य स इत्युक्तम् । अलौकिके तु प्रक्रियावाक्ये सौत्रत्वकल्पनस्येलोऽधिकक्लेशत्वमित्यभिमानात् ।

तद्वानिति । **परिच्छेद्य इत्यर्थः** । तद्द्वारेति । **तत्परिच्छिन्नक्रियया हि पुरुषस्य परिच्छेदे इत्यर्थः** । **तदाह**—यस्य हीति । परिच्छिनत्त्येवेति । **तावत्कालातीतजननाश्रयत्वेनेति भावः** । द्योतयितुं य(२)स्य स इति । **गुणीभूतमपि यच्छब्दार्थं तच्छब्देन परामृश्य तस्य मासजातपदप्रतिपाद्यताप्रदर्शनेन द्योतनमिति भावः । यस्य मासो जातस्य स मासजातपदार्थ इति हि विग्रहवाक्याद् बोधः । मासजातो दृश्यतामित्यादौ जातस्यैव**

---

(१) **लिङ्गविशिष्टपरिभाषया वेति** । "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति परिभाषयेत्यर्थः । अस्या अर्थस्तु स्वान्तत्व स्वविशिष्टादित्व उभयसम्बन्धेन स्त्रीप्रत्ययविशिष्टे स्वविशिष्टवर्तिनः प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मस्य अनया अतिदेशः इत्याशयः। उभयत्र वैशिष्ट्यं च स्वाव्यवहितपूर्वत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटकत्व उभयसम्बन्धेन । तेन अयस्कर्णीत्यत्र "पाककर्णेति" सूत्रेण ङीष्यपि कर्णशब्दस्य ङीष् विशिष्टेन तद्वृत्त्यर्थवत्त्वस्य कर्णीशब्दे स्वविशिष्टेऽतिदेशेन "अतः कृकमि" त्यनेन सत्वसिद्धिः । अत एव दर्शनीयमानिनीत्यादौ "क्यङ्मानिनोश्चेति" पुंवद्भावः एतस्याः प्रयोजनमुक्तं भाष्ये । अन्यथा अत्र "गतिकारकेति" परिभाषया ङीबुत्पत्तेः प्राक् समासे दर्शनीयमानिञ्छब्दात् ङीपि मानिनीशब्दस्योत्तरपदत्वाभावात्तदसंगतिः स्यादिति बोध्यम् ।

(२)**यस्य स इति**। ननु जातस्य मास इति विग्रहे मासशब्दस्य पूर्वनिपातार्थं सूत्रस्या-

नास्य प्रवेशः । एवं च बहुव्रीहावपि । एतावान्परो विशेषः । इह जातशब्दात् षष्ठी, चित्रगुरित्यादौ तु द्वाभ्यामपि शब्दाभ्यां प्रथमैव । समानाधिकरणानां बहुव्रीहिरिति वक्ष्यमाणत्वात् । विशेषणविशेष्यभावव्यत्यासेनैकार्थीभाव इति तुल्यम् ।

यत्तु मीमांसकाश्चित्राणां गवामयमिति विगृह्णन्ति । तत्रेदं वक्तव्यम् । उक्तरीत्या वृत्तिवाक्ययोः क्वचित्प्रधानार्थसाम्यलाभेऽपि अषष्ठ्यर्थबहुव्रीहौ पञ्चविधेऽपि कर्मकरणादिप्राधान्यस्याभिमतस्योक्तविग्रहादलाभाद्वृत्तिवाक्ययोर्महान् विप्रकर्षः स्यात् । कृतविश्वः, प्राप्तोदको ग्राम, इत्यादौ कर्तृकर्मणोः समासेनाभिहितत्वान्न कारकविभक्तिरित्यादिसिद्धान्तस्य निर्विवादत्वात् ।

किं चालौकिके प्रविष्टानामेव पक्षान्तरे परिनिष्ठितानां लौकिकेऽपि प्रवेशसम्भवे उपस्थितपरित्यागेनानुपस्थितकल्पनमन्याय्यमसाम्प्रदायिकं च ।

---

**दर्शनकर्मत्वादिप्रतीतेः । न त्वेतावता ऽन्यपदार्थप्रधानोऽयमिति भ्रमः कार्य इति बोध्यम् ।** नास्य प्रवेश इति । **तत्र विशेष्यविशेषणभाववैपरीत्येनैकार्थीभावारोपादिति भावः ।** व्यत्यासेनेति । **जातपरिच्छेदको मास इति वाक्यार्थो मासपरिच्छेद्यो जात इति वृत्त्यर्थ इति भावः ।** विगृह्णन्तीति । **वृत्तिविग्रहयोः प्रधानार्थसाम्यायेति भावः । अषष्ठ्यर्थबहुव्रीहावित्य(१)स्य विप्रकर्षः स्यादित्यनेनाप्यन्वयः ।** पञ्चविधे इति । **कर्मकरणसम्प्रदानापादानाधिकरणरूपे । तत्र प्राप्तस्योदकस्यायमिति विग्रहेऽपि ततः कर्मत्वादिना ऽबोधात् ।** निर्विवादत्वादिति । **त्वदीयानां न्यासकृदादीनां चेति शेषः ।**

किं चेति । **षष्ठ्यन्तार्थानान्तु नालौकिके प्रवेशः शेष इत्युक्तेरिति वक्ष्यते ।** अनुपस्थितकल्पनम् । असांप्रदायिकं चेति । **सर्वादीनीति सूत्रे सर्वं**

---

(१) **अषष्ठ्यर्थ बहुव्रीहाविति ।** प्राप्तोदक इत्यादौ पृथक् शक्तिवादिनां मीमांसकानां मते प्राप्तिकर्त्रभिन्नमुदकमित्यादिबोधोत्तरं तत्संबन्धिग्रामलक्षणायामपि उदककर्तृकप्राप्तिकर्म ग्राम इत्यर्थालाभे प्राप्ते, प्राप्तेति क्तप्रत्ययस्य कर्त्रर्थकस्य कर्मार्थे लक्षणा ततोऽपि समानविभक्तिकनामार्थयोरभेद एव संसर्ग इति व्युत्पत्त्या उदकाभिन्नं प्राप्तिकर्मेति स्यात् । उदकस्य कर्तृतया प्राप्तौ अन्वये तु नामार्थयोरभेदान्वयव्युत्पत्तिभञ्जनं स्यादिति तात्पर्यम् । नामा-

तदनुगुणतयैव पदान्तराक्षेपगौरवं तु फलमुखत्वान्न दोषावहम् । अत एव—

वाक्यार्थे तत्पदं दातुं प्राच्येन विषयेऽर्पिते ।
लौकिको वाक्यभेदेन विग्रहो वृद्धसंमतः ॥

अथ वा माऽस्तु तच्छब्दः, प्रधानार्थसाम्यमपि औत्सर्गिकमिह त्यज्यताम् ।

तथा च हरिणा—

क्वचिद्गुणप्रधानत्वमर्थानामविवक्षितम् ।

इत्युपक्रम्य—

आ(१)ख्यातं तद्धितार्थस्य यत्किंचिदुपदर्शकम् ।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥

इत्युक्तम् ।

तद्धितग्रहणं कृतामप्युपलक्षणम् । तेन आक्षिकः, वैयाकरणः, पाचक, इध्मप्रव्रश्चन, इत्यादीनां विग्रहवाक्यानीहोदाहरणम् । स्यादे-

आदिर्येषान्तानीति भाष्ये विग्रहप्रदर्शनादिति भावः । पदान्तरेति । स इत्येतदित्यर्थः ।

**अत एवेति। अस्य वृद्धसम्मत इत्यनेनान्वयः।** प्राच्येन । **स इत्यतः पूर्वेण चित्रा गावो यस्येत्यादिना ।** अर्पिते । **बोधिते ।** विषये । **वाक्यार्थे । तद्घटके यच्छब्दार्थे ।** तत्पदं दातुम् । **तत्पदेन तं परामृष्टुम् ।** वाक्यभेदेनेति । **यस्य चित्रा गावः सन्ति स चित्रगुपदवाच्यो भवतीत्येवं वाक्यभेदेनेत्यर्थः । इयं कारिका ग्रन्थकर्त्तुरेव ।** त्यज्यतामिति । **वाक्ये गवामेव प्राधान्यं वृत्तौ तु सम्बन्धिन इति नास्त्येव वाक्येन प्रधानार्थसाम्यमित्यर्थः ।** क्वचिद् गुणेति । **अर्थानां वृत्ति-विग्रहयोर्गुणप्रधानत्वं समानमिति यत्तदविवक्षितमिति तदर्थः । यतस्त-द्धितार्थोपदर्शके आख्याते वृत्त्यपेक्षया गुणप्रधानभावस्य विपर्ययाद् वैपरीत्यं क्रियाप्रधानत्वादिरूपं दृष्टमित्यर्थः ।**

**तदाह**—विग्रहवाक्यानीहेति । (२)**परे तु यादृशो गुणप्रधानभावोऽर्थानां**

---

(१) ननु तर्हि वैयाकरणः इत्यस्य व्याकरणमधीते इति पाचक इत्यस्य पचतीति कथं विग्रहः वृत्तिसमानर्थत्वाभावादित्याशयेनाह—**आख्यातमित्यादिना ।** तत्र तद्धितग्रहणम् कृतामपि उपलक्षणम् । कारिकार्थस्तु-तद्धितकृतोर्यत्किञ्चिदर्थबोधकं विवरणम् आख्यातं

तत् । चित्रगुर्दण्डीति समासतद्धितवृत्त्योरलौकिके प्रक्रियावाक्येऽपि च चित्रगो-दण्ड एते शब्दाः षष्ठ्यन्ता एवेति मीमांसकाशय इति चेन्मैवम् ।

लोके दृष्टः स कश्चिदविवक्षितस्तद्धितार्थविग्रहवाक्ये तिङन्ते लोकदृष्टस्य क्रियाप्रधानत्वस्य वैपरीत्यं कर्तृप्रधानत्वं दृश्यत इति हरिश्लोकार्थः। तद्धितेत्युपलक्षणं वृत्तिमात्रस्य। एवं च वृत्तिसमानार्थकमेव तदर्थबोधकत्वेन दृश्यमानं वाक्यमिति भावः। तदेव प्राधान्यं तच्छब्देन दर्श्यते तच्च सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शकत्वात्तच्छब्देन दर्शितं भवति। चित्रगोसम्बन्धी यः स चित्रगुपदवाच्य इत्यर्थात्। अत एव "तद्वहे"ति सूत्रे भाष्ये तस्येदमित्येव सिद्धे इदं व्यर्थमित्याशङ्क्य वहति (१)वोढेति शब्दस्य भेदान्न तेन विधिरित्युक्तं शब्दभेदेऽप्यर्थसामान्यात्सिद्धम्। य

(१)वहति वोढेति इदं हि तत्र भाष्यम्। "वहत्यभिधा रथशकटहलसीरेभ्यः" प्रत्ययविधानानर्थक्यम् विहितत्वात्। विहितोऽत्र प्रत्ययः "तस्येदम्" इति। शब्दभेदादविधिरयं भवति। अन्यो हि शब्दो रथं वहति अन्यो हि रथस्य वोढा इति। शब्दभेदादविधानमितिचेत् अर्थाश्रयत्वात् प्रत्ययविधानस्यार्थसामान्यात्सिद्धम् इति।

"कालाः परिमाणिना" इति सूत्रे कालस्य भेदकत्वप्रतिपादनेन अर्थाश्रयत्वं स्पष्टमेव। तथा च भाष्यम्। कालस्य येन समासः सोऽपरिमाणी। तस्य अपरिमाणित्वादनिर्देशः। अगमको निर्देशः अनिर्देशः। नहि जातस्य मासः परिमाणम्। कस्य तर्हि त्रिंशद्रात्रस्य। तद्यथा-द्रोणो बदराणां देवदत्तस्य। न देवदत्तस्य द्रोणः परिमाणम्। कस्य तर्हि बदराणाम्। सिद्धं तु कालपरिमाणं यस्य स कालः तेन सिध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं,, कालस्येत्यादिना पूर्वोक्तो दोषो भवेत्। कं पुनर्भवान् कालं मत्वाह-कालस्य येन समासः। तस्यापरिमाणित्वादनिर्देशः इति। कं पुनरिति प्रतीकमुपादाय कैयटः यदि नित्यः एको विभुः कालः तदा तस्य भेदाभावात् परिच्छेदकत्वासंभवः। अथोपाधिभेदात्तस्य भेदः तदा तद्भेदाभिन्नस्य जातं प्रत्यपि परिच्छेदकत्वमस्त्येवेति। पुनर्भाष्यम्। येन मूर्तीनामुपचयापचयाश्च लक्ष्यन्ते तं कालमित्याहुः। तस्यैव कयाचित्क्रियया युक्तस्याहरिति भवति रात्रिरितिच। अत्र विषये कालसमुद्देशे हरिणाऽप्युक्तम्।

तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः।
नहि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते॥
नैकोऽथवाप्यनेकोऽस्ति न शुक्लो नापि चासितः।
द्रव्यात्मा सतु संसर्गादेवंरूपः प्रकाशते॥
संसर्गिणां तु ये भेदा विशेषास्तस्य ते मताः।
संभिन्नः तैर्व्यवस्थानां कालो भेदाय कल्पते॥

शेषो बहुव्रीहिः त्रिकः शेषः । अस्तिसामानाधिकरण्ये मतुप् प्रथमादित्यादिसूत्रभाष्यविरोधेन वृत्तेरेव तत्र दुर्लभत्वादिति दि नुसरामः । **उत्तरपदेनेति** । परिमाण्युत्तरपदहेतुकद्विगु तत्पुरुषो वक्तव्य इत्यर्थः । सुप्सुपेत्येकत्वस्य विवक्षितत्वादप्र **अह्नादेश इति** । त्रिपदतत्पुरुषानन्तरमुत्तरपदे परे सतीति भावः ।

**"सप्तमी शौण्डैः"** ॥ बहुवचननिर्देशाद्गणपाठस्य वगतिरित्यभिप्रेत्याह—**शौण्डादिभिरिति** । शौण्डः प्रवीण सक्तिरूपा क्रिया वृत्तावन्तर्भवति तद्द्वारकं च सामर्थ्यम् । यः गुडधानादौ । तेन कारकाणां क्रिययैव संबन्ध इति नियमस्य बोध्यम् । **अधिशब्द इति** । आधेयप्रधान इति शेषः । धानस्य तु अव्ययीभाव एव अधिहरीति यथा । अन्तःशब्दो

---

एवार्थो रथं वहतीति स एव रथस्य वोढेतीत्युक्तम् । तत्र वहतीति क्रियाप्रधानं वोढेति कर्तृप्रधानमित्यर्थः । अर्थस्य वृत्त्यर्थोपदर्शके वहतीत्यत्रापि विशेषणविशेष्यभावव्यत्यय त्येवार्थ इत्यर्थः । वर्तमानकालश्चाविवक्षितः । प्रथमा "कालाः परिमाणिना"इति सूत्रे भाष्येऽपि स्फुटमिदं सूक्ष्मदृ हेतुकद्विग्विति । तद्धितार्थोत्तरपदेति विहितेत्यर्थः । वार्तिके हेतौ तृतीयेति भावः ।

नियमस्यभङ्गो नेति । इदं च कै(१)यटानुरोधेन । यद्वा, प्रत्य न्वयद्वारैव तस्य क्रियान्वय इति शौण्डादेरासक्तिक्रियान्वयेन न्वितास्यापि तदन्वय इति प्रकारान्तरेणापि तदभङ्गसम्भ भावे न मानम् । अक्षकुशला इत्यादौ तदासक्तत्वाद्यप्रती आधेयप्रधान इति । अधिशब्दस्याधिकरणवृत्तिरित्यर्थः । इदं

---

(१)**कैयटानुरोधेनेति**। अक्षशौण्डस्य धनम् इत्यादौ कर्तृकर्मद्वारा दनासम्भवात् आसक्त्यादिक्रियान्तर्भावेण वृत्तिकल्पनाया आवश्यकत्वात् स वाहे अधिकरणकारकस्य परम्परया क्रियान्वयकल्पनमयुक्तम् इति कैयटाद्य अक्षशौण्डस्य धनमस्ति इत्यादौ उद्देश्यवाचके लक्षणाश्रयणेऽपि अक्षशौण्ड

स च अधिकरणप्रधानः। मध्ये इत्यर्थात्तद्योगेऽव्ययेन आधारत्वविवक्षायां सप्तमी। यथा वृक्षे शाखेति। वनेऽन्तर्वनान्तर्वसति। यस्तु अधिकरणत्वमात्रवृत्तिरन्तःशब्दस्तस्य विभक्त्यर्थ इत्यव्ययीभावो नित्यसमासः। "प्रनिरन्तरि"ति णत्वमन्तर्वणम्।

**यत्तु** हरदत्तेनोक्तम्। तत्पुरुषस्य वैकल्पिकत्वात्पक्षेऽव्ययीभाव इति। तच्चिन्त्यम्। तत्पुरुषस्य वैकल्पिकत्वेऽपि अव्ययीभावस्य नित्यत्वाद्वने अन्तरिति त्वदुक्तविग्रहस्यैवासङ्गतेः। किं च विभक्त्यर्थमात्रवृत्तेरव्ययीभावो वचनग्रहणसामर्थ्यात्। अन्यथा वृक्षस्योपरीत्यादावतिप्रसङ्गाच्च। तत्कथं मध्यवाचिनः प्रसङ्गः। किं च प्रक्रियावाक्यान्तर्गतविभक्त्यर्थवृत्तेरेवाव्ययस्य समासः सन्निधानात् तत्सामर्थ्यादेव निपातेनाभिहितेऽपि सप्त-

---

**स्येश्वररूपाधिकरणवृत्तिरित्यर्थः। स्पष्टं चेदं खवि(१)धायके भाष्ये।** अधिकरणप्रधानस्येति। **अधिकरणशक्तिमात्रबोधकस्येत्यर्थः।** अधिकरणप्रधान इति। **मद्ध्यगताधिकरणत्वशक्तिप्रधान इत्यर्थः। तदाह** — मध्ये इत्यर्थादिति। वनेऽन्तरिति। **वनवृत्तिमध्यभागे इति बोधः।** अधिकरणत्वमात्रेति। **न तु मध्यालिङ्गिततद्वृत्तिरित्यर्थः।**

असङ्गतेरिति। **अव्ययीभावनित्यत्वेन व्यपेक्षायास्तत्रासम्भवादिति भावः।** अन्यथा। **अतोऽधिकार्थपठिताव्ययीभावस्वीकारे।** अतिप्रसङ्गाच्चेति। चो हेतौ। **अन्यथाऽन्यथेतिपदोपात्तसाध्ये हेत्वन्तराकथनेन तदसङ्गतिः**

---

**(१) भाष्ये इति।** तत्र हि "अध्युत्तरपदात् विग्रहाभावात् प्रत्ययविधानानुपपत्तिमाशङ्क्य नित्यप्रत्ययत्वेन समाधाय एवं तर्हि नायं प्रत्ययविधिरुपलभ्यते, किं तर्हि प्रकृतिः उपलभ्यते। अध्युत्तरपदं प्रकृतिर्नास्ति। किं कारणम्, विग्रहाभावात्। विग्रहपूर्विका समासप्रवृत्तिः। नच अधिना विग्रहो दृश्यते। एवं तर्हि बहुव्रीहिर्भविष्यति। भवति वै कश्चिद् अस्वपदविग्रहो बहुव्रीहिः। शोभनं मुखं अस्याः सुमुखी इति। नैवं शक्यम्। इह हि महदधीनम् इत्यत्रात्वं कप् च प्रसज्येयाताम्। एवं तर्हि अव्ययीभावो भविष्यति। एवमपि अधेः पूर्वनिपातः प्राप्नोति। राजदन्तादिषु पाठः करिष्यते। अथवा सप्तमीसमासोऽयम्। अधिः शौण्डादिषु पठ्यते। "अधिरीश्वरे" इत्यधेः कर्मप्रवचनीयत्वात् "यस्य चेश्वरवचनम्" इति सप्तम्यन्ता राजादयो अधिना समस्यन्ते। एवं च वाक्यमपि भवति यथा अधि ब्रह्मदत्ते पाञ्चाला इति एवं राजन्यधि राजाधीनम् इति। वृत्तिविषये च अधिशब्द

मपि स्थितम् । न चेतदिहास्ति । अवयविन आधारत्वाविवक्षायां सप्तमीति त्वयैवोक्तत्वादिति दिक् ।

यदप्याहुः । अन्तःशब्दो ऽधिकरणप्रधानः । तत्सामानाधिकरण्याद्व नात्सप्तमी वनरूपे मद्धये इत्यर्थात् । वनेऽन्तर्वनान्तर्वसति । पूर्वपदार्थप्रधान्ये तु अव्ययीभावः । वनस्यान्तरन्तर्वणामिति । अत्रेदं वक्तव्यम् । सामानाधिकरण्ये सप्तमीत्यसङ्गतं व्यधिकरणसमासप्रकरणात् "विशेषणं विशेष्येण" इत्यनेन गतार्थत्वात् । किं च मद्धयवाचिना ऽव्ययीभावो दुर्लभः । लक्षणाभावात् । अथाव्ययमिति योगविभागेन कथंचिदुपपत्तिं ब्रूषे, अपदिशमिति यथा; तर्हि तथैवेहापि नित्यसमासत्वादविग्रहत्वं स्यात् । तथा च वनस्यान्तरिति त्वदुक्तिर्विरुद्धयेत ।

"दिक्संख्ये सञ्ज्ञायाम्" ॥ नियमार्थमिति । कथं तर्हि 'त्रिलोकनाथेन सदा मखद्विषः' इति कालिदासः ? त्रिलोकशब्दस्यासञ्ज्ञत्वात् । न च समाहारे द्विगुः "द्विगोरि"ति ङीप्प्रसङ्गात् । न च पात्रादिः कल्प्यम् । 'यदि त्रिलोकीगणनापरा स्या'दिति प्रयोगविरोधात् । चोत्तरपद इति समासः । त्रिपदतत्पुरुषस्येह दुर्लभत्वात् । अत्रोच्यते लोकशब्दोऽत्र लोकसमुदायपरः । त्र्यवयवो लोकस्त्रिलोकः । शाकपार्थिवादिः । एतच्च "द्विगोर्लुगनपत्ये" इति सूत्रे भाष्य एव स्पष्टम् । एतेन 'नवर

---

स्पष्टैव । अवयविन इति । त्वद्रीत्या मद्धगताधारत्ववचनत्वेऽपि वनगताधारत्ववाचकत्वं न तस्येति भावः ।

अधिकरणप्रधान इति । शक्तिमत्प्रधान इत्यर्थः । असङ्गतमिति । विशेषणसमासेनैव गतार्थत्वात्तदाह—व्यधिकरणेति । एवं चैतत्प्रकरणे तथाऽकथनमनुचितमिति भावः ।

इह । शास्त्रे । दुर्लभत्वादिति । सुप्सुपेत्युक्तेरिति भावः । शाकपार्थिवादिरिति न च कैयटोक्ततत्प्रत्याख्याने दोषः । शाकप्रियपार्थिव इत्यादिवारणाय तद्वचनस्यावश्यकत्वेन कैयटोक्ततत्प्रत्याख्यानस्यासङ्गतत्वादिति भावः तद् ध्वनयन्नाह—एतच्चेति । भाष्य एवेति । तत्र (१) हि त्रैविद्य इत्यत्र त्र्यवयवा विद्यामधीते इति विग्रह इत्युक्तम् । एतेनेति । नवरसरुचिरामित्यस्य नव

---

(१) तत्रेति । त्रैविद्य इत्यत्र द्विगोः अण् प्रत्ययं मत्वा लुक् कस्मान्न भवति इति प्रश्न त्र्यवयवां विद्यामधीते इति विगृह्य विद्यात्रयरूपस्य समुदायस्य विद्यात्वं विवक्षितम् इति अ

सरुचिरा'मित्यादि व्याख्यातम् ।

"**तद्धितार्थो**" ॥ एकाऽपि सप्तमी विषयभेदाद्भिद्यते इत्याशयेनाह-**तद्धितार्थे विषये इत्यादि । सर्वनाम्न इति** । एतच्च पूर्वापरोदाहरणान्वयि । यद्यपि स्त्रियाः पुंवदित्यनेनापि प्रकृते निर्वाहः सिद्धस्तथाऽपि दक्षिणपूर्वेत्यादिसिद्ध्यर्थं सर्वनाम्न इत्यावश्यकं प्रतिपदोक्तत्वादिहापि न्याय्यमिति भावः । **षाण्मातुर इति** । "मातुरुत्संख्या" इत्यत् । अनपत्य इत्युक्ते "द्विगो र्लुगिति" लुक् । **विकल्पे प्राप्त इति** प्राचां ग्रन्थमनुसृत्योक्तम् । वस्तुतस्तु त्रयाणां समासे कृतेऽन्यपदार्थोपसंक्रमेण परस्परसंक्रमेण परस्परसंबन्धाभावाद् द्वन्द्वतत्पुरुषयोरप्राप्तौ सत्यां वचनमिति ध्येयम् । तत्र "तद्धितार्थे"ति सूत्रेणोत्तरपदे परे तत्पुरुषो वचनसामर्थ्यात्सिद्धः । एकार्थीभावसत्त्वादेव नित्यताऽपि सिद्धा । न हि महाविभाषापि सत्येकार्थीभावे सञ्ज्ञाया विकल्पिका । न च सञ्ज्ञाया भावाभावाविष्येते इति भाष्यविरोधात् । किं तु वैकल्पिकैकार्थीभावविषये नित्यैव तत्सञ्ज्ञा । इह तु वैकल्पि

---

वयवक्करससमूहेन रुचिरामित्यर्थ इति भावः ।

एकाऽपि सप्तमीति । **एकोच्चारणविषयाऽपि सप्तमी तन्त्रेणोच्चारणाद्भि(१)द्यत इत्यर्थः । द्वन्द्वसाधुत्वं तु सौत्रत्वात् । स्पष्टं चेदमादेशप्रत्यययोरिति सूत्रे मूले** । विषये इति । **अत एव पौर्वशाल इत्यादौ तद्धितोत्पत्तिः । अन्यथा उक्तार्थानामप्रयोग इति न स्यादिति भावः** । प्रतिप्रदोक्तत्वादिति । **निरवकाशत्वाभावे ऽपि प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकत्वाद् न्याय्यमिति भावः** । प्राचां ग्रन्थमिति । **भाष्यग्रन्थमित्यर्थः** । परस्परसम्बन्धाभावादिति । **निष्कृष्य पञ्चगोपदमात्रयोः परस्परं सामानाधिकरण्याभावाच्छत्रोपानहस्य चार्थमात्रवृत्त्यसम्भवादित्यर्थः । अन्यथा पञ्चगोधनपदानां परस्परं विशेष्यविशेषणभावपूर्वकमेवान्यपदार्थोपसङ्क्रमाच्छत्रोपानहप्रिय इत्यत्र समूहबोधपूर्वकमेव तदुपसङ्क्रमात्तदसङ्गतिः स्पष्टैव** । वचन-

---

(१)**भिद्यते इत्यर्थ इति** । ननु तद्धितार्थे वाच्ये इति कथं न व्याख्यायते इतिचेत् शृणु । पौर्वशाल इत्यादौ तद्धितानुत्पत्तेः, तदर्थस्य समासेनैवोक्तत्वात् 'उक्तार्थानामप्रयोग' इति

कत्वांशो बाधितः। एवं च वार्तिके तत्पुरुष इत्यंशो ज्ञापकसिद्धार्थानुवाद-मात्रम्। अत एव खादिरेतरशम्यमिति कर्मधारयोत्तरपदो बहुव्रीहिर्न तु त्रिपद इति समर्थसूत्रे कैयटोक्तं सङ्गच्छते। पुंवद्भावपूर्वनिपातयोः सिद्धये हि तथोक्तम्। अत एव चित्राजरद्गुरिति सङ्गच्छते। पूर्वकालैकेत्यादेर्जरद्ग-

सामर्थ्यादिति। तत्सामर्थ्याद् भूत(१)पूर्वं सामानाधिकरण्यमाश्रित्येत्यर्थः। बाधित इति। त्रयाणामेकार्थीभावे द्वयोर्व्यपेक्षाया दुर्लभत्वात्। महाविभाषा हि व्यपेक्षाया एव पक्षे बोधिकेति भावः। ज्ञापकसिद्धेति। वचनसामर्थ्यसिद्धत-त्पुरुषस्य न्यायसिद्धनित्यत्वरूपार्थस्य चानुवादमात्रमिति भावः। ज्ञापक-शब्दो बोधकपरः। अत एवेति। वार्तिकस्थतत्पुरुषपदस्य सूत्रसिद्धार्थानु-वादकत्वादेवेत्यर्थः। त्रिपदे हि बहुव्रीहौ खादिरीपदस्योत्तरपदत्वाभावात् पुंवत्त्वं न स्यात्। वार्तिकस्यापूर्वत्वं हि शम्यारूपे उत्तरपदे पूर्वयोस्त-त्पुरुषे पुंवत्कर्मधारयेत्यनेन पुंवत्त्वं सिद्धमेवेति तदाश्रयणं व्यर्थं स्यादिति भावः।

पूर्वनिपातेति। त्रिपदे बहुव्रीहावितरशब्दस्य सर्वनामत्वात् पूर्वनिपातः स्यादिति भावः। न चैवं पूर्वनिपातव्यावृत्तये तदाश्रयणस्यावश्यकत्वे कथं पूर्वोक्तार्थसाधकत्वेनास्य कैयटस्योपन्यास इति वाच्यम्। तपर इत्यादिनिर्देशैस्तत्पूर्वनिपातस्यानित्यत्वेनापि तत्सिद्धिरिति पुंवत्त्वमेव मुख्यं फलमित्याशयात्। कर्मधारयपूर्वपदकबहुव्रीहौ तु तस्य विशेषण-त्वेन पूर्वनिपातापत्तेः स न कृतः। सूत्रार्थानुवादकत्वे तु नात्र तत्प्राप्तिः दिक्संख्ययोरभावात्। अत एवेति। ज्ञापकसिद्धार्थानुवादत्वादेवेत्यर्थः। अन्यथा चित्राशब्दे पुंवत्त्वापत्तिरिति भावः। ननु भूतपूर्विकं सामानाधि-करण्यमादाय द्विगुवत् पूर्वकालैकेत्यपि दुर्वारमिति टच् दुर्वारोऽत आह—पूर्वकालैकेति। तस्य सामर्थ्यात् प्रवृत्तावप्यस्य प्रवृत्तौ मानाभाव इति भावः।

दिगर्थस्तु यदि सामानाधिकरण्यमात्रं नियामकं न तु निष्कृष्य तयो-रेवेत्याग्रह एवमेकार्थीभावमात्रमपेक्षितं न तु निष्कृष्येत्याग्रहः। अत एव "येन विधिः" इति सूत्रे भाष्ये प्रत्ययग्रहणे यस्मात्स विहित इत्यस्य पर-मगा(२)र्ग्यायणसिद्धिः प्रयोजनमुक्तम्। किं चैवं प्राची शाला प्रिया

(१)भूतपूर्वमिति। शास्त्रप्रवृत्तिवेलायां प्रवृत्तियोग्यनिमित्ताभावेऽपि तत्पूर्वभूतं निमि-त्तमादाय कार्यं विधेयं इत्यर्थिकयाम् 'सांप्रतिकाभावे भूतपूर्वगतिराश्रीयते' इत्यर्थः (?)।

कृतार्थतया भूतपूर्वगत्या प्रवृत्तेरयोगादिति दिक्। द्वन्द्वस्योदाहरणं तु
। दृषच्च प्रिये अस्य वाग्दृषदप्रियः। छत्रोपानहप्रियः। इह त्रिपदे
ौ कृते पूर्वयोर्नित्यं द्वन्द्वः। तेन समासान्तष्टजपि नित्य एव।
यत्तु पूर्वतन्त्रे बाधलक्षणे पृष्ठस्य युगपद्विधेरेकाहवद्द्विसामत्वमि-
रणे पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य इत्युदाहृत्य द्वन्द्वं कृत्वा
ीहिरिति पूर्वपक्षं रचयित्वा तत्रोपष्टम्भकतया कात्यायनवचनमिदमुप-
्। यच्च नेह द्वन्द्व इति सिद्धान्तयित्वा कात्यायनवचनं तु समासा-
विशेषमात्रविषयमित्युक्तम्। तदुभयमपि चिन्त्यम्। उत्तरपदे इत्यु-
 कृत्वेत्यस्यासङ्गतेः। स्वरे विशेषस्य स्पष्टतया समासान्तपर्यन्तमात्रे
वाच्च। नित्यसमासमिति वार्तिकस्य सङ्कोचे प्रमाणाभावाच्च।

---

**प्राक्छालाप्रिय इत्यादौ सामानाधिकरण्य(१)निबन्धनपुंवत्त्वा-
। पुंवत्त्वे यथा कथं चित्सामानाधिकरण्यं निमित्तम्। कर्मधारये
कृष्यत्यत्र मानाभावात्। तथा च्चार्थवृत्तिना द्वन्द्वे नियामिका न
ात्रवृत्तिता। अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः। अत एव भाष्ये
वचनमेव प्रत्याख्यातमित्युच्यते तदा मूलं सम्यगेवेति। वाग्दृषद-
। अत्र वाग्दृषदोः सामानाधिकरण्याभावेऽपि प्रियशब्देन तयोः
ाधिकरण्यात् बहुव्रीहिर्निर्बाधः। पूर्वतन्त्रे जैमिनीये बाधलक्षणे
ध्याये पृष्ठ्यः षडहो द्वादशाहे उत्पन्नस्तत्राहः क्रमेण रथन्तरबृह-
ाजशाक्वररैवतानि सामानि गवामयने पृष्ठ्यः षडह इत्यादि
्।**

ि कृत्वेति। बृहद्रथन्तरे सामनी यस्येत्यर्थः। नेह द्वन्द्व इति। किं नु
हुव्रीहिरेवेत्यर्थः। स्वरे विशेषस्येति। त्रिपदबहुव्रीहौ पूर्वपदप्रकृति-
बृहत्पदस्वरः। उत्तरपदे परतो द्वन्द्वे तु सतिशिष्टद्वन्द्वस्वरेण
न्तरेत्यन्तोदात्तमिति स्वरे विशेषः। स्वरविशेषेऽप्यस्य प्रवृत्ति-
मर्थसूत्रशेषे भाष्ये स्पष्टम्। तत्रैव हेतुमाह—नित्येति। चो हेतौ।
समासान्तमात्रकृतविशेषविषयत्वे। न चात्र द्वन्द्वे पूर्वपक्ष इव
यहःसु उभयोरनुष्ठानापत्तिः। एकस्मिन्नेकमितरस्मिन्नितरदिति

**संख्या(१)पूर्वो द्विगुः** ॥ **अत्रोक्त इति** । अयं भावः । पूर्वसूत्रविषय एवेयं सञ्ज्ञा ऽनन्तरस्येति न्यायात् । एतदर्थमेव हि तत्र योगविभागः कृतः । अन्यथा "दिक्संख्ये सञ्ज्ञायां तद्धितार्थोत्तरपदसमाहारे" इत्येव ब्रूयात् । तेन सप्तऋषय इत्यत्र "इगन्तकालेति" पूर्वपदप्रकृतिस्वरो न भवति किं तु समासान्तोदात्त एव । तथा च लक्ष्यं 'सप्तऋषीणां सुकृतां यत्र लोके' इत्यादि । **स नपुंसकमिति** । एतच्च मूले एव व्याख्यास्यते ।

**"कुत्सितानि कुत्सनैः"** ॥ कुत्स अवक्षेपणे । मत्यादिसूत्रे चकार(२)स्यानुक्तसमुच्चयार्थत्वाद् "वर्तमाने क्तः" इत्याशयेनाह—**कुत्स्यमा-**

---

**ह्यनुष्ठानं सिद्धान्ते इष्यते इति वाच्यम् । षडहापेक्ष इतरेतरयोगो न तदवयवापेक्ष इत्यदोषात् । केषुचिदहःसु घृतेन केषु चित्तैलेन भोजनेऽपि मासं घृततैलाभ्यां भोजयितव्यमितिवत् । यदि तु श्रुतौ बृहद्रथन्तरसामेत्यत्र श्रूयते तदा छान्दसत्वात् त्रिपदे बहुव्रीहौ द्वन्द्वो नेति कल्प्यम् । यदा चार्थान्तर्भावेणैकार्थीभावस्तदा हि द्वन्द्वस्य नित्यता वार्तिकसम्मता । यदा तु तदनन्तर्भावेणैकार्थीभावस्तदा द्वन्द्वाप्राप्त्या त्रिपदो निर्बाध एवेत्यन्ये ।**

स्वरो न भवतीति । **तत्र "दिक्संख्ये सञ्ज्ञायाम्" इति समासेन द्विगुत्वा-**

---

(१)**संख्यापूर्व इति** । समानविभक्तिमत्पदप्रकृतिकत्वे सति अभेदबोधकसङ्ख्यापूर्वपदत्वम् । संज्ञानवबोधकं सङ्ख्यापूर्वकसमानाधिकरणपदघटिततत्पुरुषत्वमिति यावत् "दिक्सङ्ख्ये सञ्ज्ञायाम्" इति सूत्रेण विहितपञ्चम्यादिषु कर्मधारये अतिप्रसङ्गवारणाय सञ्ज्ञानवबोधकेति "सङ्ख्यापूर्वो द्विगुरिति" सूत्रात् सङ्ख्यापूर्वकेति द्विमूर्द्धादौ तद्वावारणाय तत्पुरुषत्वमित्यादि । पञ्चपुलीत्यादौ पञ्चानां पुलानां समाहार इति व्युत्पत्तेः पुलपञ्चकस्य समाहार इति शाब्दोऽर्थः । समाहाराऽपेक्षाया बुद्धिविषयत्वम् । तेन पुलपदेन लक्षणया पञ्चपुलसमाहारो बोध्यते । पञ्चपदञ्च तात्पर्यग्राहकमिति दिक् ।

(२)**चकारस्येति** । तथाहि—

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
स्पष्टश्च रुषितश्चोभौ अभिव्याहृत इत्यपि ।
हृष्टतुष्टौ तथा क्रान्तस्तथोभौ संयतोद्यतौ ॥
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ।

म्रियन्ते इत्यमृताः । एतेऽपि चकारेण सङ्ग्राह्याः । तेनानुक्तसमुच्चयार्थश्चकारः स-

**नानीति** । तदर्थकानीत्यर्थः । **वैयाकरणखसूचिरिति** । सूचयतेरच इः । यः पृष्टः सन् प्रश्नं विस्मारयितुं खं सूचयति अहो निर्मलं गगनमिति स एवमुच्यते । **दुर्दुरूट इति** । दुल, उत्क्षेपे । दुःपूर्वः । औणादिकः कूटप्रत्ययः । बहुलमन्यत्रापीति णिलुक् । रलयोरेकविषयत्वस्मरणाद्रः । विशेष्यस्य पूर्वनिपातार्थं सूत्रम् । प्रायेणाग्रेऽप्येवमेव । शब्दप्रवृत्तिनिमित्तकुत्सायामेवायं, संनिधानात् । तेनेह न । मीमांसको दरिद्रः । **पूर्वसूत्रेणेति** । पापाणक(१)शब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वसूत्रेण समासे सति परनिपातः स्यात् । तस्मात्पूर्वनिपातार्थमिदं सूत्रमिति भावः । **लाक्षणिकमिति** । अत एव सामानाधिकरण्याद् मृगीव चपला मृगचपलेत्यादौ पुंवद्भावः । उत्तरपदोपस्थितश्यामत्वचापलादिद्वारमेवेह सादृश्यं

---

**भावादिति भावः** । एवमेवेति । **पूर्वनिपातार्थत्वमेवेत्यर्थः** ।

शब्दप्रवृ(२)त्तिनिमित्तेति । **वैयाकरणत्वादीत्यर्थः** । पापाणकेति । **अत्रैव सूत्रे कुत्सितशब्दः कुत्स्यमानपरः** । अत एव **पूर्वपदस्य सदृशलाक्षणिकत्वादेव। न च दर्शनीया या माता दर्शनीयामातेत्यत्रापि द्वयोरेकविशेष्यप्रतीतिजनकत्वेन सामानाधिकरण्यात् पुंवत्त्वापत्तिः। वृत्तौ वृत्तेः प्राक् च**

---

इति षष्ठ्या भाव्यम् ।

(१)**पापाणक इति** पापशब्दः आणकशब्दश्च कुत्सावाचकैः समस्यते स तत्पुरुषः इत्यर्थो बोध्यः । पापमस्यास्तीति मत्वर्थीयोऽच् । पापशब्दः पापवति वर्तते । आणकशब्दः कुरूपिणि वर्तते । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः इत्यमरः । ततश्च पापाणकशब्दौ निन्दाहेतुभूतपापकुरूपात्मकप्रवृत्तिनिमित्तौ कुत्साभिधायिनौ । अतः परं मूल एव द्रष्टव्यम् इति ।

(२) **शब्दप्रवृत्तिनिमित्तेति** । शब्दप्रवृत्तिनिमित्तत्वं च--स्ववाच्यत्वे सति स्ववाच्यवृत्तित्वे सति स्ववाच्योपस्थितीयप्रकारताश्रयत्वम् । न च पुँस्त्वादौ इदमतिव्याप्तमिति वाच्यम् । प्रकारतायां प्रवृत्तिनिमित्तावच्छिन्नधर्मितानिरूपितलिङ्गनिष्ठप्रकारतानिरूपितावच्छेदकत्वासामानाधिकरण्यनिवेशेन अदोषात् । वाच्यत्वनिवेशात् आकाशपदाप्रवृत्तिनिमित्ते आकाशपदजन्योपस्थितीयप्रकारतावति शब्दाश्रयत्वे नातिव्याप्तिः । वाच्यवृत्तित्वनिवेशात् वृत्तित्वस्य साक्षात् सम्बन्धेन विवक्षितत्वाच्च गवादिपदावाच्ये अवयवे संयोगविशेषरूपाकृतौ नातिव्याप्तिः । वाच्योपस्थितीयप्रकारतावत्त्वनिवेशात्

गृह्यते संनिधानात्। वागर्थाविवेत्यादावपि हि संनिहितसंपर्क्कादिद्वारमेव सादृश्यं प्रतीयते। कथं तर्हि उपमानपरता इति चेत्। भूतपूर्वगत्या शक्यार्थमादायेत्यवेहि। सामान्यवचनत्वं चोपमानोपमेयसाधारणधर्मविशिष्टोपमेयपरत्वं बोद्धव्यम्।

"**उपमितम्**(१)"॥ कथं 'भाष्याब्धिः क्वातिगम्भीर' इति कैयटः। सामान्यप्रयोगसत्त्वेनास्याप्रवृत्तेः। उच्यते। इह गाम्भीर्येण सादृश्यं न विवक्षितं, किंतु विततदुरवगाहत्वादिना। तस्य चाप्रयोगोऽस्त्येवेति निर्बाधः समासः।

"**विशेषणम्**"॥ ननु विशेषणविशे(२)ष्यभावे कामचारात्पाचकपाठकादाविव नीलोत्पलादावपि अव्यवस्थितः पूर्वनिपातः स्यादिति चेत्? अत्राहुः। जातिशब्दस्य गुणक्रियाशब्दयोः समभिव्याहारे विशेष्यसमर्पकतैव। तेन नीलोत्पलं पाचकब्राह्मण इति व्यवस्थित एव प्रयोगः। गुणशब्दयोः क्रियाशब्दयोर्गुणक्रियाशब्दयोश्चानियम एव। खञ्जकुब्जः, कुब्जखञ्जः। पाचकपाठकः पाठकपाचकः। खञ्जपाचकः पाचकखञ्ज इति। अत्र च मूल-

---

**सामानाधिकरण्य एव तत्प्रवृत्तेः। इवशब्दस्य द्योतकत्वाच्च वृत्तेः प्रागपि सामानाधिकरण्यमत्रेति बोद्ध्यम्।** भूतपूर्वगत्येति। **घनेन तुल्यः श्याम इति वाक्ये तच्छक्यार्थस्य सादृश्ये प्रतियोगित्वेनान्वयादुपमानत्वमस्तीति भावः।** उपमेयपरत्वमिति। **तच्च श्यामादिशब्दानां स्पष्टमेव।**
खञ्जपाचक इति। **खञ्जत्वं गुण इत्यभिमानेनेदम्। नन्वप्रधानमुपसर्जनमिति**

---

(१) **उपमितमिति**। सामान्याप्रयोग इत्यस्य किमुदाहरणम् पुरुषोऽयं व्याघ्र इव बलवान्। सामान्याप्रयोग इति शक्यमवक्तुम्। इहापि स्यात्। पुरुषोऽयं व्याघ्र इव शूरः। न स्यात्। कुतः, असामर्थ्यात्, कथमसामर्थ्यम्? सापेक्षमसमर्थवद्भवतीति। एवं तर्हि सिद्धे यद् सामान्याप्रयोगे इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः। भवति वै प्रधानस्य सापेक्षस्यापि समासः। किमेतस्य फलम्? राजपुरुषोऽभिरूपः, राजपुरुषो दर्शनीयः, इत्यादौ वृत्तिः सिद्धा भवति। इति भाष्याब्धिः इति सिद्धमिति दिक्।

(२)**विशेषणविशेष्यभाव इति**।

मुपसर्जनमिति महासञ्ज्ञा। अप्रधानं ह्युपसर्जनम्। गुणक्रिययोश्च द्रव्यं प्रत्यप्राधान्यं स्पष्टमेवेति। यद्वा, विशेषणविशेष्ययोश्च ससम्बन्धिकतया अन्यतरोपादानमात्रेणेतराक्षेपसम्भवे उभयोपादानं निरूढविशेषणविशेषपरिग्रहार्थम्। *रूढिश्च प्रागुक्ताभाष्यकारादिव्यवहारादवसीयते।

"**पूर्वापर**"॥ **अपरस्येति**। एतच्च पश्चादिति सूत्रे भाष्ये (१)स्थितम्। **बाहुलकादिति**। एकेषु मुख्येषु वीरयते पराक्रमते इति वा बोद्धयम्। **श्रेणिकृता इति**। एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समू(२)हः श्रेणिः। **कृताकृतमिति**। एकदेशकरणात् कृतम् एकदेशान्तरस्याकरणात्तदेवाकृतम्।

"**सन्महत्**"॥ गुणक्रियाशब्दैः सह समासे सदादीनां पूर्वनिपातनियमार्थं सूत्रम्।

---

**महासञ्ज्ञया ऽनेकस्य प्रथमानिर्दिष्टत्वे अप्रधानस्यैव सञ्ज्ञा न प्रधानस्येति बोधयितुं शक्यम्। न त्वप्राधान्यं कस्येत्यत्रास्य नियामकतेत्यरुचेराह**—यद्वेति। निरूढविशेषणेति **विषयताविशेषप्रकारतावदित्यर्थः। तदेव हि लोकस्य विशेषणत्वेन प्रसिद्धम्। ननु द्रव्यगुणसमभिव्याहारे कस्य तादृशविषयतावत्त्वमत आह**—रूढिश्चेति। **रूढिविषयतासदृशविषयतावत्त्वमित्यर्थः**। अवसीयत इति। **गुणादेरेतादृशविषयतावत्त्वं निश्चीयत इत्यर्थः।**

एकेनेति। **अनेकशिल्पादिजीविन एकशिल्पादिजीविनः कृता इत्युदाहरणार्थः। असमूहरूपाः समूहरूपाः कृता इति वा।**

गुणक्रियेति। **सत्पाठकः सच्छुक्ल इत्यादौ।**

---

* निरूढिश्च प्रागुक्ता भाष्यकारादिव्यवहारादनुमीयते। इति पुस्तकान्तरे पाठोऽवलोक्यते।

(१) **भाष्येस्थितमिति**। अर्धे च इति वार्तिकम् अपरस्यार्धे पश्चभावविधायकम् तदेवार्थतोऽनुवदति। 'अपरस्यार्धे' इत्यादिना मूले।

(२) **समूहःश्रेणिः इति**। शिल्पेन पण्येन वा जीविनां समूहाः श्रेणयः। पूर्वं शिल्पेन पण्येन वा जीवितुमसमर्थाः इदानीं तेन जीवितुं समर्थाः कृता इत्यर्थे समासे सति श्रेणीकृता इति भवतीत्यर्थः। श्रेणिशब्दो ह्रस्वान्तो भाष्ये तथैवोदाहरणात्। यदा तु सिद्धा

**"तत्पुरुषः"** ॥ समानाधिकरण(१) इत्यर्शआद्यजन्तम्। औपचारिकं वा। समानाधिकरणपद इत्यर्थः। **भाषितपुंस्कादित्यादि**। एतच्च "स्त्रियाः पुंवदि" तिसूत्रे स्फुटीकरिष्यते। ननु तेनैव कर्मधारये सिद्धम्। जातीयदेशीययोश्च तसिलादिष्विति सिद्धम्। तत्किमनेन सूत्रेणेत्यत आह—**पूरणीत्यादि**। **तथेत्यादि च**। **स्त्रीपुंसलक्षणेति**। स्तनश्मश्र्वादियुक्ता स्त्री पोटेत्यमरव्याख्यातारः। हरदत्तस्तु नपुंसकं पोटेत्याह। तत्र मूलं मृग्यम्। अमरेण नपुंसकपर्यायेभ्यः पृथगेवास्य पाठात्। **कठधूर्त इति**। नात्र कठत्वं कुत्स्यतेऽतः "कुत्सितानि कुत्सनैः" इति गतार्थता न शङ्क्या। प्रवृत्तिनिमित्तकुत्सायामेव तस्य प्रवृत्तेः। कथं तर्हि 'जनयति कुमुदभ्रान्तिं धूर्तबको बालमत्स्याना' मिति। बकधूर्त इति युक्तम्? सत्यम्। प्रमाद एवायमिति प्रामाणिकाः।

**"प्रशंसावचनैश्च"** ॥ वचनग्रहणं रूढिश(२)ब्दपरिग्रहार्थम्। ये तु यौगिकाः प्रशस्तशोभनरमणीयादयो ये च विशेषवचनाः शुचिमृद्वादयो ये च गौण्या वृत्त्या प्रशंसां गमयन्ति सिंहो माणवक इत्यादयस्ते सर्वे व्युदस्यन्ते।

**"कुमारः"** ॥ **एतदेवेति**। एवकारः स्फुटसिद्धत्वद्योतनार्थः। ज्ञापकान्तरस्यापि सम्भवात्। तथा हि—युवा खलतीति सूत्रे जरतीग्रहणं लिङ्गम्। न हि युवन्शब्दस्य पुंस्त्वे जरतीसामानाधिकरण्यं न्याय्यम्।

---

रूढिशब्देति। **ते च मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनीति कोशप्रसिद्धा मतल्लिकादयः।**

न्याय्यमिति। **न च युवत्वारोपवत् पुंस्त्वस्याप्यारोपेण सामानाधिकर-**

---

(१) **समानाधिकरण इति**। समानम् एकम् अधिकरणम् तदस्यास्तीति विग्रहे अर्श आदित्वादच्।

(२) **रूढिशब्दपरिग्रहार्थम् इति**। रूढ—यौगिक—योगरूढ—यौगिकरूढ—भेदेन चतुर्विधाश्शब्दाः। अवयवशक्तिनैरपेक्ष्येण समुदायशक्तिमत्पदत्वं रूढत्वम्। यथा—गो, मण्डपादिः। समुदायशक्तिनैरपेक्ष्येणावयवशक्तिमत्पदत्वं यौगिकत्वम्। यथा पाचकादिः।

धादिभ्यः फञिवधौ पुंसि जात इति गणसूत्रे पुंसीत्युक्तिरपीह ज्ञापि-
तन्न । एकादेशस्य पूर्वान्तग्रहणे ज्ञापकस्य मूलशैथिल्यात् ।
**चतुष्पादो गर्भिण्या"** ॥ मण्डूकप्लुत्या जातिरित्यनुवर्तते ।
—कालाक्षी गर्भिणी । चतुष्पात् किम् ? ब्राह्मणी गर्भिणी । प्रत्यु·
तु विशेषणमिति समासः स्यादेव । पूर्वनिपाते विशेषः ।
**मयूरव्यंसकादयश्च"** ॥ चकारोऽवधारणार्थः समासान्तरं
१)र्वयति । **धूर्त इति** । तथा च गुणवचनत्वात् पूर्वनिपाते प्राप्ते इदं
ति भावः । अन्ये त्वाहुः । मयूर इव व्यंसको मयूरव्यंसकः । "उप-
सामान्यवचनैरि"ति सिद्धे पुनर्विधानं तत्पुरुषे तुल्यार्थेति स्वरो भा-
। स ह्युपमानशब्देन विहिते समासे प्रवर्तते । **अश्नीतपिब-**
। इह क्रियारूपस्यान्यपदार्थस्य प्राधान्यात्स्त्रीत्वाट्टाप् । एवमग्रेऽपि ।
**न्तरमिति** । अन्तरशब्दो भिन्नवाची । मात्रं कार्त्स्न्ये ऽवधारणे ।
ात्रशब्दाभ्यां सह नित्यसमासः ।
**"नञ्"** ॥ उत्तरपदार्थप्रधानोऽयं समासः । तथा हि—आरो-

---

यारोपापेक्षया लक्ष्यानुसारेण परिभाषा(२)ज्ञापनस्यैवौचित्यात् ।
ग्रहणेति । पूर्वान्ततया ग्रहणेत्यर्थः । क्वचित्तथैव पाठः ।
निपाते विशेष इति । गुणवचनत्वात् गर्भिणीशब्दस्य पूर्वनिपात इति भावः ।
मानशब्देनेति । 'लक्षणप्रतिपदोक्तपरिभाषया'इति भावः । इदं च मतं
स्पष्टम् । क्रियारूपस्येति । क्रियापदवाच्यरूपस्येत्यर्थः । भिन्नवाचीति ।
र्थप्रधानश्चायम् । नित्येति । तेन ताभ्यां विग्रहो न ।
रपदार्थेति । स्पष्टं चेदं भाष्ये । आरोपितत्वं नञा द्योत्यते इति
तब्राह्मणत्वं ब्राह्मणपदप्रवृत्तिनिमित्तमित्यब्राह्मण इत्यत्र नञा
इत्यर्थः । एवमन्यत्रापि बोद्धव्यम् । एतदेव भाष्यसंमतम् । नञो
(३)त्वे आहु—आरोपमात्रं चेति । इदं नञ्वाच्यमेवोत्तरपदार्थे वि·

---

) व्यावर्तयतीति । परममयूरव्यंसक इत्यादौ ।
) परिभाषाज्ञापनस्यैवौचित्यादिति । अन्यथा युवशब्देन जरतीशब्दस्य
धिकरण्यासम्भवात् तदसङ्गतिः स्यादिति भावः ।

पितत्वं नञा द्योत्यते, आरोपमात्रं वा । विषयत्वं तु संसर्गः । तथाच

शेषणं तदाह—विषयत्वं तु संसर्ग इति । **तादात्म्यारोपश्चात्र । नामार्थयोर-भेदान्वयव्युत्पत्तिस्तु निपातातिरिक्तविषयेति भावः ।**

**यत्तु अत्रापि पक्षे द्योतकतैव नञ इति तन्न । समभिव्याहृतपदशक्त्या ह्युद्बोधकत्वस्य द्योतकत्वे विशि(१)ष्टस्यैव तच्छक्तिविषयतया पृथगुपस्थित्यभावेन विषयत्वं तु संसर्ग इत्यस्यासङ्गतेः । पृथगुपस्थितयोर्हि संसर्गो भवतीत्याहुः(२) ।**

---

तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकस्स विचार्यते ॥ २ ॥ इति ।

(१) **विशिष्टस्येति** । अवयवशक्त्यालिङ्गितस्येत्यर्थः ।

(२) **आहुरिति** । वस्तुतस्तु—संसर्गाभावोऽन्योन्याभावो वार्थः । संसर्गाभावस्त्रिविधः । प्रागभावः । ध्वंसाभावः । अत्यन्ताभावः । तत्रायं नियमः । यत्र विशेष्यविशेषणयोर्भावान्वये अभेदान्वयबोधः तत्रैवान्योन्याभावो नञा बोध्यते । यथा अयं घटो नीलः इत्यत्र भावान्वये नीलघटयोः अभेदो भासते । नायं नीलो घटः इत्यत्र अभेदान्वये घटे नीलभेदो भासते । अतएव "यजतिषु ये यजामहं करोति नानुयाजेषु" इत्यत्र अनुयाजभिन्नेषु यजतिष्वेव येयजामहस्य कर्तव्यता भासते । यत्र तु प्रतियोग्यनुयोगिनोर्भावान्वये भेदो भासते तत्र संसर्गाभावो नञा बोध्यते । यथा भूतले घटः, न भूतले घटः, पचति चैत्रः, न पचति चैत्रः । चैत्रस्य ओदनम्, न चैत्रस्य ओदनम् । इत्यत्र भूतलादौ अनुयोगिनि घटकृतिस्वत्वानां भेदो भासते । अभावान्वये तेषां संसर्गाभावो बोध्यते । तेन भूतलवृत्तित्वाभाववान् घटः इति बोधः । पाकानुकूलकृत्यभाववान् चैत्रः । चैत्रसम्बन्धित्वाभाववत् ओदनम् इत्यन्वयबोधः ।

अत्रापि विशेषः—यत्र अनुयोगिनि नामार्थप्रतियोगिकसंसर्गाभावबोधः, तत्र अवश्यम् अनुयोगिपदे सप्तम्यपेक्षा कार्या । तत्र च अभावान्वये अन्वयितावच्छेदकावच्छिन्नप्रतियोगित्वं व्युत्पत्त्या भासते । नीलघटवति भूतले न घटः, एवं नीलो घटो न घटः इत्यप्रतीतेः । एवं पीतघटवति न नीलघटः पीतघटे न नीलघट इति प्रतीतेश्च ।

यत्र तु सामान्ये विधिर्निषेधो वा, विशेषे च निषेधो विधिश्च, तत्र सामान्यस्य विशेषेतरपरत्वं कल्प्यते । पदार्थान्तरसाकाङ्क्षं विशेषमपहाय तदितरदेव सामान्यमन्वेति इति व्युत्पत्तेः । यथा ब्राह्मणेभ्यो दधि दातव्यम् कौण्डिन्याय न दातव्यम् इत्यत्र ब्राह्मणसामान्यस्य कौण्डिन्येतरपरत्वम् । प्रकृते तु ब्राह्मणसामान्यं दधिदाने साकाङ्क्षं, कौण्डिन्यस्तु तदभावसाकाङ्क्ष इति सामान्ये तदितरपरत्वं कल्प्यते । एवं ब्राह्मणेभ्यो दधि दातव्यम् कौण्डिन्याय तक्रम् इत्यत्र दध्यपेक्षया पदार्थान्तरं तक्रम् इत्यतो ब्राह्मणसामान्यस्य तदितरपरत्वम् भासते । तेन कौण्डिन्यस्य ब्राह्मणत्वपुरस्कारेण [illegible]

ाह्मणत्ववानिति प्रदर्शनीयम् । अत्राद्यमेव युक्तं न त्वन्त्यम् । नञर्थत्वेऽपि ब्राह्मणादिपदानां मुख्यसम्बन्धेन ब्राह्मणत्वादि- ाक्तिग्रहात्तत्रारोपितत्वान्वयस्य दुर्घटत्वात् । न च नञसम ाराात्तदर्थत्यागः । शब्दार्थसम्बन्धस्यानित्यत्वापत्तेः । मम तु ः । मुख्यसम्बन्धेन ब्राह्मणत्ववत इवारोपितसम्बन्धेन ब्रा- तोऽपि तदर्थत्वात् । नञ् तु स्वविशिष्टस्य तदर्थकत्वतात्पर्यनिर्णा- इदमेव नञो द्योतकत्वं नाम । एतावतैवात्रैकार्थीभावव्यवहारोऽपि ानुपूर्व्या द्योत्यार्थान्तर्भावेण शक्ततावच्छेदकत्वाद्विशिष्टस्यार्थव- समासविधायकशास्त्रबलादत्रैवमेव कल्पनोचिता । प्रजयतीत्या- नैवम् । अडादिव्यवस्थार्थमन्यथा तत्र कल्पनात् । लोकस्य

---

साकाङ्क्षः अतो हिंसासामान्यस्य वैधेतरपरत्वेन वैधेतराहिंसैव अनर्थहेतुरिति निष्कर्षः ।
नञः क्वचित् प्रसज्यप्रतिषेधे शक्तिः—

स्तु—

अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ १ ॥

। उक्तलक्षणः ।

लक्षणया पर्युदासबोधकत्वं च ।

ुदासलक्षणं तु—

प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ इति ।

ा एकादश्यां न भुञ्जीत इत्यत्र भोजनस्य रागत एव एकादश्याम- तत्प्रतिषेधो बोध्यते । एकादशीभिन्ने तु भुञ्जीतेति पर्युदासविधिः । भोजन- लं रागप्राप्तत्वात् कथं पर्युदासः । द्वितीयं यथा—अथ श्राद्धममावास्यायां दद्यात् इत्यादि सामान्यशास्त्रम् । तदनु रात्रौ श्राद्धं न कुर्वीत सन्ध्ययोरुभयो- विशेषनिषेधस्तु पर्युदासविधिः कल्प्यते । तेन रात्रिसन्ध्येतरामावास्यायां पितृभ्यो ापर्युदासाल्लभ्यते नतु निषेधविधिना रात्रिसन्ध्याधिकरणकश्राद्धे निषेधो ते । सामान्यश्राद्धस्य रात्रिसन्ध्यांशे कर्तव्यतापत्तेः । एवं 'न सगोत्रां नसमाना- र्यां विन्देत' इत्यादौ यदान्वपरिवेदनस्य शास्त्रतः प्राप्तिः तदा पर्युदासः । यदा तु- ्राप्तिः तदा प्रसज्य प्रतिषेध एव अवगम्यते ।

चेत्तु—अतिरात्रे षोडशिनं गृह्णीयात् न अतिरात्रे षोडशिनम् इतिवत् अत्रापि इच्छा- इति वदन्ति । तन्न । तत्र तुल्यत्वात् । अत्र तु सामान्यविशेषभावेन अतुल्यबलत्वा- क्षेपः ।

पर्यवस्यति। अत एवानुपसर्जनत्वादतस्मिन्नित्यादौ सर्वनामकार्यं सिद्ध्यति। तत्पुरुषस्यौत्सर्गिकमुत्तरपदार्थप्राधान्यमप्येवं सति निर्बाधम्। "एतत्तदोरिति" सूत्रे ऽनञ्समासग्रहणं चेह लिङ्गम्।

मीमांसकादयस्तु ब्राह्म(१)णभिन्न इत्यादिशाब्दबोध एवेत्याहुः। तन्मते ऽस इत्यादेरतिसर्व इत्यादिसमकक्षत्वात् सर्वनामसञ्ज्ञाकार्यं गणकार्यं च न स्यात्।

यत्तु—

---

तु तत्रापि विशिष्टशक्त्यैव बोधः अवयवशक्तिबोधनद्वारा विशिष्टस्य विशिष्टशक्तिबोधकमेव च व्याकरणमिति दिक्।

पर्यवस्यतीति। भेदे(२) एवारोपस्य सम्भवादिति भावः। अत एव उत्तरपदार्थप्रधानत्वादेव। इह लिङ्गमिति। अन्यथोपसर्जन(३)त्वादत्वानापत्तौ हलङ्यादिलोपस्य दुर्वारत्वेन तद्वैयर्थ्यं स्पष्टमेव। न च वचनसामर्थ्यादुपसर्जनत्वेऽप्यत्वमिति वाच्यम्। लाघवेनोत्तरपदार्थप्राधान्यस्यैव ज्ञापयितुं युक्तत्वात्। अब्राह्मणानश्वयोर्विशेषश्चिन्त्यः(४)।

---

(१)ब्राह्मणभिन्न इति। वैयाकरणमते पर्युदासप्रसज्यप्रतिषेधभेदेन नञर्थो द्विविधः। तत्र आरोपविषयत्वं नञ्पर्युदासयोत्यम्। आरोपविषयत्वद्योतकत्वं च नञः समभिव्याहृतघटादिपदानामारोपितप्रवृत्तिनिमित्तबोधकत्वे सति तात्पर्यग्राहकत्वम्। प्रवृत्तिनिमित्तकत्वम्(?) घटत्वब्राह्मणत्वादि। तस्मात् अब्राह्मण इत्यादौ आरोपितब्राह्मणत्ववान् क्षत्रियादिरिति बोधः। अतएव उत्तरपदार्थप्राधान्यं नञ् तत्पुरुषस्य इति प्रवादः सङ्गच्छते। अत एव च अतस्मै ब्राह्मणाय असः शिवः इत्यादौ सर्वनामकार्यं जायते। अन्यथा गौणत्वान्न स्यात्। प्रवृत्तिनिमित्तारोपस्तु सदृशे एव भवतीति पर्युदासः सदृशग्राहीति प्रवादः। पर्युदासे निषेधार्थस्त्वार्थः अन्यस्मिन् अन्यधर्मारोपस्त्वाहार्यज्ञानरूपः। बाधकालिकमिच्छाजन्यं ज्ञानमेवाहार्यमित्याहुः। सादृश्यादयस्तु प्रयोगोपाधयः पर्युदासे तु आर्थिकार्थाः। तदुक्तं हरिणा तत्सादृश्यमभावश्चेत्यादिना।

(२) भेद इति। नञर्थस्य भेदरूपत्वादित्यर्थः।

(३)उपसर्जनत्वादिति। इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वादित्यर्थः।

(४) चिन्त्य इति। तत्सादृश्यं गर्दभेऽनश्वोऽयमित्यादौ। समस्तासमस्तभेदेन प्रसज्यप्रतिषेधो द्विविधः। तत्र विशेष्यतया क्रियान्वयनियमात् सुबन्तेन असामर्थ्येऽपि "असूर्यललाटयोः" इत्यादिज्ञापकात् समासः।

तथाहि—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।

अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥

इति पठित्वा अब्राह्मणः, अपापम् , अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोअश्वेभ्यः, अधर्म्मः, इत्युदाहरन्ति ।

तत्तु यथायथमार्थिकार्थमभिप्रेत्य कथञ्चिन्नेयम् । सर्वथाऽपि नञ्समासस्योत्तरपदप्राधान्यं भाष्योक्तं नान्यथयितव्यम् । अत एवानेकमन्यपदार्थे इत्यत्रानेकशब्दादेकवचनं प्रयुक्तम् । माघेऽपि 'सेव्यते ऽनेकया सन्नतापाङ्गया' इति । कथं तर्हि 'पतन्त्यनेके जलधेरिवोर्मयः' इति ? उच्यते । अद्ध्यारोपितैकत्वानां प्रकृत्यर्थतया तत्र वास्तवबहुत्वाभिप्रायं बहुवचनम् । यद्वा समुदायबहुत्वे बहुवचनम् । रथोऽश्वो गजश्च प्रत्येकमनेकस्ततः अनेकश्चानेकश्चेत्येकशेषात् ।

यत्तु प्राचीनप्रक्रियायां व्याचक्षाणा आहुः—नञ्विशिष्टेनोत्तरपदेन सादृश्या-

---

आर्थिकार्थमिति । आरोपितत्वबोधोत्तरं प्रकरणादितात्पर्यग्राहकवशान्मानसस्तदर्थबोध इति भावः। उत्तरपदप्राधान्यम्। तदर्थप्राधान्यम्। भाष्योक्तमिति । अनेन कैयटाद्युपपादितपूर्वपदार्थप्रा(?)धान्यपक्षस्य तदसम्मत्या तुच्छत्वं बोधितम् । तच्चान्यत्र प्रपाञ्चितम् । वास्तवबहुत्वेति । नन्वेकत्वादेरीदृशोविषये आरोपे तस्योत्तरत्वेनोत्तरसंख्यायाश्च पूर्वसंख्याव्यवहारप्रतिबन्धकत्वाच्च तत्र बहुत्वभानम्। शब्देनैकत्वस्यैवोपस्थितेश्च । अन्यथा ऽनेकमन्यपदार्थे इत्यत्रापि वास्तवबहुत्वसत्त्वाद् बहुवचनापत्तिरित्यरुचेराह—यद्वेति । रथो गज इत्युपलक्षणं सायकसमूहस्यापि । अनेके इत्यस्य पद्यभेदेनोभयविशेषणत्वात् ।

सादृश्यादय इति । तद्वन्त इत्यर्थः। कारिकायां सादृश्यादीनामिति पाठद-

---

दि गुणोदाहरणम् । क्रियोदाहरणम् आविच(?)गेहे घटो नास्ति तस्य समस्तस्य तु अत्यन्ताभाव एवार्थः, असमस्तस्य तु अत्यन्ताभावोऽन्योन्याभावश्च । तादात्म्येतरसंबन्धाभावोऽत्यन्ताभावः, तादात्म्यसम्बन्धाभावोऽन्योन्याभावः । भेद इत्यर्थः। असूर्यपश्या राजदाराः, गेहे घटो नास्ति, घटो न पट इत्युदाहरणानि । प्रागभावप्रध्वंसाभावौ तु नञ्द्योत्यौ। तदन्यत्वम् अमनुष्यं प्राणिनम् आनयेत्यादौ । तदल्पत्वम् अनुदरा कन्या इत्यत्र । अर्थात् स्थूलत्वनिषेधेन उदरस्याल्पत्वं गम्यते । अप्राशस्त्यं ब्राह्मणे अब्राह्मणोऽयम् इति प्रयोगे । विरोधः असुरः अधर्म-

दयो लक्ष्यन्त इत्यादि । तत् स्वकीयग्रन्थसन्दर्भविरुद्धमाकरविरुद्ध पि विचारचिन्ता(१)मणावुक्तम् ।

समासे तूत्तरपदप्राधान्यं मासजातवत् ।
नञर्थमिलितं तच्च सदृशादीनि लक्षयेत् ॥ इति ।

तदप्युक्तरीत्या भाष्यविरुद्धमिति स्पष्टमेव । यदि तु स्वा लम्ब्यते तर्हि कथञ्चित्समर्थयितुं शक्यम् । तथाहि—अस्तु लक्षणं ऽपि नञ्समासे उत्तरपदप्राधान्यप्रयुक्तकार्याणि लप्स्यन्ते । अनञ ज्ञापकात् "उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः" इति न्याय।

---

र्शनात् । तत्स्वकीयेति । तद्ग्रन्थेऽपि पूर्वन्तेषामार्थिकार्थत्वकथन। रविरुद्धं चेति । विशिष्टेन लक्षितस्य प्राधान्येऽपि आकरोक्तोत्तरप न्यहानेरिति भावः । मासजातवदिति । तत्र यथा जातस्य प्राधा कृते ब्राह्मणादेरारोपितो ब्राह्मण इति बोधात् । नञर्थमिलित प्रकारेण जनितबोधम् । तत् समस्तं पदम् । आवृत्त्या सादृशा त्यर्थ इति तद्व्याख्यातारः ।

भाष्यविरुद्धमिति । तथा प्रकारस्य भाष्येऽनुक्तेः । अर्थत एव म्भवेन लक्षणाया व्यर्थत्वाच्च । समर्थयितुमिति । मीमांसकाद्युक्त प्राधान्यमिति शेषः । लक्षणैवेति । नञो भेदवत्यर्थे इत्यर्थः । इदमु निपातानामनेकार्थत्वादित्यस्यापि । ज्ञापकादिति । नञ्समासे उत्त धान्ये सति यद्भवति तत्पूर्वपदार्थप्राधान्ये ऽपीति सामान्या दनेकमित्यादावेकवचनस्यापि सिद्धिः । एवमाश्रयणे ऽतिगौरवं त्तरपदार्थप्राधान्यज्ञापकत्वमेवोचितम् । एतदेव ध्वनयतोक्तम्—

यत्तु इदं समर्थनं विचारचिन्तामणिश्लोकोत्तरार्द्धार्थस्येति त्रोत्तरपदस्य तदर्थलाक्षणिकत्वे तद्विशेष्यकबोधे चोपसर्जनत्वा त्वादिसिद्धये ज्ञापकोपन्यासवैयर्थ्यापत्तेः । लाक्षणिकतामात्र त्वाभावाद्विशिष्टस्य लाक्षणिकत्वे तूत्तरपदप्राधान्यमिति तदु दित्यूह्यम् । नन्विदं भाष्ये नोक्तमत आह—उपेयेति । लक्ष्येत्यर्थः

---

(१) विचारचिन्तामणावुक्तमिति । विचारचिन्तामणिकृतां अयं आ घटप्रतियोगिके लाक्षणिकम् । नञ्पदं तु भेदवति, अतो घटप्रतियोगिकभेदव

त्विति वदन् वाक्ये नञो ऽसमस्तत्वात् क्रिययैवान्वय इति ध्वन(१)यति। यतः—

सम्बोधनान्तं कृत्वोर्थाः कारकं प्रथमो वतिः ।
धातुसंबन्धाधिकारनिष्पन्नमसमस्तनञ् ॥ १ ॥
तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् ।
साधुत्वमष्टकस्यास्य क्रिययैवावधार्यताम् ॥ २ ॥

युक्तं चैतत् । त्वं पचसि, युवां पचथः, इत्यादौ नञ्समभिव्याहारे क्रियाया एव निषेधप्रतीतिरनुभवसिद्धत्वात् । भवतिप्रयोगे ऽपि तथैव न्याय्यत्वात् । घटो नास्ति, पटौ न स्तः, अहं तत्र नास्मि, इत्यादौ वचनपुरुषव्य-

---

मर्थने ऽव्यत्रासाधुत्वमेव मुनित्रयसंमतेऽर्थे एव शब्दानां साधुत्वस्य सर्वसंमतत्वादिति बोध्यम् । वदन्निति । विचारचिन्तामणिकृदिति भावः। यत इति । यतोऽवधारितं ततो ध्वनयतीत्यन्वयः। सम्बोधनान्तम् ।

अत्र—

'संबोधनपदं यच्च तत्क्रियायां विशेषणम् ।'

इति हर्युक्तिः प्रमाणम् । कृत्वोर्थाः । क्रियाजन्मगणने तद्विधानात् । कारकम् । कर्त्रादिषट्कम । क्रियाजनकस्यैव कारकाधिकारेण कर्त्रादि(२)सञ्ज्ञाविधानात् । प्रथमो वतिः । "तेन तुल्यं क्रिया चेद्" ति विहितः । असमस्तनञ् । प्रसज्यप्रतिषेधार्थक इति शेषः । अत एव प्रसज्यप्रतिषेधा(३) ऽसमर्थसमास इति तत्रतत्र भाष्यकृत् । एतत् । असमस्तनञः क्रियान्वयित्वम् ।

वचनपुरुषव्यवस्थेति । पटाभावो मदभाव इत्यर्थे एकवचनप्रथमपुरुषयोरे-

---

(१) ध्वनयति इति । अत्यन्ताभावो विशेष्यतया तिङन्तार्थक्रियान्वय्येव नञर्थात्यन्ताभावविशेष्यकबोधे तिङ्समभिव्याहृतधातुजन्योपस्थितेः कारणत्वादिति । तथाच

'नक्रोधो नच मात्सर्यं नलोभो नाशुभा मितिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे' ।

इत्यत्रप्रत्येकं भवतीत्यस्य भवन्तीत्यत्र अध्याहारेण एतेन एवं प्रकारेणान्वयबोधो बोध्यः। घटो नास्तीत्यादौ घटकर्तृकसत्ताप्रतियोगिकोऽभाव इति बोध इति दिक् ।

(२) कर्त्रादिसंज्ञाविधानादिति । विशेष्यतया कारकादिप्रकारकबोधं प्रति धातुजन्यभावनोपस्थितिर्हेतुरिति कार्यकारणभावस्य व्युत्पत्तिसिद्धत्वात् यत्रापि भावना पक्ता पाचक इत्यादौ गुणभूता तत्रापि क्लृप्तकार्यकारणभावानुरोधात् तस्यामेव अन्वयबोध इति दिक्।

(३) प्रसज्यप्रतिषेधेऽसमर्थसमास इति । 'सुडनपुंसकस्य' इति ज्ञापकात् । अन्य-

वस्थादर्शनाच्च । अन्यथाऽर्थाभावे ऽव्ययीभावस्य दुर्वारत्वाच्च ।

यत्तु भूतलाधेयत्वाभाववान् घट इत्यर्थवर्णनम् । तन्न, क्रियानन्वये कारकविभक्तेर्दुर्लभत्वात् । तस्मात्कारकविशिष्टक्रियाया नञर्थेऽन्वयः शाब्दः इत्येव तत्त्वम् । भाष्यवार्तिकेत्युपलक्षणम्, साम्प्रदायिकरीत्या पूर्वपदार्थप्राधान्ये ऽव्ययीभावः, उत्तरपदार्थप्राधान्ये तत्पुरुषः, इति विषयविवेकस्य सुलभत्वात् ।

यत्तु वदन्ति । यदा ऽभावसामान्ये नञ् वर्तते तदा ऽव्ययीभावः । अभावविशेषविवक्षायां तत्पुरुष एव । तस्य नञर्थत्वाभावेन पूर्वपदार्थप्राधान्यासंभवादिति । तन्न । पापाभावोऽपापमिति स्वोक्ततत्पुरुषोदाहरणे ऽपि अभावत्वेनैवाभावभावेनाव्ययीभावस्य दुर्वारत्वात् ।

यदपि विशेषस्य नञर्थत्वं नास्तीति । तदपि न, निर्विशेषस्य सामान्यस्याभावात् । विशेषरूपेण वाच्यत्वं नास्तीति चेत्? तर्हि अविघ्नमित्यादिरव्ययीभावो दत्तजलाञ्जलिरेव स्यादिति न किञ्चिदेतत् ।

**नञो नलोप इति** । तिङन्तेन समासाभावादप्राप्तौ वचनम् । **अपचसीति** । कुत्सितं पचसीत्यर्थः । **नशब्देनेति** । नञो समासे त्वनेकधेत्येव भवतीति भावः ।

---

वापत्तिरिति भावः । अन्यथा घटाभावबोधे । वचनपुरुषाव्यवस्थावदिदमपि दूषणमित्यर्थः । कारकविशिष्टक्रियाया इति । भूतले घटो नास्तीत्यादौ भूतलाधिकरणकघटकर्तृकसत्ताभाव इति बोध इति भावः ।

पूर्वपदार्थप्राधान्ये इति । असंहितमित्यस्य संहिताभाव इत्यर्थात् । असंदेहा इत्यत्रारोपितसन्देहो निश्चय इत्यर्थः । इति बोधे तदभावप्रतीतिरार्थी भेदेन धर्मिण आरोपात् । एवमनुपलब्धिपदेऽपि बोध्यम् । न्यायसिद्धे एव च लिङ्गदर्शनं मूलोक्तमिति तत्त्वम् ।

अभावसामान्य इति । अत्यन्ताभावत्वादिना बोधाविषयोऽभावत्वेन बोधविषयश्च सामान्यमित्यभिमानस्तेषाम् । अव्ययीभाव इति । तत्रात्यन्ताभावत्वेनैव बाधादिति भावः ।

नशब्देनेतीति । निषेधार्थनशब्देनेत्यपि बोध्यम् । इत्येवेति । अत्र नञा नशब्देन चैकशब्दस्य समासस्ततो धा । प्रकारेऽनेकसंख्यात्व-

**ऊर्यादिच्विडाचश्च"** ॥ च्विडाचौ कृभ्वस्तियोगे विहितौ ऊर्या·
पि स्वभावात् तत्रैव प्रयुज्यन्ते । तत्रापि आविःप्रादुःशब्दौ मुक्त्वा
करोतिनैव योग इति माधवादिग्रन्थे स्थितम् । तथैवोदाहरति—
**हत्येति** । आविःशब्दस्य तु साक्षात्प्रभृतिषु पाठात् कृञो योगे गति-
कल्पः, भ्वस्तियोगे तु अनेन नित्यमिति विशेषः । कथं तर्हि "वा-
विशङ्कमथाविश्चक्षुषोऽभवदसाविव राग" इति माघः । "अभवद्युगप-
जिह्वायुगलीढोभयसृक्कभावमाविः" इति च । निरङ्कुशाः कवय
एदत्तः ।

स्तु(१)तस्तु "ते प्राग्धातो'रिति सूत्रस्य प्रयोगनियमार्थत्वे प्रकृते
ावपि सञ्ज्ञानियमार्थत्वपक्षे दोषलेशोऽपि नास्तीति प्रपञ्चितं श-
ुभ । एतेन 'पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः' इति भट्टिर्व्या-
।

**तं परिगृह्येति** । हत्वा गमनं द्विधा–हतं त्यक्त्वा परिगृह्य चेति ।
ाहरणं, द्वितीयं प्रत्युदाहरणम् । अपरिग्रहे इति च प्रयोगोपाधिर्न तु
ाटिनिविष्टमिति भावः । **कणेहत्येति** । अतिशयेनाभिलष्य तन्निवृ-
ं पिबतीत्यर्थः । ततश्च श्रद्धाया अवगमात् तत्प्रतिघातो गम्यते । प्र·

---

संज्ञाविकल्प इति । **तत्फलं समासविकल्पः** । कथमिति । **गतित्वे 'ते प्रा-
रिति धातोः प्रागेव प्रयोगः स्यादिति भावः** । प्रयोगनियमेति । **गत्युप·
ज्ञा धातोः प्रागेव प्रयोक्तव्या इति तस्यार्थः** । संज्ञानियमेति । **धातोः
युक्तानामेव गत्यादिसंज्ञा नान्येषामिति तदर्थः । अयमेव पक्षो
ाघवादिति भाष्ये स्पष्टम्** । प्रयोगोपाधिरिति । **ल्यबन्तप्रयोगद्योत्यं प-
ासबाधविषयामित्यर्थः** । श्रद्धा । **अभिला(२)षातिशयः** ।

---

**वस्तुतस्तु इति** भाष्यकृता किमिदं प्राग्धातुवचनं प्रयोगनियमार्थमेव प्राग्
योक्तव्याः । यद्वा संज्ञानियमार्थम् प्राक् चाप्राक्च प्रयोक्तव्या इत्याशङ्क्य प्रयोगनि-
क्षे अनुकरणस्येतिकरणपरत्वप्रतिषेधो वक्तव्यः इति पठितम् । किंप्रयोजनम् अनि-
वृत्यर्थः । छन्दसि परव्यवहितवचनं च वक्तव्यम् इत्यादिदोषान् उद्भाव्य अस्तु तर्हि
म इति व्यवस्थापितम् , अयमेव मुख्यपक्षः । धातोः प्राक्प्रयुक्तानामेव गत्यादि-
न्येषामिति नियमाकारः इति ।

त्युदाहरणं तु कणे हत्वा गतः। सूक्ष्मस्तण्डुलावयवः कणस्तस्मिन् हत्वेत्यर्थः।

**पुरस्कृत्येति**। "नमस्पुरसोरि"ति सत्वम्। कथं तर्हि 'अमुं पुरः पश्यसि देवदारु'मिति। स्थितमित्यद्ध्याहारेण द्दशिं प्रत्यगतित्वात्। एतेन 'तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो'रिति व्याख्यातम्।

**"अस्तं च"**॥ अव्ययमिति किम्? अस्तं काण्डं प्रक्षिप्तमित्यर्थः।

**अदःकृत्येति**। यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणम्।

**"तिरोऽन्तर्द्धौ"**॥ अन्तर्द्धौ किम्? तिरोभूत्वास्थितः। पार्श्वतो भूत्वेत्यर्थः।

**"विभाषा कृञि"**॥ **तिरः कृत्वेति**। गतित्वाभावपक्षे सत्वमपि न। "तिरसोऽन्यतरस्या"मिति सत्वविधौ गतिग्रहणानुवृत्तेः। केचित्तु पराभवे तिरस्कारशब्दप्रयोगमनुरुन्धानाः सत्वविधौ गतिग्रहणं निवर्तयन्तीति माधवः।

**वाचं नियम्येति**। निवचनं हि वचनाभावः। अर्थाभावेऽव्य-

---

एतेनेति। पुर(१) इति कौतुकेत्यनेनान्वेति। तस्य च न क्रियावाचकत्वम्। तस्येत्यस्य समीप इति शेष इति भावः। सञ्ज्ञानियमपक्षे तु शङ्कैव नेति भावः।

माधव इति। "विभाषेति" सूत्रे ऽन्तर्धावित्यस्य निवृ(२)त्या ऽपि तिरस-

---

(१) **पुरः इति**। यत् क्रियायुक्ताः प्रादयः तं प्रत्येव गत्युपसर्गसञ्ज्ञेति "उपसर्गाः क्रियायोगे" इति सूत्रे योगग्रहणेन ज्ञाप्यते। अन्यथा क्रियया इत्येव सिद्धे किन्तेन। सामान्यापेक्षत्वाज्ज्ञापकस्य। जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्रायन्यतमत्वम् इति सामान्यलक्षणम्।

(२) **निवृत्त्या इति**। "स्वरितेनाधिकारः" इत्यत्र अधिकं कार्यं करोतीत्यधिकार इतिव्युत्पत्तेः क्काचित्कबोधनमनुवृत्तेरिति भावः। तथाच—पुरः स्थितमित्यध्याहृत्य स्थितिक्रियां प्रति "पुरोऽव्ययम्" इत्यनेन गतित्वाभिधानात्।

यत्तु—"पुरोऽव्ययम्" इति कृञ्मात्रविषयमिति। तन्न, कृञोऽनधिकारात्। तुरासाहं पुरोधाय इति कुमारसम्भवश्लोके दधातेर्योगेऽपि गतिसंज्ञादर्शनात्। अतएव समासो ल्यप् च सिद्ध्यतः।

वस्तुतस्तु प्रादीनां संज्ञानियमः। नच

छादितः कथमपि त्रपयान्तर्यः प्रियं प्रति चिराय रमण्याः।<br>
वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः॥

यीभावः । इहाविशेषेण एदन्तता निपात्यते न तु सञ्ज्ञासंयोगेन ।

**प्रगत आचार्य इति** । अनेन गतार्थे वृत्तिमस्वपदविग्रहेण नित्यसमासतां च दर्शयति । अतिमालः । एवमभिगतो मुखमभिमुखः । उद्गतो वेलामुद्वेलः । प्रतिगतोऽक्षं प्रत्यक्षः ।

**"उपपदमतिङ्"** ॥ अतिङिति नोपपदस्य विशेषणं किन्तु समासस्य । एतच्च "अनवक्लृप्त्यमर्षयो"रिति सूत्रे भाष्ये एव स्पष्टम् । तत्र हि किंवृत्तस्यानधिकारादकिंवृत्तग्रहणानर्थक्यमित्युक्त्वा उपपदसञ्ज्ञार्थं तर्हीत्याशङ्क्याऽतिङिति समासप्रतिषेधात्सञ्ज्ञानर्थक्यमिति सिद्धान्तितम् । तदेतदभिप्रेत्याह— **अतिङन्तश्चेति।** न(१)नु सुबित्यधिकारात्तिङन्तेन न भविष्यति तत्राह-

---

**द्भिरित्यन्ये** । इहेति । **तेन निवचने कृत्वेति सिद्धम्** । गतार्थे वृत्तिरिति । **प्रशब्दादेरिति भावः** । नित्यसमासतामिति । **तेनान्तोदात्तादुत्तरपदादनित्यसमासे इत्यनेनानित्यसमासे यदुत्तरपदं साधेकाजन्तोदात्तं ततः परा तृतीयादिर्विभक्तिरुदात्तेत्यर्थकेन न विभक्त्युदात्तत्वम् । एतेन शाकपार्थिवादित्वादिदं सिद्धमित्यपास्तमिति भावः ।**

---

नान्यत्रेति भाष्यसम्मतसंज्ञानियमपक्षे दोषाभाव इति । एतेन

अगवलुगपङ्क्तिलोलजिह्वायुगलीढोभयसृक्कभागमाधिः ।

इति २० सर्गे माघप्रयोगे । पुरो रामस्य जुहुवाञ्चकार ज्वलने वपुः इति भट्टिः । 'तस्य स्थित्वा कथमपि पुरः' मे० दू० प्रयोगाश्च समर्थ्यन्ते । अतिःपुरःशब्दयोर्धातुव्यवहितयोः संज्ञाया अभावेऽपि प्रयोगस्य निर्बाधितत्वात् । अत्र पक्षे "अनुकरणं चानितिपरम्"इति सूत्रे अनितिपरग्रहणं न कर्तव्यम् इति।

'चुम्बनरसतः सोऽस्याच्युतमूलदंशनयात्मनो वदनं ।
जिह्वामूलस्पृष्टं सान्द्रीति कृत्वा निरष्ठीवत् ॥

इति कस्यचित् कवेः श्लोके संज्ञाया एवाप्रवृत्तेरिति दिक् ।

**(१) ननु इति** । अस्यायमभावः । सूत्रे सुबन्तस्यासत्त्वात् "उपपद"इति महासञ्ज्ञाबलाल्लाभः । तथा च उपपदस्य सुबन्तस्य समर्थेन नित्यं समास इत्यर्थः । सुबन्तस्योपपदसञ्ज्ञास्वीकारादेव "राजनि युधिकृञः" इत्यत्र राजनीति सप्तम्याः प्रथमार्थत्वकल्पनात् सुबन्तस्यैव कर्तनिप्रत्ययविधानसमकालिकोपपदसञ्ज्ञास्वीकारेण राजानं योधितवानिति राजयुध्वा इत्यत्र नलोपो भवतीति दिक् ।

लोके तु प्र भवतीत्यादौ उपसर्गः पृथक् पदमेव। काव्यादिपाठिनामेकपद्यभ्रमे तु धातूपसर्गयोः संहितायाः नित्यत्वं मूलम्। कथं तर्हि 'अग्नआयाहि' इत्यादौ पदपाठे उपसर्गेऽवसानमिति चेत्? पदपाठस्यापि व्याख्याविशेषतया तत्रानुकरणशब्दत्वेनोपसर्गत्वाभावात्। प्रकृतिवदनुकरणमित्यतिदेशस्य वैकल्पिकत्वात् "यत्तदेतेभ्य" इति सूत्रे त्यदाद्यत्वं कुर्वता एकशेषं चाकुर्वता सूत्रकृतैव तथा ज्ञापितत्वादिति दिक्।

**"अमैवाव्ययेन"**॥ **तुल्यविधानमिति**। एतच्चाध्याहारेण लभ्यम्। **तदेवेति**। नियमस्वभावलब्धार्थकथनपरोऽयमेवका(१)रो

---

तेनेति। भाष्यकृतेति शेषः। कथमिति। संहितायाः नित्यत्वादिति भावः।

दिगिति। दिगर्थस्तु यदि सुबित्यनुवृत्त्यैव प्रधानाहारको व्रजतीत्यस्य व्यावृत्तिसिद्धावतिङ्ग्रहणमेवोभयोर्निवृत्तौ ज्ञापकम्। महासञ्ज्ञाकरणाच्च राजदर्शीत्यादौ न दोषः। सुप्यजाताविति णिनेः सुबुत्पत्तिं विना ऽसम्भवेन तं विनोपपदत्वाभावेन दोषश्च। निर्गत इत्यादौ शब्दान्तरसम्बन्धात् पूर्वं सुबुत्पत्तौ लुकि च पदत्वोत्तरं पदान्तरसम्बन्धेन समासे न क्षतिः। "माङि लुङ्" इत्यादौ सति सप्तमीति नोपपदत्वम्। फलाभावाच्च। प्रथमार्थे सौत्री सप्तम्येव हि तन्निमित्तम्। अत एव पशावित्यादीनां नोपपदत्वम्। एधानाहारक इत्यादौ तु क्रियार्थोपपदस्येति कार्यार्थमुपपदसञ्ज्ञावश्यकत्वेन तत्रास्य प्रवृत्तिव्यावृत्त्यर्थं तच्चरितार्थम्। ध्वनितं चेदं भाष्ये इत्युच्यते तदा ऽस्तु उभयोर्निवृत्तिः। अतिङन्तश्चेत्यस्य तिङन्ताघटित इत्यर्थः। एवं चोपपदमतिङन्तमिति व्याचक्षाणस्यानवक्लृप्त्यमर्षयोरिति सूत्रस्थभाष्यविरोधो दूषणमिति।

नियमस्वभावेति। अमैवेति नियमस्वभावलब्धेत्यर्थः। अमैव तुल्यविधानं यदुपपदं तदव्ययेन समस्यते। अन्येन तुल्यविधानं नेति वचनव्य-

---

उदाहरणम् पर्यभूषयत् "निपातैर्यद्यदि" इति निघातप्रतिषेधात् अभूषयदित्यस्य प्रत्ययस्वरेणाद्युदात्तत्वात् परीत्यनेन समास इति उक्तम् प्रागिति शेषः।

(१) **एवकार इति**। "सूत्रे एवकारः किमर्थः। नियमार्थः। नैतदस्ति सिद्धे विधिरारभ्यमाणोऽन्तरेणैवैवकारं नियमार्थो भवति इति इष्टतोऽवधारणार्थ एवकारः। यथा एवं विज्ञायेत "अमैवाव्ययेन" इति। मैवं विज्ञायि, अमा अव्ययेनैवेति। अस्ति कश्चित् अनव्ययम् शब्दः यदर्थो विधिः स्यात्। ओम् खष्टायं ब्राह्मणकुलम्। अन्तरङ्गत्वादत्रसमासो भविष्यति।

सूत्रस्थः । अव्ययेनेति किम् ? कुम्भकारः । असति ह्यव्ययग्रहणे यत्तुल्यविधानं तदेव समस्येत । पूर्वसूत्रारम्भसामर्थ्यादव्ययविषयक एव इति चेत् ? तर्हि अमन्तविषयक एव किं न स्यात् । अमन्तेन यः ः सोऽमैव तुल्यविधानस्येति । तथाच अग्रेभोजमित्यत्र मा भूत् । अ- त्वा कालो भोक्तुमित्यत्र तु स्यादेवेति भावः ।

**"तृतीयाप्रभृतीन्यन्यतरस्याम्"** ॥ उभयत्र विभाषेय(१)म् । तुल्यविधानस्य प्राप्ते यथा उपदंशस्तृतीयायामिति । यत्तु अमा चान्येन विधानं तस्याप्राप्ते यथा अव्यये यथाभिप्रेताख्यान, इति। उच्चैःकारमाचष्टे । मासपक्षे कृदुत्तरपदप्रकृतिस्वर 'आदिर्णमुल्यन्यतरस्या' मित्याद्युदात्त- । असमासे तु उच्चैरित्यन्तोदात्तत्वम् । स्वरादिषु तथा पाठात् । अमेत्यनु- भिप्रेत्याह—**अमन्तेनेति** । तेनेह न पर्याप्तो भोक्तुम् ।

**तत्पुरुषस्याङ्गुलेः"** ॥ समासान्तापेक्षया ऽवयवषष्ठी । **द्व्यङ्गुलमिति**। र्नित्यमिति द्वयसचो लुक् ।

**द्वन्द्वार्थमिति** । तत्पुरुषस्यासंभवादिति भावः । ननु अ- ौ रात्रिश्चेति कर्मधारयोऽस्तु । पूर्वोत्तरपदयोरन्यतरस्य गौणत्व-

---

ते भावः । न तु सूत्रस्थ इति । **न तु सूत्रस्थ एवावृत्त्या द्वेधा योज्यत भ्रमितव्यमिति भावः** । तदेवेति । **उपपदमित्यर्थः** । अग्रेभोजमिति । **षा ऽग्रेप्रथम'इति सूत्रेण ख्कोऽपि विधानान्नास्यामेव तुल्यविधानता । तुक्त्वेत्यादावमन्तेन समासाभावान्न तस्य नियमविषयतेति भावः** । त्तरपदप्रकृतिस्वर इति । **उत्तरपदाद्युदात्तत्वमित्यर्थस्तदाह**—आदिर्णमुली- **अत्राभ्यस्तानामिति नानुवर्त्तत इति मत इदम् । यद्यपि लित्स्वरणमु योरत्राविशेषः । आदिर्णमुलीति त्वनेकाजर्थं तथा ऽपि अभ्यस्ताना- नुवृत्त्यभावपक्षे परत्वादिदं न्याय्यमित्यभिमानः । लितीत्यनेनापीदं धम्** । अन्तोदात्तत्वमिति । **फिट्स्वरेणेति भावस्तदाह**—स्वरादिष्विति । **त्रै- ग पाठपक्षे इति भावः** ।

मासान्तापेक्षयेति । **तत्पुरुषस्य समासस्यान्तावयव इत्यर्थः । 'समासा- इति सूत्रे समासेति लुप्तषष्ठीकं बोध्यम्** । द्व्यसच इति । **ऊर्ध्वमान**

---

(१) उभयत्र विभाषेयमिति । तत्त्वञ्च—विभाषाशास्त्रीयोद्देश्यतावच्छेदकव्याप्यरूप-

सम्भवादिति चेत् । मुख्यसम्भवे गौणग्रहणायोगात् । "हेमन्तशिशिरावहोरात्रे च च्छन्दसि" इति सूत्रे द्वन्द्वे समासान्तदर्शनाच्च । **अहोरात्र इति।** "जातिरप्राणिनाम्" इति समाहारद्वन्द्वः । "रात्राह्नाहाः" इति पुंस्त्वम् ।

यत्तु प्राचोक्तमेकवद्भावात्क्लीबतेति। तन्न। 'स नपुंसक'मित्यस्य 'रात्राह्नाहा' इति पुंस्त्वेन परत्वाद् बाध इति वक्ष्यमाणत्वात् आकरविरोधाच्च । **द्विरात्रमिति** । "संख्यापूर्वं रात्रं क्लीबम्" इति वक्ष्यते ।

**"अह्नष्टखोरेव"**॥ "नस्तद्धित"इत्येव सिद्धे नियमार्थमिदम्। एवकारः स्पष्टार्थः । अह्न एव टखयोरिति विपरीतनियमस्तु न भविष्यति। "आत्माध्वानौ खे" इति प्रकृतिभावविधानाल्लिङ्गात् । **अनित्यत्वादिति।** अत्र च लिङ्गं "शक्तिलाङ्गलाङ्कुश"इत्यत्र घटीग्रहणम् ।

**"अह्नोऽह्न एतेभ्यः"** ॥ "अहः सर्वै"ति सूत्रे अहरादयो निर्दिष्टाः । चकारेण संख्याऽव्यये अनुकृष्येते। तत्र सर्वेषां बुद्धिस्थत्वाविशेषेऽपि अहः-

---

(१)त्वे इदम्। प्रमाणत्वे तु मात्रचो लुगिति बोध्यम्। नन्वेवं प्रकरणाविरोधास्त आह—हेमन्तेति । चो हेतौ । यतो द्वन्द्वदर्शनमतो गौणग्रहणायोग इत्यर्थः। (२)स्पष्टं च द्वन्द्वार्थत्वं भाष्यकृतोक्तम् । एकवद्भावादिति। समाहारद्वन्द्वत्वादित्यर्थः। आकरेति । पुँल्लिङ्गस्यैव तत्रोदाहरणादित्यर्थः। 'रात्राह्नाहा" इति पुंस्त्वे प्राप्ते आह—संख्यापूर्वमिति।

स्पष्टार्थ इति। विपरीतनियमस्य स्पष्टं वारणार्थस्तद् ध्वनयन् क्लेशेन तद्वारेणमाह—अह्न एवेति। लिङ्गादिति। अह्न एवेति नियमे तद्वैयर्थ्यं स्पष्टमेव । नियमफलं त्वाह्निकमिति। अह्ना निर्वृत्त(३)मित्यर्थे कालादित्यनुवृत्तौ "तेन

---

(१) ऊर्ध्वमानत्वे इदमिति। 'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः' ॥ इति वार्तिकात् त्रिविधं परिमाणम्—उन्मानं परिमाणं प्रमाणम् । तुलामारोप्य द्रव्यगुरुत्वं येन परिच्छिद्यते तदुन्मानम् गुञ्जमाषसुवर्णपलादि। येन काष्ठादिनिर्मितेन आयतविस्तृतोच्छ्रितेन पात्रविशेषेण व्रीह्यादि परिच्छिद्यते पात्रगतायामविस्तारोच्छ्रायैः तत्परिमाणं प्रस्थादि। आयामो दैर्घ्यं येन परिच्छिद्यते तत्प्रमाणम् अरत्निप्रादेशादि। संख्या तु उक्तत्रितयापेक्षया बाह्या एकत्वद्वित्वादीत्यर्थः ।

(२) स्पष्टं चेति। "अहर्ग्रहणं द्वन्द्वार्थम्। किमुच्यते द्वन्द्वार्थमिति ? न पुनस्तत्पुरुषार्थमपि स्यात्। तत्पुरुषाभावात्। नहि रात्र्यन्तो अहरादिस्तत्पुरुषोऽस्ति" इत्यादिना

इह न गृह्यते ऽसम्भवादित्याशयेनाह—**सर्वादिभ्य इति । समा-**
**ते पर इति** । प्रकरणबललभ्यमेतत् । प्राचा तु टचि परत इति व्या-
तदपि सामर्थ्यलभ्यमिति कथञ्चिन्नेयम् । भाष्ये तु अह्लादेशः प्रत्या

---

**" मिति टञ् ।**

सम्भवादिति । **यद्यपि ब्रह्मणोऽह्न इदमवयवीभूतमहरित्यर्थः षष्ठीस-**
**सम्भवति तथाऽप्यत्र सूत्रे "अहःसर्वैकदेशसंख्यातपुण्याच्च" इत्यस्या-**
**व सिद्धे एतेभ्य इत्युक्त्या अव्यवहितानामहःशब्दभिन्नानामेव ग्रह-**
**यादिप्रामाण्यादिति बोद्धव्यम् । तस्यानभिधानाच्च** । प्रकरणेति । **तल्ल-**
**सप्तम्या विपरिणाम इति भावः** । सामर्थ्येति । **अहन्शब्दान्ततत्पु-**
**व एव विधानादिति भावः** । कथञ्चिदिति । **शब्दतोऽनुपस्थित्या वा-**
**न्वयित्वासम्भव इति भावः ।**
**त्वह्लादेश ऊधसोऽनङ्वत् समासान्त एव । एवं च विभक्तिविपरि-**
**न कार्य इति । तन्न । टजपवादत्वापत्तावत्यह्न इत्यादावित्रान्तोदा-**
**ापत्तेः । टचि तु तत्सामर्थ्यादन्तोदात्तत्वं तच्चेष्टमिति ध्वनयन्ना-**
ा(१)ष्ये त्विति ।

---

भूतः क्रतुरिति विग्रहः । अत्र "तद्धितार्थे" इत्यनेन तद्धितार्थे द्विगुः । "तमधीष्ट" इत्य-
द्विगोर्वेत्यनुवृत्तौ "रात्र्यहः" इत्यादिना खः । तस्मिन् "अह्नः ष्टखोरेव" इत्यनेन टिलोपे
देशे रूपम् । ननु खस्य टिलोपमात्रफलकत्वाभ्युपगमे तत्र तद्धितार्थे द्विगौ विहितेन
टिलोपे खग्रहणं व्यर्थमिति चेन्न । समासान्तविधेरनित्यत्वेन टचो अप्रवृत्त्या खग्रहण-
ात् । समासान्तविधेरनित्यत्वात् एवं द्विगोर्वेत्यनुवर्तमाने "रात्र्यहः" इत्यस्यापि सार्थ-
। नच "अह्नष्टखोः" इत्यनेन खे परे टिलोपविधानसामर्थ्यादेव समासान्तविधेष्टचो-
, तस्यानित्यत्वपर्यन्तानुधावनं खपुष्पायमाणमिति वाच्यम् । द्व्यहीन इत्यत्र खे
विधानेन "अह्नष्टखोः" इत्यस्य सार्थक्यात् सामर्थ्याभावेन समासान्तभावासाधकत्वेनोक्त-
नित्यत्वमन्तरा टचो दुर्वारतया तदनित्यत्वपर्यन्तानुधावनस्य सफलत्वात् । नच ट-
दोष इति वाच्यम् । "अह्नोऽह्न एतेभ्यः" इत्यनेन द्व्यहीन इत्यत्राह्लादेशे रूपासिद्धेः ।
मासान्तविधेरनित्यत्वे किम्मानमिति वाच्यम् । "प्रतेरंश्वादयस्तत्पुरुषे" इत्यन्तो-
अन्श्वादिगणे राजन्शब्दपाठस्यैव मानत्वात् । अन्यथा टचि अन्तोदात्तत्वे
केन्तेनेति संक्षेपः ।

१) **भाष्ये त्विति** । अह्नोऽह्नवचनानर्थक्यं च "अह्नष्टखो" र्नियमवचनात् । "अह्नष्टखो-
येतन्नियमार्थम् भविष्यतीत्युक्तम् । अत्र "अह्नोऽह्न एतेभ्यः" इत्येतावत् सूत्रम् अत्रविधा-

ख्यातः । अह्न एतेभ्योऽच् स्यात् टचोऽपवादः अह्नष्टखोरेवेति नियमाट्टिलोपो न । "अह्लोपोऽन" इति व्युत्पादनात् ।

**"अह्नोऽदन्तात्"** ॥ **रेफादिति** । यदि लक्षाह्न इत्यपि प्रयोगोऽस्ति तर्हि षादित्यपि बोध्यम् । रषाभ्यामित्यधिकारात् ।

अत्र प्राञ्चः । अह्न इति षष्ठ्याः स्थाने व्यत्ययेन प्रथमा । अदन्तनिर्देशान्नेह—दीर्घाह्नी प्रावृडिति वदन्ति । तत्र व्यत्ययादिवर्णनक्लेशो व्यर्थः । दीर्घाह्नीत्यत्र प्रातिपदिकान्तेति णत्वं व्यावर्तयितुं क्षुभ्नादित्वस्यैव वक्तव्यत्वादाकर एव तथोक्तत्वाच्चेत्याशयेनाह—**अह्नो नस्येति** । प्राचस्तु अह्नो नस्येत्युक्त्वा अदन्तनिर्देशादिति वदतो व्याघातः स्पष्ट एव । **कालाङ्गञिति** । एतच्च "संख्याविसायेति" सूत्रे न्यासपदमञ्जर्योः, ओहाङ्धातौ माधवग्रन्थे च स्पष्टम् ।

यत्तु "न संख्यादेः समाहार" इति सूत्रे द्व्यह्न इत्यत्राणो लुगिति वृत्तिकारादिभिरुक्तं तदप्ययुक्तमिति भावः । प्रसङ्गा(१)दाह-**स्त्रियामिति** । **टाबिति** ।

---

अत्र प्रा(२)ञ्च इति । **अदन्तस्येति वक्तव्य" मित्यस्य प्रकृतसूत्रस्थवार्त्तिकस्य प्रत्याख्यानाय भाष्यकृत इत्यर्थः** । दीर्घाह्नीति । **बह्वादिषु अहान्निति पाठादुपसर्जनत्वे ऽपि ङीष्** । अयुक्तमिति । **कालाङ्गञस्तदपवादत्वादिति भा-**

---

(१) **प्रसङ्गादिति** । अत्रायं निष्कर्षः । ननु रात्राह्नाहा इति रात्रिशब्दान्ताहन्शब्दान्तयोः तत्पुरुषयोः पुँस्त्वविधानेन प्रकृतेऽहन्शब्दान्ततत्पुरुषस्य सत्त्वेन पुँस्त्वात्तत्पुरुषस्य स्त्रीत्वाभावेन स्त्रियामित्युक्तिर्न सम्यगिति चेन्न । सर्वमहः सर्वाह्नः इत्यत्र पुँस्त्वविधानेन चारितार्थ्यस्य सूत्रस्य लुप्ततद्धितविषये ऽप्रवृत्तेः । "लुपि युक्तवत्"इत्यस्य तत्र प्रमाणत्वात् । लुप्तप्रत्ययेष्वपि प्राकृतलिङ्गानुशासनप्रवृत्तौ तद्वैयर्थ्यं स्यादिति । लुप्तप्रत्यये प्राकृतलिङ्गानुशासनाप्रवृत्तौ लवणः सूपः लवणा यवागूरित्यादावपि न क्लीबत्वम् । तस्मात् प्रसङ्गादाह—स्त्रियामित्युक्तिः सम्यगेव ।

(२) **अत्र प्राञ्च इति** । "अदन्तात् अदन्तस्ये"तिवक्तव्यमिति वार्तिकम् वार्तिकस्य प्रयोजनम् तु दीर्घान्यहानि यस्यां सेति विग्रहे दीर्घाह्नी इत्यादौ णत्वं माभूत् । "अह्नाह्नः" इत्यह्नादेशः । "तत्तर्हि वक्तव्यम्, नवक्तव्यम्"इत्यादिना वार्तिकं प्रत्याख्यातम् । "नैषाऽह्नन्

यत्तु प्राचा कालनिर्णयदीपिकायां

पूर्वास्यान्नवमी शुभा ऽथ दशमी कालस्पृगाद्या ऽथ सा
द्व्यह्नी कालयुगादिमोत्तरयुता चाथोत्तरैकादशी

इति श्लोके द्व्यह्नीति प्रयुक्तम्। सा दशमी द्वयोरह्नोर्भवा द्व्यह्नीत्यादि च तद्विवरणे व्याख्यातम् । तत्सर्वं प्रामादिकमिति भावः । तथा हि–इह टिड्ढ(१)ढेति ङीब् द्विगोरिति वा। आद्यो ऽपि अणन्तत्वात्, ठञन्तत्वात्, टजन्तत्वाद् वा । नाद्यः । वृत्तिकाराद्युक्तस्याऽण इह प्रामादिकत्वाल्लुका लुप्तत्वाच्च । न च प्रत्ययलक्षणम् अणो यो ऽकार इति व्याख्यानात् । नापि द्वितीयः । ठञो यो ऽकारस्तदन्तादिति व्याख्यानात् । अत एव हि द्विनिष्केत्यत्र क्रीतार्थे प्राग्वतीयस्य ठञो लुकि टाबेवाकर उदाहृतः । द्विबिस्तेत्यादावप्येवम् । नापि

---

वः । प्रामादिकमिति । **तदपवादस्य ठञः प्राप्तेरिति भावः ।** लुकेति । **स्वरूपकथनमेतत् ।** अणो यो ऽकार इति । **एवं च वर्णप्राधान्यान्न प्रत्ययलक्षणमिति भावः ।**

ठञो लुकीति । **निष्कादिभ्यः समासे ठकोऽप्राप्तेरिति भावः । निष्कस्य परिमाणत्वे इदम् । उरोभूषणादिवाचित्वे ऽसमासे इति सूत्रे परिमाणवाचिनिष्कादीनामेव ग्रहणे तु ठको लुकीति बोध्यम् । न च द्विनिष्केत्यत्र निष्कस्य परिमाणत्वे द्विनिष्कीति ङीपैव भवितव्यम् । उन्मानत्वे ऽपि उन्मानस्य चेद् बिस्तकम्बल्ययोरेव निषेध इति नियमेन ङीबेव प्राप्नोति । एवं च द्विबिस्तेत्यत्र बिस्तादिप्रतिषेधेन ङीबभावो न तु ठञोकाराभावादिति वाच्यम् । निष्कशब्द उन्मानवाची बिस्तादयः परिमाणविशेषा एवेति मतमनुसृत्य हरदत्तादिभिराकरे तथोक्तेरित्याशयात् । तदा हि अपरिमाणान्तत्वाद् द्विगोरिति ङीपि निषिद्धे ऽपि ठञन्तत्वात्प्राप्तस्योक्तरीत्यैव वारणात् । एतेन द्विबिस्तेत्यपि व्याख्यानम् । न चैवमपरिमाणेति**

---

(१) "टिड्ढेति" अयं भावः । द्वयोरह्नोर्भवा इति विग्रहे कालाट्ठञि तस्य "द्विगोर्लु-

तृतीयः । टचः समासान्ततया तदन्तस्य तद्धितार्थत्वं प्रत्युपसर्जनत्वात् । अत एव हि आपिशलिना प्रोक्तमधीयाना ब्राह्मणी आपिशलेत्युदाहृतम् । भाष्यमते अचा अटो बाधनाच्च । नापि चतुर्थः । "अपरिमाण" इत्यादिना ङीपो निषेधात् । तस्माट्टाबेव युक्तः । स्यादेतत् । टाबप्ययुक्तः । स्त्रीत्वस्यैव दुर्लभत्वात् । तथा च "अह्नोऽह्न एतेभ्य" इति सूत्रे कैयटहरदत्तावाहतुः । "रात्राह्नाहाः पुंसि" इति वचनात् । स्त्रियां वृत्त्यभावात् टजचोर्नास्तीह विशेष इति । नैवम् । भावानवबोधात् ।

इत्थं हि कैयटाद्याशयः । सर्वादिषट्कपूर्वादह्नष्टजपवादोऽज्विहितः । तत्र संख्यापूर्वस्य तद्धितार्थद्विगोर्विशेष्यनिघ्नत्वेन स्त्रीत्वसम्भवेऽपि टजन्तस्य तद्धिते प्रत्युपसर्जनत्वात् अनुपसर्जनाधिकारोक्तस्य "टिड्ढेति" ङीपः प्राप्तिरेव नास्तीति तत्र टजचोरविशेषः स्पष्ट एव । पुण्याहमित्यत्र तु "उत्तमैकाभ्यां च" इत्यचो निषेधः । अह्नादेशस्य वेति मतभेदेन व्यवस्थितम् । इतरेषां चतुर्णां "रात्राह्नाहा" इति वचनात् स्त्रियां वृत्तिर्नास्तीति ।

स्यादेतत् । भवेदेष वृद्धानामाशयः यद्युक्तद्विगोर्विशेष्यनिघ्नत्वे प्रमाणं स्यात् । तदेव किमिति चेत् ? उच्यते । अमरसिंहेन "पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः" इति पुंस्त्वाधिकारे "अह्नाह्नान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः" इत्युक्तम् । "अर्थान्ताः प्राद्य-

---

निषेधो व्यर्थः स्यात् । तत्सामर्थ्येन तदभावकल्पनापेक्षया न्यायसिद्धोक्तरीत्यैव तद्वारणस्योचितत्वात् । तेनापि तदर्थबोधस्यैवौचित्यात् । तदन्तस्येति । तदन्तार्थस्येत्यर्थः । उदाहृतमिति । अनुपसर्जनादिति सूत्रे वार्त्तिककारैरिति शेषः । चतुर्थः । द्विगोरिति ङीबित्येवंरूपः । ननु बह्वादिगणेऽहन्शब्दपाठाद्दीर्घाह्नीत्यादावुपसर्जनङीषिवात्रापि स्यादिति चेन्न । समासान्ते कृते ऽहन्शब्दत्वाभावात् । तस्माट्टाबिति । अस्य स्त्रीत्वमङ्गीकुर्वतां

न पुंस्त्वं प्राप्तं ताद्धितार्थे द्विगुरिति परोपगत्वेन परत्वादेव बाध्यते ।
च तेनैव परिभाषितम् । "परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगत" इति ।
ग्मरग्रन्थ उक्तार्थे प्रमाणम् । किं च परवल्लिङ्गमित्यस्य रात्राह्नाहा इत्य-
ः । यत्र तु द्विगुप्राप्तेत्यादिनोत्सर्गो निषिद्धस्तत्र तदपवादस्य प्रवृत्तिः
। एतच्च माधवेनापि ध्वनितमित्यनुपदमेव वक्ष्यामः ।

किं च भवाद्यर्थताद्धितान्तं परोपगमिति निर्विवादम् । तद्धितलोपे तु
शिष्यते स लुप्यमानार्थाभिधायी' ति न्यायेन भवाद्यर्थवत् स्त्रीत्वादेरप्य-
तं न्याय्यमेव प्रकृते लिङ्गानुशासनस्य केवलायां प्रकृतावुपक्षीणस्य लुप्त-
ायामप्रवृत्तेः । 'लुपि युक्तवदि' ति लिङ्गातिदेशोऽप्यत्र प्रमाणम् । प्रकृत-
नुशासनानां लुप्तप्रत्ययेषु प्रवृत्तौ तद्वैयर्थ्यापत्तेः । अत एव लवणः सूपो,
ा यवागू, रित्यादौ न क्लीबत्वम् । अत एव च कुमारीब्राह्मण इत्यादिषु
राक्विबन्तप्रकृतिककर्तृक्विबन्तेष्वपि विशेष्यनिघ्नतैवाकरे स्पष्टा । व्यह्नीति
वदता प्राचा ऽपि स्त्रीत्वं स्वीकृतमेवेत्यलं बहुना ।

---

रत्वादिति । अह्नाहान्ता इत्यपेक्षया ताद्धितार्थे द्विगुरित्यस्य परत्वादि
ावस्तदाह— तथा चेति । केवलायां प्रकृतौ । सर्वाह्ण इत्यादौ । अलं बहु-
 एतेन स्त्रीत्वमेव नास्तीति सूचितम् । तथा हि–रात्राह्नाहा इत्यनेन
ूतताद्धितार्थनिमित्तलिङ्गबाधकल्पने उपस्थितरात्राह्नाहशब्दार्थाधि-
त्वप्रयुक्तप्राप्तिकलिङ्गस्यैव बाधः स्यात् । न तु बहिर्भूतसमाहारविशे
ष्यप्रयुक्तप्राप्तिकस्यापि अतो ऽन्तरङ्गन्यायाप्राप्तिः ।

किं च प्राद्यलमित्यादिवाक्यस्यापि कोशे परत्वात्तेनाप्यह्नादिविषये
वबाधापत्तौ परवल्लिङ्गेति सूत्रे एकदेशिग्रहणं कृत्वा भाष्यकृता कृत-
द्विगुप्राप्तेति वार्त्तिकप्रत्याख्यानस्यासङ्गत्यापत्तिः । तव रात्राह्नेत्यादि
ार्थे तस्यावश्यकत्वात् । न चेदमप्येकदेशिसमासविषयकमेव । अत्र-
ग्रहणस्य पुण्यसुदिनाभ्यामित्यादेश्च वैयर्थ्यापत्तेः । अतिरात्रः सर्वाह्ण
ाधासिद्ध्यापत्तेश्च । एवं चोत्सर्गस्य परवल्लिङ्गस्य द्विगुरित्यादिनिषेध
ष्ये तदपवादस्याप्यप्रवृत्तिरिति निरस्तम् । अहरातिक्रान्ता रात्रिरि
ि समासस्य स्त्रीलिङ्गत्वात्तत्र टजचोर्ङीप्टाब्भ्यां विशेषसत्त्वेन नास्ति
वोर्विशेष इति कैयटासङ्गतिश्च । तस्मात्प्राद्यलम्प्राप्तेत्यादि ताद्धितार्थे

यदि समर्थनीयमेवेत्याग्रहस्तर्हि आधाराधेयभावव्यत्यासेन समर्थ्यताम्। द्वे अहनी यस्यामिति दिनद्वयाधारभूतेत्यर्थलाभात्। **उपान्त्यस्यापीति**। यथा प्रथमयोरिति प्रथमाद्वितीययोर्ग्रहणं द्विवचननिर्देशात्। तथेहापि उत्तमग्रहणसामर्थ्यादन्त्ययोर्द्वयोर्ग्रहणम्। उत्तमौ च एकश्चेति विग्रहे सौत्रं द्विवचनमिति तेषामाशयः।

**"खार्याः प्राचाम्"** ॥ **द्विगोरिति**। खारीशब्दान्ताद् द्विगोरित्यर्थः। **द्व्यञ्जलमिति** समाहारे द्विगुः।

**"आन्महतः"** ॥ पदाधिकारे तदन्तस्यापि ग्रहणान्महच्छब्दान्तस्यापि। कथं तर्हि परममहत्परिमाणमिति। परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुष इति वृद्धाः। यत्तु वर्द्धमानेनोक्तम्। इष्टकेषीकामालानामित्यत्र तदन्तविधूयुपसंख्यानसामर्थ्यादुत्तरपदाधिकारे तदन्तविधिर्नास्तीति। तद्भाष्यकैयटविरुद्धम्। तथा हि—पदाधिकारे प्रयोजनम्। इष्टकाचितं, पक्वेष्टकचितम्, इत्यादि भाष्ये उदाहृतम्। कैयटेन च पदशब्देनोत्तरपदं गृह्यते इति व्याख्यातम्। एतदेवार्थतः काशिकायामुपनिबद्धम्। न तु इष्टकेषीकेत्यत्र स्वतन्त्रमुपसंख्यानमस्ति। **महतीशब्दस्येति**।

यत्तु प्राचोक्तं जातीयघासादौ महतीशब्दस्याप्यात्वं वक्तव्यमिति। तत्र जातीये तावद्व्यर्थम्। "पुंवत्कर्मधारय" इति "आन्महत" इति च सूत्राभ्यामेव रूपसिद्धेः। महतीशब्दस्येत्यपि अपाणिनीयत्वादुपेक्ष्यम्।

---

**द्विगुरिति कोशश्चाह्नाह्नान्ताद्यतिरिक्तविषय एव न्याय्य इति दिक्।** द्वे अहनी यस्यामिति। **बहुव्रीहौ रात्राह्नाहा इत्यस्याप्राप्तेरिति भावः। बह्वादिष्वहःशब्दपाठादुपसर्जनत्वेऽपि ङीष्।**

तदन्तस्यापीति। **तेन परममहाबाहुः सिद्धः।** अपाणिनीयत्वादिति। **घासादिषु महत आत्वपुंवत्त्वयोर्वार्त्तिक(१)कृतोक्तेरिति भावः। आन्महत इत्यत्र लिङ्गविशिष्टपरिभाषाभावस्य "ङ्याप्प्रा(२)तिपदिकात्" इति सूत्रे भाष्ये उक्त**

---

(१) **वार्तिकोक्तेः इति।** "महदात्वे घासकरविशिष्टेषूपसंख्यानम्" पुँवद्वचनं चा-

**ा इति** । कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्य-
ः । **अष्टाकपाल इति** । "संस्कृतं भक्षा" इत्यणो "अद्ध्यर्द्धपूर्व"
ङगिति व्याचख्युः । तदतिरभसात् । "द्विगोर्लुगनपत्ये" इति तु
म् । **द्व्याधिका इति** । एतच्च भाष्यवार्तिकारूढमित्युक्तम् ।
यस्त्विह पूर्वपदप्रकृतिस्वरसिद्धये विस्पष्टादेराकृतिगणत्वं शरणी-
च्चिन्त्यम् । उपलभ्यमानस्य तादृशस्वरस्य द्वन्द्वेन निर्वाहात् ।
रे ऽपीष्टापत्तौ बाधकाभावादिति दिक् ।

"**एकादिः**" ॥ अदुकि अकारोच्चारणसामर्थ्यात्पररूपं न । केचित्तु
मादुकं दीर्घादिमाहुः ।

"**रात्राह्नाहाः पुंसि**" ॥ **परत्वा(१)दिति** । यत्तु प्राचा एकव-
् क्लीबतेत्युक्त्वा अहोरात्रमित्युदाहृतं तन्नेत्यवोचाम ।
यत्तु वदन्ति– रात्रादीनामेवानेन पुंस्त्वं विधीयते तदन्तस्य तु परवल्लि-
ाव सिद्ध्यति । अत एव भिन्नविषयत्वान्न विप्रतिषेधशङ्का । एवं च
हारे स नपुंसकम्"इत्येव भवति परवल्लिङ्गापवादत्वादिति । तन्न । उक्त-
द्व्यहस्त्र्यहादावपि क्लीबत्वं स्यात् । न चेष्टापत्तिः । प्राचाऽपि द्व्य-
ह इत्युदाहृतत्वादाकरविरोधाच्च । अमरोऽप्याह–'ते तु त्रिंशदहोरात्र'
'मासेन स्यादहोरात्र' इति च । तस्मात्तदन्तस्यैवायं पुंस्त्वविधिः । द्व-

---

**पुंवद्भावात्परत्वादात्वमिति** । अतिरभसादिति । **आर्हीयप्रत्ययस्यैव तेन**
**विधानादिति भावः** । द्वन्द्वेनेति । **राजन्यबहुवचनद्वन्द्वे इत्यनुवर्तमाने**
**त्यनेन पूर्वपदप्रकृतिस्वरस्य तत्राप्राप्तेत्यर्थः** ।

---

किमुच्यते प्रियादिषु । यत्र पुंवद्भावः प्रतिषिध्यते यत्र तु न प्रतिषिध्यते तत्रात्वेनभ-
नैव" इति भाष्यकारेण इत्यादिनोक्तम् ।

(१) **परत्वादिति**। "रात्राह्नाहा" इतिसूत्रे द्वन्द्वतत्पुरुषयोरित्यनुवर्तते प्रथमाबहुवच-
...रिणस्य रात्रादिभिर्विशेष्यते तदन्तविधिः । रात्राह्नाहान्तद्वन्द्वतत्पुरुषाः पुंसि इत्यर्थः ।

न्द्वतत्पुरुषयोरिति प्रक्रमणादिति स्थितम् ।

**संख्यापूर्वमिति** । तथा च लिङ्गानुशासनसूत्रम् । "अपथपुण्याहौ नपुंसकौ संख्यापूर्वा रात्रि" रिति । अमरोऽप्याह–'रात्रं प्राक्संख्यया ऽन्वित, मिति । 'गणरात्रं निशा बह्व्य' इति च । पुंस्त्वाधिकारे स एवाह–'रात्रान्ताः प्रागसंख्यका' इति । एवं स्थिते द्विरात्रस्त्रिरात्र इति वृत्तिकारहरदत्तादिभिरुक्तं पुंस्त्वं प्रामादिकमेवेत्यवधेयम् ।

**"अर्द्धर्चाः पुंसि च"** ॥ इह केषांचिदर्थभेदेन व्यवस्था । तथा च शाश्वतः—

मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः ।
अर्द्धर्चादिगणे पाठात्पुन्नपुंसकयोर्मधुः ॥ इति ।

अमरस्तु 'माध्वीकं मधु न द्वयो' रित्याह । **पात्राद्यन्तस्य नेति** । स्त्रीत्वमिति शेषः । **सुदिनाहमिति** । सुदिनशब्दः प्रशस्तपर्यायः । तथा च प्रयोगः । "सुदिनासु समासु कार्यमेतत् प्रविचिन्वीत विशेषतः स्वयं वा" इति ।

**"पथः"** ॥ कथं तर्हि 'व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा' इत्यमरः । 'व्यध्वौ विपथकापथा' विति रभसकोशश्च । अत्राहुः प्रमाद एवायमिति ।

वस्तुतस्तु पथे गतावित्यस्मात्पचाद्यचि पथते व्याप्नोतीति पथः । अकारान्तोऽयम् । तथा च त्रिकाण्डशेषः । 'वाटः पथश्च मार्गं स्या'

---

प्रक्रमणादिति । **प्रक्रमादित्यर्थः** । **प्रकरणादिति यावत्** । प्रामादिकमेवेति । **समाहारद्विगावित्यर्थः । सङ्ख्या(१)पूर्वं रात्रमित्यस्य प्रतिप्रसवविधित्वलाघवानुरोधेन समाहारद्विगावेव प्रवृत्तेः। "भविष्यति मर्यादा" इति सूत्रस्थे त्रिंशद्रात्रः पञ्चदशरात्रः इति भाष्यप्रयोगे तु त्रिंशत् पञ्चदश वा रात्रयो यस्मिन्निति बहुव्रीहिच्प्रत्यन्वेति योगविभागात्समासान्तो बोध्यः। पृषोदरादित्वादकार इति कश्चित्** ।

**पौनरुक्त्यपरिहारायाह**–सुदिनशब्द इति । सुदिनास्विति । **प्रशस्तास्वित्यर्थः** ।

। तेन समासे पुंस्त्वम् । न चैवं विपथसिद्धावपि कापथो न स्यात् ास्य दुर्लभत्वादिति वाच्यम् । ईषदर्थे चेति तत्सम्भवात् । कुत्साया- : पर्यवसानात् । इदं त्ववधेयम् । परवल्लिङ्गतापवादरूपत्वात्तत्पुरुष एवेदं ते नान्यत्र । त्रिपथा नगरी । बहुव्रीहिरयम् । पन्थानमतिक्रान्ता अ- या । इहापि न । 'द्विगुप्राप्ता'इत्यादिना परवल्लिङ्गतायाः प्रतिषेधादिति । एवं च न्यायसाम्येन द्व्यहेत्यत्रापि "रात्राह्नाहा" इत्यस्य प्रवृत्तिर्नेति नोक्तप्रायम् ।

**मृदु पचतीति** । क्रियाविशेषण(१)त्वाद् द्वितीयान्तम् । धातूपात्त- तां प्रति हि फलांशः कर्मीभूतः । तथा च फलसामानाधिकरण्ये द्विती- अत एव सकृल्लवावित्यादौ कारकपूर्वकत्वाद्यण् । यत्र तु भावनां करणतया धात्वर्थविशेषो ऽन्वेति तत्र तद्विशेषणानां तृतीयान्ततैव । तिष्टोमेन स्वर्गकामो यजेत'इति यथा । एतच्च "करणे यज"इति सूत्रे वृत्ति-

---

ति । अत्रारुचिबीजं तूक्तम् । किं च "पथ" इत्यस्य परवाल्लिङ्गतापवाद- तत्पुरुषे प्रवृत्तिस्तत्रैव प्रवृत्तौ चापवादत्वमित्यन्योन्याश्रयोऽप्यत्र बो- । तस्माद्विपथा ऽतिपथा इत्यादावर्द्धना(२)वमितिवल्लोकाश्रयत्वाल्लिङ्गस्य मशिष्यमिति न्यायेन सिद्धमिति बोध्यम् । एवं च 'व्यध्वौ विपथ- थौ' इत्यपि समञ्जसम् ।

द्वितीयेति । क्रियाविशेषणादिति भावः । ज्योतिष्टोमेनेति । तदभिन्नेन यागे-

---

(१) **क्रियाविशेषणत्वादिति** । पचेर्हि विक्लित्त्यनुकूलो व्यापारोऽर्थः । तत्र विक्लित्त्यंशे मन्वेति । विक्लित्तिश्च व्यापारे साध्यत्वेनान्वेति । तथाच-मृदुपाकं करोतीत्यर्थः । तथाच त्तव्यापारं प्रति कर्मीभूतेन विक्लित्त्यंशेन सामानाधिकरण्यात् मृद्विति द्वितीया । यत्र त्वर्थः करणत्वेनान्वेति 'यजेत स्वर्गकामः' इत्यादौ तत्र यागेन स्वर्गं भावयेदित्यर्थः । तत्र विशेषणस्य तृतीयान्तत्वमेव 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इत्यादावित्यन्यत्र विस्तरः।

(२) **अर्धनावमितिवदिति** । यथा अर्द्धनावमित्याद्यर्थं लोकाश्रयत्वाल्लिङ्गस्य इति श्यकम् , तथा अतिपथादिषु आर्यसिद्धिलिङ्गस्य इति भावः ।

अत्रेदं तत्त्वम् । विशेष्याविशेषसन्निधाने सति स्त्रीत्वपुँस्त्वयोरनभिव्यक्तौ उभयोरन्तरं तदभावे नपुंसकमिति लक्षणलक्षितनपुंसकत्वस्यैव न्याय्यत्वात् । अतएव "दाण्डिनायन"इति

पदमञ्जर्यांः स्पष्टम् । न चैवं ज्योतिष्टोमेन भक्तिपूर्वं यजेतेति न सिध्येदिति वाच्यम् । भावनाविशेषणत्वे तदुपपत्तेः । तत्रापि सन्दर्शनप्रार्थनादिभिर्व्याप्यमानत्वात् क्रियायाः कृत्रिमकर्मत्वविवक्षायां तद्विशेषणत्वाद् द्वितीया, अन्यथा तु प्रथमैवेति विवेकः। "सामान्ये नपुंसकम्" इति च अनियतलिङ्गविषयकम् । तेन आदिः पचति प्रातरादिरिति पुंस्त्वमेव । विस्तरस्तु शब्दकौस्तुभे बोद्धव्यः ।

**पर्याय(१)स्यैवेति** । कथं तर्हि 'नृपातिसभामगमन्न वेपमान' इति कीचकवधे ? गजपतिवत् राजविशेषत्वादिति रक्षितः ।

**"विभाषा सेना"॥ श्वानिशामिति** । कृष्णचतुर्दशीत्याहुः। तस्यां किल केचिच्छ्वान उपवसन्ति । तथा च तिर्यगाधिकरणे शाबरभाष्यम्—शुनश्च चतुर्दश्यामुपवसतः पश्याम इति ।

## ॥ इति तत्पुरुषः ॥

---

**नेष्टं भावयेदिति तत्र बोधात्** । न सिद्धयेदिति । **कर्मभूतफलांशाभावेन द्वितीयानापत्तेस्तृतीयापत्तेश्चेत्यर्थः । कथं तदुपपत्तिस्तत्राह**–तत्रापीति । व्याप्यमानत्वादिति । **तेषां धात्वर्थविवक्षयेत्यर्थः । ज्योतिष्टोमाभिन्नयागकरणिकामिष्टविषयां भावनां पश्येदिति बोध इत्याभिमानः । तथा बोधाननुभवेनाह**–अन्यथेति । पुंस्त्वमेवेति । **आदिशब्दस्य नित्यपुंस्त्वात्** । **अत एव प्रातरादिरित्यत्र प्रातरित्यस्य क्लीबत्वेऽलिङ्गत्वे ऽपि वा आदेरित्यस्य पुंस्त्वमेव ॥**

॥ इति तत्पुरुषः ॥

---

(१) **पर्यायस्यैवेति** ।"सभा राजाऽमनुष्यपूर्वा" इति सूत्रे राजा च अमनुष्यश्च राजामनुष्यौ तौ पूर्वौ यस्याः सा राजाऽमनुष्यपूर्वा इति विग्रहः । सभया तत्पुरुषविशेषणत्वे तदन्तविधिः। राजशब्दो राजपर्याय एव विवक्षितो नतु राजन्शब्दः ।तदेवाह मूले—राजपर्यायपूर्वः इत्यादिना । तत्र प्रमाणमाह–भाष्यकृता "स्वंरूपम्"इति सूत्रे "क्वचित् पर्यायवचनस्यैव राजाद्यर्थः" इति वार्तिकम् पठितम् । तदेवार्थतो ऽनुवदति–'पर्यायस्यैवेष्यते' इति ।

अत्रेयं व्यवस्था । "सभा राजाऽमनुष्यपूर्वा" इति सूत्रे योगं विभज्य सभा इत्येको योगः, राजाऽमनुष्यपूर्वा इत्यपरः, तत्र सभान्तः तत्पुरुषो नपुसकं स्यादित्यर्थकेन "सभेति" सूत्रेण स्त्रीसभमिति नपुंसकत्वे सिद्धे "अशाला" इति सूत्रं व्यर्थम् इत्यभिप्रायेण ...

**यस्य त्रिक(१)स्येति।** यद्यपि 'प्रादयो गताद्यर्थे प्रथमया' इत्युक्तम्।

## अथ बहुव्रीहिप्रकरणम्।

नन्वप्रथमाविभक्त्यर्थे इत्यनुचितम्। "अन्यपदार्थे" इति सूत्रात्। पदं च

---

सन्नुत्तरयोगो ज्ञापयति। स्त्रीत्वेतरलिङ्गविशिष्टप्राणिवाचकपूर्वपदकस्य सभान्तस्य तत्पुरुषस्य नपुंसकत्वञ्चेत्तर्हि राजाऽमनुष्यपूर्वपदकस्यैव स्यात्। एवञ्च स्त्रीत्वेतरलिङ्गविशिष्टप्राणिवाचकपूर्वपदकेतरत्वेन पूर्वयोगे संकोचं कृत्वा स्त्रीत्वेतरलिङ्गविशिष्टप्राणिवाचकपूर्वपदकेतरत्वाभावेन इनसभम्, ईश्वरसभम्, इत्यत्र नपुंसकत्वार्थमुत्तरयोगस्यावश्यकत्वेन स्त्रीसभमित्यत्रैव धर्मसभेत्यत्रापि नपुंसकत्वापत्तिरिति। तदर्थं "अशाला" इति सूत्रम् सार्थकमित्यलम्।

**इति तत्पुरुषसमासप्रकरणम्।**

---

## अथ बहुव्रीहिप्रकरणम्।

(१) **"शेषो बहुव्रीहिः"**। इति सूत्रे शेषपदं व्याचष्टे—**यस्येत्यादिना।** अत्र बहुव्रीहित्वम् नञ्तत्पुरुषभिन्नत्वे सति उत्तरपदलाक्षणिकपदवत्त्वम् बहुव्रीहित्वम्। चित्रगुः इत्यत्र गोपदं गोस्वामिनि लाक्षणिकम्। चित्रपदं च चित्ररूपविशिष्टे गवि लाक्षणिकम्। तत्र चित्रपदार्थस्य अपरपदार्थैकदेशे गवि अभेदान्वयः।

तेन चित्राभिन्नगोस्वामी इति वाक्यार्थबोधः। अथवा गोपदं गोस्वामिनि लाक्षणिकम्। चित्रपदञ्च तात्पर्यग्राहकम् इति बोधः। तेन 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तेर्न भङ्गः॥

ननु चित्रगुरित्यादौ विनिगमनाविरहेण (एकतरपक्षसम्पातिनी युक्तिः विनिगमना, तदभावेनेत्यर्थः) उभयपदे च लक्षणा कथं नोच्यते इति चेन्न। शक्तपदसमभिव्याहारं विना लाक्षणिकपदस्य आनुभविकत्वाभावात्। न च पूर्वपदे एव लक्षणेति वाच्यम्।

उत्तरपदार्थस्य लाक्षणिकेऽर्थे साक्षादन्वयाभावात्। न च समासोत्तरपदं तात्पर्यग्राहकमिति वाच्यम्। पूर्वपदस्य गवोपस्थापकत्वाभावात्। नञ्तत्पुरुषस्थले अब्राह्मण इत्यादौ ब्राह्मणपदे लक्षणा नञ्पदं तु तात्पर्यग्राहकम् अतो नञ्तत्पुरुषभिन्नत्वे सतीति विशेषणमुपात्तम्।

स च बहुव्रीहिर्द्विविधः। तद्गुणसंविज्ञानः। अतद्गुणसंविज्ञानश्च। समुदायोपस्थाप्ये गुणीभूतस्यापि पदार्थस्य समुदायान्विते अन्वयबोधकः तद्गुणबहुव्रीहिः। यथा लम्बकर्णमानय इत्यत्र कर्णस्यापि आनयने ऽन्वयः, तद्भिना धर्मिणोऽपि आनयनासम्भवात्। सम्भवे वा तद्वैशिष्ट्येन आनयने ऽन्वयबोधात् तस्यानयनेऽन्वयः। तद्भिन्नः अतद्गुणः। यथा—दृष्टसमुद्रमानय इत्यादौ समुद्रस्य आनयनानन्वयात् तथात्वम्। तत्रापि समानाधिकरणपद·

तथाऽपि "द्वितीया श्रितादिभि"रितिवत्प्रथमा केनचित् समस्यत इति नोक्तमित्यर्थः। वार्तिककृता प्रथमयेत्युक्तावपि सूत्रकृता नोक्तमिति वा। **अन्यस्य पदस्येति**। पदेन हि प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयते। तथा च द्वितीयाद्यर्थे इति फलितम्। तदाह—**अप्रथमेति**। **समानेति**। एतच्च शेषपदाल्लब्धम्। **प्राप्तमित्यादि**। ग्रामकर्मकप्राप्तिकर्तृकमुदकं विग्रहार्थः। उदककर्तृकप्राप्तिकर्मेति समासार्थः। विग्रहे स इति प्रयोगे तु तस्याप्ययमेवार्थः। यद्यपि क्तप्रत्ययार्थस्य कर्तुर्धात्वर्थं प्रति विशेष्यतोचिता। तथाऽपि व्यपेक्षावादिभिरगत्या समासे भिन्नैव व्युत्पत्तिः स्वीकार्या।

किं च कर्तृविशिष्टप्राप्तेः पदार्थत्वे तस्यैव नामार्थतयोदकस्य तदभेदा

---

**सुबन्तमित्यत आह**—पदेन हीति। **तत्र विभक्त्यर्थाक्षिप्तसम्बन्ध्यन्तर्भावेणाप्येकार्थीभावाङ्गीकारान्न चित्रगुर्देवद(१)त्त इत्यादौ सामानाधिकरण्या(२)नुपपत्तिरित्यन्यत्र विस्तरः**। तस्यापि। **सशब्दस्यापि**। अयमेवेति। **कर्म ग्राम एवेत्यर्थः**। भिन्नैवेति। **प्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेषणताविषयेत्यर्थः**।

---

व्यधिकरणो यथा——दण्डपाणिः। एतेन द्वित्रा इत्यादौ अव्याप्तेः अन्यपदार्थप्रधानो बहुव्रीहिरिति वदन्तः परास्ता इति दिक्।

**(१) चित्रगुर्देवदत्त इति**। यद्यपि पदेन प्रकृत्योपसर्जनः क्रियाकारकभावादिरूपो विभक्त्यर्थः प्राधान्येन अभिधीयते प्रकारतानिरूपितत्वाच्च सम्बन्धस्यापि प्राधान्यव्यवहारः।

एवञ्च देवदत्तादिपदैः सामानाधिकरण्यानुपपत्तिः, तथापि 'नवा अनभिहितत्वात्' इति वार्तिकोक्तसिद्धान्तमूलकव्याख्यानेन विभक्त्यर्थाक्षिप्तसम्बन्ध्यन्तर्भावेणापि शक्तिकल्पनया दोषाभावात्। तत्र एकस्य सम्बन्धिनः समस्यमानपदैरुक्तत्वेन द्वितीयः सम्बन्धी यस्येत्यादि प्रकृत्यर्थभूतो गृह्यते इति स्पष्टं भाष्ये। चित्रा गावो यस्य इति लौकिके वाक्ये चित्राणां गवां प्राधान्येऽपि वृत्तौ तदर्थबोधकविग्रहवाक्ये च विशेषणविशेष्यभावव्यत्यासः ततः शिष्टानां तथैव बोधात्। तत्र षष्ठी—सप्तमी—विभक्त्यन्तातिरिक्तार्थे कर्तृकर्मवचनसुबन्तानामेव समासः। "१ मत्वर्थे बहुव्रीहिः २ कर्तर्यपि ३ कर्मवचनेन अप्रथमायाः" इत्यादिवार्तिकात्। न च ततः परो यस्मादिति कथं सम्पद्यत इति वाच्यम्। तत्र पञ्चम्याः षष्ठ्यपवादत्वेन षष्ठ्यर्थत्वेन मत्वर्थत्वात्।

एवं वन्या इतरे वन्यः इत्यत्रापि मत्वन्तस्यैव बहुव्रीहेरपि अस्त्यर्थान्तर्भावेणैव शक्ति-

वाच्यः स च बाधितः । न हि कर्तृविशिष्टा प्राप्तिरुदकमिति सम्भवति । अपि च व्यस्ते समीचीनमुदकमितिवत्समस्तेऽपि उदकविशेषणप्रयोगः प्राप्तः । स च वृत्तस्य विशेषणयोगो नेति वचनेनैव वारणीयः ।

सिद्धान्ते तु ।

बहूनां वृत्तिधर्माणां वचनैरेव साधने ।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥
चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्तव्यं ते, न्यायसिद्धं त्वस्माकं तदिति स्थितम् ॥

**ऊढेत्यादि** । अनडुत्कर्तृकोद्वह(१)नकर्मीभूत इत्यर्थः । रथकर्मकोद्व-

---

न हीति । **तस्माद्विशेषणीभूते कर्त्तरि तस्याभेदान्वय इति व्युत्पत्त्य-न्तरमङ्गीकार्यम्** ।

बहूनामिति । **सामान्येनोक्तमर्थं विशेषतो विवृणोति**—चकारादीति । **आ-दिना क्त्वान्ताद्यर्थसङ्ग्रहः । तेषां निषेधोऽभावस्तद्बोधकं लोपवचनं कार्य-मित्यर्थः** । बहुव्युत्पत्तीति । **प्रत्ययार्थप्राधान्यादिव्युत्पत्तीत्यर्थः** । कर्त्तव्यमिति । **इदमुपलक्षणं विभाषाधिकारादीनामपि** । न्यायसिद्धमिति । **तादृशतादृशार्था-**

---

(१) **अनडुत्कर्तृकोद्वहनकर्मीभूत इति** । वस्तुतस्तु एवं कल्पने प्राप्तानन्द इत्यादावपि यत्कर्मकप्राप्तिकर्तानन्द इति विग्रहतो बोधे समासतश्चानन्दकर्तृकप्राप्तिकर्मेति बोधे विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावः कल्प्यः स्यात् । वृत्तिविग्रहयोः समानार्थत्वम् इति व्युत्पत्तेर्भङ्गश्च स्यात् । अस्यार्थस्तु वृत्त्यारम्भकाणि यानि पदानि यादृशार्थानि तादृशार्थान्येव विग्रहे स्थितानि तानीत्यर्थः । विग्रहश्चात्र समासारम्भकपदानाम् असमासावस्थायाम् यादृशानि रूपाणि तादृशरूपकाणां तेषां प्रदर्शकवाक्यम् । विग्रहार्थानुसारेणैव च वृत्त्यर्थः कल्प्यते । एवं च प्राप्तस्य आनन्दस्य अयमित्येव लौकिको विग्रहः । प्राप्तानन्द इति वृत्तिः । तत्र च यादृशार्थकं विग्रहे पदं तादृशार्थकमेव वृत्तावपीति उभयोः समानार्थत्वम् । समुदायेन अन्यपदार्थोऽधिको भासते इत्यन्यत् । पाचक इत्यस्य पचतीति अर्थः । अत्रापि पचतीत्यस्य वृत्त्यर्थबोधकताविवक्षायाम् आश्रयप्रधानार्थकत्वमेवेति न वृत्तिविग्रहयोः समानार्थत्वहानिः । एवं च प्राचीनमते प्राप्तिकर्त्रभिन्नानन्द इति विग्रहार्थः । आनन्दकर्तृकप्राप्तिश्च वृत्त्यर्थः इति समानार्थत्वभङ्गः स्पष्ट एव ।

नव्यमते प्राप्तिकर्त्रभिन्नानन्द इति विग्रहार्थः वृत्त्यर्थश्चेति न तद्भङ्ग इति दिक् ।

अन्यच्च, तथासति बहुव्रीह्युपकारकस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य हानिः ।

हननकर्ता तु समासार्थः। रुद्रसम्प्रदानकोपहरणकर्म पशुः। पशुकर्मकोपहरणसम्प्रदानम्। स्थाल्यवधिकोद्धरणकर्म ओदनः। ओदनकर्मकोद्धारन्तर्भावेणैका(१)र्थीभावाङ्गीकारादित्यर्थः। विशेषणत्वेनैवोपस्थितेर्वि-

---

समासः इति प्रश्नस्य उत्तरपदार्थप्रधान इत्युत्तरे राज्ञः पुरुषः राजपुरुषः इत्यादौ विग्रह उत्तरपदार्थादुत्तरं श्रूयमाणा विभक्तिः यथा समासादपि श्रूयते, तथात्रापि मासो जातस्येति विग्रहे जातपदादुत्तरं श्रूयमाणा षष्ठी विभक्तिः मासजात इति समासादपि श्रूयेत इत्याशङ्क्य अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः इति षष्ठी न भवतीति उक्तम्। अत्र किं प्रधानोऽयम् समासः इत्यत्र समासपदं समासविग्रहोभयपरम् इति प्रश्नोत्तरयोरपि विग्रहसमासोभयपरत्वम्। समासमात्रपरत्वे विग्रहस्य पूर्वपदार्थप्रधानत्वेऽपि समासस्य उत्तरपदार्थप्रधानत्वेन विग्रहवाक्यीयविशेषणवाचकाच्छ्रूयमाणविभक्तेः राजपुरुष इत्यादौ क्वचिदपि समासादर्शनेन तत्र षष्ठ्यापादनमनर्थकं स्यात्। वृत्तिविग्रहयोः समानार्थत्वानुरोधेन उभयोरपि उत्तरपदार्थप्रधानत्वेतु मासो जातस्येति विग्रहे मासजात इति समासे च जातपदार्थस्यैव प्राधान्येन विग्रहे विशेष्यवाचकजातपदोत्तरं तत्स्थितिवत् मासजात इति समासोत्तरमपि तच्छ्रवणसम्भवः। विग्रहे विशेष्यवाचकपदोत्तरं श्रूयमाणविभक्त्या विशेषणसम्बन्धप्रतीतिवत् समासोत्तरविभक्त्यापि विशेषणसम्बन्धप्रतीतिसम्भवात्। नच विग्रहेऽपि जातस्य प्रधानत्वे तस्मात् षष्ठी नोत्पद्येत, विशेषणादेव षष्ठीविधानादिति वाच्यम्। वाक्यस्य वृत्त्यर्थबोधकत्वविवक्षायां जातस्य प्राधान्येऽपि परिच्छेद्यपरिच्छेदकत्वसमभिव्याहारे परिच्छेद्यस्यैव विशेषणत्वेन तस्मादेव षष्ठ्युत्पत्तेः। वृत्त्यर्थबोधकत्वविवक्षायां तद्व्यासे ऽपि पूर्वमन्तरङ्गत्वाज्जातकार्यस्य 'गङ्गायां घोषः' इत्यादौ टाबादिवद् अनिवृत्तेः। अत एव हास्तिक इत्यादिविवरणभूतस्य हस्तिना चरतीत्यादेः आश्रयार्थप्रधानत्वमेव। अत एव तस्माच्छक्तिग्रहोप्युपपद्यते। अन्यथा भिन्नार्थत्वात्स न स्यात्। तस्मात् वृत्तिविग्रहयोः समानार्थत्वात् षष्ठी प्राप्नोति इत्याशङ्का उपपद्यते। समासेनैव माससम्बन्धस्य प्रत्यायनात् प्रातिपदिकार्थेन शेषभावात् षष्ठी नेति समाहितम् इत्यन्यत्। स्पष्टञ्चेदम् "कालाः परिमाणिना" इति सूत्रे बृहच्छब्दरत्ने इति अधिकं तत एव अवगन्तव्यम् इति दिक्।

**(१) एकार्थीभावेति।** स च संसृष्टार्थ समर्थः इत्युक्तः परस्परं निरूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वे सति एकार्थोपस्थितिजनकत्वरूपो बोध्यः। विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वमिति वा। अत एव राजपुरुष इत्यादौ एकदेशे राज्ञि ऋद्धस्येत्यादि विशेषणान्वयो न भवति। 'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न'इति सिद्धान्तो ऽप्यत्रैव अनुकूलः। 'देवदत्तस्य गुरुकुलम्' इत्यादौ गमकत्वाद् वृत्तिर्भवति। राजपुरुष इत्यादौ विशेषणपदे संख्यानवगमो ऽप्येकार्थीभावकृतः। संख्याविशेषप्रकारेण तत्तदर्थभाने पृथगु-

णावधिः स्थालीत्यादिरर्थः। इह कर्मादीनां समासेनाभिहितत्वात्प्रथमा। **प्रथमार्थे त्विति**। वृष्टे देवे अनयोर्न समासोऽशेषत्वादित्यत्र तात्पर्यम्। **व्यधिकरणानामिति**। अत्राप्युक्त एव हेतुः। इत्थं शेषग्रहणफलमुपनिबद्धम्। न चोन्मत्तगङ्गमित्यादिव्यावृत्तिरेव तत्फलम्। एकसञ्ज्ञाधिकारेणैव तत्सिद्धेरिति भावः। (१)अनेकं किम्? बहूनामपि यथा स्यात्। तदुदाहरणं तु मूल एव स्फुटीभविष्यति। एवं चात्र सुबित्येवानुवर्तते, न तु सुपेति।

यत्तु "सुप्सुपा"इत्यनुवर्त्यानेकं सुबन्तं सुपा सहेति व्याख्यातम्। तन्न। द्विपदबहुव्रीह्यसिद्धिप्रसङ्गात्।

**प्रादिभ्य इति**। प्रादिभ्यः परं यद्धातुजं तदन्तस्य पदान्तरेण सह समासो व्याख्येयः। सूत्रसिद्धार्थानुवादोऽयम्। **वा चेति**। इदं तु वाचनिकम्। पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्येति यावत्, वा लोपो वाच्यः। एतच्च प्रादीनामेव वृत्तौ विशिष्टार्थवृत्तितामाश्रित्य सुत्यजम्।

"**स्त्रियाः पुंवत्**"॥ **ऊङो ऽभाव इति**। यदि तु ऊङो

---

**शेषणाद्यन्वयोऽपि नेत्यन्यत्र विस्तरः**। समासेनाभिहितत्वादिति। **एवं च तेषां कर्मत्वादिरूपतैव नास्ति। विभक्तिवाच्यतावच्छेदकरूपेण कर्मादीनां कर्मादिशब्दैरिवैतैरप्यनभिधानादिति भावः**। तत्सिद्धेरिति। **अनवकाशत्वेनाव्ययीभावादिसंज्ञया अस्याभावादिति भावः**।

**उत्तरपदलोप इत्यस्य शेषं प्रदर्शयति**—वाच्य इति। सुत्यजमिति। **मुख्यार्थे तु न समासोऽनभिधानादिति भावः। वचनारम्भ एव तु ज्यायान्**।

---

भूतशक्तिपर्याप्त्यधिकरणत्वम्, एतन्नितयसम्बन्धेन। राजपुरुष इत्यादौ राजत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणराजपदघटितत्वम्, राजत्वावच्छिन्ननिरूपितशक्तिनिरूपकेतरपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वम्, राजत्वावच्छिन्ननिरूपितशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूतराजसम्बन्धिपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वं च वर्तत इति लक्षणसमन्वयः।

(१) **अनेकं किमिति**। अनेकं किम्? बहूनामपि यथा बहुव्रीहिः स्यात्। तत्फलं चित्राजरद्गुः इत्यत्र चित्राशब्दस्य न पुंवद्भावः। कपिञ्जलाधिकरणन्यायस्यात्रानाश्रयणम्। इति चतुरादिपदानामप्ययम्। यदि तु "तद्धितार्थोत्तरपदसमाहारे च"इति सूत्रेणोत्तरपदे परतः

ऽन्यो ऽनूङिति पर्युदासः स्यात्तर्हि टाबाद्यन्तमेव गृह्येत । ततः किमिति चेत् ? इडबिडो ऽपत्यं "जनपदशब्दात्क्षत्रियादञ्" ऐडबिडः । दरदोऽपत्यं "द्व्यञ्मगध" इत्यण् । दारदः । तयोः स्त्रियाम् "अतश्च" इति लुक् । इडबिड् । दरत् । सा चासौ वृन्दारिका च ऐडबिडवृन्दारिका । दारदवृन्दारिकेति न सिद्ध्येत् । न ह्यत्रः स्त्रीप्रत्ययः कश्चिदस्तीति भावः । **निपातनादिति** । एतच्च पूर्वत्रापि योज्यं वैयधिकरण्येन स्वरसतो बहुव्रीहेः दुर्लभत्वात् । **अलुगिति** । इह भाषितपुंस्कमततीति भाषितपुंस्कात् । अतेः क्विप् । एवं च समानाधिकरण एव बहुव्रीहिः । अलुगर्थं च यत्नो मा ऽस्त्विति यद्यपि सुवचं, तथापि प्राचामनुरोधेन क्लिष्टव्याख्यानमित्यवधेयम् । **षष्ठ्याश्चेति** । एवं च सूत्रे केषांचित्षष्ठ्यन्तपाठो ऽनाकरः । हरदत्तादिग्रन्थविरोधादिति भावः । **तुल्ये इत्यादि** । अयं भावः । भाषितः पुमान् य-

न सिद्ध्येदिति । "जातेश्च" इति निषेधस्तु नात्र । निषेधविषये एव "पुंवत्कर्मधारय" इत्यस्य प्रवृत्तेः । किं च तत्र जातेरिति पञ्चमीनिर्देशात्ततः परो यः प्रत्ययस्तदन्ते स निषेधो नायं तथा । एवं च सत्यभिधाने बहुव्रीहावपि ऐडबिडभार्य इत्येव । भाष्ये उत्तरसूत्रोदाहरणं तु तत्राप्ययमेवार्थ इति सूचयितुम् ऐडबिडस्यानन्तरापत्यत्वे भाष्यमते जातित्वाभावाच्च ।

प्राचामनुरोधेनेति । तदनुरोधे बीजं तु प्रागुक्तार्थकभाषितपुंस्कादित्यस्याप्रसिद्धत्वम् । षष्ठ्यन्तपाठ इति । अनूङः समानाधिकरणे इत्येवंरूपः । पुमान् यस्मिन्निति । प्रवृत्तिनिमि(१)त्तस्याधारत्वविवक्षया सप्तमी । सत्सप्तमी वा ।

(१) **प्रवृत्तिनिमित्तस्येति** । भाषितःपुमान् यस्मिन्नर्थे तद्भाषितपुँस्कम् । प्रवृत्तिनिमित्तस्य आधारत्वविवक्षया सप्तमी । ततः तदस्यास्तीत्यर्थे अर्शआद्यच् । यदर्थज्ञानेन शब्दप्रवृत्तिनिमित्तविशिष्टे शब्दस्य प्रवृत्तिः तत् शब्दप्रवृत्तिनिमित्तम् । अर्थात् प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वम् । वैशिष्ट्यं च स्ववाच्यत्व, स्ववाच्यवृत्तित्व, स्वजन्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविशेष्यतानिरूपितप्रकारताश्रयत्व, एतत्त्रितयसम्बन्धेन । अत्र विशेष्यतानिरूपितत्वं प्रकारतायां साक्षात्परम्परासाधारणं विवक्षितमिति पशुपदार्थप्रवृत्तिनिमित्तलोमत्वादौ नातिव्याप्तिः । एवमेव पदार्थत्वावच्छेदकभेदत्वादावपि नाव्याप्तिः । नच निरूपितत्वं साक्षात्परम्परासाधारणं वक्तुं दुर्वचम् इत्ययं परिष्कारोऽसङ्गत इति वाच्यम् । प्रातिपदिकविशिष्टप्रकारताश्रयत्वम् प्रवृत्तिनिमित्तत्वम् इति

थं तद्भाषितपुंस्कं प्रवृत्तिनिमित्तम्। तदस्यास्तीति अर्शआद्यच्। तन
प्रवृत्तिनिमित्ते उक्तपुंस्कं शब्दरूपं लभ्यत इति। स्त्रीवाचकेति।
स्त्रिया इत्यस्य स्त्रीप्रत्ययपरतां वारयति।

तथा हि सति इत्थं सूत्रार्थः स्यात्—अनूङः स्त्रीप्रत्ययस्य पुंवत्, नि-
त्यर्थः। यथा मरुभूमिवदस्मिन् ग्रामे जलमित्युक्ते अभाव एवातिदिश्य-
द्वत्।

नन्वयमेव वाक्यार्थोऽस्तु। यथोक्तं प्राचा—उक्तपुंस्कात्परस्यानूङः
ययस्य पुंवत्स्यात्। पुंवद्भावात्स्त्रीप्रत्ययलोपः, इति चेन्मैवम्।
र्थस्याकरे एव अनेकधा दूषितत्वात्। तथा हि—अस्मिन्पक्षे पटुभार्य
त्तरपदनिमित्ताया ङीषो निवृत्तेः "अचः परस्मिन्"इति स्थानिवत्त्वे सति

---

न् अर्थे सति पुमान् भाषितो भवतीत्यर्थः। स्त्रीप्रत्ययेति। स्वरितत्व-
या प्राप्तमित्यर्थः।
चः परस्मिन्निति। उत्तरपदपरत्वनिमित्तत्वादस्या निवृत्तेरितीति भावः।

---

अवच्छेदकत्व, एतदन्यतरसम्बन्धेन स्वप्रयोज्यधर्मितानिरूपितप्रकारतात्वमेवास्ति
यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इति न तत्रातिव्याप्तिः। अत्र स्वप्रयोज्यधर्मि-
पितप्रकारता अपदार्थत्वसम्बन्धावच्छिन्ना विवक्षिता, इति लोमवल्लाङ्गूलावच्छिन्नवाचक-
प्रवृत्तिनिमित्तलोमत्वादौ नाव्याप्तिः। न चैवं पदार्थप्रवृत्तिनिमित्तभेदत्वादौ अव्याप्तिः।
पदप्रयोज्यत्वाभाववत्त्वावच्छिन्नधर्मितानिरूपितपदार्थसम्बन्धावच्छिन्नप्रकारताया अव-
त्वाश्रयत्व एतदन्यतरसम्बन्धेन सत्त्वेन तदभावस्याभावादिति वाच्यम्। स्वपर्याप्तश-
ाधीनोपस्थितिप्रयोज्यशाब्दबोधनिरूपितत्व, स्वप्रयोज्यधर्मितानिरूपितापदार्थसम्ब-
च्छिन्ना या प्रकारता पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती च या प्रका-
अवच्छेदकत्वाश्रयत्व एतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकतादृशप्रकारत्वाभाववत्त्व
यतरसम्बन्धेन प्रातिपदिकाविशिष्टत्वं प्रवृत्तिनिमित्तत्वम् इति परिष्कारेण अदोषात्।
त्वाभावश्च स्वतादात्म्य स्वनिरूपितत्व एतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको वि-
। पार्थ एव धनुर्धरः इत्यादौ पार्थत्वावच्छिन्नप्रतियोगिताकभेदवत् सम्बन्धाभावस्य
त्वे बोधनात् प्रतियोगित्वसम्बन्धावच्छिन्नपार्थत्वावच्छिन्नप्रकारतानिरूपितविशेष्य-
भावत्वावच्छिन्नविशेष्यतानिरूपितापदार्थसम्बन्धावच्छिन्नभेदनिष्ठप्रकारतायां तादात्म्ये
ऽवच्छेदकत्वे च विद्यमानत्वात् तादृशप्रकारत्वाभाववतीयं प्रकारता न जातेति तत्र
प्तिः। पुँस्त्वादौ च कस्यापि पदार्थस्य अनन्वयात् प्रातिपदिकपदप्रयोज्यधर्मितानिरूपि-
र्थसम्बन्धावच्छिन्नपुँस्त्वादिनिष्ठप्रकारतानिरूपितविशेष्यत्वाभावती जातेति तादृशप्र-
श्रयत्वावच्छेदकत्व एतदन्यतरसम्बन्धेन पुँस्त्वे पुँस्त्वत्वादौ च वर्तत एवेति न तादृश-

यण् स्यात् । किञ्च वतण्डस्यापत्यं स्त्री वतण्डी । "वतण्डाच्च" इति यञ् । तस्य "लुक् स्त्रियाम्"इति स्त्र्यपत्ये लुक् । शार्ङ्गरवादित्वान्ङीन् । वतण्डी चासौ वृन्दारिका च वातण्ड्यवृन्दारिकेतीष्यते । अत्र ङीनो निवृत्तावपि अर्थगतस्य स्त्रीत्वस्यानिवृत्तत्वात् "लुक् स्त्रियाम्"इति प्रवर्तेत । अपि च एवं ऐडबिडवृन्दारिकेत्यादि प्रागुक्तं न सिद्ध्येत् । किञ्च गार्ग्यश्च ता वृन्दारिकाश्च गार्गवृन्दारिकाः । ङीपि निवृत्ते ऽपि "यञञोः"इति लुङ् न स्यात् । अस्त्रियामिति निषेधात् । तस्माद्यथाऽऽकरमेव ग्राह्यम् ।

**लौकिकेति ।** यत्तु चित्राणां गवामयमिति मीमांसकैर्विगृहीतं तल्लौकिकालौकिकबहिर्भूतत्वादुपेक्ष्यमिति भावः । एतच्च मासजात इत्यत्र प्रपञ्चितम् । **चित्रा अम् इति ।** अन्तरङ्गानपीति न्यायादिह पूर्वं सवर्णदीर्घो न प्रवर्तते । अन्यथा एकादेशस्य परादित्वेन सुपो लुकि चित्रगुरित्यत्र अकारो न लभ्येतेति भावः । **नेहेति ।** इष्टार्थसिद्ध्यनुरोधेन पूर्वपदं क्वचिदाक्षिप्यते न तु सर्वत्र । तथाच "ओजःसहोम्भसा" इति सूत्रे हरदत्तेनेत्थमेवोक्तमिति भावः । **आनङिति ।** तथा च समर्थसूत्रे भाष्ये होतृपोतृनेष्टोद्गातार इत्यत्र चतुर्णां द्वन्द्वे तृतीयस्य आनङुदाहृतः । पूर्वपदाक्षेपे तु स न सिद्ध्येत् । न ह्यत्र नेष्टा पूर्वपदं नापि तदन्तं, होतुरेव पूर्वपदत्वादिति भावः । **अत एवेति ।** पूर्वपदाक्षेपादेवेत्यर्थः ।

**चित्राजरदिति ।** न चेह द्वन्द्वात्मकस्य पूर्वपदस्य पुंवद्भावोऽस्तु । तथा च टाबपि निवर्तेतेति वाच्यम् । द्वन्द्वान्तर्गतयोः स्त्रीप्रत्ययप्रकृत्योः प्रत्येकं भाषितपुंस्कत्वे ऽपि उदाहृतद्वन्द्वस्यातथात्वात । तथा च पट्वीमृद्व्यौ भार्ये यस्येति विगृह्य पट्वीमृदुभार्य इत्युदाहरता (१)भाष्यकारेण सर्वमिदं

---

प्रवर्त्तेतेति । **न निवर्त्तेतेत्यर्थः** । आस्त्रियामितीति । **तद्राजस्य बहुष्विति सूत्रात्तत्र तदनुवृत्तेरिति भावः** ।

पूर्वं सवर्णदीर्घो नेति । **पूर्वशब्दे सानुस्वारः पाठः । समासात्पूर्वं न सवर्णदीर्घ इत्यर्थः । पूर्वसवर्णेत्यपपाठः "दीर्घाज्जसि"इति निषेधात् ।** इत्थमेवेति । **पूर्वपदं नाक्षिप्यत इत्येवमेवेत्यर्थः** । ...

मिति भावः । **द्वयोरपीति** । पूर्वपदान्तर्गतमुत्तरपदमाश्रित्य प्रथ-
पुंवद्भाव इति भावः । **जरच्चित्रेति** । "पूर्वकालैक" इति सूत्रे
दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वे सति लिङ्गविशिष्टपरिभाषया जर°
विनिपातः । **कर्मधारयोत्तरपदेति** । एतेनादृष्टसदृशप्रजमिति प्र॰
याख्यातः । इह प्रघट्टके बहूनां बहुव्रीहौ पूर्वपदं न पुंवादित्युक्त्वा
शेष उक्तः । अनिज्विधावपि विशेषान्तरं वक्ष्यति ।
तु प्राचा नीलोज्ज्वलवपुरित्युदाहृतं, तत्र स्वरे विशेषो बोद्धव्यः । तथा
व्रीहौ पूर्वपदे नीलशब्दस्य प्रकृतिस्वरः कर्मधारयपूर्वपदे तु कर्मधार-
उदात्त इति महान्भेदः । **स्त्रीप्रमाणी यस्येति** । करणार्थल्युडन्त-
णशब्दो विशेष्यलिङ्गः । टित्त्वान्ङीप् । कथं तर्हि 'प्रमाणायां स्मृतौ'
बरभाष्यम् । भावे ल्युडन्तात्तत्करोतीति णिचि पचाद्यचि टाप् ।
माणमिवाचरतीति आचारक्विबन्तात्पचाद्यच् ।
द्रास्तु—

प्रमाणमयते याति मूलभूतां श्रुतिं यतः ।
क्विबन्तादयतेस्तस्मात्प्रमाणा स्मृतिरुच्यते ॥ १ ॥

यादिग्रन्थेन अयतेः क्विबन्तस्येदं रूपमित्याहुः । तत्र "ह्रस्वस्य पि-

---

विशिष्टपरिभाषयेति । जरच्छब्दस्य प्रथमानिर्दिष्टत्वात्तेन लिङ्गविशिष्ट-
या जरतीशब्दस्यापि ग्रहणेनोपसर्जनत्वे सति जरत्याः पूर्व॰
ति शेषपूरणेनान्वयः । विशेषान्तरमिति । परमः स्वो धर्मो यस्येति
हुव्रीहावनिजभावरूपमित्यर्थः ।
भेद इति । यदि तु कर्मधारयोत्तरपदे बहुव्रीहौ नीलपदस्वरः
ीत्युच्यते तदा चिन्त्यमेव प्राचीनोदाहृतमिति भावः । तत्करो॰
माणं प्रमां करोति जनयतीत्यर्थः ।
न्तस्येदमिति । सवर्णदीर्घे ऽप्यजादेराकृतिगणत्वाट्टाब् बोद्धव्यः ।

---

ततम् । तत्र हि यत्र पूर्वपदं द्वन्द्वो न स भाषितपुंस्कः । अत एव

ति" इति तुग् दुर्वारः । 'आगमशास्त्रमनित्यम्' इति तु अगतिकगतिः । इह तु गत्यन्तरमुक्तमेव ।

यदप्याहुः—तत्र "लोपो व्योर्वलि" इति लोपो हि वलादिप्रत्ययाश्रय इति । तदप्यापाततः । तत्र प्रत्ययग्रहणस्याप्रकृतत्वात् । गौधेरः, पचेते, इत्याद्युदाहरणविरोधाच्चेत्यास्तां तावत् ।

परिगणितान्, त्रलूतसिलादीन्, त्रयोदश क्रमेणोदाहरति—**बह्वीष्विति**। यद्यपि बह्व्यादिषु ङीषो वैकल्पिकत्वात्तदभावे बहुत्र इत्यादि सिद्ध्यति तथाऽपि पाक्षिकानिष्टवारणायेदम् ।

यत्तु प्राचा ततस्तत्रेत्युदाहृतं, तत् 'सर्वनाम्नो वृत्तिमात्रे' इत्यनेन गतार्थत्वादुपेक्ष्यम् । **दर्शनीयतरेति** । यत्तु प्राचा पटुतरा पटुतमेत्युदाहृतं, तत्प्रामादिकमिति ध्वनयन्नाह—**घरूपेति । बहुथेति** । "प्रकारवचने थाल्" । तत्र हि—"किंसर्वनामबहुभ्य" इत्यधिकृतम् । **वृकतिरिति** । "वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि" इति तिल् । **अजथ्येति** । "अजाविभ्यां थ्यन्"। **शसीति** । "बह्वल्पार्थात्" इत्यपि शस् तसिलादिषु द्रष्टव्य इत्यर्थः । **त्वलोरिति** । अत्र वदन्ति—जातिसञ्ज्ञाव्यतिरिक्तं धर्ममात्रं गुण इति ।

---

अगतिकगतिरिति । **भाष्यानुक्तत्वादिति भावः** ।

प्रत्ययाश्रय इति । **तेन लोपस्य बहिरङ्गत्वेनासिद्धत्वान्न तुक्प्राप्तिरिति भावः** । गौधेर इत्यादि । **रशब्दतेशब्दयोः प्रत्ययावयवत्वेऽपि प्रत्यय(१)त्वाभावादिति भावः** । विरोधाच्चेति । **चेन तुकोऽपि प्रत्ययापेक्षत्वेन समत्वमित्यस्य सङ्ग्रहः** ।

ततस्तत्रेति । **तस्यास्तस्यामित्यर्थे इदम्** । तिलिति । **लिङ्गविशिष्ट(२)परिभा-**

---

(१) **प्रत्ययत्वाभावादिति** । स्यादेतत् स्वस्वप्रकृत्यन्तरार्थप्रत्यायकत्वं प्रत्ययत्वम् इत्यर्थे प्रकृतेराकाङ्क्षितत्वेन प्रत्ययविधौ उद्देश्यतावच्छेदकाक्रान्तत्वं प्रकृतित्वम् इति लक्षणे प्रत्ययत्वस्य शरीरे प्रकृतित्वस्य प्रकृतिलक्षणे प्रत्ययत्वस्य च पतितत्वाद् अन्योन्याश्रय इति चेत् ? मैवम् । आगमादेशभिन्नत्वे सति तृतीयचतुर्थपञ्चमाध्यायविधेयनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वं प्रकृतित्वम् इति प्रकृतित्वपरिष्कारेण अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नतृतीयचतुर्थपञ्चमाध्यायघटकपदप्रयोज्यविधेयताश्रयत्वं प्रत्ययत्वम् इति प्रत्ययत्वपरिष्कारेण अदोषादिति दिक् ।

लोः" इति प्राप्तिरिति व्याख्यातम् । तदेतत् सर्वं भाष्यादिविरोधादु-
। ।

तथा हि—"एकतद्धिते च" इति सूत्रे एकता एकत्वम् इत्युदाहृत्य
वेन सिद्धमित्याशङ्क्य भगवानाह—उक्तमेतत् "त्वतलोर्गुणवचनस्य" इति।
अत्र कैयटः । एकशब्दस्य संख्यावाचितायां गुणवचनत्वेऽपि अस-
ाचिनो ऽतथात्वादिति भाव इति । एवं हि वदता शुक्लादय एवेह
इति ध्वनितम् । अतस्तथैवोदाहरति । शुक्लत्वं शुक्लतेति । अत
च प्रत्युदाहरति । कर्त्रीत्वमिति । तथा च "स्त्रियाम्" इति सूत्रे
नीत्वात्प्रवृत्तेरिति कैयटेन प्रयुक्तम् । तथा "पुंयोगात्" इति सूत्रे स्त्रि-
संविधात्रीत्वादिति तेनैव प्रयुक्तम् । प्रगृह्यसंज्ञाप्रकरणेऽपि विभक्तेरेव
नीत्वादित्युक्तम् ।

स्यादेतत् ।

'निरीक्ष्य मेने शरदः कृतार्थताम्' ।

'क्षीबतामुपगतास्त्वनुवेलं धृष्टता रहसि भर्तृषु ताभिः
सा मुमोच रतिदुःखशीलताम्' ।

इत्यादिप्रयोगाणां का गतिरित्यत आह—**शरद इति । सामान्य**
। तथा च—"पत्युर्नो यज्ञसंयोगे" इति सूत्रे पत्न्याः फलप्रतिग्रही-

---

भावः । परिगणनसामर्थ्यादेव "जातेश्च" इति निषेधाप्रवृत्तिरिति
यम् ।

ैयट इति । अनेन हि कैयटेन भेदकं धर्ममात्रं गुण इत्यस्य निरासे-
ुक्तस्य शुक्लादिरूपस्य गुणस्य ग्रहणं सूचितम् । अत्रारुचिबीजं तु
ाजातिकृदन्ततद्धितान्तसमस्तसर्वनामसङ्ख्याशब्दातिरिक्तः शब्दो
चनः शब्द इत्याकडारसूत्रस्थभाष्यविरोधः । अयं च सर्वनामेति
्पष्टमेव । प्रगृह्यसञ्ज्ञेति । "इग्यणः" इति सूत्रे उभयसञ्ज्ञात्वस्येति भा-
योगोऽपि मानम् । तस्य समस्तत्वेनाप्यगुणवचनत्वं बोद्ध्यम् ।
कृतार्थतेति । कृतार्थदुःखशीलशब्दौ क्रियाशब्दाविति भावः । समस्तौ
पि बोद्ध्यम् ।

तृत्वादिति वृत्तिग्रन्थमुपादाय कर्तृत्वमात्रं विवक्षितं न तु स्त्रीत्वमिति ङीब् न कृत इति हरदत्तो व्याख्यत्। "परः संनिकर्षः" इति सूत्रे एकैकवर्णवृत्तित्वात् वाच इति भाष्ये कैयटोऽप्येवमेवाह।

एतेन—

नेष्टं पुरो द्वारवतीत्वमासीत्

इति माघो व्याख्यातः।

**रौहिणेय इति**। रोहितशब्दात् "वर्णादनुदात्तात्" इति ङीब्नकारौ। पुंवद्भावे तु सति तयोर्निवृत्तौ रौहितेय इति स्यादिति भावः। **गृह्यत इति**। व्याख्या(१)नमेवात्र शरणम्।

**शत्रुपर्यायादिति**। अत्र च "व्यन् सपत्ने" इति निर्देशो लिङ्गम्।

रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः।

इत्यमरः। **विवाहनिबन्धनमिति**। तज्जन्यसंस्कार(२)विशेषे रूढमित्यर्थः। **सापत्य इति**। भाषितपुंस्कत्वात्पुंवद्भावे कृते "यस्येति" लोपः। एतच्च सुब्धातौ वृत्तौ स्पष्टम्।

यत्तु पा रक्षण इति धातौ माधवेनोक्तम्। भावकर्मणोः पत्यन्तलक्षणे यकि सापत्यम्। अभाषितपुंस्कत्वात्पुंवद्भावो नेति। तत्तु द्वितीयं सपत्नीशब्दमाश्रित्येत्यविरोधः।

---

व्याख्यात इति। **द्वारवतीति सञ्ज्ञापि नेष्टा किमु तदीयोऽर्थ इति व्याख्यातृभिर्व्याख्यातत्वेन सञ्ज्ञाशब्दत्वात्। भाष्यरीत्या तद्धितान्तत्वेनागुणवचनत्वाच्च। "त्वे च" इति ह्रस्वस्तु छन्दस्येवेति बोद्धव्यम्।**

रौहितेय इति। **पुंवद्भावे सिद्धश्च प्रत्ययविधावित्यनाश्रित्येदम्। तदाश्रये तु रौहितिरित्यापत्तिरिति बोद्धव्यम्**। संस्कारविशेषे इति। **तद्वतीत्यर्थः**। पत्यन्तेति। **लिङ्गविशिष्टपरिभाषयेत्यर्थः**। इत्यविरोध इति। **एवं च माधवानुसारेणायं लिखित इति सूचितम्।**

---

(१) **व्याख्यानमेवात्र शरणमिति**। भाष्ये हि—"गार्गीत्रेयौ न सर्वदेते कर्तव्योऽत्र

यत्तु "नित्यं सपत्न्यादिषु" इत्यत्र न्यासकृतोक्तम्। समुदायोच्चारणं
वबाधनार्थमिति। तन्न। समानस्य सभावार्थं रूढ्यर्थं च निपातना-
न समुदायोच्चारणस्य तावतैवोपक्षयात्। अन्यथा संबुद्धिह्रस्वादी-
बाधापत्तेः।

किं च "तसिलादिषु" इति सूत्रे भाष्यकारेण सपत्नीशब्दाच्छिवाद्याणि
ढे' इति पुंवद्भावेन सापत इति प्रापय्य शिवादिषु केवलयौगिकस्य

---

ढ्यर्थं चेति। तत्र तदर्थमिदं निपातनं न विवाहनिबन्धनपतिघटितस्य
स्वविवाहितपुरुषविवाहितस्त्रीमात्रबोधकत्वेनान्याबोधकत्वेन चाति-
भावेन रूढिकल्पने फलाभावाच्च। तस्याऽभाषितपुंस्कत्वेन पुंव-
त्त्या पुंवत्त्वबाधनार्थमिति न्यासग्रन्थासङ्गतेश्च। किं तु तृतीयस्य
योगार्थप्रवृत्तिनिमित्तक एव ङ्यन्तो लोकव्यवहारेण समुदायो-
गेन च स्त्रीविशेषे मद्ध्यमसपत्नीशब्दबोध्ये रूढ इति भावः। अत
मानस्वामिकदास्योर्न तथा व्यवहारः। क्वचित्तथा व्यवहारस्तु गौणः।
क च विवाहनिबन्धनः पतिशब्दो नास्त्येव। स्वामित्वेनैव हि स
ः। स्वामित्वं च प्रकरणादिना यज्ञफलनिरूपितं कदाचिद् बुद्ध्य-
द् ध्वनयन् पुंवद्भावबाधकत्वे दूषणान्तरमाह—किं चेति।
पत इति। प्रापय्येति। अढे इत्युच्यते तत्र सापत्ने पुंवत्त्वं प्राप्नोति।
सापत इति प्राप्नोतीति भाष्यकैयटयोरुक्तम्। तृतीयस्य हि भाषि-
त्वेन पुंवत्त्वापत्तिः। स हि समानस्वामिकत्वेन पुमांसमप्याह।
बाधे हि तदसङ्गतिः स्पष्टैव।
क च विवाहनिबन्धनसत्त्वे तस्याभाषितपुंस्कत्वेन तमादाय साप-
द्धेस्तदसङ्गतिः। न च "सापत्न एव न सिद्ध्यति सापतोऽपि प्राप्नो-
ति भाष्यार्थ इति वाच्यम्। द्वितीयसत्त्वे (१)रूढत्वेन तस्यैव शिवादौ
तृतीयादणोऽभावेन माधवरीत्या सापताप्राप्तेरिति दिक्।
वलयौगिकस्य ग्रहणं नेति। केवलयोगमात्रलभ्यसमानपतिकत्वरूपप्रवृ-
मित्तकत्वं नेत्यर्थः। तेनैव स्वविवाहितपतिविवाहितां स्त्रियमाह न

---

१) रूढत्वेनेति। केचित्तु—अयं नास्त्येव "भस्याढे तद्धिते" इति वार्त्तिके अढे इत्यु-
त्र सापत्ने पुंवत्वं प्राप्नोतीत्याशङ्क्य सापत्नप्रकृत्यन्तरत्वात् सपत्नशब्दः प्रकृत्य-

ग्रहणं नेत्याशयेन सापत इति प्रयोगो वारितः। निपातनस्य पुंवद्भावनिवृत्त्यर्थत्वे तु सर्वं विरुद्धयेतेति दिक्।

**भावत्का इति**। ठावस्थायामेवाभत्वेऽपि पुंवद्भावो विधीयते। अन्यथा हि कृते इकादेशे भत्वात् पुंवद्भावे संनिपातपरिभाषया कादेशो न स्यान्माथितिकवत्। **भाष्यकारेष्टयेति**। अनेन सूत्रवार्तिकयोरुक्तिसंभ-

---

तु तत्त्वेन व्यक्तिविशेषस्य बोधनाच्च रूढ्यर्थं निपातनमुक्तम्। अत एवास्य भाषितपुंस्कत्वमिति भावः।

यद्वा केवलयौगिकपतिशब्दघटितस्येत्यर्थः। एवं हि तत्र सिद्धान्तभाष्यम्। "सापत्नः प्रकृत्यन्तरत्वात्सपत्नशब्दः प्रकृत्यन्तरमस्ति" इति। अस्यार्थः। अन्या प्रकृतिर्यस्य स प्रकृत्यन्तरस्तस्य तत्त्वादित्यर्थः। प्रकृत्यन्तरमाह सपत्नशब्द इत्यत्राण्निरूपितप्रकृत्यन्तरत्वं सपत्नशब्दस्य शब्दमर्यादया लभ्यते न तु ङीन्निरूपितम्। लक्षणया तथा व्याख्याने च न मानम्। एवं च सपत्नीति गणपाठमाश्रित्य सपत्नप्रकृतिकसपत्नीशब्देन सापत्नसिद्धावपि सापतमपि प्राप्नोतीति भाष्ये पूर्वपक्षः। त्वत्संमता प्रकृति र्गणे न पठ्यते किं तु भिन्नः सपत्नशब्दः। तदाऽपि लिङ्गविशिष्टपरिभाषया ङीनन्तादण् सिद्ध्यति। बाध्यसामान्यचिन्तया शिवादौ पाठष्ठकोऽपि बाधकः इत्युत्तराशयः। एवं च केवलयौगिकपतिशब्दघटितस्य ग्रहणं नेति स्पष्टमेव।

एवं च मूले द्वितीयसपत्नीशब्दव्युत्पादनं माधवानुरोधेन। तदेतद् ध्वनयता यत्तु पा रक्षण इत्यादिना माधवग्रन्थमुपन्यस्य तत्र द्वितीयसपत्नीशब्दमादाय विरोधाभावश्चोपपादितः। सापत्न्यमिति प्रयोगस्तु सपत्नप्रकृतिकादेव ब्राह्मणादित्वात् ष्यञि बोध्यः। सपत्नप्रकृतिकोऽपि तृतीयसपत्नीशब्दार्थे एव। तत्रैव लोके तत्प्रयोगात्। रूढयोरेव ग्रहणादित्यस्य सपत्नशब्दस्य लिङ्गविशिष्टपरिभाषया तत्प्रकृतिकङीनन्तस्य चेत्यर्थः। तयोः शुद्धरूढत्वात्। तृतीयस्तु योगरूढः। अन्यथाऽस्यापि स्वयं रूढयुक्त्यैतदग्रहणे बीजाभावः मध्यमाद्ययोरिति व्याख्यातॄणां, मध्यस्येव तस्य रूढिघटितस्य शुद्धयौगिकस्य ग्रहणेऽस्य रूढस्य कथं त्यागः स्यादिति सुहृदो विभावयन्तु।

सन्निपातपरिभाषयेति। ठादिष्वकारस्योच्चारणार्थत्वेन अल्विधि(१)तया

पे ध्वनितः। उत्तरं दृष्ट्वा पूर्वस्याप्रवृत्तत्वात् । निष्कर्षे तु वैयर्थ्यं स्पष्टमे- भावः । इष्टेरुदाहृणान्याह—सर्वमय, इत्यादिना । मयडादीनां परिगणि- तलादिबहिर्भावान्न सूत्रेण गतार्थता । अत एव सर्वतः सर्वत्रेत्यादि हृतम् । **सर्वकभार्य इति** । न च "स्त्रियाः पुंवद्" इति सूत्रेण र्थिता। "न कोपधायाः" इति निषेधात् । न चास्यापि तेन निषेधः शङ्क्यः । याः पुंवत्"इत्यादिप्रकरणोक्तस्यैव तेन निषेधात् । अस्या इष्टेस्तु तस्मि- रणेऽसमाविष्टत्वात् ।

**सर्वप्रिय इति** । "अपूरणीप्रियादिषु"इति पर्युदासादप्राप्ते । **पूर्वस्ये-** वृत्तिघटकानेकभागमद्ध्ये किञ्चिदपेक्षया पूर्वस्येत्यर्थः । अत एव तदित- दौ परस्य न पुंवद्भावः । **लिङ्गादिति** । अन्यथा हि एषा, द्वा, एत- कात् पूर्वस्याऽऽपि विधीयमानमित्वं निर्विषयं स्यादिति भावः ।

यत्तु प्राचोक्तं सर्वनाम्नः समासे पूर्वं पुंवदिति । यच्च व्याचख्युः । कार्थमनुवदति सर्वनाम्न इत्यादिना । सर्वनामशब्देन सञ्ज्ञोपसर्जनभि- एव गणपठिता उपलक्ष्यन्ते । तेन सर्वा नाम काचित् तस्याः पुत्रः पुत्रः । अतिसर्वापुत्र इत्यत्र नातिप्रसङ्ग इति । तदेतत्सर्वमापातरमणीयम् । हि—समासे इत्यनाकरम्, वृत्तिमात्रे इति भाष्यात् । मयडाद्यन्ते ऽव्या- । तथा च श्रीहर्षः प्रायुङ्क्त —

---

**निवत्वायोगाच्चेत्यपि बोद्धव्यम्** । निष्कर्षे त्विति । **वार्त्तिकभाष्योक्तस्यापि सम्मतत्वमेवेति निष्कर्षे त्वित्यर्थः** । अत एव । **सूत्रेण सिद्धत्वादेव ।** णोक्तस्यैवेति । **अन(१)न्तरस्येति न्यायादिति भावः** । असमाविष्टत्वादिति । **क्षिणोत्तराभ्यामतसुच्" "दिङ्नामानि" इत्यनयोः सूत्रयोर्भाष्ये पा- ति भावः । तदितरेत्यत्र "सुप्सुपा" इति समासः ।** निर्विषयं स्यादिति । **पुंवत्त्वेनापो निवृत्तेरिति भावः ।** अव्याप्तं चेति । **यत्तु**

---

**(१) अनन्तरस्येति न्यायादिति** । "शिः सर्वनामस्थानम्" इत्यत्र भाष्ये अनपुं ंति प्रसज्यप्रतिषेध इति पक्षे "शिः सर्वनामस्थानम्"इत्यस्यापि प्रतिषेधः प्राप्नोतीति ङ्क्य "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेन समाहितम् । अत्र अंश- । अनन्तरस्य विधिर्वा भवति इत्येकोंऽशः । प्रतिषेधो वेत्यपरः । तत्र प्रथमांशे

निजामयोद्धथामपि पावनीमयं भवन्मयो ध्यायति नावनीपतिः।
इति।

किं च ब्राह्मणीपूर्व इत्यादावतिव्याप्तिः। न च "जातेश्च" इति निषेधः। सौत्रप्राप्तिमात्रविषयकः स इति सिद्धान्तात्। रूपवतीपूर्व इत्यादौ जातिवाचकत्वाभावेनातिव्याप्तिदार्ढ्याच्च। वार्तिकार्थमित्यपि स्थवीयः। वार्तिकग्रन्थे एतदभावात्। न चात्र विविदितव्यम्। "ठक्छसोश्च" इत्यस्य निरालम्बनतापत्तेः। सर्वनामशब्देनेत्याद्यपि न साधु। उक्तोदाहरणयोर्लक्षणां विनाऽपि सुस्थत्वात्। दक्षिणपूर्वायै इत्यादावुपसर्जनतया ऽव्याप्त्यापत्तेश्च।

ननु मात्रग्रहणसामर्थ्यात्सर्वनामतोपलक्षणं। न तु विशेषणम्। तेन वृत्तेः प्राक् सर्वनाम्नः सम्प्रत्यसर्वनामत्वेऽपि पुंवद्भावो लभ्यत इत्याकरे स्थितम्। मयाऽपि स्वग्रन्थे उक्तमिति चेत्! तर्हि उपसर्जनभिन्ना लक्ष्यन्ते इति त्वद्ग्रन्थस्त्वदुक्त्यैव पराहत इत्यवधार्यताम्। न चैवमतिसर्वापुत्रेत्यत्रातिव्याप्तिः। अतिसर्वाशब्दस्य कदाऽप्यसर्वनामत्वेन तत्रातिव्याप्तेरुक्ति-

---

**"ठक्छसोः" इति नियमार्थं तद्धिते चेत्सर्वनाम्नः पुंवत्त्वं तर्हि ठक्छसोरेवेति, अतो मयडाद्यन्ते ऽनिष्टमेव पुंवत्त्वमिति। तन्न। "दक्षिणोत्तराभ्यामतसुच्" इति सूत्रस्थभाष्यविरोधात्।**

भवन्मय इति। **"तत्प्रकृतवचने" इति मयट्।** ब्राह्मणीपूर्व इति। **सर्वनाम्नः समासत्वेन पूर्वस्य ब्राह्मणीत्यादेः पुंवत्त्वापत्तिरिति भावः।**

उक्तोदाहरणयोरिति। **सञ्ज्ञोप(१)सर्जनघटितोदाहरणयोरित्यर्थः। तत्र सर्वनामस(२)ञ्ज्ञकत्वस्यैवाभावेन लक्षणा व्यर्थेति भावः।** अतिसर्वाशब्दस्येति। **उपलक्षणमिदं सञ्ज्ञाया अपि।** कदापीति। **वृत्तौ वृत्तेः प्राक्चेत्यर्थः।**

---

(१) **संज्ञोपसर्जनेति**। अत्र उपसर्जनत्वम्। सर्वादिविशिष्टत्वम्। वैशिष्ट्यं च–स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वसम्बन्धेन। अत एव सर्वेषाम्पुत्रः, परस्मैपदम्, अतिभवकान्, सर्वस्मिन्शयः, सुट् स्मयादयः, सिद्ध्यन्ति। अन्यथा पदार्थान्तरानिष्ठ विशेष्यतानिरूपितप्रकारतासम्बन्धेनोपस्थापकत्वम् उपसर्जनत्वम्।

अथवा पदान्तरार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वम् इति लक्षणद्वयस्वीकारे तु सर्वादिशब्देषु सत्वेनोपसर्जनत्वात् सुडादयो न स्युः। न च "ह्रीयतेरप्रत्यये ट इति प्राप्नोति टप् इति चेष्यते" इति भाष्यविरोधः निरुक्तोपसर्जनत्वस्य सत्वादिति

वाभावादित्यास्तां तावत् ।

**स्वभिन्नामिति** । या स्वात्मानमेव दर्शनीयां मन्यते तत्र "स्त्रियाः ्" इत्येव सिद्धम् । एकस्या एव रूपभेदेन कर्मत्वकर्तृत्वयोः सत्त्वेऽपि तवाभेदेन सामानाधिकरण्याविघातादिति भावः ।

**मद्रिकायत इति** । मद्रेषु भवा मद्रिका । "मद्रवृज्योः कन्" । **का भार्येति** । 'अर्भकपृथुकपाका वयसि'इति कप्प्रत्ययान्तो ऽयमुणा- निपातितः । न त्विह तद्धितो नापि वुः । "वयसि प्रथमे" इति ङीपं त्वा ऽजादित्वाट्टाप् ।

**"वृद्धिनिमित्तस्य"** । वृद्धिशब्देनेति किम्? । तावती भार्या यस्य ताव- ः । "आ सर्वनाम्नः" इत्याकारविधौ वृद्धिशब्दो नास्ति । **फलोपधा- त** । निमित्तशब्दः फलो(१)पहितपरः स्वरूपयोग्यपरत्वे तु वैयाकरण- र्य न सिद्ध्येदिति भावः ।

**अकेशीति** । "सहनञ्विद्यमानपूर्वाच्च" इति ङीषभावः ।

**"जातेश्च"** ॥ **जातेः पर इति** । जातिवाचकात्परत्वमात्रमिह

वैयाकरणभार्य इति । **"न य्वाभ्याम्" सूत्रस्थकैयट(२) हरदत्तानु- तदम्** ।

---

**(१) फलोपहितपरः इति** । वृद्धिः तद्धितस्येत्येतावदुक्तौ अपि निमित्तसम्बन्धे श्रित्यापि वृद्धिनिमित्ततद्धितस्येत्यर्थलाभे सति निमित्तग्रहणात् फलोपहितनिमित्तत्वं त इति भावः । यद्यपि ऐजागमसिद्धवृद्धिं प्रति अण् प्रत्ययः फलोपहितमेव निमि- तथापि वृद्धिशब्देन वृद्धिं प्रति फलोपहितन्नभवतीति न दोषः । वृद्धिशब्देन विहितै- द्रिहगृह्यते इत्यत्र इहमेवनिमित्तग्रहणं लिङ्गमिति भाव इति ।

**(२) कैयटहरदत्तेति** । अन्येतु भाष्ये तावद्भार्या इत्यत्र दोषवारणाय वृद्धेर्नि- यस्मिन्निति बहुव्रीह्याश्रयणं कृतम् । निमित्तग्रहणादेव व्यपदेशिद्भावानाश्रयणम् ाब्दव्यापाराश्रयणे न मानम् । ऐचौ प्रति च तद्धितस्य निमित्तत्वमस्त्येव । अधिका- त्यागे मानाभावात् । किञ्चैतत्सूत्रे वृद्धिपदस्यानुवृत्त्या एचोरपि वृद्धिनिमित्तत्वमस्ति । एव दाविकीभार्यः इत्यत्र "देविकाशिंशपा" इत्यात्वे पुंवत्वनिषेधः । भाष्ये देविकेत्य- थमाध्याये करणैतेषामाकारस्य वृद्धिसंज्ञां विधाय "तद्धितेष्वचामादेः" इत्यनेन तद्धि-

विवक्षितम्। न तु जातेरित्येवं विधानपर्यन्तमाग्रहः। भाष्ये हास्तिकमित्युदाहरणे औपसंख्यानिकस्य नायं निषेध इत्युक्तेः। तेन हस्तिनीभार्य इत्यादौ नान्तलक्षणस्यापि निषेधः सिध्यतीति भावः। **यः प्रत्यय इति**। टाबादिः। प्राचा तु विशिष्य ङीषेवोपात्तः। तन्निर्मूलम् शूद्राभार्य इत्यादावव्याप्तं चेति भावः। **ब्राह्मणीति**। शार्ङ्गरवादित्वान् ङीन्।

यत्तु प्राचा ङीप् न पुंवदिति व्याख्याय ब्राह्मणीभार्या इत्युदाहृतम्। तत्परस्परविरोधादुपेक्ष्यम्। **सौत्रस्येति**। व्याख्यानमेवात्र शरणम्।

**"संख्यया"**॥ सामानाधिकरण्यस्यान्यपदार्थवृत्तेश्च विरहात् पूर्वेणाप्राप्तौ वचनम्। **उपदशा इति**। उपशब्दः समीपे समीपिनि च वर्तते। आद्ये ऽव्ययीभावः। द्वितीये तु बहुव्रीहिरिति विवेकः।

---

भाष्ये इति। **"न कोपधायाः" इति सूत्रस्थे इत्यर्थः**। इत्युक्तेरिति। **हास्तिन्-शब्दस्यादन्तत्वाभावेन ततो जातिलक्षणङीषोऽप्राप्तेरिति भावः**। टाबादिरिति। **इडविडोऽपत्यं स्त्री इडविड् सा भार्या यस्येत्यर्थे समासे एतन्निषेधाभावेन पुंवत्त्वं भवत्येवेति भावः। अनूङ् इत्यस्य पर्युदासत्वे ऐडाविडवृन्दारिकेति निषेधविषयोत्तरसूत्रविषयकर्मधारय उदाहरणाद् बहुव्रीहावीदृशे पुंवत्त्वनिषेध इष्ट एवेति तु न वाच्यम्। उत्तरत्राप्येतदनुवृत्ति तत्रापीदृशार्थकत्वमिति ध्वनयितुं तथोक्तेः। इडविडादेरनन्तरापत्यत्वे भाष्यमते जातित्वाभावाच्च**।

परस्परेति। **ब्राह्मणीत्यत्र हि तेनापि ङीनेवोक्त इति भावः। यदि तु तत्र ङीषिति पाठस्तदा ऽऽकरविरोधो बोध्यः**।

सामानाधिकरण्यस्येति। **दशानां समीपिन इत्यर्थात्। तदाह**—उपशब्द इति।

---

एव "नद्याभ्य" इति सूत्रे यद्यपि नित्यत्वादैचि वृद्धिस्तयोरेव स्यादितिनिषेधवैयर्थ्यमाशङ्क्य विषयार्थं दाध्यश्विवरिति समाहितम्। तत्पक्षे पुंवत्वनिषेधलाभात्। यद्यप्यपवादो वृद्धेरयमिति वृद्ध्यप्राप्त्यैव निषेधवैयर्थ्यं वक्तुं युक्तम्। तत्रापि विषयभेदान्नापवादत्वम्। असम्भवे एवापवादत्वम् इति वार्त्तिकमते एवमुक्तम्।

किञ्च "वृद्धिरादैच्" इति सूत्रे आदैज्मात्रग्रहणपक्षे वैयाकरणभार्यै, तावद्भार्यै, इत्व निषेधानापादनेन तत्र तत्प्रवृत्तेरिष्टत्वमेवानुमीयते।

किञ्चात्र पुंवत्वे इष्टे तद्वारणाय शब्दव्यापाराश्रयणस्य आवश्यकतया "वृद्धिरादैज्" सूत्रे तावद्भार्यै दोषवारणाय व्यधिकरणबहुव्रीहिपर्यन्तं भाष्यकृतो धावनं व्यर्थं स्यात्। एतेन

सूत्रे तीति लुप्तषष्ठीकमित्याह—**तिशब्दस्येति** ।

**"अन्येषामपि दृश्यते"** । अत्र प्राचोक्तम् । दृशिग्रहणात् कर्म-
तिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घत्वम्, 'आत्वं वानचि'इति । तत्रात्वं वेत्य-
नीयम् । अत एव मुष्टामुष्टि, बाहाबाहवि, इति उदाहरणमप्यप्रामाणिक-
। भाष्यादिविसम्वादात् । अत एव दृशिग्रहणस्येदृशेऽर्थे तात्पर्य्यं न
यमिति प्रामाणिकः पन्थाः ।

अर्वाचीनास्तु आत्वमाहुः । तथा च पञ्चिकायां त्रिलोचनदासेनोक्तं
न्तपूर्वपदस्यात्वं दृश्यत इति । एवं च प्राचा केचिदिति वक्तुमुचितं
नीयसूत्राशयमद्धथे निक्षेपस्त्वनुचित एवेति दिक् ।

**"ओर्गुणः"** ॥ तद्धिते किम् ? पट्वी । **गुणोक्तिरिति** ।
पि ओरोदिति सूत्रितेऽपि भस्य तद्धिते इति सञ्ज्ञाद्वयपूर्वकत्वमस्त्येव
ऽपि विधेयसमर्पकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वको विधिरिति
: । यद्यपि ओरोदिति तपरस्तत्कालस्य संज्ञैव । तथाऽपीह तकार
ारणार्थः । ओरो इत्येव वाऽस्तु । "स्वं रूपं शब्दस्य"इति तु प्रत्या-
ख्यातमिति भावः ।

---

उच्चारणार्थः इति । **तन्मात्रार्थ इत्यर्थः । फलाभावेन तपरसूत्राप्रवृत्तेरि-**
**भावः** । प्रत्याख्यातमिति । **अव्यावर्तकत्वात्तस्या अग्रहणम् । तस्या विशि-**

---

(१) **प्रत्याख्यातमिति** । अर्थे कार्यस्य बाधात् उपथितत्वाद्राज्ञः इत्यादौ तज्जन्य-
प्रकारतया भासमानस्य राजन् शब्दस्यैव ग्रहणं भविष्यतीतिव्यर्थं सूत्रम् । स्वविषय-
यजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वसम्बन्धावच्छिन्नप्रकारतया भासमा-
इत्यर्थः क्रियते । तथाच—अस्मन्मते प्रत्येकस्मात् समुदायः, समुदायाच्च प्रत्येकं,
रिच्यते इति समुदायपर्य्याप्तं न प्रत्येकं प्राप्नोतीति न कस्याऽपि शङ्काया अवसरः तथा
त्रं प्रत्याख्यातमिति ।

भाष्येहि—'किमर्थं पुनरिदमुच्यते' इत्याक्षिप्य शब्देनार्थगतेरर्थे कार्यस्यासम्भवात्तद्वा-
संज्ञाप्रतिषेधार्थं स्वरूपवचनमिति समाधाय, 'नवा एतत्प्रयोजनम्' शब्दपूर्वको ह्यर्थे स-
यः तस्मादर्थस्य निवृत्तिर्भविष्यति'इत्युक्तम् । तत्संज्ञाकरणज्ञानरूपप्रकरणात् षान्तस-
वाचकषष् शब्दस्य षट्संज्ञाकरणेन च शब्दशास्त्रीयसंज्ञाविषये स्वरूपग्रहणाभावो ज्ञाप्यते ।

**"तेन सहेति तुल्ययोगे"** ॥ तुल्ययोगे किम्? सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। विद्यमानतावाची सहशब्दः। दशसु पुत्रेषु विद्यमानेष्वित्यर्थः।

**"वोपसर्जनस्य"** ॥ उपसर्जनस्येति न सहस्य विशेषणम्। अव्यभिचारात्। किं तूत्तरपदेन सन्निधापितस्य समासस्य। तच्चावयवद्वारकम्। उपसर्जनसर्वावयवकस्य समासस्य बहुव्रीहेरिति यावत्। व्यधिकरणे च

---

ष्टरूपोपादानविषयत्वाच्चेत्यपि बोद्धयम्।

विद्यमानतावाचीति। **दशानां पुत्राणां विद्यमानत्वे इत्यर्थः। तत्फलितमाह—**दशास्विति।

अव्याभिचारादिति। **पूर्वाङ्गस्य सादृश्यं सहपूर्वाङ्गमित्यादावपि अव्ययस्य प्रथमानिर्दिष्टत्वेनोपसर्जनत्वमस्त्येवेति भावः।** अवयवद्वारकमिति। **समासस्योपसर्जनत्वासम्भवादिति भावः। यद्यपि 'सहकृत्वप्रिय' इत्यादौ समासस्योपर्जनत्वसम्भवस्तथाऽपि लक्ष्यानुसारादेवं व्याख्यानं बोद्धयम्।** उपसर्जनसर्वावयवकस्येति। **कश्चिदवयवः सर्वत्रोपसर्जनमेवेति विशेषणसामर्थ्यादेतल्लाभ इति भावः। तादृशश्च बहुव्रीहिरेवेत्याहुः।** बहुव्रीहेरिति। **व्या(१)ख्यानाच्चात्रोपसर्जनपदेन लौकिकं शा(२)स्त्रीयं च तद् गृह्यते। तेन**

---

स्वरूपस्यैव ग्रहणम् क्वचित् पर्यायाणां विशेषाणां च ग्रहणं क्वचिच्च सर्वेषामिति दिक्।

वस्तुतस्तु प्रत्याख्यानमेतदेकदेशोक्ति। शक्यलक्ष्यभेदेन अर्थानामानन्त्यात् यावन्तोऽर्थाः तावदावृत्तिरावश्यकत्वात् तथाच गौरवं स्पष्टमेव "अणिञोः" "केऽणः" इत्यादीनां प्रकृत्य समभिव्याहारे प्रत्ययैरर्थानामनुपस्थित्या अनर्थकेऽपि प्रवृत्त्यापत्तौ प्रत्ययाप्रत्ययपरिभाषाया अभावेन च शकेरयादौ "केऽणः" इत्यादि ह्रस्वो दुर्वार इति दिक्।

तत्वञ्च आनुपूर्व्यवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम्। वस्तुतस्तु भाष्ये संज्ञापूर्वकविधेरनित्यत्वस्यादृष्टतया ज्ञापनं कैयटहरदत्तानुरोधेनेदम्। स्वयम्भुव इदम् इत्यर्थेऽणि स्वायम्भुवो लोकेऽसाधुरेव। भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात्। भाष्याविचारितप्रयोजनकानां सौत्राक्षराणां पारायणादावदृष्टमात्रफलकत्वात्। शौवादंष्ट्रो मणिरित्यत्र "श्वादेरिञि" इति सूत्रस्थभाष्यप्रयोगादण्। एवमेव "आगमशास्त्रमनित्यम्" "नञ्घटितमनित्यम्" "आतिदेशिकमनित्यम्" "सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान्" इत्यादिभाष्यानुक्तं बोध्यम्।

(१) **व्याख्यानादिति—**सहशब्दस्य तावदसत्ववाचिद्वन्द्वाभावः अन्यस्मिंस्तु समासे सहशब्दः उपसर्जनमेवेति पुनः उपसर्जनग्रहणसामर्थ्यात्। लौकिकं शास्त्रीयं च उपसर्जनत्वं गृह्यते। अथवा अस्त्वकारो मत्वर्थीयः इतिभाष्यमूलकात् व्याख्यानादित्यर्थः।

ि । तदेतदाह—**बहुव्रीहेरवयवस्येति** । तेनेह न । सहकृत्वा, त्वा । **प्रायिकमिति** । "सपूर्वायाः" "उदश्चरः सकर्मकात्" इत्यादि ादिति भावः ।

**स्वरे विशेष इति** । डचि सति "चितः"इत्यन्तोदात्तत्वं स्यात् । ि तु पूर्वपदप्रकृतिस्वर इत्यर्थः । **संख्याया इति** । संख्यान्तस्य तत्पुरुषस्य वयवो डज्वाच्य इत्यर्थः । एकविंशतिरित्यादौ तु न । "अन्यत्राधिकलो- इति वार्तिककारोक्तेः ।

**स्थूलाक्षेति** । यत्तु प्राचा प्रत्युदाहृतम् स्थूलाक्षिरिति । तन्न । णोऽदर्शनात्" इत्यच्प्रसङ्गात् ।

यत्तु व्याचख्युः । समासान्तविधेरनित्यत्वात्स न कृत इति । तदापा- । एवं हि षजपि तथैव न भविष्यतीति प्रत्युदाहरणस्यासङ्गतिप्रसङ्गात् ।

**नेतुर्नक्षत्र इति** । नक्षत्रे यो नेतृशब्दस्तदन्ताद् बहुव्रीहेरित्यर्थः । नायकः । **न तु स्थूलपूर्वादिति** । स्थूलपूर्वाद् बहुव्रीहेरच् नेत्यर्थः ।

**खुरखराभ्यामिति** । नासिकाया इत्यपेक्ष्यते । केवलादेशवचनं निवृत्त्यर्थम् ।

"**उपसर्गाच्च**" ॥ उपसर्गग्रहणं प्रादीनामुपलक्षणम् । नासिकाशब्द- याार्थत्वेन तं प्रत्युपसर्गत्वायोगात् । तदाह—**प्रादेरिति** । **तद्ध- स्येति** । 'प्रणो नय प्रतइवस्यो अच्छ' 'प्रनः पूषा' इत्यादौ अव्या-

---

इत्यादावपि उपसर्जनसर्वावयवकत्वं बोध्यम् ।

पूर्वाया इति । एतच्च वृत्त्यनुरोधेन । अत्र सह विद्यमानः पूर्वो यस्या "अनेकमन्यपदार्थे"इति बहुव्रीहिरित्यन्ये ।

न्यत्राधिकेति । अव्ययादेरित्युक्तत्वादित्यपि बोद्ध्यम् । अत एव गोविं- रित्यादौ न ।

क्षत्रे य इति । तद्वृत्तित्वं च नेतृशब्दस्य तत्सामानाधिकरण्यात् । न्द्रो नेता यस्य स चन्द्रनेता मृग इति सिद्धं समासाविशेषणे तु बहु- क्षत्रवृत्तित्वाद्दोषः स्यादेव ।

पलक्षणमिति । स्पष्टं चेदं "गतिश्च" इति सूत्रे भा(१)ष्ये । अव्यासीत्या(२)-

**शोभनं प्रातरस्यास्ति**। प्रातःशब्देन प्रातस्तनकर्म लक्ष्यते। अन्यथा प्रातःशब्दस्याधिकरणशक्तिप्रधानतया सामानाधिकरण्यासम्भवादित्याहुः। एणीपदादिषु त्रिषु निपातनात्पद्भावः।

**"धर्मादनिच् केवलात्"** ॥ इह बहुव्रीहिणा पूर्वपदमाक्षिप्यते इत्यनुपदमेव वक्ष्यति। तच्च केवलादित्यनेन विशेष्यत इत्याह—**केवलादिति**।

यत्तु प्राचा केवलादित्युभयविशेषणतया व्याख्यातम्। तत्पौत्रेण च केवलादिति धर्मशब्दस्य पूर्वपदस्य च विशेषणमित्युक्तम्। पाणिनीयमतदर्पणे च

केवलादिति कैवल्यं धर्मप्राक्पदयोर्मतम्।

इत्युक्तम्। तदेतत्सर्वमापाततः। धर्मपदविशेषणे प्रयोजनाभावात्। धर्मशब्दान्तं यत्रोत्तरपदं तद्व्यावृत्तिः फलमिति चेन्न। तत्र धर्मपदस्य बहुव्रीह्यवयवीभूतपूर्वपदात् परत्वस्याभावात्।

**त्रिपदे बहुव्रीहाविति**। इह 'सर्वनामसंख्ययोरुपसंख्यानम्' इति स्वशब्दस्य पूर्वनिपातो न भवति। आहिताग्न्यादेराकृतिगणत्वादिति हरदत्तमाधवौ। **आपेक्षिकमिति**। नन्वत एव केवलग्रहणं व्यर्थम्। पूर्वपदशब्दस्य समासप्रथमावयवे रूढत्वेनैव मध्यमपदव्यावृत्तिसम्भवादिति चेन्मैवम्। पूर्वपदाक्षेपे तात्पर्यग्राहकत्वेनैव केवलपदस्य सार्थकत्वात्।

**कर्मधारयेति**। यत्त्वाहुः। साध्यो धर्मोऽस्येति साध्यधर्मा संदि-

---

दि। **'प्रणो नय' इत्यत्राव्याप्तिः। 'प्र नः पूषा' इत्यत्रातिव्या(१)प्तिरिति भावः।**

सामानाधिकरण्यासम्भवादिति। **यद्यपि प्रातः कल्पमित्यादाविव वृत्तौ शक्तिमत्प्रधानत्वं सम्भवति। तथाऽपि प्रातःकाले स्वरूपतः शोभनत्वस्य निरूपयितुमशक्यत्वात्तत्रैव प्रयोगाच्च कर्मपर्यन्तं लक्षणेति बोध्यम्।**

व्यावृत्तिरिति। **मध्यमस्य न पूर्वपद(२)त्वम्। यत् पूर्वपदं ततः परत्वं च न धर्मशब्दस्येति भावः।** पूर्वपदाक्षेपे इति। **यौगिकपूर्वपदाक्षेपे इत्यर्थः।**

---

(१) **अतिव्याप्तिरिति**—लक्ष्यावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम् अतिव्याप्तित्वम् बोध्यम्।

(२) **पूर्वपदत्वमिति**। वृत्तिघटकाद्यावयवत्वम्। पूर्वत्वाभावेऽपि परमस्वधर्म इत्यत्र जहत्स्वार्थेत्यत्र च 'सर्वनामसंख्ययो'रिति पूर्वनिपातो बोध्यः।

ध्यश्चासौ स चेति विग्रहः । स च संदेहः साध्यधर्मद्वारक एव पर्यवस्यतीति । सोऽयं वृथा क्लेशः । उक्तरीत्यैव साध्यस्य साक्षात् संदिग्धत्वलाभात् ।

ननु कर्मधारयपूर्वपदत्वे ऽनिच् दुर्लभः । केवलादित्यस्य समासान्तात्मकादित्यर्थादिति चेन्मैवम् । त्वदुत्प्रेक्षितार्थस्याकरग्रन्थानारूढत्वात् । अस्मदुक्तार्थस्तु भ्वादिगणे धृञ् धारणे इति धातौ माधवग्रन्थे स्पष्टः । निवृत्तिधर्मा हि स्थानी भवतीति प्राचां प्रयोगोऽपि अस्माकमेवानुकूल इति दिक् ।

**दन्तै चेति** । तथा च दृश्यते । 'इमं जम्भसुतं पिब'इति ।

**"दक्षिणेर्मा"** ॥ लुब्धो व्याधः अत एवाह—**व्याधेनेति** । कवयस्तु हिंसामात्रे प्रयुञ्जते ।

वाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा ।

इति यथा ।

**केशाकेशीति** । "तत्र तेन" इति बहुव्रीहिः । तत्र हि ग्रहणप्रहरणयुद्धानीव कर्मव्यतिहारोऽपीतिशब्दाल्लभ्यते । इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिषु पाठात् तदन्तस्याव्ययीभावत्वम् । नन्वेवमव्ययीभावसञ्ज्ञया बहुव्रीहिसंज्ञाया बाधात् समासस्वरेणैवान्तोदात्तत्वं सिद्धं तत्किमिचश्चित्त्वेन ।

अत्राहुः-विशेषणार्थं तत् । तिष्ठद्गुप्रभृतिषु इकारमात्रपाठे हि सुगन्धिरित्यादावतिव्याप्तिः स्यात् ।

यद्वा दण्डादण्डीत्यादौ संज्ञयोः समावेश एव, उपजीव्यविरोधस्यान्या-

---

**वस्तुतस्तु तत्फलं चिन्त्यम्** । आकरग्रन्थ इति । **केवलपदस्य लोके, "न सुदुर्भ्यां केवलाभ्याम्"इत्यादौ च स(१)जातीयस्याभावे एव प्रयोगेण त्वदुक्तार्थे मानाभावादिति भावः । एतच्च "इजादेः"इति सूत्रे भाष्ये स्पष्टम्** । निवृत्तिधर्मेति । **प्रवृत्तिधर्मेत्यस्योपलक्षणम्** ।

इममिति । **जम्भैर्दन्तैः सुतमभिषुतं सोमं पिबतेति तदर्थः** ।

प्रयुञ्जत इति । **एकरूपेणेति शेषः** । इतिशब्दादिति । **लौकिकविवक्षानुसारकत्वात्तस्येति भावः** । कर्मव्यतिहारः । **परस्परग्रहणादिः** ।

अव्ययीभावत्वमिति । **तेन तस्याव्ययत्वं बोध्यम् । एतच्च वृत्त्यादिग्रामा-**

च्यत्वात् । एवं च स्वरार्थमपि चित्त्वम् । **द्विदण्डीति** । द्विदण्डा शालेत्यत्र तु इच् न । समुदायनिपातनस्य विषयविशेषपरिग्रहार्थत्वात् । **उभाहस्तीति** । निपातनादेवायचं विना प्रयोगः । **उभयाहस्तीति** । पक्षेऽयच् । उभयाहस्त्याभर ।

"**प्रसम्भ्याम्**" ॥ जानुशब्दस्यैकत्वेऽपि अर्थगतमुपपदनिबन्धनं वा द्वित्वमाश्रित्य जानुनोरिति द्विवचननिर्देशः । तत्फलं तु स्थानषष्ठीत्वस्फुटीकरणम् । जानुन इत्युक्ते किं पञ्चमीयं प्रत्ययाधिकाराच्च ज्ञुरपि प्रत्यय इति सम्भाव्येत । तदेतद् ध्वनयन्नाह—**ज्ञुरादेश इति** । छन्दसि तु स्वतन्त्रोऽपि दृश्यते । 'उपज्ञु बाधो नमसा सदेम' ।

"**धनुषश्च**" ॥ **धनुरन्तस्येति** । धनुरन्तादिति तु प्राचः प्रामादिक एव ।

अथ कथं—

स्वलावण्याशंसाधृतधनुषमन्हाय तृणवत् ।

इति पुष्पदन्तः । समासान्तविधेरनित्यत्वात् । अनित्यत्वे प्रमाणं त्वंश्वादिगणे राजन्शब्दस्य पाठः । स हि—"प्रतेरंश्वादयस्तत्पुरुषे" इत्यन्तोदात्तार्थः । "राजाहःसखी"ति टचो नित्यत्वे तु किं तेनेति दिक् ।

---

एवं च स्वरार्थमपीति । **इदं सति शिष्टस्वरबलीयस्त्वानाश्रयणेन । यदि तु उपजीव्यत्वेन बहुव्रीहिसञ्ज्ञया समावेशेऽपि सति शिष्टस्वरबलीयस्त्वेनाव्ययीभावत्वप्रयुक्तसमासान्तोदात्तत्वेन सिद्धिरित्युच्यते तदाद्यमेव प्रयोजनमिति बोध्यम् । समावेशफलं त्विच्प्रत्ययाव्ययत्वयोः सिद्धिः । "तत्र तेनेदम्" इत्यव्ययीभावप्रकरणे, इजपि तत्समासान्तप्रकरणे एव तु न कृतः । "द्विदण्ड्यादिभ्यश्च" इत्यत्रेच्पदस्य कर्तव्यतापत्तेः । सिद्धान्ते तु परत्वादेष्विजेवेष्यते ।**

विषयविशेषेति । **युद्धादिरूपान्यपदार्थरूपेत्यर्थः** । उभयाहस्त्याभरेति । **इदं वेदभाष्ये यद्यपि उभाभ्यां हस्ताभ्यामाहरेति व्याख्यातम् । तथाऽपि समुदायनिपातनादेव बहुव्रीह्यधिकारेऽपि तत्पुरुषादयम् । अव्ययत्वाद् भ्यामो लुक् । इदमप्यव्ययत्वफलं बोध्यम् ।**

**अविभागेनेति**। एवं(१) च गुणवाचिन एवेह ग्रहणं न तु द्रव्यवाचिन इति फलितोऽर्थः। **द्रव्याणीति**। अस्ति च गन्धशब्दो द्रव्यवचनः।

वहति जलमियं पिनष्टि गन्धानियमियमुद्ग्रथते स्रजो विचित्राः।

इति दर्शनात्।

गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः।
स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः॥

इति कोशाच्च।

एतेन–

'महीभृतः पुष्पसुगन्धिराददे' 'भग्नबाल सहकारसुगन्धौ' इत्यादि व्याख्यातम्। एतच्च सर्वं हरदत्तग्रन्थे स्पष्टम्।

केचित्तु तदेकान्तशब्देन स्वाभाविकत्वं विवक्षित्वा आगन्तुकस्य नेत्याहुः। तथा च भट्टिः।

आघ्रायि वान् गन्धवहः सुगन्धः।

इति। व्याख्यातं च जयमङ्गलायाम्। "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इतीकारः समासान्तो न। गन्धस्यत्वे तदेकान्तग्रहणमिति वचनात् सुगन्ध

---

भागलक्षणः समवायः। एवं प्रकृतेऽपी इवेत्युक्तं, तद् ध्वनयन्नाह—एवं च गुणेति। गुणोपसर्जनद्रव्यवाचिन इत्यर्थः। एतद्वृत्तिविषयमेव गन्धस्य तादृशत्वमिति न "पूरणगुण" इति सूत्रस्थग्रन्थविरोधः। एतदेवाभिप्रेत्य भाष्यकैयटयोरुक्तं कुङ्कुमाद्यनुलेपनमपि देवदत्तादेरविभागापन्नं निलीनं यदि विवक्षितं तदा सुगन्धिर्देवदत्त इति। विभागेनावस्थाने तु सुगन्ध इतीति। न तु द्रव्येति। चन्दनत्वजातिविशिष्टद्रव्येत्यर्थः। सुगन्धिर्वायुरित्यत्रापि गन्धाश्रयणात्तत्संसृष्टानां वाय्वविभागापन्नानामेव ग्रहणमिति न दोषः। एवं सुगन्धि पुष्पं सलिलं चेत्यत्रापि द्रष्टव्यम्। कोशेऽपि द्रव्यवचन इत्यस्योक्त एवार्थः।

आपणिक इति यथेति । अत एव 'भग्नबालसहकारसुगन्धौ' इत्यादीनां प्रामादिकत्वं दुर्घटवृत्तिकृतोक्तम् ।

**"अल्पाख्यायाम्"** ॥ सूपस्य गन्धो लेशो यस्मिन्निति व्यधिकरणपदो बहुव्रीहिः । अत एव ज्ञापकात् ।

यद्वा सूपो गन्धोऽस्मिन्नित्येव विग्रहः । गन्धस्य विशेषणत्वेऽपि अस्मादेव ज्ञापकात् परनिपातः । **इति विश्व इति** । एतेनाल्पपर्यायोऽयं गन्धशब्द इति प्राचो ग्रन्थो व्याख्यातः । "अल्पाख्यायाम्"इति सूत्रस्यापि स्वरसः ॥

यत्तु वदन्ति–गन्धशब्दोऽत्र लक्षणयाऽल्पत्वं गमयतीति । तच्चिन्त्यम् । शक्तिग्राहकस्योक्तत्वात् ।

**"पादस्य"** । यद्ययं लोपः समासान्तो न स्यात् "आदेः परस्य"इत्यादेः स्यात् । शैषिकः कप् च प्रसज्येत । समासान्तापेक्षस्य शेषस्याश्रयणादत आह–**अयं समासान्त इति** । कथं पुनरभावो भावस्यावयवः स्यादत्राह–**स्थानिद्वारेणेति** । औपचारिकमवयवत्वं वचनबलादिति भावः ।

**"वयसि"** ॥ कथं तर्हि 'सा दक्षरोषात्सुदतीं ससर्ज' इति । न ह्यत्र वयो गम्यतेऽतः सुदन्तीति भाव्यम् ।

अत्राहुः—शोभना दन्ता अस्याः समस्ता जाता न तु न्यूना इति कथंचिदिहापि वयो गम्यते एवेति ।

**"उरःप्रभृतिभ्यः कप्"** ॥ **लक्ष्मीरिति** । "नद्यृतश्च" इति सिद्धे नियमार्थमिह पाठः । एकवचनान्तस्यैवेति । अत्रैव नित्यो यथा स्यात्, अन्यत्र "शेषात्" इति विकल्प एव । तेन 'अकृशमकृशलक्ष्मीश्चेतसां शंसितं स' इति सिद्धम् । अकृशा लक्ष्म्यो यस्येति विग्रहः ।

यत्तु प्राचोक्तम् "नद्यृतश्च"इति कप् बहुलक्ष्मीक इति । तत्पा-

---

आघ्रायेति । **वान् वहन् वायुराघ्रात इत्यर्थः** । दुर्घटेति । **अत्र केचिदित्यत्र चारुचिबीजं तु तादृशार्थत्वे उक्तभाष्यविरोध इति दिक् ।**

**यद्वेत्यादिनोक्तं चिन्त्यम् । परनिपाताय ज्ञापकाश्रयणस्यावश्यकत्वात् ।**

कथं तर्हीति । **सञ्ज्ञात्वाभावेन स्त्रियां सञ्ज्ञायामित्यस्याप्यप्राप्तेरितिभावः ।**

"नद्यृतश्च"इति सिद्धे इति । **इदं लक्ष्मीशब्दमात्रविषयं प्रकारान्तरम् । अन्येषु**

कमिति व्याख्यातारः । नियमशास्त्रस्य निषेधमुखेन प्रवृत्तिरिति पक्षमा-
वा योज्यम् ।

**अनर्थकेनापीति** । कथं तर्हि सुपथी नगरीति प्राचामुदाहरणं
नप्यनुसृतं कपो दुर्वारत्वात् । न च "न पूजनात्" इति निषेधः ।
प्राचीनानामेव स इति वक्ष्यमाणत्वात् । सत्यम् । समासान्तविधिरनि-
ति कथंचित्समाधेयम् सुपथीति "युवोरनाकौ" इति सूत्रीयभाष्या-
युक्तम् ।

**तन्त्रादिनेति** । एतच्च प्रकृतसूत्रस्थवृत्त्यादिग्रन्थानां बहुव्रीहिप्र-
कबभावार्थं चेति पुनः पुनर्भाष्यकारोक्तेश्च पर्यालोचनया लभ्यते ।

---

**बह्वी लक्ष्मीर्यस्येति विग्रहः ।**

त्प्रामादिकमिति । **विशेषविहितत्वेनास्यैवोचितत्वमिति भावः ।** निषे-
ति । **त(१)त्पक्षे हीतरनिवृत्तावेवास्य तात्पर्यमिति भावः । पक्षमा-
वेत्यनेन स पक्षो भाष्यासम्मत इति सूचितम् ।**

त्त्यादिग्रन्थानामिति । **आदिना भाष्यम् । अस्य पर्यालोचनयेत्यनेनान्वयः ।**

---

२) **तत्पक्षे हीति** ।। नियमशास्त्राणां विधिमुखेन निषेधमुखेन च प्रवृत्तिर्भवति ।
र्वत्र नियमशास्त्राणां वाच्यवृत्त्या विधायकत्वमेव सम्भवतीति फलितार्थमादाय च नि-
यम् । तथा च—नियामकशास्त्रस्य नियम्यशास्त्रे सङ्कोचं कृत्वा विधायकत्वमेव भवति।
षेधार्थकत्वस्वीकारे, स्वार्थहानिः, प्राप्तबाधः, परार्थकल्पनारूपदोषत्रयापत्त्या युक्त एव ।
त्र तु विधिमुखेन प्रवृत्तौ "स्नुषास्वसृन्यायः" आपतेत । तत्र निषेधमुखेनैव प्रवृत्ति-
, यथा "हन्तेरत्पूर्वस्य" इति । अत्र हि हनवयवनकारस्य णत्वं चेत् अत्पूर्वस्यैवेति नियमः।
अत्र हि—नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्या-
यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो
ति नियमानुरोधेन हन्त्यवयवाकारात्पूर्वकस्य नत्वस्य स्वस्यापि स्वव्यापकत्वसम्भवेन नि-
शास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वेन स्वीकारे तदवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्दे-
च्छेदकावच्छिन्ने सङ्कोचे प्रहण्यादित्यादौ अत्पूर्वस्येत्यनेन प्रघ्नन्तीत्यादौ हन्तेरित्यनेन
प्तिः क्रियते । तथाच स्नुषास्वसृन्यायः स्पष्ट एव । अथ सामान्यतो हन्त्यवयवनत्वाव-
ातिरिक्तत्वेन सङ्कोचे प्रघ्नन्तीत्यादौ दोषवारणेऽपि हन्तेरिति योगविभागवैयर्थ्यं स्पष्टमे-
स्मादत्र निषेधमुखेनैव प्रवृत्तिर्भवति ।

यत्तु वदन्ति । प्रतिपदोक्ताः समासान्ताः स्वविषये बाधका भवन्ति, तत्किमनुक्तसमासान्तपरेण शेषग्रहणेनेति ? तन्न । "ऋक्पूः" इत्यादीनां समासान्तरे चरितार्थतया परेण कपा बाधापत्तेः ।

**बहुनाडिरिति** । उपसर्जनह्रस्वः । **"सप्तमी विशेषणे"** ॥ **कण्ठेकाल इति** । यदा कण्ठे किंचिदस्तीति निर्ज्ञाते काल इति

---

**तत्र प्रकृतसूत्रस्थेनानुक्तसमासान्तेत्यर्थलाभो बहुव्रीहिप्रकरणस्थेन "संख्ययाव्यया" इत्यादिसूत्रस्थेन शेषाधिकारस्थादित्यस्य लाभ इति बोध्यम् ।**

बाधापत्तेरिति । **इदं च समासान्तमात्रापेक्षं शेषत्वमिति वदत्कैयटानुरोधेन । अनन्तरबहुव्रीह्यधिकारापेक्षं शेषत्वं न कबपेक्षं नापि समासान्तापेक्षमिति वदतो भाष्यकारस्य मते नेदं दूषणम् । किं तु प्रतिपदो(१)क्तत्वमात्रेण न बाधकत्वं किं त्वनवका(२)शत्वेन । न चात्र तदस्ति कबभावे सावकाशत्वादिति भाष्योक्तं दूषणं बोध्यम् ।**

---

(१) **प्रतिपदोक्तत्वमात्रेणेति** । शास्त्रविशिष्टत्वम् प्रतिपदोक्तत्वम् । वै० स्वघटकपदश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेण साक्षादवच्छिन्नविधेयताश्रयत्व, तदवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयत्व, एतदन्यतरसम्बन्धेन इति ।

अथवा–स्वीयोद्देश्यतावच्छेदकज्ञानसम्पादनाय प्रयुज्यमाना याऽऽनुपूर्वी तादृशानुपूर्वीविशिष्टविधेयताश्रयत्वम् तत्त्वम् । वै० स्वावच्छिन्नत्व, स्वावच्छिन्नोद्देश्यतानिरूपितत्व, एतदुभयसम्बन्धेन वा बोध्यम् ।

(२) **अनवकाशत्वेनेति** । तच्च चतुर्विधम् । तदप्राप्तियोग्येऽचारितार्थ्यम् , तदप्राप्तियोग्येऽचरितार्थ्ये सति कृते चारितार्थ्यं, तदप्राप्तियोग्ये ऽचारितार्थ्ये सति कृते ऽचारितार्थ्यम्, तदप्राप्तियोग्ये ऽचारितार्थ्ये सति अपवादशास्त्रप्रवृत्त्युत्तरमुत्सर्गशास्त्रप्रवृत्तौ अपवादशास्त्रप्रणयनवैयर्थ्यसम्भावना चेति । अत्र तदप्राप्तियोग्यं च तद्विधेयाघटितं बोध्यम् । तेन तद्विधेयघटिते तदप्राप्तियोग्ये अपवादत्वेन जिघृक्षितशास्त्रस्य चारितार्थ्येऽपि न क्षतिः । तत्राद्येन बाधबीजेनोत्सर्गशास्त्रस्य पूर्वमप्रवृत्तिरेव बाधः । तथा च–उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने अपवादशास्त्रप्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेन सङ्कोचः । यथा "सम्बुद्धौ च" इत्यस्य "हल्ङ्यादि" सूत्राप्राप्तियोग्ये ऽचारितार्थ्येनैतत्प्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेन "हल्ङ्यादि" शास्त्रीयसुपदार्थे सङ्कोचात् रमा स् इत्यत्र "हल्ङ्यादि" सूत्राप्राप्त्या अनेनैत्वे "एङ्ह्रस्वात्" इति सुलोपासिद्धिरिति भाष्ये स्पष्टम् । न चात्र द्वितीयबाधबीजेन निर्वाहः । तस्य बाधबीजस्य "हल्ङ्यादि" सूत्रे ऽप्रवृत्तिस्वीकारात् । अत एव अनड्वान् इत्यत्र सुलोपासिद्धिः । अन्यथा "सावनडुहः" इत्यनेन "हल्ङ्यादि" लोपस्य द्वितीयबाधबीजेन बाधापत्त्या नुमुत्तरं लोपानापत्तेः । "आमि सर्वनाम्नः सुट्" इति शास्त्रस्य तदप्राप्तियोग्ये ऽचारिता-

विशेषणं तदेदं बोध्यम्। अन्यदा तु सप्तमीग्रहणं विनाऽपि विशेषणत्वादेव सिद्धम्। **चित्रगुरिति**। यद्यपीह "उपसर्जनं पूर्वम्" इति सिद्धम्। तथाऽपि बहुव्रीहौ सप्तमीत्युक्ते तक्रकौण्डिन्यन्यायेन उपसर्जनपूर्वत्वं बाध्येत। अतो विशेषणग्रहणम्।

---

तदेदमिति। **विशेष(१)णशब्देन परिच्छेदकं गृह्यत इत्यभिमानः। एवं हि यदाऽस्य चित्राः सन्तीति निर्ज्ञातं तत्परिच्छेदाय च गाव इति प्रयुक्तं, तदा गोचित्र इत्यस्यापत्तिः। तस्माद्विशेषणत्वेन सिद्धावपि सप्तमीग्रहणं व्यधिकरणसमासज्ञापनार्थमित्येव तत्त्वम्।** तक्रकौण्डिन्यायेनेति। **इदं चि-**

---

तथाच—"ह्रस्वनद्याप"इत्यत्राम् पदार्थे "आमि सर्वनाम्नः"इति शास्त्रविहितसुडाश्रयातिरिक्तत्वेन सङ्कोचात् सर्वेषामित्यत्र सुडुत्तरं न नुट्। एवमत्र प्रथमबाधबीजस्य सत्त्वेन सुट्प्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेनाम् पदार्थे सङ्कोचात् सुटः पूर्वमपि न नुट् इति बोध्यम्। एतदेव तक्रकौण्डिन्यन्यायस्वरूपम्।

तृतीयबाधबीजेन तु प्रथमबाधबीजप्रयोज्यसङ्कोचरूपघटकस्वप्रवृत्तियोग्यार्थैस्वीयोद्देश्यतावच्छेदकावच्छिन्नेति विशेषणदानरूपः सङ्कोचः क्रियते। तथाच "ङेराम्" इति शास्त्रस्य "याडापः" इति शास्त्राप्राप्तियोग्येऽचारितार्थ्येन कृते याटि निर्दिश्यमानस्य याटा व्यवधानेन अचारितार्थ्येन च "याडापः" इति शास्त्रीयङिद्वचनपदार्थे आम्विधायकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नो य आम्शास्त्रीयोद्देश्यतावच्छेदकप्रवृत्तियोग्यः तदतिरिक्तत्वेन सङ्कोचात् याटः पूर्वं आम् सिद्धिः। कृते त्वामि सङ्कुचितोद्देश्यतावच्छेदकस्य रमा आम् इत्यत्र सत्त्वेन "याडापः" इत्यस्य प्रवृत्तिः सुलभैव। यद्यप्यत्र प्रथमबाधबीजेन निर्वाहस्तथापि अयज इ इन्द्रमित्यत्र "आद् गुणः"इत्यस्य प्रवृत्तये एतस्यावश्यकत्वम्। अन्यथा इट इकारस्य "अकः सवर्णे" इति शास्त्रप्रवृत्तियोग्यत्वेन गुणस्य अप्रवृत्त्यापत्तेः। मन्मते तु 'आद्गुणः" इत्यत्र "अकः सवर्णे" इति शास्त्रीयसवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वरूपोद्देश्यतावच्छेदकावच्छिन्नो यः स्वप्रवृत्तियोग्यस्तदतिरिक्तादवर्णादग्व्यवहितपरसवर्णाज्रूपस्वप्रवृत्तियोग्यातिरिक्ते ऽचीत्येवंरूपस्यैव वा संकोचस्य प्राप्त्या अयज इ इत्यत्र "आद्गुण" इत्यस्य दुर्वारत्वेन नोक्तदोषः। तव मते तु अच्पदार्थे "अकः सवर्णे" इति शास्त्रप्रवृत्तियोग्यातिरिक्तत्वेन सङ्कोचेन अत्रेट इकारस्य दीर्घप्रवृत्तियोग्यत्वेन गुणानापत्तिर्दुरुद्धरैव स्यादिति दिक्।

"अतोऽम्" इत्यस्य लुक्प्राप्तियोग्येऽचारितार्थ्येन अमुत्तरं लुकि तु "अतोऽम्" इत्यस्य प्रणयनवैयर्थ्येन चतुर्थबाधबीजेन द्वितीयवत्स्वविहितकार्याश्रयातिरिक्तत्वेनैव "स्वमोः" इत्यत्र संकोचस्तेनामुत्तरं न लुक्। प्रथमबाधबीजेन बाधाच्चामः प्रागपि न लुगिति बोध्यम्। प्रकृते प्रथमबाधबीजेनैव बाधो बोध्य इति सङ्क्षेपः विस्तरस्तु बृहच्छब्दरत्ने द्रष्टव्यः।

**सर्वनामेति** । कथं तर्हि तः परो यस्मात्स तपर इति । कथं च जहत्स्वार्था वृत्तिरिति । इह हि जहत्स्वं पदं यं जहत्स्वः सो ऽर्थो यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः । तथा च-स्वशब्दयोः सर्वनामत्वात्पूर्वनिपातेन भाव्यम् । सत्यम् सूत्रभाष्यादिप्रयोगाद्राजदन्तादित्वाद्वा सिद्धम् ।

**सारङ्गजग्धीति** । "अस्वाङ्गपूर्वपदाद्वा" इति ङीप् । कथं चारुस्मितमिति । "नपुंसके भावे क्तः" इत्यस्य न पूर्वनिपातः ? निष्ठाशब्देन विहितस्यैवेह ग्रहणमित्याहुः ॥

## इति बहुव्रीहिः ।

---

(१)न्त्यम् । अनुवाद्यत्वात् । **तस्मादन्यपदार्थापेक्षयोरप्यप्रधानत्वेन प्रथमानिर्दिष्टत्वेन चानियमे प्राप्ते उत्तरपदार्थविशेषणस्यैव पूर्वनिपातार्थमिदमिति बोद्धव्यम् ।**

जहत्स्वं पदं यमिति । **यत्पदेन यस्य पदं स्वसमर्थस्य स गृह्यते** । चार्विति । **चारु स्मितं यस्येति बहुव्रीहिः** ॥

**इति बहुव्रीहिः ।**



---

(१) **चिन्त्यमिति** । स च तदप्राप्तियोग्येऽचारितार्थ्यविषयो विधेयविषय एव चेति "तद्धितेष्वचामादेः" इति सूत्रे भाष्ये स्पष्टम् । "धातोरेकाच"इत्यत्र विधेयविषयत्वं चास्य स्पष्टम् ।

"तद्धितेष्वचामादेः" इत्यत्र क्रौष्टो जागतः इत्यादौ अन्त्योपधावृद्ध्योर्निषेधमुक्त्वोक्तन्यायेन तयोरादिवृद्ध्या बाधमाशङ्क्य सौश्रुत इत्यादौ अन्त्योपधावृद्ध्योरप्राप्तिविषये आदिवृद्धेः चारितार्थ्येन निरवकाशत्वाभाव इत्यभिप्रायेण भाष्यकृता इह तदभाव इत्युक्तम् । सामान्यविशेषभावो बाधहेतुः सचेह नास्तीति कैयटस्तदाशयमाह । "धातोरेकाच" इत्यत्र तु अथ हेतेभ्यः क्रियासमभिहारे यङा भवितव्यम् ? इति प्रश्ने उत्तरयोर्विग्रहेण विशेषासंप्रत्ययाज्जित्यग्रहणानर्थक्यम् । क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम् इति भाष्यकृतोक्तम् । द्वितीयवार्तिके चकारेण विशेषासम्प्रत्ययादित्यस्य अनुकर्षणाय चकारः कृतः । क्रियासमभिहारे यत्र यङ् तत्र तदन्ताद्विशेषस्य भृशं जपतीत्यर्थविशेषस्य अप्रतीतिरिति स न भवति । यद्यनुवादेऽपि एतन्न्यायसञ्चारः स्यात् तदा न्यायेनैव "धातोरेकाच" इत्यस्य बाधसिद्धेर्विशेषास-

# अथ द्वन्द्वप्रकरणम् ।

**"चार्थे द्वन्द्वः"(१) । चार्था इति । चशब्दद्योत्या इत्यर्थः ।**

---

## अथ द्वन्द्वप्रकरणम् ।

(१) **"चार्थे द्वन्द्व इति** । तत्त्वं च पदजन्यप्रतिपत्तिविषयभेदबोधकत्वे सति समानविभक्तिमत्पदप्रकृतिकत्वम् । प्राधान्येन सर्वपदार्थबोधकत्वञ्च । प्राधान्यं चात्र स्वघटकपदार्थांशे विशेषणतानापन्नत्वम् । तेन परस्परं विशेष्यत्वाभावेऽपि नासंभवः । स च द्वन्द्वो द्विविधः । इतरेतरः समाहारश्चेतिभेदात् । अगृहीतविशेषद्वित्वादिसंख्याविशिष्टनामार्थबोधकत्वम् इतरेतरत्वम् । नामार्थवृत्तितादृशसंख्याबोधकत्वम् समाहारत्वम् ।

एतेन चार्थस्य चतुष्टयवृत्तित्वेन द्वन्द्वः चतुर्विध इत्यपास्तम् । समुच्चयान्वाचययोः सामर्थ्याभावाच्च । स च द्वन्द्वः चार्थे । चार्थो भेदः । तत्र किं पदार्थभेदे किंवा पदार्थतावच्छेदकभेदे शक्तिः । तत्र नाद्यः । 'प्रमाणप्रमेय' इत्यादिगौतमकृतन्यायाद्यसूत्रे 'अप्येकदन्तहेरम्ब' इत्यादिपर्य्यायें नीलघटयोः अभेद इत्यत्र च पदार्थाभेदसत्त्वे च द्वन्द्वस्य दर्शनात् । नान्त्यः । घटा इति स्वरूपैकशेषे द्वन्द्वापवादके व्यभिचारात् । कथमस्य द्वन्द्वापवादकत्वम् इति चेत्—तस्योत्सर्गापवादयोः भावयोः समानविषयकत्वेन नियन्त्रितत्वात् । नच घटा इत्यस्य स्वरूपैकशेषे किंमानामिति वाच्यम् । सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति व्युत्पत्त्या त्रिचतुरादिघटोपस्थापकत्वाभावात् । नच घटपदात् घटत्वसामान्यलक्षणाप्रत्यासत्त्या घटमात्रोपस्थितौ तात्पर्यवशात् त्रिचतुरादिघटोपस्थितिः किन्तेनेति वाच्यम् । हरयः इत्यत्र तस्यावश्यककल्पनात् । नह्यत्र हरित्वमनेकमस्ति । घटा इति सर्ववादिसिद्धैकशेषलोपप्रसङ्गाच्च । अत एव अत्र वदन्ति । क्वचित् पदार्थभेदे, क्वचित् पदार्थतावच्छेदकभेदे च द्वन्द्वस्य दर्शनात् उभयभेदेऽपि द्वन्द्वशक्तिः । नचाननुगमो जातः । पदजन्यप्रतिपत्ति विषयत्वेनैवोभयानुगमात् । तथाचात्र यद्भेदेनैव द्वन्द्वः तत्रैव द्वित्वबहुत्वान्वयः । अनयोर्भेदसापेक्षत्वात् । नचैकपदे द्वन्द्वापत्तिरिति वाच्यम् । "सुप्सुपा" इति समासाधिकारसामान्याभावात् । इतरेतरयोगे साहित्यं विशेष्यत्वेन भासते । समाहारे तु विशेषणत्वेनेति विशेषः । साहित्यञ्चैकक्रियान्वयित्वम् । तद्यथा धवखदिरपलाशांश्छिन्धि इत्यत्र धवखदिरपलाशप्रतियोगिकं यत् साहित्यं तन्निरूपितं यदवयवविभागरूपफलम् तज्जनिका या च्छिदा क्रिया तदनुकूलकृतिमान् त्वम् इति नैयायिकाः । तदनुकूलो व्यापार इति वैयाकरणाः । निरूपितत्वं चात्र सामानाधिकरण्यम् । धवखदिरपलाशांश्छिन्धीत्यत्र साहित्याश्रयीभूतं यद्धवादि तद्वृत्तिर्यत् फलं तज्जनिका या क्रिया छेदनरूपा तदनुकूलकृतिमान् त्वम् इति बोधः ।

अथवा इतरेतरस्थले द्वित्वबहुत्वप्रकारकपदार्थोपस्थितिमात्रम् । समाहारे तु प्रत्येकपदार्थानुगतमेकत्वं भासते—नतु—उभयसाहित्यमेकक्रियान्वयित्वरूपम् भासते । नच सा·

**असामर्थ्यादिति** । एकार्थीभावाभावादित्यर्थः ।

तथा हि—बहुव्रीहिघटकपदानां कर्माद्यन्तर्भावेणेव द्वन्द्वघटकपदानां चार्थान्तर्भावेण एकार्थीभाव आवश्यकः । "समर्थः पदविधिः" इति परिभाषितत्वात् । "चार्थे द्वन्द्वः" इत्युक्तेश्च । न चैकशक्तिविषयाणां समप्रधानानां परस्परं विहाय इतरान्वयस्सम्भवति । येन समुच्चयान्वाचयौ स्याताम् । किं तु मिलितानामेवान्वयो वाच्यः । मेलनं च समुदायः । स च वर्तिपदार्थं प्रति विशेषणं विशेष्यं चेति द्वैधम् । तत्राद्ये इतरेतरयोगद्वन्द्वः । द्वितीये समाहारद्वन्द्वः । उभयथाऽपि समुदायस्य द्वन्द्वेनोक्तत्वाच्चशब्दाप्रयोगः । न चैवं नीलोत्पलमित्यादावपि चशब्दान्तर्भावेण विग्रहदर्शनादेकार्थीभावस-

---

## अथ द्वन्द्वप्रकरणम् ।

कर्मादीति । **अन्यपदार्थेत्यर्थः** । समप्रधानानामिति । **समप्राधान्यं परस्पराविशेषणत्वम्** सम्भवतीति । **पुष्प(१)वन्तादिवदिति भावः** । समुच्चयान्वाचयौ स्यातामिति । **एकार्थीभावविषयाविति शेषः । तत्रैकस्येतरामिलितस्यैवान्वयादिति भावः** । द्वैधमिति । **यथा तु "चार्थे" इति सूत्रे भाष्यं तथोभयत्रापि समुदायस्य विशेष्यत्वम् । आद्ये उद्भूतावयवभेदोऽन्त्ये तिरोहितावयवभेद इति अन्यपदार्थप्राधान्ये बहुव्रीहेरिव चार्थप्राधान्ये द्वन्द्वस्येति । एतच्च उद्भूतावयवभेद(२)त्वमारोपितावयवगतसंख्यावत्त्वम् । एतदनारोपे तिरोहितावयवभेदत्वम् । अन्यथा स्वपदैस्तेषामुभयत्रापि तत्तद्रूपेण बोधात्तत्वं दुरुपपादम् । आरोपानारोपयोश्च शब्दस्वभाव एव बीजम् । अत एवाद्ये घटश्च पटश्चेत्येव विग्रहोऽन्त्ये तयोः समाहार इति तत्त्व(३)म्** । चशब्दान्तर्भावेणेति ।

---

(१) **पुष्पवन्तादिवदिति** । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरे द्वन्द्वेन पर्यायप्रदर्शनात् तत्र द्विवचननिर्देशात् एकयोक्त्येत्युक्तेश्च समूहस्य शक्यतालाभेन पुष्पवन्तौ नमस्कुर्मः इत्यत्र यथा समूहान्वितयोः चन्द्रसूर्ययोः कर्मत्वेन नमस्कारान्वयित्वम् तथा सर्वत्र द्वन्द्वस्थले एकार्थीभावापन्नसमुदायोपस्थाप्यानेकस्यैकधर्मावच्छिन्नेऽन्वयो द्रष्टव्यः ।

(२) **उद्भूतावयवभेदत्वम इति** । तत्त्वञ्च अवयवगतसंख्यारोपत्वम् प्रत्यवयवं समूहरूपत्वारोपो वा । उद्भूतः प्रकटः अवयवानां भेदो यस्य तादृशसमूहनिष्ठविशेष्यतानिरूपकतावच्छेदकधर्मावच्छिन्नत्वमिति यावत् ।

(३) **तत्त्वमिति** । केचित्तु द्वन्द्वः प्रथमान्तानामेव न तु परिनिष्ठितविभक्त्यन्तानाम् । चैत्रेण मैत्रेण च कृतम् इत्यादिवाक्ये अवयवकर्तृत्वस्यैव प्रतीतेः । चैत्रमैत्राभ्यां कृतम्

त्वाच्च द्वन्द्वो दुर्वार इति वाच्यम् । सामानाधिकरण्ये विशेषविहिततया "विशेषणं विशेष्येण" इति तत्पुरुषसञ्ज्ञया द्वन्द्वसञ्ज्ञाया बाधात् ।

यत्तु केचित्कर्मधारयसञ्ज्ञया बाध इत्याहुस्तत्तुच्छम् । तस्या एकसञ्ज्ञाधिकारबहिर्भूतत्वात्सञ्ज्ञानां च कृत्कृत्यप्रत्ययादिषु समावेशस्य सुप्रसिद्धत्वान्न्याय्यत्वाच्च । सामानाधिकरण्याविवक्षायां तु द्वन्द्वे इष्टापत्तिरेवेति दिक् । **होतृपोत्रिति** । अनयोरुत्तरपदपरत्वाभावादानङ् न ।

---

**प्रवृत्तिनिमित्तयोः सामानाधिकरण्यं तत्र चार्थः । नीलत्वसमानाधिकरणोत्पलत्ववदुत्पलं नीलमिति बोधात् । अत एव तदन्तर्भावेण वृत्तिरपीति भावः ।** द्वन्द्वे इष्टापत्तिरिति ।

**ननु गुणादेर्द्रव्याश्रितत्वेन तदपेक्षत्वात्तयोस्सहविवक्षाऽसम्भवेन कथं तत्रेष्टापत्तिः । स्पष्टं चेदं "विशेषणं विशेष्येण" इत्यत्र भाष्यकैयटयोरिति चेन्न । गुणयोः क्रिययोश्च तत्सम्भवात् । आशंसासम्भावनयोराविशेष इत्यादिभाष्यप्रयोगाच्च । "विशेषणम्"इति सूत्रे तिलकृष्ण इति न**

---

वृत्तिविग्रहयोः समानार्थकत्वादेव 'यदग्नये च प्रजापतये च' इत्यादौ व्यस्ते प्रत्येकं देवतात्वप्रतीतिः । अग्नीषोमाभ्यामित्यादौ समुदाये देवतात्वप्रतीतिरिति व्यवस्था जायते । तस्यापि तद्वाक्ये तु समास इव तत्रापि समुदाये देवतात्वप्रतिपत्तिः स्यात् । अतएव "ङिसम्बुद्ध्योः" इति सूत्रे भाष्ये "ङिसम्बुद्ध्योरनुत्तरपदे सम्बुद्धिग्रहणं न कार्यमिति राजवृन्दारकेत्यादौ सम्बुद्ध्यन्तानां न समासः इह तावत् समाससमानार्थकेन वाक्येन भवितव्यमिति । समासेन यश्चेहार्थो वाक्येन गम्यते नासौ जातुचित्समासेन गम्यते अवयवबोधनं वाक्येन गम्यते समुदायबोधनं समासेनेत्युक्तम् । सम्बोधनविभक्त्यन्तस्य अभिमुखीभावफलकत्वेन प्रत्येकमेवाभिमुखीभावप्रतीत्या क्रियान्वयेन परस्परमसामर्थ्यमिति तद्भावः ॥ यदा समानाधिकरणस्थलेऽपि समासो न तदा व्यधिकरणानां द्वन्द्वसुतरां नेति परिनिष्ठितविभक्त्या समासेऽपि राजपुरोहिताविति न द्वन्द्वोदाहरणम् । एवञ्च व्यधिकरणतृतीयाद्यन्तानामपि क्रियादावेवान्वयेन क्रियाजनकत्वरूपकारकत्वस्य प्रत्येकमेव बोधनेन वाक्यसमासयोर्नैसमानार्थत्वम् । इदं च प्रत्येकान्वयविवक्षायाम् । समुदायस्य अन्यत्रान्वयविवक्षायाम् धवखादिरौ च्छिन्धीतिवत् समासो भवत्येव । एतेन कटं भीष्ममित्यादौ कर्मत्वेनोभयोः क्रियायाम् अन्वयात् पार्ष्णिकपरम्परान्वयेन सामर्थ्यमादाय समास इति मीमांसकनव्योक्तं अपास्तम् । राजन् वृन्दारकेत्यादौ अपि पार्ष्णिकान्वयेन सामर्थ्यमादाय समासापत्तौ भाष्यासङ्गतेः । तिङ्समानाधिकरणे प्रथमा अभिहिते प्रथमा इति न्यासकल्पेऽपि समुदायद्वारा अवयवानामपि तिङ्सामानाधिकरण्येन समुदायकर्तृत्वोक्तावयवकर्तृत्वस्यापि उक्तत्वेन समु-

"**अजाद्यदन्तम्**" ॥ कथं तर्हि 'स सौष्ठवौदार्यविशेषशालिनीम्' 'लोचनाधरकृताहृतरागे'ति भारविः । अत्राहुः—अनित्यमिदं प्रकरणम् । "समुद्राभ्राद्घः" इत्यादिनिर्देशात् ।

"**द्वन्द्वश्च प्राणितूर्य**" ॥ **समाहार एवेति** । विपरीतस्तु नियमो न भवति समाहारे प्राण्यङ्गादीनामेवेति । "तिष्यपुनर्वस्वोः" इति सूत्रे बहुवचनग्रहणात् । तद्धि समाहारैकवचनस्य माभूदिति कृतं तिष्यपुनर्वस्विति यथा । **उदगादिति** । इह यदा कठेषु कलापेषु उदितेषु प्रतिष्ठितेषु वा आवाभ्यां तत्र गन्तव्यमिति संवादं कृत्वा तं च विस्मृत्य कश्चिदास्त तं प्रतीदमुच्यते । कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्तेवासित्वाणिनिः । "कठचरकात्" लुक् । अध्येत्रणस्तु "प्रोक्ताल्लुक्" इति लुक् । "कलापिनोऽण्" सब्रह्मचारि इत्याद्युपसंख्यानात् टिलोपः ।

अध्वर्युशब्दो यजुर्वेदं लक्षयति तदाह—**यजुरिति** । पदान्यधीते पदकः । "क्रमादिभ्यो वुन्" । एवं क्रमकः । पदान्यधीत्य क्रमोऽध्येतव्य इति स्पष्टा प्रत्यासत्तिः । अध्ययनतः किम् ? पितापुत्रौ । अविप्रकृष्टेति किम् ? । याज्ञिकवैयाकरणौ ।

---

**द्वन्द्व इति भाष्योक्तिस्तु तिलकृष्णा आनयेत्यादिप्रयोगपरा । कृष्णानामाश्रयाकाङ्क्षायामुपस्थिततिलैरेव तदाकाङ्क्षाशान्तिरिति तत्र सहविवक्षाभाव इति तात्पर्यात् । तिलकृष्णयोरभेद इत्यादि भवत्येव । एवं नीलोत्पलयोरभेदे इत्यपि भवति अभेदान्वये तयोः सामानाधिकरण्यस्य पश्चान्मानसप्रतीतावपि द्वन्द्वरूपपदसंस्कारवेलायां तदविवक्षणात् ।**

**यद्वा शब्दस्वरूपपरावेतौ । एवं च भिन्नार्थत्वान्नैकशेषः । नापि सामानाधिकरण्यप्रयुक्तः कर्मधारयः । तयोः शब्दयोरर्थभेदाभावादविशेषो भेदो वेति तदर्थ इति "आशंसायां भूतवच्च" इत्यत्र सूत्रे कैयटे स्पष्टमिति दिक् ।**

स सौष्ठवेति । **सौष्ठवौदार्ययोर्ये विशेषास्तच्छालिनीमित्यर्थः ।**

समाहारे इति । **समाहारे द्वन्द्वः प्राण्यङ्गादीनामेव(१)त्यर्थः ।** यजुरिति । **अध्वर्युणा क्रतोः सम्बन्धाव्यभिचारादिति भावः ।**

---

(१) [illegible]

**"जातिरप्राणिनाम्"** ॥ कथं तर्हि 'रञ्जिता नु विविधास्तरुशैलाः' भारविः । तरुसहिताः शैला इति व्याख्येयम् ।

**"विशिष्टलिङ्गो नदी"** ॥ सूत्रे चत्वारोऽपि शब्दा अवयवधर्मे- प्रविनि द्वन्द्वे बोद्ध्याः । नदीग्रहणमदेशत्वात् । जनपदो हि देशः । एव पर्वतानां न । कैलासश्च गन्धमादनं च कैलासगन्धमादने ।

**चकारेण बाद्ध्यते इति** । चकारः पुनर्विधानार्थ इति भावः ।

**पात्राद्विति** । यैर्भुङ्क्ते "भस्मना शुद्ध्यते कांस्यम्" इत्यादिस्मृत्युक्त- रेणापि पात्रं न शुद्ध्यति तेषामित्यर्थः । 'अनिरवसितानाम्' इति निषेधबलादेव शूद्रशब्दोऽत्र त्रैवर्णिकेतरपरः । शूद्रत्वजातिपरः ।

**गवाश्वमिति** । इह पशुद्वन्द्वे विभाषा प्राप्ता । **दासीदासमिति** । "पुमान् स्त्रिया" इत्येकशेषो बाद्ध्यते । अत्र वार्तिकम् । "गवाश्वप्र- षु यथोच्चारितं द्वन्द्ववृत्तम्" इति । गणपाठे रूपमेषां विवक्षितं न तु रपदनिर्देशमात्रे तात्पर्यमित्यर्थः । तेनावङादेशाभावपक्षे न भवति । अ- वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः ।

**पशुग्रहणमिति** । विकल्पार्थमित्यनुषज्यते । **नपुंसकत्वार्थमिति** । भावः – पशुद्वन्द्व इत्येव सिद्धे अश्ववडवग्रहणं प्रतिपदविधानार्थम् । तेनाश्व- मित्येकवद्भावपक्षे पूर्ववदश्ववडवावित्येतद्बाधित्वा "स नपुंसकम्" इत्येतदेव ति । तच्छब्देन हि एकवद्भावभाजः परामृश्य विधीयमानं नपुंसकत्वमेकवद्भा- व प्रतिपदविहितं भवतीति । **अन्यथेति** । न च पूर्ववदश्ववडवावि-

---

कथं तर्हीति । **व्यक्तिप्राधान्यविवक्षया न निर्वाहः । सकलतरुशैलरञ्ज- विवक्षितत्वादिति भावः ।**

चत्वार इति । **नदी देश इति भिन्ने पदे । द्वन्द्वे द्विवचननपुंसकत्वान्यत- रेरिति भावः ।** जनपदो हीति । **जनानां पदं स्थानं यत्रेति व्युत्पत्त्या मनु- ष्यवासयोग्य इत्यर्थः । तादृशं च ग्रामनगराद्यपि । जनपद इत्यस्य विशेष यस्तदाह**–अत एवेति । **अत्र भाष्यमुदासीनम् ।**

एकशेषो बाद्ध्यत इति । **निपातनेनेति शेषः ।** गोअश्वेभ्य इति । **एवं पररू- ऽपि नेति बोद्ध्यम् ।**

प्रतिपदविधानार्थमिति । **"स नपुंसकम्" इत्यस्य प्रतिपदविधान- भिप्रायः । तदेवोपपादयति**–तच्छब्देन हीति । एकवद्भावभाज इति ।

त्यस्य निरवकाशत्वं शङ्क्यम्। एकवद्भावविरहपक्षे सावकाशत्वात्।

**"विप्रतिषिद्धं च"॥ भवत्येवेति**। विप्रतिषिद्धग्रहणाभावे तु स न स्यात्। अद्रव्यवाचिनामेवेति नियमादिति भावः।

यत्तु वृत्तिकृता कामक्रोधाविति प्रत्युदाहृतम्। तन्न। तत्रापि 'शीतोष्णं सुखदुःखम्' इत्यादाविव पाक्षिकस्यैकवद्भावस्यैव दुर्वारत्वात्। नियमार्थं हि इदं सूत्रमिति स्थितम्। न चाद्रव्यवाचिनां चेद्भवति तर्हि विप्रतिषिद्धानामेवेति तदाशयः कल्प्यः। शीतोष्णे उदके इत्यत्र पाक्षिकैकवद्भावापत्तेः। न चेष्टापत्तिः। अनधिकरणवाचीति किम्? शीतोष्णे उदके इति स्वोक्त्या सह विरोधापत्तेरिति दिक्।

**दधिपयसी इति**। व्यञ्जनत्वाद्विकल्पः प्राप्तः।

**"अधिकरणैतावत्त्वे च"**॥ समासार्थस्याधिकरणमाश्रयो वर्तिप-

---

मिति। **अनवकाशं चेत्यपि बोद्धयम्। विधेर्ज्याय(१)स्त्वेन न मृगशकुनिग्रहणवदस्य नियमार्थत्वम्।**

प्रत्युदाहृतमिति। **विप्रतिषिद्धमित्यर्थः। तदभावे ह्यद्रव्यवाचिनां समाहारद्वन्द्व एवेत्यर्थे प्रकृते इतरेतरद्वन्द्वानापत्तिरिति तदाशयः।** इत्यादाविवेति। **कामक्रोधयोर्विरोधाभावेऽपि सुखदुःखादेरिव द्रव्यवाचित्वाभावेन नियमव्यावर्त्यकोटावप्रवेशात्। चेन विभाषानुकर्षणान्नियम एवोचितः। तदभावे ह्येवं नियम—वैकल्पिको यः समाहारे द्वन्द्वः सोऽद्रव्यवाचिनामेवेति भावः।** तदाशय इति। **एवं च विप्रतिषिद्धाभावेऽद्रव्यवाचिनामेवेति नियमः स्यात्। एवं चात्राप्युभयं स्यात्तत्सत्त्वे तु विप्रतिषिद्धानामेवेति नियमादत्रेतरेतरयोग एवेति तदाशयः।** विरोधापत्तेरिति। **विपरीतनियमेऽत्र पाक्षिकैकवद्भावस्येष्टत्वेन तद्विरोधः स्पष्ट एव।**

विकल्पःप्राप्त इति। **"जातिरप्राणिनाम्" इत्यपि न। "चार्थे द्वन्द्वः" इत्येतद्विहितसमाहारद्वन्द्वस्य नियममात्रस्य च बाध्यसामान्यचिन्तयाऽनेन निषेधात्। अत एव ब्रह्मप्रजापत्यादिपाठश्चरितार्थः।**

, तस्य एतावत्त्वं परिमाणनियमस्तस्मिन् गम्यमाने इति व्याचष्टे–**यसंख्येति** । अत्र व्याचख्युः । समाहारद्वन्द्वस्यैवायं निषेधो न तु नस्य। तथा हि सति नियमे प्रतिषिद्धेऽपि "चार्थे द्वन्द्वः" इति समाद्वन्द्वः स्यादिति । तन्नेति ध्वनयन् व्याचष्टे–**नियमो न स्यादिति** । अयं भावः । प्राचां पक्षे दश दन्तोष्ठा इति त्वदुदाहृतमेव न सिद्। प्राण्यङ्गानां समाहार एवेत्यनेन इतरेतरयोगद्वन्द्वस्य निषिद्धत्वात् । समाहारद्वन्द्व एव प्रकृतसूत्रेण निषिद्ध इति चेत्तर्हि वाक्यमेव स्यात् । द्वयस्यापि निषेधात् ।

एवञ्च—

'पञ्चस्विहास्याङ्घ्रिकरेष्वभिख्या भिक्षाऽधुना माधुकरीसदृक्षा'

इत्यादीनामसाधुत्वं स्यात् । किं च समाहारद्वन्द्वनिषेधो व्यर्थः । न्यानैव तद्वारणात् । तथा हि–वर्तिपदार्थस्य संख्याविशेषे बोधनीये समान्द्वस्य प्राप्तिरेव नास्ति 'सविशेषणानां वृत्तिर्न' इति वचनात्सापेक्षत्वेमर्थ्याद्वा । कथं तर्हि दश पञ्चपूल्य इति समाहारे द्विगुरिति चेत् प्रभूते समाहारे दशत्वसंख्यान्वयादिति गृहाण । न चोक्तन्यायेनेतरेतयोद्वोऽपि न स्यादिति वाच्यम् । तत्र प्रधानस्य सापेक्षत्वात् । उक्तं हि–"भवति वै प्रधानस्य सापेक्षस्य वृत्तिः" इति। न्याय्यं चैतत्। प्रधान-

---

रिमाणनियम इति । **स च संख्याकृ(१)त एव व्याख्यानादिति भावः ।** स्येति । **नियमस्यैवेत्यर्थः** ।

वदुदाहृतमिति । **प्राचीनोदाहृतमित्यर्थः** । निषिद्धत्वादिति । **तथा च समाहाः स्यादिति भावः** । **तत्र शङ्कते**—नन्विति । वाक्यमेव स्यादिति । **एता· प्राचां पक्षे दूषणं सारम्** । **अभ्युच्चयमाह**–किंचेत्यादि । कथं तर्हीति । **वेषु दशत्वसंख्यान्वय इत्यभिमानः** । गृहाणेति । **न चैवं समाहारे द· न्वयविवक्षायां प्राप्तसमाहारद्वन्द्वनिषेधोऽस्त्विति वाच्यम्** । **द्रव्यसं· वगमेनैतत्सूत्राप्रवृत्तेः** । प्रधानस्येति । **मम तु प्राण्यङ्गादिषु द्वन्द्वश्चेति ादितरेतरयोगाप्राप्तौ तद्विधानेनास्य चारितार्थ्यम्** । **न च नियमनि· उभयोरापत्तिः । असामर्थ्येन समाहारे तदप्राप्तेरिति भावः** ।

स्यैकदेशत्वाभावात् । सामान्याप्रयोगे इति । लिङ्गादिति दिक् ।

**"विभाषा समीपे"** ॥ यद्यपीह समाहारद्वन्द्वो वेति व्याख्यानेऽपि न क्षतिस्तथापि प्रक्रममनुरुद्ध्याह—**नियमो वा स्यादिति । उपदशमिति** । एकवद्भावपक्षे ऽव्ययीभावस्यैवानुप्रयोगः । यदि तु बहुव्रीहिस्तदा उपदशस्य पाणिपादस्येति षष्ठी स्यात् । उपदशं पाणिपादस्येत्येव चेष्यते इत्याकरः ।

**"आनङ् ऋतो द्वन्द्वे"** ॥ इहोत्तरपदेन पूर्वपदं नाक्षिप्यते तेन मध्यस्थस्याप्यानङ् । तदाह—**होतृपोतृनेष्टोद्गा(१)तार इति** । एतच्च समर्थसूत्रे भाष्यकैयटयोः स्पष्टम् । "ओजःसहोम्भस्तमसस्तृतीयायाः" इति सूत्रे पदमञ्जर्यां तु स्पष्टतरम् ।

यत्तु प्राचोक्तम् । पूर्वपदस्यानङ् स्यादिति । यच्च व्याख्यातृभिर्द्वन्द्वे पूर्वपदकार्यविशेषमाहत्यवतारितम् । यच्चाधिकृतेनोत्तरपदेन पूर्वपदमाक्षिप्यते

---

दिगिति । **दिगर्थस्तु यदा दन्तोष्ठद्वारकसम्बन्धेन समाहारे एव दशत्वान्वयविवक्षा तदाऽस्त्येव समाहारे द्वन्द्वप्राप्तिः । प्रधानस्यैव सापेक्षत्वाद् द्रव्यसंख्यावगमाच्च । किंचा(२)त्र समाहाराप्राप्तावपि नियमाभावेन नियमाप्राप्त्या कस्यानेन निषेधः स्यात् । तस्मात्पूर्वसूत्रवदयमप्युभयोर्निषेधः । अत एवोत्तरसूत्रविषये समाहारद्वन्द्वासिद्धिः । सामर्थ्येनासमासकल्पनापेक्षयैवमन्वयकल्पनस्यैवौचित्यादिति ।**

अव्ययीभावस्यैवेति । **समानलिङ्गवचनत्वादिति भावः ।** यदि त्विति । **एकवद्भावपक्षे इति शेषः । न च बहुव्रीह्यनुप्रयोगे उपदशमित्यस्यासिद्धिः । उपदशा इत्यस्यैवोचितत्वादिति वाच्यम् । दिगर्थोक्तरीत्याऽवयवद्वारकसम्बन्धेन समुदायार्थेऽन्वयेन द्वन्द्वार्थे अभेदेनान्वयाद् द्वन्द्वार्थस्यैकवद्भावेनतत्सिद्धेराह**—उपदशस्येति । **अव्ययीभावानुप्रयोगे तु नाव्ययीभावादित्यादिना न दोष इति भावः । अव्ययीभावानुप्रयोगे**

इत्युक्तम् । तत्सर्वमाकरविरोधादुपेक्ष्यम् ।

**प्रसिद्धसाहचर्यस्येति** । "द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु" इति सूत्रे ऽभिव्यक्तिग्रहणेनात्यन्तसहचरितयुगले द्वन्द्वमिति निपातनादिति भावः ।

"**ईदग्नेः**" ॥ देवताद्वन्द्व इति काशिकानुरोधेनानुवर्तितम् । आश्वलायनस्तु ज्योतिर्लतयोरदेवताद्वन्द्वे ऽपि प्रायुङ्क्त । अग्नीषोमौ प्रणेष्यामीति । **अग्निष्टुदिति** । अग्निः स्तूयतेऽस्मिन् स क्रतुविशेषः । सम्पदादित्वादधिकरणे क्विप् ।

**रुत्वं माभूदिति** । अकारे सति सकारस्य श्रवणं भवति । तेन प्रयोगे विकाराभावोऽनुमीयत इति भावः । **विसर्गमिति** । तथा च क्वचिद्विकारो नेत्येवमनुमेयं लक्ष्यानुरोधादिति भावः ।

"**मातरपितरौ**" ॥ मातृशब्दस्यानङादेशो निपात्यते । **वाक्त्वचमिति** । बहूनां द्वन्द्वेन वाक्स्रक्त्वचम् । द्वन्द्वगर्भे द्वन्द्वे तु वाक्स्रजत्वचम् ॥

इति द्वन्द्वः ॥

---

पसमीपिनोरभेदविवक्षया बोद्ध्यम् । इतरेतरयोगे तु बहुव्रीहेरेवानुप्रयोगस्तस्य समीपिप्रधानत्वात्समानलिङ्गवचनत्वाच्च । अत एव तत्र नाव्ययीभावानुप्रयोगः ।

अत्यन्तसहचरितेति । तच्चं चैकहविर्भागित्वेन, वेदसूत्रप्रसिद्धतया लोके प्रसिद्धसाहचर्यतया वेत्यन्यत् ।

प्रायुङ्क्तेति । तदार्षमित्यन्ये । अकारे सतीति । स चेत्सञ्ज्ञक इति बोध्यम् ।

निपात्यते इति । उत्तरखण्डे तु ऋतो ङीत्येव सिद्धम् । "पितरामातरा च च्छन्दसि" "मातरपितरौ" इति सूत्रद्वयविषयपूर्वोत्तरपदयोरराराविति भाष्यं तु पूर्वोत्तरपदयोः सतोः पूर्वपदस्येत्यर्थपरतया कैयटेन व्याख्यातमिति न तद्विरोधः । अत एवोत्तरपदे इत्याधिकृतस्य न बाध इति दिक्(१) ।

वाक्स्रजत्वचमिति । समर्थसूत्रभाष्यप्रयोगादेव गुर्वक्षरत्वेऽपि वाक्छब्दस्य पूर्वनिपातस्तत्प्रकर(२)णाऽनित्यत्वात् ॥

इति द्वन्द्वः ॥

## *अथैकशेषप्रकरणम् ।

"विरू(१)पाणामिति"। एतच्च सूत्राक्षरैरेव सुलभम् । रूप्यते इति व्युत्पत्त्या सौत्रस्य रूपशब्दस्यार्थपरतया ऽपि व्याख्यानात् ।

"वृद्धो यूना" ॥ अपत्यमन्तर्हितं वृद्धमिति पूर्वाचार्यैः परिभाषितस्येह ग्रहणं, यूना कृत्रिमेण साहचर्यात् । तदाह—**गोत्रं शिष्यत इति । भागवित्तीति** । भागवित्तिशब्दाद् गोत्रार्थकादिञन्ताद्यूनि "वृद्धाट्ठक्सौवीरेषु बहुलम्" इति कुत्सायां ठक् । इह कुत्सा सौवीरत्वं चाधिकमपेक्ष्यते न तु युवत्वमात्रकृतं वैरूप्यम् । **गार्ग्यवात्स्यायनाविति** । इह प्रकृत्यंशे वैरूप्यं न गोत्रादिकृतम्। पुंवद्भावप्रयुक्तं वैलक्षण्यं स्फुटीकर्तुं द्विवचनान्तेन विग्रहमाह—**गार्ग्यायणाविति** ।

"**पुमान् स्त्रिया**" ॥ ननु हंसश्च वरटा चेत्यत्र प्रसङ्गः । हंसत्वजातिसाम्येऽपि शब्दवैलक्षण्यस्य स्त्रीत्वपुंस्त्वमात्रप्रयुक्तत्वादिति चेन्मैवम् ।

---

## अथैकशेषप्रकरणम् ॥

अपत्यमन्तर्हितमिति । **पौत्र(२)प्रभृत्यपत्यमित्यर्थः** । यूनेति । **अपत्यविशेषवाचकेन युवशब्देनेत्यर्थः । तत्साहचर्येणापत्यविशेषवाचकस्यैव वृद्धशब्दस्य ग्रहणं न तु "वृद्धिर्यस्य" इत्यादिना सङ्केतितस्येति भावः ।**

---

## ( अथैकशेषः )

* एकशेषप्रकरणस्यद्वन्द्वापवादत्वामिति द्वन्द्वापवादरूपसङ्गत्यर्थम् एतदुत्तरमेकशेषप्रकरणमारभते—**अथेत्यादिना** । नच अपवादस्य सङ्गतित्वस्वीकारे—

सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्वाहकैककार्यत्वे षोढा सङ्गतिरुच्यते ॥

इत्यनेन षोढात्वकथनस्य विरुद्धत्वमिति वाच्यम् । अपवाद्यापवादरूपप्रसङ्गनिर्वाहकत्वसूचनस्य अपवादत्वेन सङ्गतिप्रदर्शनस्याविरुद्धत्वात् ।

( १ ) **विरुपाणामितीति**। इति वार्तिकार्थस्तु—"सरूपाणाम्" इति सूत्रेणार्थभेदे शब्दैक्यरूप्ये एकशेषो विहितः" एकार्थकत्वेऽपि विरूपाणामप्येकशेषो वक्तव्यः इत्यर्थः ।

( २ ) **पौत्रेति** । "वृद्धो यूना" इति सूत्रे वृद्धपदेन 'अपत्यमन्तर्हितं वृद्धम्" इति पूर्वाचार्यैः परिभाषितस्य पाणिन्युक्तगोत्रापरपर्यायस्य ग्रहणम् । नच वृद्धपदेनेदशार्थग्रहणे किमर्थमिति वाच्यम् ? कृत्रिमेन यूना साहचर्यस्यैव सत्त्वात् । नच 'गोत्रं यूना' इत्येव

सरूपग्रहणानुवृत्तेः । अनुवृत्तौ ज्ञापकं तु "भ्रातृपुत्रौ" इति सूत्रम् । नन्वेवमपि गौरियं गौश्चायं तयोः सहोक्तौ एतौ गावाविति नियमतो न स्यात्तल्लक्षणविशेषाभावादिति चेन्मैवम् । तदितरकृतविशेषविरहरूपे विशिष्टाभावे तात्पर्यात् सचेह विशेष्याभावादस्त्येव । इन्द्रेन्द्राण्याविवित्यादौ तु नैकशेषः । पुंयोगकृतविशेषात् ।

**"पिता मात्रा"** ॥ **"श्वशुरः श्वश्र्वा"** ॥ नन्वेतत्सूत्रद्वयं व्यर्थम् । तथा हि—'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेनास्मिन्विषये पितृशब्द एव मातरमपि वक्ति, श्वशुरशब्दश्च श्वश्रूम् । तत्र शक्तिरेव निरूढलक्षणा वेत्यन्यदेतत् । एतच्च सूत्रं विनापि सुलभम् । न च पूर्वसूत्रसमूहवदिदमपि सूत्रद्वयं द्वन्द्वनिवृत्त्यर्थमिति वाच्यम् । इह द्वन्द्वस्यापि पक्षे इष्टत्वादिति चेत् ? मैवम् । पितृश्वशुरशब्दयोरिव मातृश्वश्रूशब्दयोरुक्तविषये केवलयोः प्रयोगं वारयितुं सूत्रारम्भात् । अनभिधानमाश्रित्य प्रत्याख्यानं दुर्बलमिति दिक् ।

**"त्यदादीनि सर्वैर्नित्यम्"** ॥ सर्वैः किम् ? प्रत्यासत्त्या त्यदादिभिरेव सहोक्ताविव्यर्थो मा भूत् । **यत्परमिति** । शब्दपरविप्रतिषेधादिति भावः । **त्यदादित इति** । आद्यादित्वात्तसिः । त्यदादीनां शेषे स-

---

अनुवृत्तेरिति । **सारूप्ये सति तल्लक्षणविशेष एवैतत्प्रवृत्तिरिति भावः** । नियमतो न स्यादिति । **"सरूपाणाम्" इत्येकशेषे तु स्त्रीवाचकस्यापि शेषापत्तिः । न चेष्टापत्तिः । कैयटादिविरोधात् । तर्हि "पुमान् स्त्रिया" इत्येकशेषोऽत्रोक्तः । न च "त्यदादितः शेषे पुंनपुंसकत" इत्युक्तेरेताविव्यस्य नियमेन सिद्धिः, गावावित्यत्र तु रूपे न विशेष इति वाच्यम् । अद्वन्द्वतत्पुरुषविशेषणानामित्यत्र द्वन्द्वपदेन तदपवादैकशेषस्याप्युपलक्षणेन तदप्राप्तेरिति भावः** । तदितरेति । **ताभ्यां स्त्रीत्वपुंस्त्वाभ्यामितरः पुंयोगादिस्तत्कृतङीषादिविरहेत्यर्थः** । तात्पर्यादिति । **चेदेवशब्दोपादानसामर्थ्येन विशेषश्चेत्तल्लक्षण एवेत्यन्वयेनेति भावः । तल्लक्षण एवेत्यस्य व्यावर्त्यमाह**—इन्द्रेन्द्राण्याविति ।

मातरमपीति । **पितृत्वारोपेणेत्यर्थः** ।

त्यदादिभिरेवेति । **सर्वं पदं सावधारणमित्यर्थलब्धोऽयमेवकारः । इत्येवार्थो मा भूदिति नान्वयः । सर्वैरित्यस्य त्यदादिभिरन्यैश्चेत्यर्थः**। शब्दपरेति । **गणपाठीयेत्यादिः** । आद्यादित्वादिति । **पुंनपुं(१)सकत इत्यत्राप्येवमेव** ।

---

हविवक्षितेषु पुमान् यच्च नपुंसकं तद्वशेन लिङ्गप्रतिपादकानि भवन्ति । अर्थात्त्यदादीन्येव । **अद्वन्द्वेति** । द्वन्द्वादिविशेषणानां प्रागुक्तं न, किं तु विशेष्यनिघ्नतैवेति भावः । **तच्चेति** । पिप्पल्या अर्द्धमित्यर्थः । **साचेति** । अर्धपिप्पलीत्यर्थः ।

**इह सर्वत्रेति** । एतेन कृतद्वन्द्वानामेकशेष इति भ्रमं व्यावर्तयति । ननु तथैव किं न स्यादिति चेत् ? न । एकशेषस्यान्तरङ्गत्वात् । न चेदं दुराग्रहमात्रं किं तु फले विशेषोऽस्तीत्याह—**तेनेति** । यस्तु द्वन्द्वापवाद एकशेष इति केषांचिदुद्घोषस्तत्रापवादशब्दो बाधकमात्रपरतया नेयः । "इको गुणवृद्धी" इति सूत्रे तच्छेषस्तदपवादो वेत्यत्र यथा ॥

इत्येकशेषः ॥

---

किं तु विशेष्येति । **अनेनान्त(१)रङ्गस्वार्थलिङ्गबाधनेन चरितार्थस्य बहिरङ्गविशेष्यसम्बन्धप्राप्तलिङ्गबाधकत्वे मानाभाव इति न्यायसिद्धत्वमस्य सूचितम्। अत एवैकशेषविशेषणेऽपि त्यदादित इत्यस्याप्रवृत्तिः । अत एव पुंस्त्रीसंघे स्त्रीविशेषे गाव इमाश्चरन्तीति भाष्यप्रयोगः सङ्गच्छते । इमा इत्यत्र ह्यनेनैवकशेषः** । अन्तरङ्गत्वादिति । **विभक्त्यनपेक्षत्वेन तदुत्पत्तेः पूर्वमेव स इत्यर्थः** । बाधकमात्रपरतयेति । **बाधकमात्रत्वं च पूर्वं स्वस्य प्रवृत्त्या तत्प्रवृत्तिप्रतिबन्धकत्वम्** । इत्यत्र यथेति । **मिदेरित्यादौ इक इत्यस्योपस्थितावयवषष्ठीत्वेनालोन्त्यस्येत्यस्य प्रवृत्तिप्रतिबन्धकत्वमात्रेणैव इक इत्यस्यालोऽन्त्यापवादत्वव्यवहार इति भावः ॥**

**इत्येकशेषः ॥**

---

शिष्यत इत्यर्थः । इदं कैयटे स्पष्टम् । अत एव "नपुंसकम्" इति सूत्रे भाष्ये शुक्लं च वस्त्रं शुक्लश्च कम्बलस्तस्मिन् एकशेषे तदिदं शुक्लं त इमे शुक्ले इत्युदाहृतम् । त्यदाद्यन्तर्गतयोरपि एकद्व्योर्नैकशेषो ऽनभिधानात् । एतच्च रूपसूत्रे भाष्ये ध्वनितम् । द्वन्द्वोऽप्येतयोर्न एकादिनवान्तानां द्वन्द्वाभावस्य "चार्थे" इति सूत्रशेषे भाष्ये कौस्तुभे च ध्वनितत्वात् । एवञ्च

एकद्विकरणे हेतू महापातकपञ्चके ।
न तृणीमन्यते कोपकामौ यः पञ्च कारयन् ॥ १ ॥

इति नैषधीये पद्ये एकाद्विकरणे इत्यसाध्वेव । अनेकपदषष्ठीतत्पुरुषोऽप्यसाधुरिति दिक् ।

( १ ) **अन्तरङ्गस्वार्थेति** । अन्तरङ्गत्वं च स्वप्रवृत्तौ निमित्तत्वेनाश्रीयमाणो यावान् शब्दसमुदायः तद्विशिष्टं स्वापेक्षयाऽन्तरङ्गमिति गृह्यते । वै० स्वघटकनिमित्तकत्व स्वघटकेतरानिमित्तकत्वोभयसम्बन्धेन इत्थं स्वप्रवृत्तौ निमित्तभूतो यावान् शब्दसमुदायः

# अथ सर्वसमासशेषप्रकरणम् ॥

...सञ्ज्ञादाह—**परार्थेति** । अभिधानमिति करणे ल्युट् । **अनेनैतद्दर्श-** ...न केवलया क्लृप्तया ऽप्यवयवशक्त्या सर्वत्र निर्वाहः । किं तु वि- ...विषयकं शक्त्यन्तरमेव स्वीकर्तव्यम् । अत एव वृत्तौ विशेषणस्य

---

## अथ सर्वसमासशेषप्रकरणम् ।

...णेल्युडिति । **यद्घटकैः पदैः परा(१)र्थान्वितस्वार्थस्यैव तत्तत्प-** ...**ासमुदायाभिधायिभिरुपस्थानं सा वृत्तिः** । विशिष्टार्थविषयकमिति । ...**हषपदं राजसम्बन्धवति पुरुषे शक्तमित्येव शक्तिग्रहाकारेण त-** ...**स्तद्विषयकत्वमिति भावः । पर्यवसानगत्या तु तस्या अवयवश-** ...**ये पर्यवसानमित्यन्यदेतत्** । शक्त्यन्तरमेवेति । **तत्स्वीकर्तव्यमे-** ...**यः । तत्फलं विशिष्टैकोपस्थितिः, तत्फलमाह**—अत एवेति ।

---

## अथ सर्वसमासशेषः ।

(१) **परार्थान्वितेति** । परशब्दः तदर्थपरः तेन परपदार्थ इति बोधः अर्थशब्दे- ...पार्थो गृह्यते । परेण पदार्थेन ह्युक्तो यः स्वस्यार्थः स परार्थः तस्याभिधाजन्योप- ...तत्करणत्वमिति तदर्थः । इतरपदार्थान्वितस्वार्थविषयकाभिधाजन्योपस्थितिजन- ...ति फलितोऽर्थः ।

...थवा । परशब्दः प्रधानवाची । तथाच—परेण प्रधानशब्देन शब्दान्तरार्थस्याभिधानं ...त्वेन ग्रहणं तत्करणमित्यर्थः । यत्रत्यप्रधानपदेनेतरविशेषणकस्वार्थस्यैवोपस्थितिः ...ामिति यावत् ।

...चित्तु—परेण अप्रधानशब्देन अन्यपदार्थस्य विशेष्यत्वेन ग्रहणमित्याहुः । वृत्तिरिति ... सा च अवयवशक्तिसहकृतसमुदायशक्तिसाध्या । अवयवशक्तिर्लोकसिद्धा । शास्त्री- ...समुदायशक्तिः । तद्धितादिप्रत्यये समुदायस्य शक्त्याश्रयस्य सत्त्वादेषामौपचारिको ...व्यवहारः प्राचीनानाम् । साच वृत्तिः "समर्थः पदविधिः" इति सूत्रसाध्या । तद्धि- ...त्ययोः पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकतासम्पादक- ...रूपपदविधित्वस्य मानान्तरासिद्धैकार्थीभावस्य स्पष्टत्वाच्च स्पष्टैव परिभाषाप्रवृत्तिः । ...निमित्तकानां कृतामपि स्पष्टमेव पदोद्देश्यकत्वम् । तत्साहचर्येणान्यत्रापि पदविधि- ... अतएव पाचक इत्यादौ क्रियाकारकभावसम्बन्धप्रवृत्तिनिमित्तकत्वमूलकः क्रियाशब्द- ...हारः । एकशेषेऽपि द्वन्द्वस्यानुवृत्तिः इत्येतद्विषये एकशेषप्रवृत्तिरित्यैकार्थीभावस्य त-

पदार्थैकदेशत्वान्न विशेषणसम्बन्धः । द्वन्द्वे चशब्दस्याप्रयोगः । बहुव्रीहौ तु यच्छब्दादेः । वाक्ये तु सर्वमिदं भवत्येवेति वैलक्षण्यम् । किं चावयवशक्त्यैव निर्वाह इत्याग्रहे मीमांसकानां बहुव्रीहेरन्यपदार्थे शक्तिर्न सिद्ध्येत् । योगरूढिश्च तत्तद्व्रादिनां दुर्लभा स्यात् । क्लृप्तशक्त्यनुसारिण्या निरूढलक्षणयैव निर्वाहात् । न चेष्टापत्तिः । अपसिद्धान्तादिति भावः ।

**अविग्रह इति** । लौकिक(१)विग्रहरहित इत्यर्थः । **अस्वपदेति** । समस्यमानयावत्पदाघटितविग्रह इत्यर्थः । **कटप्रूः । अजस्रमिति** । इह हि कृत्प्रत्ययविधौ 'कटप्रूःअजस्रम्' इति समस्तानुवादसामर्थ्याद् धातुना समास आक्षिप्यते तत्रैव वा निपात्यते इति हरदत्तादिग्रन्थे स्पष्टम् । तिङन्तार्थं कृतेन सहेति योगविभागेनाप्येतत् सुसाधम् ॥

इति सर्वसमासशेषः ॥

---

मीमांसकानामिति । **अरुणाधिकरणे वार्तिके स्पष्टमेतत् । विस्तरस्त्वन्यत्र द्रष्टव्यः** । योगरूढिश्चेति । **पङ्कजादिपदे इति शेषः** । क्लृप्तशक्त्यनुसारिण्येति । **क्लृप्तशक्तिकावयवपदशक्यसम्बन्धरूपयेत्यर्थः** । निरूढेति । **प्रयोजनाभावादिति भावः । एवं च बहुव्रीहौ चरमपदस्येव तत्रापि डप्रत्ययादेर्लक्षणयैवोपपत्तौ समुदायशक्त्युच्छेद इति तात्पर्यम्** । अपसिद्धान्तादिति । **अनुपपत्तिप्रतिसन्धानं विनापि बोधाच्चेत्यपि बोध्यम्** ।

यावत्पदेति । **तेन बहुव्रीहेर्नेदृशनित्यत्वम्** । कृत्प्रत्ययविधौ । **"क्विब्वचि" इति वार्तिके "नामिकम्पि" इति सूत्रे च** । सुसाधमिति । **अनेन प्रकारेणाप्यत्र समासः । प्रत्ययसन्नियोगेनैव योगविभागस्येष्टासिद्ध्यर्थत्वादिति बोध्यम् । यद्यपि स च च्छन्दस्येवेति पूर्वमुक्तं तथापि लक्ष्यानुसारात् क्वचिदन्यत्रापि प्रवृत्तौ न बाधकमिति तात्पर्यम ॥**

**इति सर्वसमासशेषः ।**

---

एकशेषस्य वृत्तित्वाभावादेव "समर्थः पदविधिः" इत्यस्याधिकारत्वपक्षे भाष्ये नोक्तसङ्ग्रह इति बोध्यम् ।

सनादिषु क्यजादेः सुबन्ताद्विधानेन स्पष्टमेव पदविधित्वम् । स्वभावत एव वृत्त्यवृत्त्योः सिद्धत्वाद्वावचनं न कार्यमितिप्रत्याख्यानपरभाष्यप्रामाण्यात् सुलभ एव एकार्थीभावः सनीति दिक् । प्रातिपदिकप्रकृतिकणिच्यप्येकार्थी भावः सुघट इत्यलम् ।

**( १ ) लौकिकविग्रह इति** । नित्याधिकारीयसमासे समासघटकपदानां व्यपेक्षाया अभावेन लौकिकवाक्याभावात् । एवं च वृत्तिवैकल्पिकबोधेन वृत्तिघटकपदस्वरूपा

## अथ समासान्तप्रकरणम् ॥

"ऋक्पूर" ॥ **तदन्तस्येति** । तद्वाचकधूः शब्दान्तस्येत्यर्थः । तु अक्षे समासार्थे सति नेति व्याख्यायेत तर्हि दृढधूरक्ष इत्यत्रैव स्यः- धूरित्यत्र । यदि त्वक्षे पूर्वपदे नेति व्याख्यायेत ततो ऽक्षधूरित्यत्रैव न तु दृढधूरक्ष इत्यत्र । तस्माद् व्याप्तिन्यायाच्चोक्तमेव ज्यायः । **समासान्तस्येति** । "येन विधिस्तदन्तस्य" इति सूत्रे "प्रयोजनं मस्वसृनप्तॄणां दीर्घविधौ" इति वार्तिके 'आपस्तिष्ठन्ति स्वाप' इति भा- ात्र प्रमाणमित्यवधेयम् । **प्रतीपं समीपमिति** । प्रतिकूलास्सङ्ग- आपो ऽस्मिन्निति विग्रहः । **समापो देवयजनमिति** । देवा तेऽस्मिन्निति व्युत्पत्त्या यज्ञभूमिः । समापशब्दस्य पुंस्त्वं लोकादि- ः । भाष्ये तु क्लीबमुदाह्रियते । **अवर्णान्ताद्वेति** । "द्व्यन्तः" इति ऽपर आह–ईत्वमनवर्णादिति वक्तव्यम् । इह मा भूत् । प्रापं पराप- भाष्योक्तेः । "गतिश्च" इति सूत्रे वद्विधिनस्भावाबीत्वस्वाङ्गादिस्वर- दोष इत्युपक्रम्य अबीत्वे प्रेपं परेपमिति भाष्योक्तेश्चेति भावः ।

"उदनोर्देशे" ॥ दीर्घोच्चारणमवग्रहार्थमित्याकरः । बह्वृचास्तु गोमान् गोभिरित्यादौ अनूपशब्दं नावगृह्णन्ति । अनुगता आपोऽस्मि- नूपो देशः । 'जलप्रायमनूपं स्यात्' इत्यमरः । **प्रतिसाममिति** । यीभावः, प्रादिसमासो, बहुव्रीहिर्वा । कृ(१)ष्णभूम इत्यादयो बहुव्री-

---

### अथ समासान्तप्रकरणम् ।

द्वाचकेति । **अक्षिसम्बधिधूर्वाचकेत्यर्थः** । भाष्ये त्विति । **अनेन विशेष्य- यलिङ्गत्वेऽस्य पुंस्त्वमसाध्विति समापो देवयजनमिति प्रयोगोऽसङ्गत सुचितम्** । गतिश्चेति सूत्रे इति । **"उपसर्गादृति" इति सूत्रेऽपि एतौ प्र-** । वद्विधीति । **क्रियायोगे उपसर्गत्वे उपसर्गाच्छन्दसि धात्वर्थे यदुक्तः संमुखं प्रापणमित्यादौ क्रियायोगाभावादुपसर्गत्वाभावे न दोष इ- ङ्क्योपसर्गग्रहणस्योपलक्षणत्वेन समाहितं तत्र भाष्ये इति बोध्यम्** ।

---

अथ समासान्तप्रकरणम् ।

। **पद्मनाभ इति** । पद्माकारा नाभिर्यस्येति गौणेन पद्मशब्देन सामानाधिकरण्याद्बहुव्रीहिः ।
यद्वा गड्वादित्वात्सप्तम्याः परनिपातः । एतेनोर्णनाभो व्याख्यातः । 'ङ्यापोः सञ्ज्ञाच्छन्दसोर्बहुलम" इति ह्रस्वो विशेषः । **गवाक्ष** । गावः किरणाः ।
"**अचतुर**" ॥ **निपात्यन्त इति** । निपातनफलं तु समासनिशेषः टिलोपादिकं च । तदाह–**आद्या इति** । **बहुव्रीहय इति** । हय एवेत्यर्थः । तेन नञ्तत्पुरुषे अचत्वार इत्येवेति भावः । **त्रिच- इति** । त्रयश्चत्वारो वेति विग्रहः । "संख्ययाव्यय" इति बहुव्री- "बहुव्रीहौ संख्येये" इति डचो ऽपवादो ऽच् । **अक्षिभ्रुवमि-** प्राण्यङ्गत्वादेकवत् । **ऊर्वष्ठीवमिति** । 'सक्थि क्लीबे पुमानूरु' । रः । जानूरुपर्वाष्ठीवदस्त्रियामिति च । **सरजः पङ्कजमिति** । तर्हि––

सरजसमपहाय केतकीनां प्रसवम् ।

ादि ।

सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु वीरुधां विरक्तः ॥

ति ?

प्रमाद एवायमित्याहुः । **गोष्ठे श्वेति** । एतेन सप्तमीतत्पुरुष एवेति ं दर्शयति । षष्ठीतत्पुरुषे तु गोष्ठश्वेत्येव । ब्रह्मवर्चसमित्यादौ षष्ठीत- ी । वर्चो दीप्तिः । पलं मांसमर्हतीति पल्यः मांसभोजी । तदीयं **पल्यवर्चसम्** । अवतमसमित्यादि । अवहीनं सन्ततं च तम इति वि-

---

प्रतिसामामितीति । **इत्यादिष्वित्यर्थः** । पद्माकारेति । **तत्त्वं च पद्माश्रयत्वेन कथंचिद् बोध्यम्** । यद्वेति । **पद्मं नाभौ यस्येति विग्रह इति भावः** । प्रमाद एवेति । **प्रसवशब्दस्य नपुंसकत्वमेवेति मते इदम्** । **पुंलिङ्गत्वं तु**

---

लोम्नः" इत्यत्र आमिति योगविभागात् सिद्धमेवेति केचित् ।
अन्येतु–योगविभागस्य भाष्येऽदर्शनात् उक्तवार्तिकोदाहरणानां पृषोदरादित्वात्सि-

**अन्धमिति** । गाढमिति फलितोऽर्थः । अत एव

ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसन्तमः ।

विष्वक् सन्तमसम् ॥

मरः ।

**"श्वसो वसीय"** ॥ **वसुशब्द इति** । एतेन अवस्शब्दादी-
अवसीय इति व्याचक्षाणा आकरविरोधादुपेक्ष्या इति ध्वनयति ।
**ीय इति** । तथा च श्रूयते । 'यः कामयेत वसीयान् स्याम्' इति
ान् यज्ञो वसीयान् भूयासम्' इति च । **श्वस्शब्द इति** । यद्य-
न्यत्र कालविशेषे वर्तते । तथापीह समासे उत्तरपदार्थभूतां प्रशंसामा-
विषयमाह—आशीर्विषयताया द्योतकोऽयमिति यावत् । एतच्च वृत्ति-
क्तम् । श्वस्शब्दस्येहार्थ एव नास्तीत्यपि सुवचम् । उत्तरपदार्थमा-
त्वं वाऽस्तु । उक्तं च पाणिनीयमतदर्पणे ।

अर्थं परपदस्येह श्वःशब्दः कालवाच्यपि ।

अभिधत्ते स्वभावेन तेनेमौ मङ्गलार्थकौ ॥

ति ।

**"अन्वव"** ॥ रह इत्यप्रकाशमुच्यते । अनुगतमवहीनं च रह इति
समासः, अनुगतं रहोऽस्मिन्नित्यादि बहुव्रीहिर्वा । तप्तमिव तप्तम् ।

परेणानधिगम्यं हि यद्रहो वन्हितप्तवत् ।

तप्तं च तद्रहश्चेति तप्तरहसं विदुः ॥

**"न पूजनात्"** ॥ **इतः प्रागिति** । 'प्राग्बहुव्रीहिग्रहणं कर्तव्यम्'
वार्तिकोक्तेरिति भावः । प्राचा तु बहुव्रीहौ सक्थ्यक्ष्णोरनिषेध इत्युक्तम् ।

---

वाचिप्रसवविशेषणत्वेन द्वितीयान्तमाद्यश्लोकेऽचं विनापि साध्वेव ।
ततम् । सर्वतो व्याप्तम् ।

वसुमान् यज्ञ इति । एवं च वसुमच्छब्दादीयसुनि वसीय इतीति श्रुत्या
यते । स्पष्टं चेदं तैत्तिरीयोपनिषदः शाङ्करभाष्ये तद्वार्तिके च । वसुम-
शब्दादीयसुनि अस्मादेव निपातनात् साध्विति पक्षान्तरमपि तत्र ।
यमिति । विषयभूतमित्यर्थः । आशीर्विषयताया इति । तेनाशीर्लिङन्तसमभि-
हारे एवास्य साधुत्वमिति भावः ।

इत्यादावित्यध्याहारेण वा योज्यम् । तेन सूक्ष्मी अत्यूक्ष्मी इत्यादिसिद्धम् ।

"**नञस्तत्पुरुषात्**" ॥ नञ इति षष्ठी ॥

इति समासान्तप्रकरणम् ।

## अथालुक्समासप्रकरणम् ॥

**स्तोकान्मुक्त इति** । समासप्रयोजनं तु स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिः । स्तोकान्मुक्तायाः स्तौकान्मुक्तेयः । इह "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इति समासशास्त्रे पठिता एव स्तोकादयो गृह्यन्त इत्याशयेनाह–**एवमिति** ।

"**ओजः सह**" ॥ कथं तर्हि 'सततनैशतमोवृतमन्यत' इति भारविः । अत्र दुर्घटवृत्तिकृत् । उत्तरपदाधिकारे तदन्तग्रहणं नास्ति किं तु केवलपदाधिकार एवेति । तन्न । भाष्ये पदाङ्गाधिकार इत्यत्र "इष्टकेषीका" इत्यादेः प्रयोजनत्वेनोदाहरणात् । यदपि हरदत्तादय आहुः । उत्तरपदाक्षिप्तेन पूर्वपदेनेह ओजःप्रभृतयो विशेष्यन्ते पूर्वपदभूतेभ्य ओजःप्रभृतिभ्य इति । न चात्र तमःशब्दः पूर्वपदं किं तर्हि सततनैशतमः शब्दः । यत्र तु तदन्तविधिरिष्यते तत्रोपात्तेनाक्षिप्तं विशेष्यते । यथा–इष्टकेषीकेत्यादाविति । तदपि चिन्त्यम् । भाष्यवार्तिकविरोधात् । विशेषणविशेष्यभावव्यवस्थार्थमेव पदाङ्गाधिकार इत्यादीनां प्रवृत्तिरिति कैयटवदेव स्वयमपि व्याख्यातत्वात् ।

---

"**बहुव्रीहौ सक्थ्यक्ष्णोः**" इत्यस्यैव तत्र ग्रहणमिति भावः ।

इति समासान्तप्रकरणम् ।

### अथालुक्समासप्रकरणम् ।

स्तौकान्मुक्तिरिति । **स्तोकशब्दादेर्वृद्धिः प्रयोजनं, 'निषेधाश्च बलीयांसः' इति न्यायेन तद्धितनिमित्तलुकोऽपि निवृत्तिरिति बोध्यम् । ऐकस्वर्यमपि समासफलं बोध्यम्** । समासशास्त्रे पठिता एवेति । **उत्तरपदाक्षिप्तसमासस्य प-**

...प्रयोगस्त्वित्थं समाधेयः । वृतिः वृतम् । नैशतमसो वृतमिति षष्ठीतत्पु-
। नपुंसके भावे क्तस्य योगे शेषविवक्षायां षष्ठी । ततः सततं नैशत-
यस्मिन्निति बहुव्रीहिः । यद्वा, वृतु वर्तने घञर्थे कविधानमिति भावः ।
...ाग्वत् ।

...रण इति वक्तव्यम्' इति । इह आत्मनश्चेत्यंशोऽपि वार्तिका-
...ो न तु सूत्रमिति केचिद् भ्राम्यन्ति तन्नादर्तव्यमिति भावः । तथा हि
उत्तरसूत्रे आत्मन इति न लभ्येत । "परस्य च" इति तदुत्तरसूत्रं च
...व स्यादिति स्पष्टमेव विवेकिनाम् । **बहुव्रीहिर्बोद्ध्य इति** । एकस्यापि
...ो भेदं परिकल्प्य वर्तिपदार्थत्वमन्यपदार्थत्वं च विवक्षणीयमिति भावः ।
**"वैयाकरणाख्यायाम्"** ॥ व्याकरणे भवा वैयाकरणी । "अणृ-

---

...रे तु तदारम्भेऽपि "पादस्य पदा" इति सूत्रेण दग्धपादोपहतामित्या-
...इत्यादेशवारणाय विशेष्यविशेषणभाववैपरीत्यस्य तत्र सूत्रे भाष्य ए-
...यणेनात्रापि तदाश्रयणे बाधकाभाव इत्याहुः ।
...ाम्यन्तीति । "आज्ञायिनि च आत्मनश्च पूरणे आत्म(१)नश्च पूरणे
...ख्यानं कर्त्तव्यम्" इति भाष्यं भ्रमे मूलम् । नलभ्येतेति । न च "सो'
...दौ" इत्यत्रोपसङ्ख्यातस्य 'काम्ये रोः' इत्यस्य "इणः ष" इत्यत्रानुवृ-
...ात्रापि वार्तिकैकदेशानुवृत्तिसम्भवः ।
...द्वा "परस्य च" इति "वैयाकरणाख्यायाम्" इत्यनेनैकसूत्रं, चेन परशब्द-
...न्द्वतया व्याख्यानेन चात्मशब्दस्य ग्रहणमितिवाच्यम् । क्लिष्टत्वात् ।
...त्रत्वस्य वृत्त्यादिविरुद्धत्वाच्च । विवेकिनामिति । "आत्मनश्च" इति सूत्रे
...ायिनि चेत्यनुवृत्तिप्रदर्शनार्थं भाष्ये सूत्रद्वयग्रहणम् । अत एव "आ-
...श्च" इति सूत्रे चः सार्थकः । वार्तिकव्याख्यानभाष्ये आत्मनश्चेत्यु-
...तु वार्त्तिकस्याज्ञायिनि चेत्येतत्साधारणत्वभ्रमव्यावृत्तये इति तेषां
...ः । भेदं परिकल्प्येति । आत्मत्वेन वर्तिपदार्थता । जनार्दनत्वेनान्यपद-
...त भावः ।

---

## अथालुक्समासः ।

(१) **आत्मनश्च पूरण इति** । पूरणप्रत्ययान्ते उत्तरपदे आत्मन्शब्दप्रकृतिकतृती-
अलुगितिवार्तिकार्थः । ननु 'उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्' इति परि-
...याः "हृदयस्य हृल्लेख" इति लेखग्रहणज्ञापितायाः सत्त्वात् तदन्तविध्यभावात् पूरणप्र-

गयनादिभ्यः" इत्यण् । सा चासावाख्या चेति कर्मधारयः । **आत्मनेभाषेति** । यद्यपीयमाख्याऽष्टाध्याय्यां न दृष्टा तथाऽपि वैयाकरणी भवत्येव । धातुसूत्रगणोणादिवाक्यात्मकं पञ्चप्रस्थानं व्याकरणमिति स्वीकारात् । अस्याश्च धातुपाठे दृष्टत्वात् ।

ननु प्रकृतिविकृतिभावविरहाद् रन्धनाय स्थालीतिवत् समासो न स्यादत आह—**योगविभागादिति** । एतच्च वृत्तिन्यासावनुसृत्योक्तम् । अलुग्विधिसामर्थ्यादित्यपीह सुवचम् ।

**"हृद्युभ्यां च"। हृदि स्पृगिति** । हृदयं दिवं च स्पृशतीति विग्रहः कर्मणोऽधिकरणत्वविवक्षायां सप्तमी । भाष्ये तु कर्मण्येव सप्तमीत्युक्तम् । अ-

---

अधिकरणत्वविवक्षयेति । **ग्रा(१)मे गच्छतीत्यादाविव फलसमानाधिकरणव्यापारस्य धात्वर्थत्वविवक्षया तस्य तत्त्वविवक्षेति बोद्धयम् । अन्यथा परत्वात्कर्मसञ्ज्ञया तस्या बाधः स्यात् । अधिकरणसञ्ज्ञां कर्मसञ्ज्ञा बाधते । गेहं प्रविशतीति यथेत्याकडारसूत्रे भाष्यात् । वस्तुतः फलस्य हृदयनिष्ठतया प्रतीतावेवास्य प्रयोगस्य साधुत्वमित्याह**—भाष्ये त्विति ।

---

(१) **ग्रामे गच्छतीत्यादाविति** । अत्रेदं तत्त्वम् । फलतावच्छेदकसम्बन्धेन यः फलाश्रयस्तदधिकरणम् । व्यापारतावच्छेदकसम्बन्धेन यः व्यापाराश्रयो भवति तदधिकरणम् एतदन्यतरस्मिन्नेवाधारपदस्य रूढत्वात् । पूर्वसूत्रे एतदर्थपरत्वस्य तत्र दृष्टत्वेनात्रसूत्रेऽपि तादृशार्थपर एव स्यात् । एतेन तत्र तव्यार्थकस्य सूत्रारम्भसामर्थ्याल्लाभेऽपि प्रकृते क्रियाधारपरत्वमेव स्यादिति न दोषः स्यादित्यपास्तमिति भावः । एतेन "आधारोऽधिकरणम्" इति सूत्रशेखरे यदुक्तं साक्षात् क्रियाधारस्य कर्तृकर्मसंज्ञाभ्यामेव बाधः स्यादिति आधारपदमत्र कर्मकर्त्राधारपरमित्यपास्तम् । कालिकादिसम्बन्धेन साक्षात् क्रियाधारस्यैव लाभात् । नहि तत्र कर्तृकर्मसंज्ञाप्राप्तिः । फलतावच्छेदकव्यापारतावच्छेदकान्यतरसम्बन्धेन फलव्यापारानधिकरणत्वात् ।

केचित्तु–आधारपदं फलतावच्छेदकव्यापारतावच्छेदकान्यतरसम्बन्धेन फलव्यापारान्यतराधिकरण एव रूढम् । तत्र च कर्तृकर्मसंज्ञाभ्यामेव बाधः स्यादिति कर्तृकर्माधिकरणमेवाधारपदेन लक्ष्यते इति शेखराशयं वर्णयन्ति इति । तन्न । तादृशमुख्यार्थपरस्याधारपदस्यादर्शनात् । तण्डुलो विक्लित्याधार इत्यादौ समवायस्य फलतानवच्छेदकत्वात् । प्रयोगभेदेन फलतावच्छेदकसम्बन्धभेदस्य व्यवस्थापितत्वेन समवायस्य प्रकृतवाक्यघटकधात्व-

लुग्विधिरेव ज्ञापक इति तदाशयः ।

**अप्सव्य इति** । दिगादित्वाद्यत् । "ओर्गुणः" । "वान्तो यि" । प्राचा तु यत्स्थाने जशब्दं पठित्वाऽप्सुज इत्युदाहृतम् । तदाकरविरोधादुपेक्ष्यम् । अप्सुज इति तु "हलदन्तात्"इत्येव सिद्धम् । **अप्सुमन्ताविति** । कारीर्यामाज्यभागौ । 'अप्स्वग्ने सधिष्टव' 'अप्सु मे सोमो अब्रवीत्' । इत्यनुवाक्ये । तत्र चाप्सुशब्दोऽस्ति ।

नन्वेवं प्रकृतिवदनुकरणमित्यतिदेशेन अप्सु इति सोः प्रत्ययात् तदन्तात् प्रथमाया अभावे मतुबेव दुर्लभः । अतिदेशाप्रवृत्तौ तु सोर्लुकः प्राप्तिरेव नास्तीति चेत् ? सत्यम् । अतिदेशस्य वैकल्पिकत्वान्नोक्तदोषद्वयमपि । वैकल्पिकत्वे प्रमाणं तु "यत्तदेतेभ्यः" इति सौत्रनिर्देश उक्तः । प्रकृतवार्तिकमपि तथेति ध्येयम् ।

यत्तु प्राचा मतिष्विति पठित्वा अप्सुमतिरित्युदाहृतम् । तद्भाष्यादौ न दृष्टम् । यत्तु वदन्ति मतुष्विति पाठे सप्तम्यन्तान्मतुपः कथं सम्भव इति चिन्त्यमिति । तदेव चिन्त्यम् । पाठान्तरस्यानाकरत्वात् मतुपः सम्भवस्योक्तत्वाच्च ।

**पश्यतोहर इति** । "षष्ठी चानादरे" इति षष्ठी । पश्यन्तमनादृत्य हरतीत्यर्थात् । **देवानामिति** । मूर्खा हि देवानां प्रीतिं जनयन्ति । देवपशुत्वात् । शुन इव शेफमस्य शुनःशेफः । शेफशब्दो हि अकारान्तोऽप्यस्ति । शीङो नीपादित्वादौणादिकः प्रत्ययः । तथा च मन्त्रः । 'यस्यामुशन्तः प्रहराम शेफम्' इति । एवं पुच्छलाङ्गूलाभ्यामपि बहुव्रीहिः । ऋषिविशे-

हलदन्तादित्येवेति । **इत्यपीत्यर्थः "तत्पुरुषे कृति" इत्यस्यापि नासङ्गहः ।** नोक्तदोषेति । **अनित्यत्वान्मतुपः सिद्धिस्तदाश्रयणाच्च लुकः प्राप्तिरिति भावः ।** तद्भाष्यादाविति । **दृश्यमानोऽपि भाष्ये तथा पाठोऽसांप्रदायिको हरदत्तविरोधादिति भावः ।** उक्तत्वाच्चेति । **एतत्सर्वं हरदत्तानुरोधेनोक्तमित्यन्यत्र विस्तरः ।**

मूर्खा हीति । **ब्रह्मज्ञानरहिता इत्यर्थः । ते हि पशुवद्देवानियम्यास्तदाह—** देवपशुत्वादिति ।

---

[cut-off line] ...षया एकत्वेऽपि कर्तृकर्माधारत्वेन विवक्षितार्थपरत्वमेव स्यादिति कर्तृकर्माधारत्वेन विव-

षाणामेताः सञ्ज्ञा बह्वृचब्राह्मणादौ प्रसिद्धाः।

"मातुः पितुर्भ्याम्" इति सूत्रे समास इत्यनुवर्त्तितम् । तस्य फलमाह-**असमासे त्विति**। इह पाक्षिकमपि षत्वं नेत्यर्थः ॥

इत्यलुक्समासः ॥

## अथ समासाश्रयविधिप्रकरणम् ।

**"घरूपचेलडिति"** । पचादौ टित्पठ्यते ङीबर्थः । **ब्राह्मणितरेति** । तसिलादिष्विति पुंवद्भावस्तु न । "जातेश्च" इति निषेधात् । एतेन पुंवद्भावं बाधित्वा परत्वाद् ह्रस्व इति व्याचक्षाणाः परास्ताः । **आमलकीतरेति** । आमलकीशब्दो हि वृक्षे नित्यस्त्रीलिङ्गः । एवं कुवलीशब्दः ।

**"नद्याः"** ॥ पूर्वसूत्रे श्रुतादन्यः शेषः स च द्विधेत्याह-**अङ्यन्तेति**। **निर्मूलमिति** ।

यत्तु वृत्तिकृतोक्तं पुंवद्भावोऽत्र पक्षे वक्तव्यः । श्रेयस्तरा । विद्वत्तरा। प्रकर्षयोगात् प्राक् स्त्रीत्वस्याविवक्षितत्वात् सिद्धमिति। अत्रेदं वक्तव्यम् । इह पुंवद्भाव इत्यादि मुनित्रयानुक्तत्वादप्रामाणिकम् । सूत्रकृता हि तसिलादिष्विति नित्य एव पुंवद्भाव उक्तः । न तु पाक्षिकः । भाष्यवार्त्तिकयोरपि नाधिकमुक्तम् । प्रमाणतामभ्युपेत्यापि ब्रूमः । कथमिह वचनं व्यज्यते—पुंवद्भावो यः प्राप्तः सोऽत्र पक्षे वक्तव्य इति, उत पुंवद्भाव एव वक्तव्य इति ?

---

पाक्षिकमपीति । **नित्यस्य प्राप्तिरेव न । व्यवधानात्** ॥

इत्यलुक्समासः ॥

### अथ समासाश्रयविधिप्रकरणम् ।

परास्ता इति । **निषेधसत्त्वेन पुंवत्त्वप्राप्तेरेवाभावादिति भावः । पट्वितरेत्यादौ तु परत्वादिति वक्तुमुचितम्** । नित्यस्त्रीलिङ्ग इति । **वृक्षजातिः स्त्रियामिति लिङ्गानुशासनसूत्रादिति भावः। आम्र इत्यादिदर्शनात्तस्य काचित्कत्वमित्यन्यत्** ।

**'शौनकश्चारलस्तिष्यफला त्वामलकी त्रिषु'**

इत्यमरात् तिष्यफलाख्यामलकीविशेषस्य त्रिलिङ्गत्वमपि । ...

आद्ये पुंवद्भावनिषेधार्थमिदं वचनं स्यात्। तथा च–इतः प्रागेव त्वदुदाहृतानि श्रेयसीतमा, विदुषीतमा, विदुषीतरा, इति दीर्घङीब्विशिष्टानि रूपाणि सिद्ध्यन्तु नाम। प्रकर्षयोगादित्यादित्वदीयग्रन्थस्त्वसङ्गत एव स्यात्। स हि उपसंख्यानं प्रत्याचष्टे इति न्यासकृताऽवतारितः। प्रत्याख्यानं च तस्य पुंवद्भावफलकत्वे सत्येव स्यात्। न तु तन्निवृत्तिफलकत्वे। वस्तुतस्तदपि न। ङ्याब्ग्रहणं तदन्तात्तद्धितविधानार्थमित्युक्तत्वात्। स्वार्थद्रव्यलिङ्गाद्यनन्तरमेव प्रियकुत्सनप्रकर्षादिविवक्षेति भाष्ये निर्णीतत्वाच्च। द्वितीयस्तु सम्भवेद्यदि तसिलादिमध्ये तरप्तमपौ न परिगण्येयाताम्। तौ तु सर्वैरेव परिगणितौ। दर्शनीयतरा दर्शनीयतमेति चोदाहृतम्। न च वृत्तिग्रन्थे विदुषीतमेत्यादिदीर्घोपन्यासः स्थितिप्रदर्शनपरो न तु त्रैरूप्यपर इति वाच्यम्। प्रकर्षयोगादिति ग्रन्थशेषविरोधात्। तस्मादसङ्गत एवायं वृत्तिग्रन्थ इति। एतच्च सर्वमिति मन्यत इति वदता हरदत्तेन ध्वनितम्। न्यासकारस्य तु इदमुपसंख्यानमिति भ्रमः। तत्प्रत्याख्यानं युक्तमिति भ्रमश्चास्त्येवेति तद्ग्रन्थदर्शिनां स्पष्टमेव। एवं स्थिते पक्षे पुंवद्भावो वक्तव्य इति प्रक्रियाग्रन्थः, न्यायसिद्धमिदमित्यादितद्व्याख्यातृग्रन्थश्च वृत्तिन्यासोक्तार्थानुवादो मूलशैथिल्यादनादर्तव्य इति दिक्।

**"पादस्य पद्"** ॥ पदेति सौत्रो विभक्तिलुक्।

**"ऋचः शे"** ॥ श इति शस्प्रत्ययस्येदमेकदेशानुकरणम्। **उद्मे-**

---

तदपि नेति। **प्रकर्षयोगात् प्रागित्यस्योक्तिसम्भवो नेत्यर्थः**। इति दिगिति। **दिगर्थस्तु यद्यपि विदुषीतरेति रूपासङ्गतिं शङ्कते**—पुंवद्भावोऽत्रेति। पक्षे। **ह्रस्वाभावपक्षे इत्यर्थः। तत्पक्षे पुंवद्भाव एवोदाहर्तुमुचितो न तु दीर्घ इति भावः। समाधत्ते**। प्रकर्षयोगादिति। **एवं तथा पूर्वं कर्माविवक्षयैव विवृत्तेरित्यादेः सिद्धौ ह्रस्वविकल्पविधानसामर्थ्यात्पक्षे दीर्घग्रहणम्। कृतपूर्वीकटमित्यादौ यथा पूर्वं कर्माविवक्षा पश्चात्तत्सम्बन्ध एवं प्रकृतेऽपि पूर्वं सामान्येनपुंसकाविवक्षां कृत्वा तत एव तरपि पश्चात्तदर्थविशिष्टस्त्रीत्वविवक्षा स्वार्थेत्यादेरपि यल्लिङ्गं पूर्वं विवक्षितं तत्कार्यमन्तरङ्गमि-**

**घ इति** । सादृश्यात्पुरुषस्येयं सञ्ज्ञा । **उदपेषमिति** । "स्नेहने पिष" इति णमुल् । **उदधिर्घट इति**। उदकं धीयतेऽस्मिन्निति विग्रहः । "कर्मण्यधिकरणे च" इति किप्रत्ययः । **उदमन्थ इति** । द्रवद्रव्यसंस्कृताः सक्तवो मन्थाः। "तृतीया" इति योगविभागात्समासः ।

"**ष्यङः संप्रसारणम्**" ॥ इह तत्पुरुष इत्यनेन पूर्वपदमुत्तरपदं च आक्षिप्यते इत्याशयेनाह–**पूर्वपदस्येति** । **उत्तरपदयोरिति च**। इहोत्तरपदेन पुत्रपती विशेष्येते न तु विपरीतं तेन कारीषगन्ध्यापरमपुत्र इ-

---

**वचनात्" इति शस्** । योगविभागादिति । **सुप्सुपेत्युचितम्** ।

आक्षिप्यते इति । **त(१)त्र पूर्वपदं ष्यङो विशेष्यं, तेन ष्यङन्तग्रहणम् । ष्यङ्मात्रस्य पूर्वपदत्वाभावादिति बोध्यम्** ।

---

## अथ समासाश्रयविधयः ।

(१) **पूर्वपदं ष्यङो विशेष्यमिति** । अत्र हि इदं तत्त्वम् "स्त्रीप्रत्यये चानुपसर्जनेन" इति परिभाषया तदादिविधिर्न भवति । परिभाषार्थस्तु स्त्रीप्रत्ययबोधकपदघटिते शास्त्रेऽनुपसर्जनस्येत्युपतिष्ठते । तद्वाक्ये तदादिविधिश्च न । उपसर्जनविषयकवाक्ये तु तदादिविधिर्भवत्येव । तथा च—अनुपसर्जनीभूतो यः ष्यङ् तदन्तं यत्पूर्वपदं तदवयवनिर्दिश्यमानस्य ष्यङः सम्प्रसारणम् इत्यनुपसर्जनविषयकस्य वाक्यार्थः । उपसर्जनविषयकस्य तु–ष्यङन्ततदादिरूपं यत् पूर्वपदम् तदवयवनिर्दिश्यमानस्य इत्याद्यर्थः । आद्यवाक्योदाहरणं परमकारीषगन्धीपुत्र इति । द्वितीयवाक्योदाहरणम् कनूलुबन्तकारीषगन्ध्याशब्दस्य पुत्रशब्देन समासे कारीषगन्धीपुत्र इति । अत्रोपसर्जनत्वम् स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वम् । अतिकारीषगन्ध्यापुत्र इत्यत्र स्वं ष्यङ् तदन्तपर्याप्तशक्तिनिरूपकोऽर्थः अतिक्रमणकर्ता तन्निष्ठविशेष्यतानिरूपितकारीषगन्ध्यापदार्थनिष्ठप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वं ष्यङ इत्युपसर्जनत्वात् ष्यङन्ततदादिपूर्वपदाभावेन न सम्प्रसारणम् । कनूलुबन्ते तु ष्यङ उपसर्जनत्वेऽपि ष्यङन्ततदादिरूपपूर्वपदत्वादुपसर्जनवाक्येन सम्प्रसारणसिद्धिः ।

ननु परमकारीषगन्धीपुत्र इत्यत्र परमपदोत्तरटापा ष्यङा च इत्युभाभ्यामप्येकस्यैव स्त्रीत्वस्य भानात् निरुक्तप्रकारतावच्छेदकस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वस्य ष्यङि सत्त्वेन तस्योपसर्जनत्वात्संप्रसारणानापत्तिरिति चेन्न । उभयनिष्ठस्त्रीत्वस्यैक्येऽपि तन्निष्ठावच्छेदकताया भेदात् निरुक्तप्रकारतानिरूपितायाः परमपदोत्तरटाप्प्रयोज्यावच्छेदकतायाः प्रयोजकत्वस्य

...तिप्रसङ्गः । **मालभारीति** । मालां बिभर्तीति ताच्छील्ये णिनिः । ...हारिष्विति पठन्ति ।

**"...कारे सत्यागदस्य"** ॥ सत्यङ्कारः समयकरणम् । अशपथेऽपि ...ङाचं बाधित्वा मुम् । अगदङ्कारो वैद्यः । अस्तुङ्कारोऽभ्युपगमः । अ-...तिङन्तप्रतिरूपकमव्ययम् । **धेनुम्भव्येति** । "भव्यगेय" इति कर्तरि ... । धेनुश्चासौ भव्या चेति विग्रहः । भाविष्यन्ती धेनुरित्यर्थः । गौतम-...तु स्नातकधर्मेषु अधेनुं धेनुभव्येति ब्रूयादिति प्रयुक्तं तत्रार्षत्वान्मु-...नेति तद्व्याख्यायां मिताक्षरायां हरदत्तः ।

**...ोकम्पृण इति** । पृणतिः पूरणकर्मेति हरदत्तः । प्रीणन इति तु ...एव । **अनभ्याशमित्य इति** । अभ्याशं समीपं तद्विरुद्धमन-...दूरम् । "एतिस्तुशास्वृ" इत्यादिना इणः क्यप् । **भ्राष्ट्रमिन्ध** ... कर्मण्यण् । घञन्तेन वा षष्ठीसमासः । **तिमिङ्गिल इति** । ...शेषः । गिरतेर्मूलविभुजादित्वात्कः । **गिलगिले चेति** । गिलं ...ति गिलगिल इति विग्रहे इदमारब्धम् । **नित्यमेवेति** । पूर्व-...धेनेति भावः ।

**...नज्योतिरिति** । समानं ज्योतिरस्येति बहुव्रीहिः । यस्मिन् ज्यो-...ादित्ये नक्षत्रे वा उपनिपतितं तदस्तमयपर्यन्तमनुवर्तमानमाशौचं ...ारित्युच्यते ।

**"...पृषोदरादीनि यथोपदिष्टम्"** ॥ निरुक्तादिशास्त्रसिद्धाना-...पदानाम् "उणादयो बहुलम्" इति सिद्धिः । अनेन तु समासपदाना-...विवेक इति हरदत्तः । वस्तुतस्तु समासविषयकमेवेदमिति न नियमः । ...शब्दयोरपि प्राचाङ्कारिकायामुदाहृतत्वात् । हन्तेः पचाद्यचि समागमः । ...चाद्यचि हकारसकारयोः स्थानव्यत्ययः । यदि तु, भवोदित्यादि-...ापि प्रकृतसूत्रोदाहरणतायां नाग्रहः किं तु नैरुक्तव्युत्पत्तिर-

---

...यकरणम् । **शपथकरणम्** । **सत्यङ्कारः** । **शपथकर्ता च** । वैद्य इति । ...**पक्षद्रव्यकरणं चेत्यपि बोद्धव्यम्** । अभ्युपगम इति । **तरकर्ता चेत्यपि** ... । अव्ययमिति । **तिङन्तानुकरणमित्यन्ये** ।

...त इति । **कैयटश्च** । पठ्यते एवेति । ...

नेकधेत्येतावन्मात्रे तदा हरदत्तोक्तविवेकोऽपि निर्बाध एवेति दिक् । **आकृतिगणोऽयमिति** । तेनान्यदपि सिद्ध्यति । यथा —

लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि ।
समो वा हिततततयोर्मांसस्य पचि युड्घञोः ॥

अन्तमिति शेषः । कृत्यप्रत्ययान्ते उत्तरपदेऽवश्यंशब्दस्यान्तं मकारं पुमाँल्लुम्पेत् । तथा कामशब्दे मनस्शब्दे च परे तुम्शब्दस्यान्तम् । तुमिति षष्ठ्यर्थे प्रथमा । युट्घञ्प्रत्ययपरो यः पच्धातुस्तस्मिन् परे मांसस्यान्तमकारं लुम्पेदित्यर्थः । अवश्यसेव्यः । गन्तुकामः । गन्तुमनाः । सहितः । संहितः । सततः । सन्ततः । मांस्पाचनम् । मांस्पाकः । इह संयोगान्तलोपाभावोऽपि निपातनाद्बोद्धव्यः । छन्दसि तु अयस्मयादित्वेनापि निर्वाह उक्तः । "अपरस्पराः क्रियासातत्ये" इति सूत्रे सातत्यनिर्देशेनैवैकदेशानुमतिद्वारा पूर्वाचार्यपठितोऽयं श्लोको ज्ञापित इत्याहुः ।

**"नहिवृति"** ॥ **एषु परेष्विति** । उत्तरपदेष्विति बोद्धव्यम् । उपनह्यत इत्युपानत् । संपदादित्वात्कर्मणि क्विप् । निवर्तते इति नीवृत् । प्रवर्षतीति प्रावृट् । मर्माणि विद्ध्यतीति मर्मावित् । रुच दीप्तौ । निरोचते इति नीरुक् । ऋतिं सहते ऋतीषट् "सहेः पृतनर्ताभ्याञ्च" इत्यत्र सहेरिति योगविभागादनुक्तसमुच्चयाद्वा सस्य षत्वमिति न्यासकारः । पूर्वपदादिति षत्वमिति हरदत्तः । परितनोतीति परीतत् । गमः क्वावित्यत्र गमादीनामिष्यत इति वचनात्तनोतेर्नलोपः । यत्तु वेदभाष्ये 'ऋतेन मित्रावरुणावृतावृधौ'

---

इत्यादिश्लोकस्यापीति ।

**भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात्**

**इत्यादिश्लो(१)कस्येत्यर्थः ।**

अनेकधेति । **उणादावेव प्रत्ययोऽन्यच्चेत्येकोऽपरोऽत्रोक्तस्तदा प्रत्ययातिरिक्तकार्यमेवोणादित्वादित्यर्थमित्यर्थः । तुंकामेत्यत्र तुमिति समोऽप्युपलक्षणम् । तेन सकामः समना इति सिद्धम्** । निपातनादिति । **पृषोदरादिषु विशिष्टपाठादित्यर्थः । समास एवेदम् । तेनावश्यं कर्तव्यमित्यादिसिद्धिः । मांसस्येत्याद्यंशः "पद्दन्" इति सूत्रस्थेन 'मांसपृतना' इत्यादिवार्तिकेनापि सूपपादोऽनभिधानात्सान्तत्वमित्यसाधु** । निर्वाह इति । **तेन कार्यविशेषे**

इति मन्त्रस्य व्याख्यायामुक्तम्–ऋतस्य वर्द्धयितारावित्यर्थेऽन्तर्भावितण्यर्थाद्वृधेः क्विप्, "नहिवृति" इत्यादिना पूर्वपदस्य दीर्घ इति। तच्चिन्त्यम्। प्रकृतसूत्रे वृधेरनुपात्तत्वात्। तस्मात् "अन्येषामपि" इति दीर्घस्तत्र बोद्धव्यः।

**"वनं पुरगा"**॥ व्यत्ययेन षष्ठ्याः स्थाने प्रथमेत्याह–**वनशब्दस्येति। विध्यर्थ इति**। असञ्ज्ञात्वेन "पूर्वपदात्सञ्ज्ञायाम्" इत्यस्याप्राप्तेरिति भावः। अत एवाह–**निपातनादिति**।

यत्तु व्याचक्षते। "हलदन्तात्" इति सप्तम्या अलुगिति, तन्नेति भावः। **प्रथमेति**। सप्तम्यर्थस्य प्रातिपदिकार्थेऽन्तर्भावादिति भावः। **निषाद इति**। निषीदत्यस्मिन् पापमिति निषादः पुलिन्दो मनुष्यजातिः। "हलश्च" इत्याधिकरणे घञ्। कथं तर्हि प्रतीहारो दौवारिकः।

अत्राहुः। प्रतीहारो द्वारम्। तात्स्थ्यात्ताच्छब्द्यमिति। **एकाचितीक इति**। शैषिकः कप्। **शुनो दन्तेत्यादि**। अत्र केचिद्दंष्ट्रेति ह्रस्वान्तं पठित्वा श्वादंष्ट्र इति बहुव्रीहावेवायं दीर्घ इत्याहुः। अन्ये तु दीर्घान्तमेव पठन्तस्तत्पुरुषस्याप्युदाहरणतामाहुः। **इह षादिति**। केचित्तु कार्श्येति तालव्यमध्यं पठन्ति तद्ग्रामादिकामिति भावः। **शिरीषवणामिति**। ननु यस्य फलमेव न पुष्पं स वनस्पतिः।

वानस्पत्यः फलं पुष्पात्तैरपुष्पाद्वनस्पतिः।

इत्यमरकोशात्। स च उदुम्बरादिः। शिरीषस्तु न तथा। तस्य पुष्पफलोभयसत्त्वात्तत्कथमिव णत्वमिति चेत्? सत्यम्। इह वनस्पतिशब्देन वृक्षमात्रमुपलक्ष्यते। अत्र च लिङ्गं "लुपि युक्तवत्" इति सूत्रे व्यक्तिवचने इति किम् शिरीषाणामदूरभवो ग्रामः शिरीषास्तस्य वनं शिरीषवनम्। वनस्पतित्वमतिदिश्यते ततश्च णत्वं स्यादिति भाष्यकारोक्तिः। **इरिकादिभ्य इति**। ओषधित्वात्प्राप्तिः। **क्षीरपाणा उशीनरा इति**। उशीनरशब्दो

---

व्याख्यायामिति। **तन्मन्त्रघटके ऋतावृधाविति पदे उक्तमित्यर्थः**।

तन्नेतीति। **असञ्ज्ञात्वात् "हलदन्ताद्" इत्यस्याप्राप्तेरित्यर्थः**। सप्तम्यर्थस्येति। **अत्र शब्दार्थस्य प्राधान्येऽपीति भावः**। कथमिति। **दौवारिके प्रतीहा-**

देशवाची तद्वासिष्वौपचारिकः । **गिरिनद्यादीनामिति** । सवक्तव्यमेतत् । सञ्ज्ञायां प्राप्ते असञ्ज्ञायामप्राप्ते उभयत्र विभाषेयम् । **माषवापि(१)णाविति**। "बहुलमाभीक्ष्ण्ये" इति णिनिः। **व्रीहिवापाणीति** । "कर्मण्यण्"। **उत्तरपदं यदिति** । अत्र(२) च व्याख्यानमेव शरणम्। प्राञ्चस्तु नुम्ग्रहणमिह ज्ञापकमित्याहुस्तद्दर्शयति । **अत एवेति** । ज्ञापकं शिथिलमिति ध्वनयति—**किं चेति**। **परिपक्वानीति** । अत्र "कुमति च" इति नित्यं णत्वं प्राप्तम्। **हरिमाणीति** । मनेर्ण्यन्तात्क्विप् । प्राक्सुबुत्पत्तेः समासात् नकारान्तमुत्तरपदम् । नान्तत्वान्ङीब् णत्वम् । **चतुरङ्गयोगेनेति** । चत्वार्यङ्गान्य(३)स्य गादिति बोद्ध्यम् । वक्तव्यमिति । **तत्पदघटितं वार्तिकमित्यर्थः** । चत्वार्यङ्गान्य-

---

(१) **माषवापिणाविति** । ननु माषान् वपतः तच्छीलौ पुरुषौ माषवापिणौ इत्यादौ "उत्तरपदत्वे चापदादिविधौ प्रतिषेधः" सत्त्वात् वापिन्नित्यस्योत्तरपदरूपप्रातिपदिकत्वाभावेन पूर्वपदेनोत्तरपदस्याक्षेपात् पूर्वपदस्थनिमित्तात्परस्योत्तरपदरूपप्रातिपदिकान्तस्थनकारस्य णत्वमिति णत्वविधायकस्य "प्रातिपदिकान्तनुम्विभक्तिषु च" इति सूत्रस्यार्थकरणेन णत्वं न स्यादिति चेन्न । उत्तरपदशब्दस्य समासचरमावयवे रूढत्वेन वापिन्नित्यस्य समासचरमावयवत्वेनोत्तरपदत्वाक्षतेर्णत्वासिद्धिः ।

(२) **अत्र चेति** । इत्थं तत्त्वम् । ननु पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तस्थनस्य णत्वमित्यर्थे गर्गभागिनी इत्यत्र णत्वं दुर्वारम् नकारस्य भगिन्निति प्रातिपदिकान्तस्थत्वात् इत्याशङ्क्य समाधानवार्तिकमवतारयति । उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वमिति । उत्तरपदरूपप्रातिपदिकान्तनकारस्यैव णत्वं भवतीत्यर्थः । तथा च उत्तरपदशब्दस्य समासचरमावयवे रूढत्वेनेहोत्तरपदं भगिनीशब्दो न तु भगिन्निति तस्य प्रातिपदिकत्वेऽप्युत्तरपदत्वाभावात् न णत्वापत्तिरिति । एतदभिप्रेत्यैव गर्गाणां भगिनीति मूले विग्रहो दर्शितः । उक्तवार्तिके ज्ञापकमाह—पूर्वपदाक्षिप्तोत्तरपदेन प्रातिपदिकस्य विशेषणादेवेत्यर्थः इत्याह—**अतएवेति** । अन्यथा अङ्गस्य नुम्विधानादस्याङ्गस्यैव भागत्वादुत्तरपदस्य तत्त्वाभावात् नुमुदाहरणे व्रीहिवापाणीत्यादौ "प्रातिपदिकान्त" इति णत्वोपपत्तौ प्रयोगानन्यथोपपत्त्या नुम्ग्रहणं व्यर्थं सज्ज्ञापयति पूर्ववार्तिकम् । वक्ष्यमाणप्रयोजनार्थनुम्ग्रहणमावश्यकमिति नात्र ज्ञापकम् इति विघटयति—**किञ्चेत्यादिना** । प्रहिण्वन्नित्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणमिति । अत्रापेरर्थः । तथा च णत्वार्थमेवेत्यर्थः । अयमाशयः । नुमुदाहरणे व्रीहिवापाणीत्यादौ अङ्गस्य नुम्विधानात् तस्याङ्गांशत्वेन "प्रातिपदिकान्त" इति णत्वप्राप्तिसम्भवः । प्रहिण्वन्नित्यत्र प्रहिणु इत्यस्य अप्रातिपदिकत्वेन "प्रातिपदिकान्त"

तेन योग इति विग्रहः। **अतद्धित इति**। व्यवधायकस्य पदस्य तद्धि-

स्येति। **न चोत्तरपदत्वे चेति निषेधात् कथमङ्गशब्दस्य पदत्वम्। प्रत्यास-**

---

ननु माषकुम्भस्य वापः चत्वारि अङ्गानि यस्य स तेन योग इति विग्रहे 'उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणप्रतिषेध' इति प्रत्ययलक्षणनिषेधात् कुम्भाङ्गशब्दयोः पदत्वाभावेन "पदव्यवायेऽपि" निषेधाप्राप्त्या णत्वापत्तिर्दुर्वारेति चेन्न। तदाह-शब्दरत्ने-**नचेत्यादिनेति**। उत्तरपदस्य कार्यित्वे एव तन्निषेधप्रवृत्तेः। अपदादिविधाविति-पर्युदासेन पदान्तविधाविव तत्प्रवृत्तेश्च। नचैवमपि माषकुम्भेनेत्यादेर्वापादिनिरूपितकारकत्वात् "गतिकारकोपपद" इति न्यायेन चापादिभ्यः सुबुत्पत्तेः प्राक्समासेन तेषां पदत्वं दुर्लभमिति सप्तमीसमासेन णत्वनिषेधासिद्धिरिति वाच्यम्। तस्यानित्यत्वेनात्र सुबुत्पत्त्यनन्तरमेव समासेनादोषात्।

नच पूर्वदण्डिप्रिय इत्यादौ दण्डिन्नित्यत्र नलोपार्थं "उत्तरपदत्वे"इति निषेधाय उत्तरपदं मध्यमत्वानाक्रान्तमिति विवक्ष्यते। तथाच—माषकुम्भवापेन चतुरङ्गयोगेनेत्यादौ कुम्भयोगयोः मध्यमत्वाक्रान्तत्वादुत्तरपदत्वेचेति निषेधाप्रवृत्त्या णत्वनिषेधस्य सूपपादत्वेन कार्यित्वनिषेधो विफल इति वाच्यम्। यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वम् मध्यमपदत्वमिति परिष्कारेणादोषात्। वैशिष्ट्यं च-स्वघटकार्थवदव्यवहितपूर्वत्वम् स्वघटकार्थवदव्यवहितोत्तरत्वम् स्वघटकत्वम् एतत्त्रितयसम्बन्धेन। यथाहि-पूर्वदण्डिप्रिय इत्यत्र पूर्व सु दण्डिन् सु प्रिय सु एतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता दण्डिन्नित्यस्य तद्वृत्तिघटकार्थवदव्यवहितपूर्वत्वस्य तद्वृत्तिघटकपूर्वाव्यवहितोत्तरत्वस्य तद्घटकत्वस्य सत्त्वात् दण्डिन्नित्यस्य निरुक्तमध्यमत्वाक्रान्तमेवेति न प्रत्ययलक्षणनिषेधः। माषकुम्भवापेनेत्यादौ तु वृत्तिद्वयम्। तत्र कुम्भपदे माष आम् कुम्भ सु इत्येतद्वृत्तिघटकाव्यवहितपूर्वत्वस्याभावान्न पूर्वोक्तवृत्तिविशिष्टत्वम्। माषकुम्भ अस् वाप इत्याकारकवृत्तिवैशिष्ट्यस्य कुम्भपदे निरुक्तोभयसम्बन्धेन सत्त्वेऽपि न तद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञाचिकीर्षितेति कुम्भेत्यत्र प्रत्ययलक्षणत्वार्थमुत्तरपदत्वे इति निषेधाप्रवृत्तये कार्यित्वनिवेश आवश्यकः। नचैवमपि 'अतद्धित' इति वार्तिकप्रत्याख्यानाय सप्तमीसमासः पदे यो व्यवाय इत्याकारकः स्वीकृतो भाष्ये। तथाच-माषकुम्भवापेन क्षीरपकुम्भेन इत्यत्र फलभेदवारणाय पदपदं पदत्वयोग्योपलक्षणमित्यवश्यं वक्तव्यम्। अन्यथा "गतिकारकोपपदानाम्"इति सुबुत्पत्तेः प्रागेव समासेन आद्योदाहरणे पदे परतो यो व्यवायस्तस्याभावेन अन्त्ये पदेन व्यवायस्याभावेनारम्भप्रत्याख्यानयोः फलभेदः स्यात्। तथाच-माषकुम्भवापेनेत्यत्र कुम्भेत्यस्य पदत्वयोग्यत्वस्य सत्त्वात् णत्वनिषेधसिध्या कार्यित्वनिवेशो विफल इति वाच्यम्। अटतीति अट् परमश्चासावट् इति परमाट् तस्मादाचारक्विबन्तात् क्विचिति तु तत्र इडभावे परमाट्टितिरित्यत्र ष्टुत्वनिषेधाय कार्यित्वनिवेशस्यावश्यकत्वात्। नचैवमपि यद्वृत्त्यारम्भकेति नोच्यते किन्तु सामान्यतः स्वघटकार्थवदव्यवहितपूर्वत्वं स्वघटकार्थवदव्यवहितोत्तरत्वम्

तश्चेत्परो न भवति तदा निषेध इत्यर्थः। **आर्द्रगोमयेणेति**। अत्र गोशब्दः पदम्। **पारस्कर इति**। पारङ्करोतीति विग्रहे "कृञो हेतुताच्छील्ये" इति टः। **किष्किन्धेति**। किङ्किन्दधातीति विग्रहे "आतोऽनुप-

---

द्योत्तरपदस्य कार्यित्व एव तत्प्रवृत्तेरित्यन्यत्र विस्तरः।

---

परमाट्तिरित्यादौ स्वघटकतिप्रत्ययाव्यवहितपूर्वत्वस्य स्वघटकपरमपदाव्यवहितोत्तरत्वस्य च सत्त्वान्मध्यमत्वमेवेति परमाड्तिरित्येव स्यान्नतु परमाट्तिरिति उत्तरपदत्वे इति निषेधाप्रवृत्तेः। तथाच कार्यित्वनिवेशो विफल इति वाच्यम्। परमलोम्निशयः परमलोम्निचरः इत्यादौ उत्तरपदत्वेति निषेधप्रवृत्तये निरुक्तोभयसम्बन्धेन यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञाचिकीर्षिता तद्वृत्तिविशिष्टत्वस्यावश्यकत्वात्। अन्यथा परमलोम्नित्यस्य मध्यमत्वाक्रान्तत्वेन निषेधप्रवृत्त्या नलोपो दुर्वारः स्यात्। पञ्चगवधन इत्यादौ पञ्चन् जस् गो जस् धन स् एतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञायां चिकीर्षितायाम् तद्वृत्तिघटकनव्यवहित पूर्वत्वस्य सत्वेऽपि तस्यानर्थकत्वेन तद्घटकार्थवद्धनाव्यवहितपूर्वत्वस्य च गोशब्देऽभावात् गोपदं मध्यमत्वानाक्रान्तमेवेति न पूर्वरूपापत्तिर्दोषः।

नच परमदण्डिप्रिय इत्यत्र परमदण्डिन्नित्यस्य निरुक्तमध्यमत्वानाक्रान्तत्वात्कथं नलोप इति वाच्यम्। परमदण्डप्रकृतिकसुपः प्रत्ययलक्षणेन तत्सिद्धेः। परमदण्डिन्नित्यस्य मध्यमत्वानाक्रान्तत्वेऽपि उत्तरपदत्वस्याभावात्। नचैवम् अत्रयो भृगवः इत्यादौ अत्रिशब्दात् षष्ट्यन्तादपत्येऽर्थे "इतश्चानिञः" इति ढकि तस्य "अत्रिभृगु" इति लुकि तस्माज्जसि "जसि च" इति गुणे- उत्तरपदत्वाभावात् 'उत्तरपद" इति निषेधाप्रवृत्त्या षष्ठ्याः प्रत्ययलक्षणेन पदान्तत्वेन पूर्वरूपापत्तिर्दुर्वारेति वाच्यम्। वार्तिके पदत्वे इत्यस्य पृथक्पदत्वेन उत्तरपदशब्दोपादानाभावेन केवलस्य उत्तर इति पदस्य समासचरमावयवे रूढत्वाभावेन वृत्तिचरमावयवत्वपरत्वमिति स्वीकारेणादोषात्। वृत्तिचरमावयवत्वञ्च यद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वम्। वैशिष्ट्यं च स्वघटकत्वम् स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्वमेतदुभयसम्बन्धेन। अत्रयो भृगव इत्यादौ स्वघटकत्वं व्यपदेशिवद्भावेनेति तत्रापि लक्षणसमन्वयः। यद्वृत्त्यारम्भकेत्युक्त्या परमलोम्निशाय इत्यादौ अर्थवन्ङिप्रत्ययाव्यवहितपूर्वत्वस्य सत्त्वेऽपि परम सु लोमन् सु इत्येतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञायाः चिकीर्षितत्वेन ङौ तद्वृत्तिघटकत्वस्याभावेन न लोमन्नित्यस्य वृत्तिचरमावयवत्वहानिः। द्वितीयसम्बन्धदानेन पूर्वदण्डिप्रिय इत्यत्र दण्डिन्नित्यस्य नोत्तरपदत्वम्। अर्थवदित्युक्त्या पञ्चगवधन इत्यादौ गो इत्यस्य नोत्तरत्वहानिः। पञ्चन् जस् गो जस् धन सु इत्येतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञायाश्चिकीर्षितत्वेऽपि तद्वृत्तिघटके टचि अव्यवहितत्वा-

सर्गे कः" । पूर्वस्य किमो मलोपः सुट् षत्वञ्च निपात्यते । रूढिशब्दाश्चैते कथंचिद्व्युत्पाद्याः । "तद्बृहतोः" इति गणसूत्रम् । **तादिति** । तलोपश्चेत्य-त्रेति भावः । चर्त्वेनेत्युपलक्षणम् । "झरोझरि" इति लोपस्यापि सुवचत्वात् । **दकारतकाराविति** । तद्बृहद्भ्यां यथासंख्यम्बोद्ध्यम् । **प्रायस्येति** ।

प्रायः पापं विनिर्दिष्टं चित्तं तस्य विशोधनम् ।

इति स्मरन्ति ।

**आकृतिगणोऽयमिति** । तेन परःशता इत्यादि सिद्धम् ।

अधिश्रयन्तीर्जनताः पराःशताः ।

इति माघः ।

शतात्परा इति विग्रहे "पञ्चमी" इति योगविभागात्समासः । राजदन्तादित्वात्परनिपातः । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' लोकाश्रयत्वाल्लिङ्गस्य विशेष्यनिघ्नता । पारस्करादित्वात्सुडिति दिक् ॥

**इति समासाश्रयविधयः ॥**

---

# अथ तद्धितेषु साधारणप्रत्ययप्रकरणम् ।

"**समर्थानाम्**" ननु प्रकृतसूत्रे एकार्थीभावरूपं सामर्थ्यं ग्रहीतुं नोचितम् । "समर्थः पदविधिः" इति परिभाषया गतार्थत्वाद् । "घकालतनेषु" इति अलु-

---

पञ्चमी(१)ति योगविभागादिति । **सुप्सुपेतीत्यन्ये** ॥

इति समासाश्रयविधयः ॥

---

## अथ तद्धितेषु साधारणप्रत्ययप्रकरणम् ।

"समार्थानाम्" । अलुग्विधानाद्धीति । **तेन हि स्वार्थे परिपूर्णस्यैव पदान्तरसंबन्ध इति बोद्ध्यत इति सुबन्तादुत्पत्तिः । कुत्सित इति सूत्रभाष्योक्तरी-**

---

पूर्वमेवावोचाम । अतएव परमदण्डिनावित्यादौ 'उत्तरपदत्वे' इति निषेधान्ङ्मुणोति भाष्यं सगच्छत इति दिक् ।

(१) **पञ्चमीति योगविभागादिति** । अस्य योगविभागस्य भाष्ये क्वाचित्कत्व-

ग्विधानाद्धि सुबन्तात्तद्धितोत्पत्तिः । तथा च (१)पदविधित्वं स्पष्टमेव । अत आह—**सामर्थ्यमिति । कृतेत्यादि** । अस्य फलं तु "तस्यापत्यम्" इति सूत्रे मूल एव स्फुटीभविष्यति । इह समर्थात्प्रथमा(२)दिति वक्तुंयुक्तम् । महोत्सर्गानाह—

**"प्राग्दीव्य(३)तोण्"। "अश्वपत्यादिभ्यश्च"। प्राग्दीव्यतीयेष्विति** । दीव्यतः प्राक् प्राग्दीव्यत् । "अपपरिबहिरञ्चवः पञ्चम्या" इत्यव्ययीभावइत्याहुः । प्राग्दीव्यतमिति तु उचितम् । "झयः" इति टच्प्रवृत्तेः । ततो भवार्थे वृद्धाच्छः । त्यप् तु न । अमेहेत्यादिपरिगणनात् । अव्ययीभावस्या-

---

त्या तत्सिद्धिरिति भावः । किं च तत्संबन्ध्यपत्यमित्यर्थे प्रत्यय इत्यादिरीत्या तस्यापत्यमित्यादेर्वाक्यार्थ इति संबन्धादिबोधनार्थं विभक्त्युत्पत्तिरावश्यकीति दिक् ।

उचितमिति । "झयः" इत्यस्य वैकल्पिकत्वे ऽपि भावानुष्ठाने धर्माधिक्यादुचितमित्यर्थः । अतएव दीव्यादित्ययुक्तमिति नोक्तम् । तान्ताच्छे अव्ययानाम्भमात्रे इति टिलोपवारणार्थन्तस्यानित्यत्वाश्रयणे क्लेशः स्यादित्य-

---

## अथ तद्धितेष्वपत्याधिकारप्रकरणम् ।

(१) **पदविधित्वम् इति** । पदोद्देश्यकत्वम् पदविधित्वम् । अत्र हि पदसहचरितोऽपि पदविधिशब्देन गृह्यते । अत एव सन्नन्तादावेकार्थीभावः ।

वस्तु तस्तु—पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वम् पदविधित्वम् । तच्च कृत्प्रत्ययविधायके तद्धितप्रत्ययविधायके समाससंज्ञाविधायके सनादिविधायके चास्ति । तत्र कृत्तद्धितसमासान्ते त्रयाणां पदसंज्ञाप्रयोजकसुप्रत्ययोत्पत्तिप्रयोजकप्रातिपदिकसंज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदककृत्वतद्धितत्वसमासत्वान्यतमावच्छिन्न सम्पादकत्वात् । सनादिविधायकस्य च पदसंज्ञाप्रयोजकतिङ्प्रत्ययोत्पत्तिप्रयोजकधातुसंज्ञाविधायक "सनाद्यन्ताधातवः" इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकसन्त्वाद्यवच्छिन्नसंपादकत्वात् । इत्थमेव "समासेऽङ्गुलेसङ्गः" इत्यत्रत्यसमासग्रहणस्य "पदान्ताद्वा" इति सूत्रस्थान्तग्रहणस्य च चारितार्थ्यम् । "ओत्वाष्ठयोः" इत्यादौ यङादिविधौ ण्वुल्विधौ स्वार्थिकतद्धितविधौ च पदत्वेन सुबन्तत्वेन च साक्षादुद्देश्यताकत्वस्याभावेन समर्थपरिभाषानुपस्थितेरिति संक्षेपः ।

२ **प्रथमादिति** । सूत्रे समर्थानामिति निर्धारणे षष्ठी समर्थानाम्मध्ये प्रथमादित्यर्थः । तत्पत्रेष प्रथमोच्चारितशब्दप्रतिपाद्यत्वञ्च प्रथमत्वम बोध्यम ।

प्रयोजनं लुङ्मुखस्वरोपचारा इति परिगणनाच्च ।
अचामादेरिति निर्धा(१)रणे षष्ठी । तेनार्थसिद्धमाह—**अच इति ।**
ऽञ्णिति" इति सूत्रादच इत्यस्यानुवृत्तिरपीह सुवचा ।
**ग्रामादिकमेवेति** । यद्यपि चातुर्वर्ण्यादेराकृतिगणत्वात् ष्यञा
त् सूपपादं तथापि हरदत्तग्रन्थानुरोधादेवमुक्तम् ।
**"दित्यदित्या"** । पूर्वं पतिशब्दस्योत्तरपदशब्देन बहुव्रीहिं कृत्वा
दिभिर्द्वन्द्वः कार्य्य इति व्याचष्टे—**दित्यादिभ्यः पत्युत्तरपदा-**
**न्ते** । पत्यन्तादिति तु नोक्तम् । बहुच्पूर्वादपि प्रसङ्गात् । **दैत्य इति ।**
इतेर्ण्यप्रत्ययो देवताद्यर्थे सावकाशः । अपत्ये तु परत्वात् "इतश्चानिञः"
क् स्यात् । सत्यम् । पठ्यते तत्र पूर्वविप्रतिषेधः । 'ण्यादयोऽर्थ-
लक्षणादणपवादात् पूर्वविप्रतिषिद्धम्' इति । अर्थविशेषे किम् ? औ-
त् । उष्ट्रपतिर्नाम पत्रम् । "तस्येदम्" "पत्राध्वर्युपरिषदश्च" इत्यञ् ।
कथं दैतेय इति ? अत्राहुः—दितिशब्दात् "कृदिकारादक्तिन" इति
कृते स्त्रीभ्यो ढक् । ण्यस्तु न लिङ्गविशिष्टपरिभाषाया अनित्य-

---

चितत्वं बोध्यम् । परिगणनाच्चेति । **इयमभ्युच्चययुक्तिः । भाष्ये तत्प्र-**
**ानात् ।**
वमुक्तमिति । **ष्यञि नपुंसकत्वापत्तिः स्वरे भेदश्चेति हरदत्ताशय**
**ावः ।**
रिषदश्चेत्यञिति । **न च पत्राद् वाह्ये इत्युक्तेरयमप्यर्थविशेषलक्षण इति**
**म् । इदमिति सामान्यशब्देन तद्विशेषसङ्ग्रहात् । विशेषलक्षणप्र-**
**ं विशेषशब्दोपादानेन बोधितार्थकप्रत्ययत्वमिति भावः ।** दितिशब्दा-
**क्तिजन्ता(२)दिति शेषः । एवमदितिरपि ।** ङीषि कृते इति । **क्तिजन्ता-**

---

**निर्धारणे षष्ठी**—स्वार्थसमुदायस्य स्वघटकत्वम् स्वघटकाद्यजितरयावदजवृ-
वत्वम् इत्येतदुभयसम्बन्धेनाचि स्वघटकवृत्तित्वम् । स्वघटकाद्यजितरयावदजवृत्तित्वम्
यसम्बन्धेनादौ वान्वय इति ध्येयम् ।

**क्तिजन्तादिति** । वस्तुतस्तु ण्यादीनां पूर्वविप्रतिषेधेन पराणपवादबाधकत्वान्ङी-
न्ताभ्यामपि लिङ्गविशिष्टपरिभाषया ण्यस्य प्राप्तेर्दैतेयादितेयौ असाधू न च लिङ् बि-

त्वादिति । **आदित्य इति ।** आदित्यशब्दात् ण्यप्रत्यये "यस्येति" लोपे "हलो यमाम्" इति यलोपः। न चाल्लोपस्य स्थानिवद्भावः " न पदान्त" इति यलोपे तन्निषेधात् । **काशिकायामिति ।** हरदत्तमाधवादिग्रन्थे ऽप्येवम् । तथा च प्रयोगः—'नाप्नुयाम शतशो याम्याः पुनर्यातना' इति । भाष्ये तु नैतद् दृष्टम् । तत्र ष्यञा प्रयोगो निर्वाह्यः । **बहिष इति ।** टिलोपवचनम् 'अव्ययानां भमात्रे' इत्यस्यानित्यत्वज्ञापनार्थम् । तेनारातीय इत्यादि सिद्धम् । ण्ये प्रकृते यञ्वचनमाद्युदात्तार्थम् । प्राचो ग्रन्थे तु यण्चेति पठ्यते तदनाकरम् । **अश्वत्थाम इति ।** भाष्योदाहरणादेव तदन्तविधिः । अन्यथा बलवाचिनः स्थामन्शब्दस्य केवलस्यापत्येन योगाभावेऽपि जातादिष्वेव विधिः स्यात् । अश्वस्येव स्थाम यस्येति बहुव्रीहौ पृषोदरादित्वात् सस्य तः । **गोरिति ।** न केवलमपत्य एव किं तु सर्वेषु प्राग्दीव्यतीयेषु । **गव्यमिति ।** गवि भवङ्गोरिदङ्गोर्देवताऽस्येत्यादिरर्थः । अनेन हि गव्यमिति जैमिनीयसूत्रे विद्यमानं दूषयन्तो वार्त्तिककाराः समाहिताः । केचित्तु प्राग्दीव्यतीयेभ्यो ऽन्यत्राप्यर्थे अयं यदिति व्याचक्षणा गवा चरति गव्य इत्याद्यप्याहुः । **गोरूप्यमित्यादि ।** "हेतुमनुष्येभ्यो ऽन्यतरस्यां रूप्यः" "मयट् च" इति रूप्यमयटौ ।

**"उत्सादिभ्योऽञ्"** ॥ अणस्तदपवादानामिञादीनां चापवादोऽयम् । इह पठ्यते 'बष्कयासे' असे असमासे । पूर्वाचार्यसञ्ज्ञेयम् ।

---

**भ्यामिति शेषः** । न पदान्तेति । **'पूर्वत्रासिद्धे न' इति निषेधोऽप्यत्र बोध्यः ।** निर्वाह्य इति । **ष्यञः षित्त्वे ऽप्यजादिपाठादिति भावः । स्त्रीत्वं तु 'लिङ्गमशिष्यं लोकाश्रयत्वात्' इति न्यायेन बोद्धव्यम् । वस्तुतस्तु यथोऽपि प्रागुपपादितहरदत्तादिरीत्या प्रमाद एवेति तत्त्वम् । याम्याः शंसन्तीति वैदिकप्रयोगनिर्वाहस्तु छान्दसत्वादित्यन्ये** । आहुरिति । **युक्तं चैतत् । भाष्ये सर्वत्र 'गोरजादिप्रसङ्गे यत्' इत्युक्तेः ।**

अपवाद इति । **बाधक इत्यर्थः । तदपवादेञादीनां ण्यादयो ऽर्थविशे-**

---

खल्वपि साकल्येन परिगणिता इति भाष्योक्तेरन्यत्रामित्यत्वे मानाभावाच्चेति । नच पत्य-

बष्कयस्यापत्यं बाष्कयः। 'असे' किम्? गौबष्कयिः। 'असे' इत्येतदेवेह तदन्तविधिं ज्ञापयति। तेन अधेनूनां समूहः आधेनव इति सिद्ध्यति। धेनुशब्दस्येह पाठात्। न चैवं धैनुकं गौधेनुकं च न सिद्ध्येदिति वाच्यम्। धेनुरनञ् इकमुत्पादयतीति विशेषवचनस्य भाष्ये आपिशलिमतत्वेनोदाहृतत्वात्। इकमिति। ठकमित्यर्थ इति कैयटः।

**'अग्निकलिभ्याम्' इति**। अयमर्थः—सूत्रकृता "सा ऽस्य देवता" इत्यधिकारे "अग्नेर्ढक्" इति सूत्रितं "दृष्टं साम" इत्यधिकारे 'कलेर्ढक्' इति वार्तिककृता पूरितम्। तदिदं सूत्रद्वयमपनीय "प्राग्दीव्यत" इति प्रकरणे "अग्निकलिभ्यां ढक्" इति पाठ्यम्। तेन अग्नेरपत्यम्, अग्निना दृष्टम् साम, अग्नौ भवम्, अग्नेरागतः, अग्नेः स्वं वा, आग्नेयं कालेयमिति सिद्धम्। एतेन मीमांसकैर्यदुक्तं कलेर्ढगिति पाणिनीयसूत्रमपार्थकमित्यादि, तत्सर्वमवैयाकरणमीमांसकसन्तोषार्थमिति प्रपञ्चितं शब्दकौस्तुभे।

**इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः।**

**"स्त्रीपुंसाभ्याम्"**। प्रागित्यनुवर्तते। **स्त्रैण इति**। स्त्रीषु भवः, स्त्रीभिश्चरति, स्त्रीभ्यो हितः, इत्यादि। **वत्यर्थे इति**। सामान्यापेक्षं ज्ञापकमिति भावः। अत एवोदाहरति-**स्त्रीवदिति**। कथं तर्हि त्वतलौ स्त्रीत्वं स्त्रीता पुँस्त्वं पुँस्तेति। "आ च त्वात्" इति चकारादिति वक्ष्यते।

**"द्विगोर्लुगनपत्ये"**। द्विगोरिति षष्ठी। तदर्थश्च हेतुत्वम्। तच्च

---

षलक्षणादिति पूर्वविप्रतिषेधेन बाधक इति भावः। धेनुरनञित्यत्र चानञ इत्युक्तेर्नञ्पूर्वे न ठगिति बोध्यम्। धेनोः कादेशत्वेनेकामित्यनुचितमत आह—ठकमित्यर्थ इति कैयट इति। "तदधीत" इति प्रकरणे इति शेषः।

सूत्रद्वयमिति। विद्यालक्षणसूत्रान्तादिति वार्तिके वार्तिकसूत्रिक इति भाष्योदाहरणात् "सूत्राच्च कोपधात्" इति सूत्रे संख्याप्रकृतेः सूत्रवाचकादिति वाच्यम्, यथा ऽष्टक इति, नेह माहावार्तिक इति भाष्याच्च त्वत-

रथन्तरसामत्वादेरिव भाविनोऽपि बुद्ध्या ऽध्यवसायात् । तदेतदाह—**द्विगोर्निमित्तमिति । अजादिरिति ।** एतच्चोत्तरसूत्रादचीत्यस्यापकर्षाल्लभ्यते । वाग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणेन वा ।

**"गोत्रे ऽलुगचि"** । गोत्रे किम् ? "यस्कादिभ्यो गोत्रे" इति प्रकरणेन यस्य प्राप्तं तस्यैवालुग्यथा स्यात् । नेह—कुवलस्येदं कौवलम् । बादरम् । विकारार्थस्याञो ऽन्यलुक् माभूत् ।

---

व्यानन्तर्यसम्बन्धः । पञ्चकपालस्य पुरोडाशस्येदं पाञ्चकपालमित्यादावतिप्रसङ्गादिति भावः । रथन्तरसामत्वादेरिति । 'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इति श्रुताविति भावः । नन्वचीत्यपकर्षे द्विरथ इत्यत्र "तस्येदम्" इत्यधिकारविहितयतो लुङ् न स्यात् । न च इष्टापत्तिः "येन विधिः" "तदर्हति" इति सूत्रस्थभाष्यविरोधादत आह—वाग्रहणमिति । "समर्थानाम्" इति सूत्रस्थमित्यर्थः । तेन कस्यचिदनजादेरपि लुकिसिद्धिरिति भावः । अग्रे तु न सम्बन्धः । 'फक्फिञोः" इति सूत्रेऽन्यतरस्याङ्ग्रहणात् । वस्तुतोऽचीति नापकृष्यते । अनभिधानान्नातिप्रसङ्ग इति तत्त्वम् ।

तस्यैवेति । अत्र गोत्रप्रत्ययस्यान्यलुकोऽसम्भवो बीजम् । स चोपपादयिष्यते । गोत्रे इत्यस्य फलमाह—कुवलस्येति । अत्र "फले लुक्" । स च न गोत्रप्रत्यय इति स्पष्टम् । तस्यैवालुग्यथा स्यादिति । गोत्रे इतीत्युक्तिस्तत्सत्त्वे एतदर्थलाभ इति एतन्मात्रेणैवेति बोध्यम् । तद्राजस्येत्यतोऽत्र बहुष्वित्यनुवृत्तेस्तदप्येतत्प्रकरणस्थमिति बोध्यम् । अत एव "जनपदशब्दात् क्षत्रियादञ्" इति सूत्रे तद्राजलुकोऽप्ययमलुगुक्तः । यत्तु "गोत्रस्त्रियाः" इति सूत्रे णस्य णित्वं किमर्थम् । वतण्डस्य गोत्रापत्यं स्त्री "वतण्डाच्च" इति विहितयञो "लुक् स्त्रियाम्" इति लुकि शार्ङ्गरवादित्वान् ङीन् । तस्या अपत्यं वातण्डो जाल्म इत्यादौ वृद्ध्यर्थम । न च "गोत्रेऽलुगचि" इति लुक्प्रतिषेधः । ईकारेण व्यवधानादित्युक्त्वा तन्न, किङ्कारणम् ? "भस्याढे" इति पुंवद्भावाच्च इत्युक्तम् । तत्त्वेकदेश्युक्तिः । पुंवत्त्वेन ङीन इव लुकोऽपि निवृत्तेरिति तन्नात्र बाधकम् । यद्वा तन्नेत्यस्य तत्प्रयोजनं न । पुंवद्भावेन ङीन्लुकोर्निवृत्तिसिद्धेरित्यर्थ इति न तद्विरोधः । यदपि "वा

"यूनि लुक्" । इह 'द्विगोर्लुगनपत्येऽचि, यूनि, गोत्रे न' इत्येव सूत्र्यताम् । तथा च लुगलुग्ग्रहणं शक्यमकर्तुम् । अजादाविति किम् ? । ग्लौचुकायनरूप्यम् । प्राग्दीव्यतीये किम् ? "तस्मै हितं" ग्लौचुकायनीयम् ।

ननु उपगु अ इति स्थिते ओर्गुणं बाधित्वा परत्वाद् "अचो ञ्णिति" इति वृद्ध्या भाव्यम् । गुणस्य तु पिचव्य इत्यादिरवकाशः । किं च कृते गुणे ऽवादेशे च "अत उपधायाः" इति वृद्ध्या भाव्यं तत्राह—**आदिवृद्धिरिति** । परत्वादिति भावः । अन्त्योपधावृद्ध्योरवकाशः–गौः, पाचकः । आदिवृद्धेरवकाशः–सुश्रुत्, सौश्रुतः । औपगवः, त्वाष्ट्रः, जागत इत्यादौ उभयप्रसङ्गे परत्वादादिवृद्धिरेव भवति । न च पुनःप्रसङ्गविज्ञानं, सकृद्गतिन्यायाश्रयणात् । अत्र च ज्ञापकमनुशतिकादिषु पुष्करसच्छब्दस्य पाठः । अन्यथा उपधावृद्ध्या पौष्करसादेः सिद्धत्वादुत्तरपदवृद्ध्यर्थस्तत्र पाठो ऽनर्थकः स्यात् ।

अकृतेति परिभाषायाश्च समर्थग्रहणमेव ज्ञापकम् । तद्धि परिनिष्ठितपरमित्युक्तम् । परिनिष्ठितत्वं च ङ्याप्प्रातिपदिकांश एव न तु सुब्विशिष्ट इत्यवधेयम् । तेन औपगवः दण्डिमानित्यादि सिद्धम् । "अश्विमानण्" इति सौत्रप्रयोगश्चेह लिङ्गम् ।

---

क्तम् । तस्यायं भावः । समावेशे द्वितीयाध्यायस्थलुङ्मात्रस्य मध्येऽपवादन्यायेनायमलुक् स्यात् । असमावेशे तु युवप्रत्ययविषये ऽस्याप्रवृत्तेस्तेन न्यायेन भूम्नि प्राप्तस्येत्यर्थलाभ इति न तद्विरोधो लेशतोऽप्यस्माकमिति दिक् ।

इहेति । द्विगोर्लुगनपत्य इत्युत्तरम् अचि, यूनि, फक्फिञोरन्यतरस्यां, गोत्रे न, इति कार्यमित्यर्थः । एतेनैवं न्यासे द्विरथा इत्यसिद्धिरित्यपास्तम् । ननु द्वयोः सावकाशयोरेकत्र वृक्षेभ्य इत्यत्र दीर्घैत्वयोरिवैकस्य द्विकार्ययोगमूलकेनाऽसम्भवेन केवलेनासम्भवेन वा विप्रतिषेध इति "इको गुणवृद्धी" इत्यादिषु भाष्ये स्पष्टम् । एवं च प्रकृते न तस्य विषयो ऽत आह–अत्र च ज्ञापकमिति । एवं च ज्ञापकादेव बाध्यबाधकभाव इति भावः । आदिवृद्धिप्राप्तिविषये तद्बाधो ज्ञाप्यते । अत एव व्यापदि भवं वैयाप- [illegible]

यदि तु नङो ङित्करणेनाकृतव्यूहपरिभाषा ज्ञाप्यते । पामादिगणे विष्वगित्युत्तरपदलोपश्चाकृतसन्धेरित्यत्राकृतसन्धिग्रहणेन परिनिष्ठितात्तद्धितोत्पत्तिस्तर्हि समर्थग्रहणं शक्यमकर्तुम् ।

ननु समासस्तद्धितेन नित्यं बाद्ध्येत । न च तद्धितस्य वैकल्पिकत्वात् पक्षे सोऽपीति वाच्यम् । यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्तत इति "पारेमद्ध्ये षष्ठ्या वा" इति

---

त्वफलं तु शालीयसिद्धिः । अन्यथैकादेशात् प्राक् "यस्येति" लोपे शालशब्दाकारश्रवणापत्तिः । श्रविष्ठासु जातः श्रविष्ठ इत्यादौ अन्तरङ्गानपीति न्यायादेकादेशो न । अत एवाकारश्रवणम् । तद्विषयतद्धितोऽपि ततः प्रागेव । एतद्बलादेव तद्विषये समर्थादित्यस्यानुपस्थितिः । उपगोरित्यत्र तु गुणोत्तरं लोपे ओसित्यस्य निवृत्तौ औपगवासिद्धिः । दण्डमानित्यापत्तिश्चेति भावः ।

नङ इति । तद् ङित्त्वं हि विश्न इत्यत्र गुणनिषेधार्थम् । छस्य विनाशोन्मुखत्वेन तुगभावे हि गुणप्राप्तिरिति तस्य तज्ज्ञापकता बोद्ध्या । शक्यमकर्तुमिति । यदि तथा ज्ञापकं तदा ऽकर्तुं शक्यमित्यर्थः । यदि तु तत्राकृतसन्धेरित्युक्त्या तत्राकृतसन्धेरेव अन्यत्र तु अनियम इत्यर्थस्तदा परिनिष्ठितादेवेत्यर्थमावश्यकं तदिति बोद्ध्यम् । 'अकृतव्यूहपरिभाषायाः' तु न फलम् । सेदुष इत्यादौ पदावधिके ऽन्वाख्याने सद्‌स् असिति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपद(१)विधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धेः । स्पष्टं

---

(१) प्रतिपदविधित्वेनेति । नचेटोऽपि "वस्वेकाजाद्धसाम्" इति वसुशब्दमुच्चार्यविहितत्वेन प्रतिपदविधित्वमुभयोः सममिति वाच्यम् । प्राप्तौ इत्यस्याग्रे पूर्वं किं कर्तव्यमिति विचारः 'परंतु' इति ग्रन्थशेषं पूरयित्वा सद् वस् अस् इति दशायाम् कृतद्विर्वचनैकाचोऽभावेन "वस्वेकाच" इति शास्त्राप्राप्त्या द्वित्वादितः पूर्वमेव प्रतिपदोक्तत्वेन सम्प्रसारणे इति ग्रन्थयोजनेत्यदोषात् ।

परेतु—"वस्वेकाच्" इत्यत्रवलीत्यनुवृत्त्या तत्सामर्थ्येन संप्रसारणप्रवृत्तिसम्भावनायामिटोऽप्राप्तिः । अतएव वलदित्वाभावादिटः प्राप्तिरेव नेति मूलोक्तिः संगच्छत इति वदन्ति ।

अन्येतु—प्रतिपदविधित्वेनेत्येस्येट्संप्रसारणायोः प्राप्ताविन्नान्वयः । पूर्वं सम्प्रसारणमित्यावर्तते । पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति ग्रन्थे नेटो नित्यत्वमुपवर्णितम । इति इत्यस्य नित्यत्वादित्यर्थः । तथाच पदावधिकेऽन्वाख्याने सेद् वस् अस् इति

वाग्रहणेन ज्ञापितत्वादित्याशङ्क्याह–**दैवयज्ञीत्यादि । जातित्वादिति ।**

यत्तु प्राचोक्तम् । अणन्तत्वान्ङीबिति । यच्च व्याचख्युः "टिड्ढाणञ्" इत्यनेनेति । तदुभयं प्रामादिकमिति भावः । **औत्स इति ।**

उत्सः प्रस्रवणं वारि प्रवाहो निर्झरो झरः ।

इत्यमरः ।

तस्यापत्ययोगस्तु गाङ्गेयो भीष्म इतिवत् ।

**"जीवति तु वंश्ये युवा" ।** पितृपितामहादिरुत्पादकप्रबन्धो वंशः । तत्र भवो वंश्यः । दिगादित्वाद्यत् । पौत्रप्रभृतीत्युनुवृत्तं षष्ठ्या विपरिणम्यते व्याख्यानादित्याह–**पौत्रादेरिति** । तुशब्दो भिन्नक्रमो युवेत्यस्मात्परो बोद्धव्यः । स च एवकारार्थ इति व्याचष्टे–**युवसञ्ज्ञमेवेति ।**

**"एको गोत्रे" । अपत्यप्रत्यय इति ।** एतच्चाधिकारबलाल्लभ्यते । औपगव इत्यादि । उपगोरण् । "गर्गादिभ्यो यञ्" । "नडादिभ्यः फक्" । सूत्रारम्भफलं मतभेदेन व्यवस्थापयति । **गोत्र इति ।** स्वं गोत्रं तदपेक्षया एकोनसंख्यानां तृतीये द्वयोश्चतुर्थे त्रयाणामित्यादीत्यर्थः ।

---

चेदमप्यत्रैव कैयटे । तत्सर्वं यदि (१)तु ज्ञाप्यत इत्यनेन सूचितम् । ज्ञापितत्वादिति । न च षष्ठीसमासविधानं व्यर्थम् । अन्ततस्तद्विषये "तस्येदम्" इत्यस्य प्राप्तिरिति वाच्यम् । अनन्तरादिपदैस्तस्य चारितार्थ्यात् । अनभिधानेन हि तत्र तद्धिताभावस्य भाष्ये स्पष्टमुक्तत्वादिति भावः ।

प्रामादिकमिति । उपगोः प्रवराध्यायप्रसिद्धत्वादुपगोर्गोत्रापत्यमिति तद्व्याख्यातृभिर्विग्रहप्रदर्शनाच्चेति भावः ।

पितृपितामहादीति । अत एव पितृव्यमातुलादीनां न वंश्यत्वम् ।

तृतीये द्वयोरिति । उपगोस्तृतीये वाच्ये ऽणिञोरित्यर्थः । त्रयाणामणिञ्फकाम् । नन्वत्र पक्षे औपगवादिञि प्रत्ययद्वयमनिष्टं प्राप्नोति । औपगव इतीष्टं च तृतीये न सिद्ध्यति । "गर्गादिभ्यो यञ्" इत्यादेश्चानर्थक्यं प्राप्नोति । गोत्रे ऽपत्ये इत्यस्य विरोधात् गर्गादियञि ततः प्रत्ययान्तरे ऽनिष्टं प्राप्नोति । यदि त्वस्यात्र पक्षे विद्ध्यर्थत्वं तदा न नियमत्वमिति

---

(१) यदितु—इति । वस्तुतस्तु विषुण इत्यादौ अकृतसंधेः प्रत्ययोरुत्पत्तिप्रदर्शनेन

**यद्वेति** । तृतीये एकस्मादनिष्टोत्पत्तिः । चतुर्थे द्वाभ्यामित्यादीत्यर्थः । **पितुरेवेति** । तथा चामरः—

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥ इति ।

**ततः प्राचामिति** । तथा हि—न पतन्त्यनेनेत्यपत्यमिति व्युत्पत्तिः "पङ्क्तिविंशति" इति सूत्रे भाष्यकृता दर्शिता । व्यवहितोऽपि

---

प्रत्ययान्तात् प्रत्ययनिषेधस्यावश्यवक्तव्यत्वम् । न च गोत्रपदेन गोत्रागोत्रसमुदाय उच्यते तत्र यूनो न ग्रहणं गोत्रग्रहणात् । एकपदं च सामर्थ्यात् सावधारणम् । पुत्रे एकः पौत्रेऽपरस्तदपत्ये चापर इति गोत्रा(१) गोत्रसमुदाये च बहूनां प्राप्तौ एक एवापत्यप्रत्यय इति नियमेनैकाभ्यनुज्ञाद्वारा परमप्रकृतेर्विधिरपि परंपरापत्याऽपत्यवत्सम्बन्धे प्रवर्तत इत्यनुमीयत इति न दोष इति वाच्यम् । तथाविधेरनुमाने गौरवात् । एतदेवाभिप्रेत्यैवं नियमोपपादनोत्तरं भाष्ये उक्तम् । 'इहोत्पादयितर्यपत्ययुक्ते प्रत्ययान्तात्प्रतिषेधो वक्तव्यः' । परमप्रकृतेश्चोत्पत्तिर्वक्तव्येति विधित्वे प्रतिषेधो वक्तव्यः । गोत्रपदलक्षणया नियमत्वे उत्पत्तिर्वक्तव्या । एकेन वाक्येनोभयं त्वलभ्यम् ।

एकोऽपत्यप्रत्ययो भवति न तु तद्विषये गोत्रे प्रत्यय इत्येवार्थः स्यादित्येकाभ्यनुज्ञैव दुर्लभेति तद्भाव इत्यरुचेराह—यद्वेतीति । अत्र पक्षे इष्टस्य सिद्ध्या सर्वेष्वपत्ययुक्तेषु प्रत्ययान्तात्प्रतिषेधो वक्तव्य इति भाष्योक्तानिष्टवारणाय नियमार्थमिदम् । गोत्रशब्दस्य गोत्रजातिपरतेति नियमोपपत्तिः । अत्र पक्षे युक्त्यन्तराण्याह—न पतन्तीत्यादि । 'अपत्यं तोकं तयोः समे'

---

(१) **गोत्रागोत्र इति** । गोत्रं द्विविधं शास्त्रीयं लौकिकञ्च । तत्र शास्त्रीयं, अपत्यं पौत्रप्रभृतिगोत्रमिति परिभाषितम् ।

लौकिकं च

कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
यमदग्निर्वशिष्ठश्च सप्तैते ऋषयः स्मृताः ॥

तेषां यदपत्यं तद्गोत्रमित्याचक्षते इति बौधायनीयादिप्रवराध्यायप्रसिद्धाः भार्गवादय एव गोत्रत्वेन विवक्षिता इति प्रवराध्यायप्रसिद्धमिति गोत्रमिति । लौकिकस्य गोत्रस्य ग्रहणम् इति भाष्यप्रतीकमुपादाय कैयटेनोक्तम् । अत एव पौत्राः दौहित्राः इत्यादौ अनृषि-

पितामहादीनामुद्धृत्यापि प्रसिद्ध अपत्यवाच्युपाख्यानेषु । सूत्रकारोऽप्याह अपत्यं पौत्रप्रभृति । आद्यपक्षे अपत्यमिवापत्यमिति गौणी वृत्तिरा-श्रयणीया स्यात् । **औपगवादिरिति** । यस्यापत्यं तद्वाचकादेव प्रत्यय इति भावः । एवं सत्यनुपदं वक्ष्यमाणस्य पितामहादीनामिति मुख्यपक्षस्य विवरणे उपगोरणा इष्टे सिद्ध इत्याद्युक्तिः सङ्गच्छते । **मूलादिति** । पञ्चमी तु अवधिसमर्पणमात्रार्था न तूपगुरूपमूलस्य संख्यान्तःपातित्वार्था । अत एव द्वितीयपक्षे मूलपदमनुपादाय शततम इत्येवोक्तत्वान्मूलस्य संख्यान्तः-पातित्वं ज्ञेयम् । इञपीत्यपिर्भिन्नक्रमोऽणन्तादित्यस्याग्रे बोद्धव्यः ।

**"गोत्राद्यूनि"** ॥ **गोत्रप्रत्ययान्तादेवेति** । न तु युवप्रत्य-यान्तादिति प्रथमपक्षेऽर्थः । द्वितीयपक्षे तु मूलप्रकृत्यनन्तरयुवभ्यो ने-

---

इत्यमरस्य त्वयमर्थः । तयोस्तद्‌घटितसन्तानपरंपरयोरिति । किंचैका-भ्यनुज्ञाद्वारा परम्परापत्यापत्यवत्सम्बन्धे प्रवृत्त्यनुमानापेक्षया पिताम-हादीनामपत्यमित्यनुमानस्यैव युक्तत्वम् । तदेतत्सर्वं पितामहादीनामपीति मुख्यपक्षे त्विति वदता मूले ध्वनितम् ।

ननु मुख्यपक्षेऽस्य नियमत्वेऽप्यनन्तरापत्यप्रत्ययान्ताद्गोत्रे प्रत्ययो दुर्वारस्तावता ऽपि गोत्रे एकस्यैव कृतत्वेन नियमाबाधात् । एतदभिप्रायेणैव सर्वेष्वपत्ययुक्तेष्विति पक्षे नियमार्थत्वमुपपाद्य पुनरुक्तं भाष्ये 'सर्वेष्वप-त्ययुक्तेषु प्रत्ययान्तात्प्रतिषेधो वक्तव्यः' इति । न च गोत्रपदेनापत्यसमु-दायो लक्ष्यते । तेन परमप्रकृतेरेव भविष्यतीति वाच्यम् । अपत्यमित्यनु-वृत्त्यैव सिद्धे गोत्रग्रहणवैयर्थ्यापत्तेः । गोत्राद्यूनीत्यस्य सत्त्वेन यूनो ग्रहणे ऽप्यदोषादिति चेन्न । भाष्ये प्रत्याख्यातत्वेनेष्टापत्तेः । स्पष्टं चेदं सर्वं सूत्र-शेषे भाष्ये इति दिक् ।

न तु युवेति । अपत्यं पितुरेवेति पक्षे पञ्चमे यूनि विवक्षिते चतुर्थात्प्र-त्ययान्तादेव प्रत्यय इत्यनिष्टं प्राप्नोति तृतीयादिष्टा चोत्पत्तिर्न सिध्यति अत "एको गोत्रे" इति साहचर्यादस्य नियमत्वं, युवपदं च तद्घटिताप-त्यसमुदायपरं विध्यभ्यनुज्ञानं च प्राग्वदिति भावः । अत्र पक्षेऽस्य वि-धित्वमेव स्यान्न नियमत्वमित्याद्युक्तारुचेराह—द्वितीयपक्षे त्विति । पितामहा-दीनामपीति मुख्यपक्षे त्वित्यर्थः । अत्रेष्टसिद्धिरस्त्येव किं त्वनिष्टमपि प्रा-प्नोतीति तन्निवृत्त्यै नियमार्थत्वमेवेत्यर्थः । नन्वस्त्रियामित्यस्य स्त्रीभिन्ने यूनीति नार्थः । स्त्रीविषये यूनि प्रत्ययमालाप्रसङ्गात् । "एको गोत्रे" इत्य-

स्यर्थः । स्त्रियां त्विति । अयं भावः । अस्त्रियामिति योगो विभज्यते । यूनि शब्दस्वरूपपरम् । परिभाषा चेयं, यत्र युवसञ्ज्ञा विधीयते तत्रास्त्रियामित्युपतिष्ठत इत्यर्थः । सिद्धस्य गतिरियम् ।

**"जीवति तु वंश्ये युवा"** ॥ अस्त्रियामिति तु सूत्रयितुमुचितम् ।

**"अत इञ्"** ॥ तपरः किम् । शुभंयः अपत्यं शौभंयः । कथं तर्हि

प्रदीयतां दाशरथाय मैथिली ।

इति ? अपत्यरूपविशेषस्याविवक्षायां शैषिकोऽण् ।

**बाहविरिति** । यत्तु 'बाधृ' विलोडने इति धातौ माधवेनोक्तम् । केवलस्य बाहोरपत्येनायोगात्सामर्थ्यात्तदन्तविधिः सौबाहविरिति । तच्चिन्त्यम् । 'जानन्ति बाहवी' इत्याश्वलायनसूत्रात् "बाह्वादिभ्यश्च" इति सूत्रे बाहविरिति भाष्यवृत्त्याद्युदाहरणाच्च बाहोः सञ्ज्ञाशब्दत्वात् । **औडुलोमिरिति** । यद्यपि लोमन्शब्दो गणे पठ्यते तथापि सामर्थ्यात्तदन्तग्रहणम् । उडूनीव शरा इव लोमानि यस्य तस्यापत्यमौडुलोमिः, शारलोमिः । बहुत्वे तु इञपवादोऽकारः प्रागेवोक्तः । उडुलोमाः । शरलोमाः । इह याः पुराणादिप्रसिद्धाः सञ्ज्ञास्ताभ्य एव प्रत्ययो बोद्धव्यः । निरूढत्वेन प्रथमोपस्थिताभिरेव विधेर्निराकाङ्क्षत्वात् । यस्तु इदानीन्तनो बाहुस्तस्यापत्ये बाहव इत्येव । उक्तं च हरिणा—

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥

इति ।

अनर्थकं सन्दिग्धार्थकमप्रयुक्तं च क्रमेण विशेषणव्यावर्त्यम् । तदुक्तिषु तत्सदृशेष्वित्यर्थः । अत एव सञ्ज्ञाश्वशुरस्यापत्यं श्वाशुरिरित्यत्र "राजश्वशुरा-

---

न प्रत्यय इति वाक्यभेदेन संबन्धः । गोत्रप्रत्ययेन स्त्रिया अभिधानानापत्तेः । किं तु वाक्यमेव स्यादत आह—अयं भाव इति ।

विशेषस्याविवक्षायामिति । सर्वनाम्नां च सामान्यरूपेण विशेषरूपेण च सर्वार्थबोधकत्वमिति 'तस्यापत्यम्' इति सूत्रे भाष्यकैयटयोः स्पष्टमिति भावः । अत एवाऽऽपत्यं गोत्रमिति वार्तिकप्रयोगः संगच्छते । अपत्यस्येदमापत्यं पौत्रप्रभृतीति तदर्थः । इह प्रतिपदविधानविषये । निरूढत्वेन

तृ'' इति यत्न । मिमीते माता तस्य स्वसा मातृस्वसा । ''मातृपितृभ्यां स्वसा''इति षत्वं न ।

---

विधम् । सर्वथार्थरहितम्, अप्रसिद्धार्थकं(१) च गौणम् । तत्र लक्षणायामनियमात्तत्सन्दिग्धार्थकं तस्य स्वतन्त्रा इत्यनेन गुणयोगादिकमनपेक्ष्य प्रवर्तमाना इत्यर्थकेन व्यावृत्तिः । अप्रयुक्तं प्रसिद्धार्थकमपि यल्लोके न प्रयुक्तम् । तदुक्तिष्वित्यस्य तत्सदृशेष्वित्यर्थः । इदं च (२)विशिष्टरूपोपादाने (३)पदकार्ये एव । अत एव सञ्ज्ञाप्रतिषेधो वार्तिककृता सर्वादिसूत्रे उक्तः । (४)अत एव महद्भूतेत्यत्र पुंवत्वं विशिष्टरूपोपादानाभावात् । अम·

---

१ **अप्रसिद्धार्थकमिति गौणत्वमिति** । यस्मिन्नर्थे यस्य पदस्य सादृश्यमूलिका लक्षणा तस्य पदस्य सोऽर्थो गौण इत्युच्यते । सादृश्यप्रयोजकाश्च धर्माः वास्तवा आरोपिताश्चात्र गृह्यन्ते । तथाच–आरोपितवास्तवतदन्यतरधर्मवत्वप्रयुक्तसादृश्यमूलकशक्यतावच्छेदकारोपो भवति । एवं च आरोपितवास्तवैतदन्यतरप्रयुक्तसादृश्यमूलकशक्यतावच्छेदकत्वम् गौणप्रसिद्धसाधारणम् इति गौणत्वम् फलितम् ।

२ **विशिष्टरूपेति** । अस्य प्रवर्तत इति शेषः । तत्वं च साक्षात् स्ववृति आनुपूर्व्यवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वेत्याद्युक्तरूपम् बोध्यम् ।

३ **पदकार्येति** । तत्वं च स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वम् । अत एव ''शूद्राचामहत्पूर्वा जातिः'' इत्यत्र जातिग्रहणं अत्वं त्वं सम्पद्यते अमहान्भवतीति विग्रहवाक्ये त्वद्भवतीत्यादौ त्वादेशदीर्घादिकरणं च संगच्छते । अन्यथा शूद्री इत्यादौ गौणत्वादेव टापोऽप्राप्त्या जातिग्रहणस्य वैयर्थ्यम् । अत्वं त्वामित्यादौ च गौणत्वादेव त्वाद्यादेशाऽप्राप्त्या तत्करणासंगतिश्च स्पष्टैव । तदाने तु स्त्रीत्वानिमित्तकत्वाभावात् । ''त्वमावेकवचने'' ''प्रत्ययोत्तरपदयोश्च'' इत्युभयत्र विभक्तावित्यनुवृतेश्च निरुक्तपदकार्यत्वाभावान्नदोषः । अत्र स्त्रीत्वानिमित्तकत्वे सतीत्युक्त्या पङ्गुसदृशार्थकपङ्गुशब्दात् ''पङ्गोश्च'' इति ऊङ् बहुसदृशार्थकबहुशब्दात् ''बह्वादिभ्यश्च'' इति ङीष् तादृशार्थगौरशब्दात् गौरादित्वान्ङीष् तद्वत् ''यूनस्ति'' इति च प्रवर्तते । विभक्त्यनिमितकत्वे सतीत्युक्त्या च सखिसदृशार्थकसखिशब्दात् । ''सख्युरसंम्बुद्धौ'' इति प्रवर्तते । न च भूरिव आचचार बुभाव इत्यादौ निरुक्तपदकार्याभाव इति वाच्यम् । स्त्रीत्वानिमित्तकत्वे सति प्रातिपदिकप्रकृतिकप्रत्ययानिमित्तकत्वम् पदकार्यत्वम् इति परिष्कारेणादोषादिति ।

४ **अत एवेति** । ननु च्विप्रत्ययार्थोऽप्यारोपः नञर्थोऽप्यारोपः । तथाच–न महान् अमहान्, स चासौ ब्राह्मणश्च महाब्राह्मण इत्यात्वं जायते । महद्भूत इत्यत्र न जायतेऽत्र किं वैषम्यम्, उभयत्राप्यारोपितमहत्ववान् इत्याकारकबोधजननात् इति चेदत्रोच्यते । सांख्य-

[illegible]

**बारुडकिरिति** । वरुडादयो जातिविशेषाः । **इत्यादीति** । आदिशब्दान्नैषादकिः । चाण्डालकिः । बैम्बकिः ।

**वक्ष्यत इति** । "व्रातच्फञोः" इति विहितस्य ञ्यप्रत्ययस्येति शेषः ।

**"यञिञोश्च"** ॥ गोत्रे किम् ? "द्वीपादनुसमुद्रं यञ्" । द्वैप्यः । सुतङ्गमादिभ्य इञ् । सौतङ्गमिः । तदपत्ये मा भूत् ।

**"अनृष्यानन्तर्ये"** ॥ अनृषीति पञ्चम्याः सौत्रो लुक् । **मूत्र इति** । आनन्तर्ये इत्यत्रेत्यर्थः । बैदिरित्यत्र ऋष्यणमाशङ्क्याह-**बाह्वादेरिति** ।

**प्रवराध्यायेति** । एतच्च "स्त्रीपुंसाभ्यां नञ्स्नञौ" इति सूत्रे कैयटग्रन्थे स्पष्टम् ।

**कापेय इति** । "इतश्चानिञः" इति ढक् । कपेर्गर्गादित्वात् प्राप्ते आङ्गिरस एवेति नियमार्थं सूत्रम् । गणे पाठस्तु लोहितादिकार्यार्थः काप्यायनी । **बौधिरिति** । अनृषित्वादिञ् । बाह्वादित्वाद्वा ।

**"वतण्डाच्च"** । यञणोः प्राप्तयोः आङ्गिरसे यञेवेति नियमार्थं सूत्रम् ।

**"लुक् स्त्रियाम्"** । **विहितस्येति** । परिशेषितस्यैवेति बोध्यम् । एतच्च आङ्गिरस इत्यनुवृत्त्या लभ्यते । अत एवाह—**अनाङ्गिरसे**

---

हान्महानित्यादौ दीर्घादि च सिध्यति पदकार्यत्वाभावादिति दिक् ।

तुल्यन्यायान्नामधातुप्रकृतिकप्रातिपदिकानामप्यप्रसिद्धार्थकत्वम् । शास्त्रबोधितत्वेऽपि लोके प्रकरणादिनिरपेक्षतया प्रतीत्यजनकत्वात् । प्रवराध्यायेत्यादेस्तादृशमपत्यप्रत्ययान्तमित्यर्थः ।

कैयटेति । तत्सूत्रे भाष्ये च ध्वनितम् । "यूनि लुक्"सूत्रे भाष्ये ऽपत्याधिकारादन्यत्र लौकिकं गोत्रमित्युक्तम् । प्रवराध्यायप्रसिद्धत्वमेव लौकिकत्वमिति "गोत्रावयवात्" इति सूत्रे भाष्ये आगस्त्याष्टमर्षीणामपत्यं यातानि गोत्राणि इति तत्रोक्तं तानि लोके गोत्रत्वेन प्रसिद्धानीति तदर्थः । ऋषित्वेऽप्याह—बाह्वादित्वाद्वेति ।

"यञणोरिति" । गर्गादौ शिवादौ च पाठादिति भावः । शिवादिपाठे मानं तु "वतण्डाच्च" इति योगविभाग एव । अन्यथा "लुक् स्त्रियाम्"

त्विति। **वक्ष्यमाण इति।** "अणिञोरनार्षयोः" इति सूत्रेणेति भावः।

**"अश्वादिभ्यः फञ्"। गोत्रे इति।** क्वचिद् यून्यपि। तथा हि-अश्वादिगणे गोत्रप्रत्ययान्तास्त्रयः पठ्यन्ते। बैल्यः। आनडुह्यः। आत्रेय इति। बिलिर्नाम राजर्षिः। ततो "वृद्धेत्कोसल" इति ञ्यङ्। आनडुह्यशब्दो गर्गादियञन्तः। आत्रेयशब्दो ढगन्तः। ततः सामर्थ्याद् यूनि फिञ्। न हि युवानं विना अपत्यप्रत्ययद्वयं लब्धुं शक्यते। "पुंसि जाते" इति गणसूत्रम्। पुंसि विद्यमानो यो जातशब्दस्तस्मात्फञित्यर्थः। **जाताया इति।** लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तः फञ्।

**"शिवादिभ्योऽण्"॥ गोत्र इति निवृत्तमिति।** इतः प्रभृति अपत्यसामान्ये प्रत्यया इति भावः। एतच्च वृत्तौ कैयटादिग्रन्थे च स्पष्टम्।

यत्तु "यूनि लुक्" सूत्रे भाष्यकैयटपर्यालोचनया गोत्रसञ्ज्ञासूत्रपर्यन्तं गोत्राधिकार इति लभ्यते, तन्मतान्तरमिति भावः। विपाश्शब्दोऽत्र पठ्यते। तस्य कुञ्जादिष्वपि पाठात् पक्षे च्फञ्। वैपाशः। वैपाशायन्यः।

---

त्तावनन्तरस्येति न्यायेनाप्येतल्लभ्यते इति बोध्यम्।

तस्मादिति। जात इति पञ्चम्यर्थे सप्तमीति भावः।

कैयटेति। इदं च प्रकृतसूत्रे भाष्ये ध्वनितम्। तथा हि-अत्राण्ग्रहणं व्यर्थं शिवादिभ्यो यथाविहितमित्येवाणसिद्धेः। न चैवमिञ् स्यात्। पुनर्वचनवैयर्थ्यापत्तेः। न च बाधकबाधनार्थं तत्। तस्यैवाभावादिति तन्नोक्तम्। गोत्र इत्यनुवृत्तौ तु शिवादिभ्यो गोत्र एवेञ् नान्यत्रेति नियमेन चारितार्थ्याद् अण्ग्रहणं विना ऽणोऽसिद्धेस्तस्य सार्थक्ये तदसङ्गतिः स्यादतस्तन्निवृत्तिरत्रेति तद्भावः।

भाष्यकैयटेति। तत्र हि सर्वत्र शास्त्रीयगोत्रग्रहणे गार्ग्यायणादिभ्यो युवप्रत्ययान्तेभ्यः समूहादौ गोत्रत्वप्रयुक्तो वुञ् न स्यादित्याशङ्क्यापत्याधिकारादन्यत्र लौकिकं गोत्रमत्र च "गोत्रोक्ष" इति सूत्रस्थराजन्यग्रहणं ज्ञापकमुक्तं भाष्ये, गोत्रसञ्ज्ञासूत्रपर्यन्तं गोत्राधिकार इति च कैयटेन व्याख्यातम्। मतान्तरमिति। विशिष्टं मतमित्यर्थः। अनयोरेतदन्तरमित्यादौ विशेषवाचिनोऽप्यन्तरशब्दस्य सत्त्वात्। नियमविधिसम्भवे विधेरेव

इत्युलोपः । जारत्कारवः । जारत्कारेयः । विश्रवणरवणशब्दौ पठ्येते । तौ विश्रवःशब्दस्यादेशौ प्रकृत्यन्तरे एव वा वृत्तिविषये तत्समानार्थे । वैश्रवणः । रावणः ।

**"इतश्चानिञः"** ॥ द्व्यचः किम्? उदधेरपत्यमौदधः । यत्तु काशिकायां मरीचेर्मारीच इति प्रत्युदाहृतम् । तच्चिन्त्यम् । बाह्वादित्वेनेञ्प्रसङ्गात् । तथा च "मिदचोन्त्यात्परः" इति सूत्रे भाष्यम्—मरीचिशब्दो बाह्वादिषु पठ्यत इति ।

**"शुभ्रादिभ्यश्च"** ॥ मृकण्डशब्दोऽत्र पठ्यते । स च अदन्तः । एतच्च "मृगय्वादयश्च" इति सूत्रे उज्ज्वलदत्तग्रन्थे स्पष्टम् ।

मृकण्डस्य मुनेस्तीर्थं तद्याम्यामतिनिर्मलम् ।

इति स्कान्दे । मार्कण्डेयः । उकारान्तपाठे ढलोपो बोध्यः ।

**"कल्याण्यादीनामिनङ्"** ॥ परस्त्रीशब्दोऽत्र पठ्यते । पारस्त्रैणेयः । अनुशतिकादित्वादुभयपदवृद्धिः । परभार्यायामुत्पन्न इत्यर्थः । बिदादिगणे तु परस्त्री परशुश्चेति पठ्यते । आपद्यत इति शेषः । परस्त्रिया अपत्यं पारशवः । ब्राह्मणाच्छूद्रायां तेनैवोढायामुत्पन्नः । सा च जात्यन्तरयोगात् परस्त्री । तदिह परस्त्रीति कल्याण्यादिषु षष्ठीतत्पुरुषः । बिदादौ तु कर्मधारय इति विवेकः । तथा च याज्ञवल्क्यः ।

विप्रान् मूर्द्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि च ॥

इति ।

न चैवं पारशवेऽपि स्थानिवद्भावादनुशतिकादिकार्यं स्यादिति वाच्यम् । पूर्वोत्तरपदसम्प्रमोहात् । न हीह एतावान् पूर्वपदस्यादेश इति विषयविभागो गम्यते ।

---

किं चात्रैव तन्निवृत्तौ मनुषीशब्दात् कुत्सितमपत्यमित्यर्थविवक्षायां मानुषो जाल्म इति णप्रत्ययस्य भाष्यकृत इष्टस्यासिद्धिरितीदमेव युक्तं मतम् । शास्त्रीयगोत्रं च युवत्वानाक्रान्तपौत्रप्रभृत्यपत्यरूपम् । तदर्थकत्वं च वास्तवं शास्त्रप्रक्रियानिर्वाहाय कल्पितं चेति भावः ।

अम्बष्ठः शूद्र्यामिति । शूद्रकन्यायामित्यर्थः । जातौ ङीष्प्रयोग आर्षः ।

**सती भिक्षुकयन्त्रेति** ॥ अत्र-इनङ्विधौ । उक्तं चाऽमरसिंहेन ।

अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः ।
कौलटेरः कौलटेयो भिक्षुकी तु सती यदि ॥
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः ॥

इति ।

केचित्तु क्षुद्राया अपि इनङ तृतीयं रूपमाहुः । वृत्तौ तु क्षुद्राभ्यः परत्वाड्ढगित्युक्तं तच्चिन्त्यम् । तस्य वैकल्पिकतया स्वयमपि पक्षे ढकः स्वीकाराच्च इनङः प्राप्तेर्दुर्वारत्वात् ।

**तयोरेवेति** ॥ तत्र टाबन्तात्तद्धिते लुप्ते "लुक्तद्धितलुकि" इति टापो लुकि पुनरजादिलक्षणष्टाब् जातिलक्षणस्य ङीषो बाधक इति भावः । यत्त्विह न्यासकृतोक्तम् । चटकादेरगित्येव साम्प्रदायिकः सूत्रपाठ इति । तद्भाष्यवार्तिकविरोधादुपेक्ष्यम् ।

**"आरगुदीचाम्"** । उदीचाङ्ग्रहणं पूजार्थम् । वचनादेव ढक् । ढगारकोः पर्यायसिद्धेः । **अन्यत इति** । आनकारान्तात् कुतश्चिदित्यर्थः । **जडस्येति** । जल घातने । डलयोरभेदाज्जडः । पडि गतौ । पण्डः । एतच्च उक्तधात्वोर्माधवीयवृत्तौ स्पष्टम् ॥ तत्र पण्डस्यापत्यं दत्रिमादि बोध्यम् ।

**गार्ष्टेय इति** । ननु गृष्टिः सकृत्प्रसूता गौरिति कोशात् "चतुष्पाद्भ्यो ढञ्" इत्येव सिद्धम् ।

---

अत्रानुलोमप्रस्तावात्सा विवाहितैवेत्याहुः ।

तृतीयं रूपमिति । उभयोरप्यत्र कुलटाशब्देन ग्रहणमिति भावः ।

पूजार्थमिति । इदं च गोधाशब्दमात्रविषये सूत्रमिति मते । जडादिभ्यो विधानार्थत्वे तु तत्र विकल्पार्थमावश्यकमेतदिति बोध्यम् । अरक्तु(१) न

---

१ **अरक् तु नकृत इति** । तथाच "आरगुदीचाम्" इति सूत्रस्थं भाष्यम् आरगुदीचामित्यत्र आकार प्रश्लेषतात्पर्यकम् । आकारान्तात् गोधाशब्दादित्यर्थः । तेन क्विबन्तेऽपि न फलभेदः । अन्यथा गोधाशब्दस्य ऋशब्देन समासे ततः पूर्वान्तवत्वेन गोधाशब्देन ग्रहणे ततः आरकि गौधरार इत्यर्थमाकारस्यावश्यकत्वेन फलभेदावश्यं भावादिति-

अत्राहुः कोशे गौरिति प्रायोवादः । सकृत्प्रसूता सर्वापि गृष्टिः । अतोऽयमारम्भ इति ।

वस्तुतस्तु गृष्टिशब्दः शुभ्रादिः । तथा चान्तोदात्तं ढगन्तं प्रयुज्यते । 'सङ्गार्ष्टेयो वृषभो गोभिरानडि'ति । अतः पाक्षिकाद्युदात्तार्थमिह सूत्रे गृष्टिशब्दग्रहणम् । **ढञिति** । गृष्ट्यादित्वादिति भावः ।

"**केकयमित्रयु**" ॥ केकयस्यापत्यं स्त्री कैकेयी । "जनपदशब्दात् क्षत्रियादञ्" । मैत्रेयिकया श्लाघते मित्रयूनां भावेनेत्यर्थः । "गोत्रचरणाच्छ्लाघात्याकार"इति वुञ् । तत्र हि–लौकिकं गोत्रं गृह्यते, लोके च ऋषिशब्दो गोत्रमिति प्रसिद्ध इति काशिका । एतच्च यदा मित्रयुशब्दोऽभेदोपचारात् तदपत्ये सन्ताने वर्त्तते तदा बोद्धव्यम् । यदा तु गृष्ट्यादित्वाड्ढञो यस्कादित्वाद् बहुषु लुक् तदा पारिभाषिकेऽपि गोत्रे न क्षतिः । प्रलयादागतं प्रालेयम् । इयादेशेन वृद्धिर्न बाध्यते । विषयभेदात् । अचामादेर्वृद्धिर्यादेरियादेशः । अङ्गन्तु उभयोर्विशेषणं न कार्यमिति हरदत्तः ।

"**दाण्डिनायन**" ॥ **एतानीति** । दाण्डिन्, हस्तिन्, आभ्यां नडादित्वात् फक् । यैस्तु नडादिष्वेतौ न पठ्येते तेषामत एव निपातनाल्लुक् । टिलोपाभावस्तु निपातनादेव । अथर्वन्निति वसन्तादिषु पठ्यते । अथर्वणा प्रोक्तो ग्रन्थोऽथर्वा । उपचारात् । तमधीते आथर्वणिकः । जिह्माशिन्निति शुभ्रादिः । जिह्माशिनोऽपत्यं जैह्माशिनेयः । वाशिनोऽपत्यं वाशिनायनिः । "उदीचां वृद्धात्" इति फिञ् । भ्रूणहन्, धीवन् एतयोः ष्यञि तकारादेशो निपात्यते । भ्रूणघ्नो भावो भ्रौणहत्यम् । धैवत्यम् ।

---

कृतः । गौधार इत्यसिद्ध्यापत्तेः ।

कोशस्य यथाश्रुतत्वमभ्युपेत्याप्याह—वस्तुतस्त्विति । पाक्षिकेति । अन्यथा शुभ्रादिढका चतुष्पाड्ढञो बाध एव स्यादिति भावः ।

इह हन्तेस्तत्वं "हनस्तोऽचिण्णलोः" इत्येव सिद्धे निपातनं ज्ञापयति 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति । तेन वार्त्रघ्नमित्यत्र तत्वं न । सरयू इत्यस्याणि परे यादेर्वा निपात्यते । सरय्वां भवं सारवमुदकम् ।

देविकायां सरय्वाञ्च भवे दाविकसारवौ ।

इत्यमरः ।

तत्र "देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्" इति सूत्रेण देविका-शब्दस्याचामादेराकारादेशो बोध्यः । ऐक्ष्वाक इति अणन्तमञन्तञ्च । एकश्रुत्या पाठात् उभयत्राप्युकारलोपः । इक्ष्वाकोरपत्यम् "जनपदशब्दात् क्षत्रियादञ्" ऐक्ष्वाको राजा । बहुत्वे लुक् 'इक्ष्वाकूणां दुरापेऽर्थे' । इक्ष्वाकुषु जनपदेषु भवः "कोपधादण्" । अस्य बहुत्वेऽपि न लुक् ।

ऐक्ष्वाकेषु च मैथिलेषु च फलन्त्वस्माकमद्याशिषः ।

इति मुरारिः । हिरण्यशब्दस्य मयटि यादिलोपो निपात्यते । हिरण्यस्य विकारो हिरण्मयम् ।

**"यस्कादिभ्यो गोत्रे"** ॥ अपत्याधिकारादन्यत्र लौकिकं गोत्र-मित्यभिप्रेत्याह—**अपत्यप्रत्ययस्येति** ।

**"राजश्वशुराद्यत्"** ॥ यथाक्रममणिञोरपवादः । **जातावे-वेति** । प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्येत्यर्थः । प्रत्ययस्तु अपत्य एव ।

---

निपातनमिति । **न च कुत्वाभावार्थं निपातनम् । तदर्थत्वेऽपि धैवत्यसाहचर्येणास्यां परिभाषायामस्य ज्ञापकत्वपरस्य "मृजेर्वृद्धिः" इति सूत्रस्थभाष्यस्य प्रामाण्येन च तत्वनिपातनस्यापि सूत्रकृत्तात्पर्यविषयत्वेन ज्ञापकत्वाक्षतेः ।** स्वरूपग्रहणे इति । **इदं प्रायिकम् । धातोः कार्यमुच्यमानमित्येव सारम् । एतच्च "मृजेर्वृद्धिः" इत्यत्र भाष्ये स्पष्टम् । ज्ञापिते त्वत एव भ्रौणहत्ये कुत्वं न ।** यादेरिति । **युइत्यस्येत्यर्थः । निपातनबलादेव "अलोऽन्त्यस्य" इत्यस्याप्रवृत्तिः ।** एकश्रुत्येति । **एतेन सूत्रे द्वन्द्वनिर्देशस्तत्र तदलौकिकविग्रहे विरुद्धस्वरकयोर्द्वयोः प्रवेशासम्भवेन कथं द्वयोर्ग्रहणमित्यपास्तम् । तत्रैकश्रुतियुक्तस्यैव प्रवेशात् ।**

लौकिकमिति । **तच्च प्रवराध्यायप्रसिद्धमपत्यप्रत्ययान्तम् ।**

अपत्य एवेति । **गोत्रे एवेत्यर्थः । तदधिकारे पाठेन आरोपितेन तेन [illegible] । तत्काले राज्ञोऽपत्यं गोत्रमिति विग्रहो दर्शनीय इति**

"**व्यन्सपत्ने**" ॥ सपत्नशब्दः शत्रुपर्यायोऽव्युत्पन्नं प्रातिपदिकम् । वस्तुतस्तु सपत्नीशब्दादिवार्थे अलूप्रत्ययो निपात्यते। सपत्नीव सपत्नः। अत एव 'ये नः सपत्ना अप ते भवन्ति' इत्यत्र स पत्ना इत्यवग्रहः पठ्यते। लित्स्वरेण मध्योदात्तः। **पाप्मनेति**। न ह्यत्र भ्रातृपुत्रत्वरूपोऽवयवार्थोऽस्तीति भावः। वृत्तिकारस्तु इहापत्यग्रहणं न सम्बध्यते। अनर्थकावेव प्रकृतिप्रत्ययौ समुदायार्थः परं सपत्न इत्याह।

**गार्ग्या अपत्यमिति** ॥ पितुरसंविज्ञाने मात्रा व्यपदेशात् कुत्सा। **पुंवद्भावादिति**। भस्याढे इत्यनेन। **गार्ग्यशब्दादिति**। यद्यपीह प्रकृतेर्वृद्धत्वात्तस्य णित्वं नोपयुज्यते, तथापि ग्लुचुकायन्या अपत्यं ग्लौचुकायन इत्यत्र वृद्ध्यर्थन्तद् बोध्यम्। गोत्रेति किम्? कारिकेयः। स्त्रियाः किम्?। औपगवस्यापत्यं युवा औपगविः। कुत्सने किम्? गार्गेयः।

**कौरव्या ब्राह्मणा इति** ॥ यत्तु "कुरुनादिभ्यो ण्यः" इति वक्ष्यते, तत्र क्षत्रियादित्यधिकृतम्। तद्राजत्वाल्लुक्। कुरवः क्षत्रिया इति विशेषः। **वावदूक्य इति**। वदेर्यङन्तादूकप्रत्ययः स च कुर्वादिगणे वावदूकेति पाठसामर्थ्यादेवेति माधवः। "उलूकादयश्च" इत्युणादिसूत्रेणेत्यन्ये। "सम्राज" इति गणसूत्रम्।

**हारिषण्य इति** ॥ "एति सञ्ज्ञायामगात्" इति षत्वस्यासिद्धत्वात् सेनान्तोऽयम्। **नापित्य इति**। प्राचां मतेनेदम्। उदीचान्तु परत्वात् फि-

---

अव्युत्पन्नमिति। स च "लघावन्ते" इति मध्योदात्तः। अवग्रह इति। स-शब्दे इति शेषः। मध्योदात्त इति। सपत्नशब्द इति शेषः। परे त्विदं चिन्त्यम्। "लघावन्ते" इत्येव सिद्धे लित्त्वस्य फलाभावात्। "भस्याढे" इत्यत्र सपत्नप्रकृतिकतायाः सपत्नीशब्दे भाष्यकृताऽङ्गीकाराच्च। तेन रूपेण ततो बोधाभावाच्च। अवग्रहे तु सम्प्रदाय एव शरणमित्याहुः। इत्याहेति। तन्मतेऽपि पाप्मनि चेतनधर्मशत्रुत्वासम्भवादुपचार आवश्यक इति बोध्यम्।

पितुरसंविज्ञाने इति। उभयोः संविज्ञाने तु न सा। 'देवकीतनयं वन्दे' इति यथा। ग्लौचुकायन इति। नचात्र "फेश्छ च" इति शङ्क्यम्। वृद्धादित्यनुवृत्त्या तत्र फिञ एव ग्रहणादसौवीरत्वाच्च। तथा च "शेष" इति सूत्रे

वृत्तिकारस्तु तक्षन्शब्दं शिवादिषु पठित्वा कारिलक्षणमुदीच्यामिञमय-मण् बाधते, ण्यस्य तु बाधो नेष्यते इत्याह। सर्वथा ऽण्ण्याभ्यां रूपद्वयं निर्विवादम्।

यत्तु "षपूर्वहन्धृतराज्ञामणि" इति सूत्रे हरदत्तेनोक्तम्। ताक्षणः। "तस्येदम्" इत्यण्। न त्वपत्ये कारिलक्षणेन ण्येन बाधितत्वादिति। तदित्यभाष्यवृत्तिस्वग्रन्थविस्मरणमूलकम्।

**तैकायनिरिति** ॥ तिक् आस्कन्दने। तिक्नोतीति तिकः। इगुपधत्वात्कः। **वृद्धात्किम्? दाक्षिरिति**। दक्षशब्दोऽत्र प्रौढपरः। नामधेयत्वे तु वा नामधेयस्येति वृद्धत्वात्पक्षे भवत्येव।

'दाक्षायण्योऽश्विनीत्यादि तारा'

इत्यमरः।

**पञ्चालानां राजेति** ॥ इह अवृद्धादपि बहुवचनविषयादिति प्राप्तो वुञ्बाध्यते। **पूरोरिति**। पूरुशब्दस्य जनपदवाचित्वाभावात् प्राग्दीव्यतीयेऽणि तद्राजसञ्ज्ञार्थं वचनम्। जनपदवाचित्वे तु "द्व्यञ्मगध" इत्येव सिद्धम्।

**"पाण्डोर्ड्यण्"** ॥ णकारो "वृद्धिनिमित्तस्य" इति पुंवद्भावप्रतिषेधार्थः। युधिष्ठिरपितृवाचिनो गुणवाचिनश्च पाण्डोर्नेह ग्रहणम्। जनपदशब्दादित्युक्ते हि तदधिपतिवाच्येवोपतिष्ठते।

**"कुरुनादिभ्यो ण्यः"** ॥ कुरोर्ह्यञ्लक्षणेऽणि प्राप्ते नकारादिभ्यो वृद्धेभ्य इति शेषः। अवृद्धेभ्यस्त्वञिति बोध्यम्।

---

वृत्तिकार इति। अत्रारुचिबीजं तु बाध्यसामान्यचिन्तायां सर्वबाधापत्तिः। विशेषचिन्तायां तु पुरस्तादिति न्यायेन ण्यस्यैव बाधापत्तिः। इष्टिस्तु भाष्ये नास्ति। उपसंख्यानपाठेन शिवादिपाठस्य निर्मूलत्वं च।

ण्येन बाधितत्वादिति। "तस्यापत्यम्"इत्यौत्सर्गिकस्य तेन बाध इति भावः। भाष्येति। भाष्यकृतोपसंख्यानपाठाद् वृत्तिकृता शिवादौ पाठादिति भावः।

पुंवद्भावप्रतिषेधार्थ इति। पाण्ड्यायै हित इत्यादौ अनन्तरापत्ये जातित्वाभावात् "जातेश्च" इत्यनेन न सिद्धिः। तदधिपतिवाच्येवेति। प्रत्यासत्त्या तज्ज-

ब्देन न परामृश्यन्ते गोत्रयुवसञ्ज्ञाकाण्डेन विच्छेदादिति भावः ।

**"तद्राजस्य बहुषु"** ॥ **तदर्थेति** । तद्राजस्यार्थेन कृत इत्यर्थः । **रघुयदुशब्दयोरिति** । एतच्च "बह्वच इञः" इति सूत्रे पदमञ्जर्यां स्थितम् ।

**सिन्धुतक्षेति** ॥ कम्बोजशब्दस्य सिन्ध्वादिषु पठ्यमानत्वादिति भावः ।

**अवन्ती कुन्तीति** ॥ ञ्यङो लुक् । "इतो मनुष्यजातेः" इति ङीष् । **कुरूरिति** । ण्यस्य लुक् । "ऊङुत" इत्यूङ् ।

**"अतश्च"** ॥ इह तद्राजेन अकारो विशेष्यते, न तु विपरीतम् । विशेषणेन तदन्तविधौ ञ्यङ्ण्यादीनामपि अनेनैव लुक्सिद्धौ अवन्तिकुन्तिकुरुभ्यो लुग्वचनवैयर्थ्यापत्तेः । तेन कौसल्येति सिद्धम् । तदेतदाह—**तद्राजस्याकारस्येति** ।

**कारूशीति** ॥ कृञ उः, तं वष्टि मूलविभुजादित्वात्कः, करूशः । एतेन करूषेति मूर्द्धन्यपाठः प्रत्युक्तः ॥

**"अणिञोः"** ॥ यद्यपि स्त्रीप्रत्ययाः प्रकृताः ष्यङः प्रत्ययत्वे लक्ष्यसिद्धिरप्यप्रत्यूहा तथाप्यादेशत्वमेवोचितम् । "पत्युर्नो यज्ञसंयोगे" इति

---

**नपदस्वामित्वेन यो यत्क्षत्रियवाची स एवोपतिष्ठते इत्यर्थः ।**

तद्राजस्यार्थेनेति । **तद्राजान्तस्यार्थेनैव कृते इत्यर्थः । तावन्मात्रान्वयीति यावत् । अत एवाङ्गदेवदत्तयज्ञदत्ता इत्यादौ लुग्व्यावृत्तिस्तत्र बहुत्वस्य देवदत्तादावप्यन्वयेन तदर्थमात्रान्वयित्वाभावादित्यन्यत्र विस्तरः ।**

कौसल्येतीति । **आम्बष्ठ्येत्यपि बोध्यम् ।**

अप्रत्यूहेति । **न चौदमेघ्याया अपत्यमित्यर्थे ढक्यल्लोपे यस्यानापत्यत्वाल्लोपो न स्यात् । "भस्याढे" इति पुंवत्त्वं त्वढे इति निषिद्धम् । आदेशत्वे त्वापत्यत्वं सुलभमपत्यस्यायमित्यर्थात् । प्रत्ययत्वे तु स्त्रीप्रत्ययानां स्वार्थिकत्वे ऽपि स्त्रीत्वद्योतकत्वेन तत्त्वं वक्तुमशक्यम् । यौधेयीत्यादावञोऽत्यन्तस्वार्थिकत्वाद् गोत्रत्वमस्त्येवेति "शार्ङ्गरवाद्यञ" इति ङीन्सिद्धिः । अत एवापत्याणन्ताभिजितशब्दात् "अभिजिद्विदभृत" इति सूत्रेणात्यन्तस्वार्थिके यञि "गोत्रचरणात्" इति वुञि "आपत्यस्य" इति यलोप आभिजितकसिद्धिः । औदमेघ्यानां सङ्घ औदमेघ इत्यत्राण् तु**

य यथा । "अणिञोः" इति षष्ठीस्वरसाद् इत्यभिप्रेत्याह—**ष्यङा-**
**स्यादिति** ।
नन्वयं तातङ्न्यायेन सर्वादेशः स्यात् । "ङिच्च" इत्यस्यानन्यार्थङि-
नङादिषु चरितार्थत्वात् । ष्यङो ङित्त्वस्य "यङश्च" इति विशेषणार्थत्वा-
आह—**निर्दिश्यमानस्येति** । **कौमुदगन्ध्येति** । अणः
। **वाराह्येति** । इञः ष्यङ् । अणिञोः किम् ? आर्तभागी । ऋत-
य बिदादित्वादञ् ॥

## इत्यपत्याधिकारः ॥

ाढे" इति प्रागेव पुंवत्त्वे इञन्तत्वादेव सिद्धो यकारनिवृत्तिश्च पुंव-
र्ति वाच्यम् । आदेशत्वे ऽपि स्त्रीत्वस्याधिकस्य द्योत्यताया दुर्वा-
तत्रापि लोपस्य दुर्लभत्वात् । स्थानिवत्त्वेनापत्यत्वं तु न सुलभम-
यत्वात् ।
दि तु "आपत्यस्य च" इति सूत्रे आपत्यत्वमपत्यार्थकत्वमात्रं, न
रणगर्भमित्युच्यते तदा ममाप्यदोष इत्याशयात् । एतच्च कैयटे
। प्रत्ययत्वपक्षश्च "ये च तद्धिते" इति सूत्रे भाष्ये दृश्यते । आदे-
क्षश्च प्रकृतसूत्रे भाष्ये । षाष्ठभाष्यं तु एकदेश्युक्तिरिति तत्त्वम् ।
ीस्वरसादिति । न च व्रीहिशाल्योरितिवदानन्तर्ये षष्ठी तत्र वृद्ध्याद्यर्थ-
रणात् "षष्ठीस्थाने"इत्यस्य बाधेऽप्यत्र तद्बाधे मानाभावादिति भावः।
न्वत्र पक्षे हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । बाह्वादित्वादिञ् । "अचि
इति शीर्षादेशस्तत इञः ष्यङ् । हस्तिशीर्ष्यः । अत्र स्थानिवत्त्वेन
ाब्दस्य शिरस्शब्दत्वात् "ये" इति शीर्षन्नादेशः प्राप्नोति । टिलोपस्तु
ये चाभावकर्मणोः" इति प्रकृतिभावात् । स्पष्टं चेदं "ये च तद्धिते"
भाष्ये इति चेन्न । "अन् आत्माध्वानौ" इति साहचर्यादन्नन्ताद्धिहि-
वेव प्रकृतिभावस्वीकारेणादोषात् । "नस्तद्धिते" इत्यत्र तु न
र्ी व्याख्यानात् । हास्तिशीर्षित्यस्य भगवतोच्चारणात् । ध्वनितं चेदं
ूत्रे आदेशत्वं स्थापयता भगवता ॥

इत्यपत्याधिकारः ॥



**रज्यते ऽनेनेति** ॥ शुक्लस्य वर्णान्तरोपादानमिह रञ्जेरर्थः । कथं "हारिद्रौ कुक्कुटस्य पादौ" इति ? उपमानाद्भविष्यति ।

**"लाक्षारोचनात्"** ॥ वृत्तिकृत्तु वार्तिकस्थौ शकलकर्दमावपि सूत्रे प्रचिक्षेप । **आभ्यामिति** । भाष्यादौ तु नैतदस्ति । **नील्येति** । नीली ओषधिविशेषः ।

**"नक्षत्रेण"** ॥ नक्षत्रवाचकाः शब्दा वृत्तिविषये तद्युक्तं चन्द्रमसमभिदधानाः प्रत्ययं लभन्ते । **पुष्येणेति** । पुष्यसमीपस्थेन चन्द्रमसेत्यर्थः । **षष्टिदण्डेति** । अयञ्च विशेषः पूर्वसूत्रानुवृत्तिबलाल्लभ्यते । अद्येत्युक्त्या न ह्यो, न श्व इति विशेषे गम्यमाने ऽपि लुब्भवत्येवेति भावः ।

**"द्वन्द्वाच्छः"** ॥ विशेषे उदाहरणमाह—**तिष्यपुनर्वसवीयमहरिति** । अविशेषे तु, अद्य राधानुराधीयम् । न च "लुबविशेष" इति अण इव छस्यापि लुप्स्यादिति वाच्यम् । पूर्वोपस्थितेन अणैव तस्य निराकाङ्क्षत्वात् । एतदेव हि मध्येऽपवादन्यायेऽपि तत्त्वम् ।

**अस्मिन्नर्थे इति** । तथा च श्लोकवार्त्तिकम्—

"दृष्टे सामनि जाते चाप्यण् डिद् द्विर्वा विधीयते" इति ।

जातार्थे यो द्विरण् स च वा डिदित्यन्वयः । शतभिषजि जातः शातभिषः, शातभिषजः । इह हि "प्राग्दीव्यत" इति प्राप्तोऽण् कालाट्ठञा बाधितः "सन्धिवेलादि"सूत्रेण प्रतिप्रसूत इत्ययं द्विरुक्तोऽण्; अतो वा डित्त्वम् । एतच्च मूले स्वस्थाने वक्ष्यते ।

**"वामदेवात्"** ॥ "यस्ये"ति लोपेन सिद्धे ड्यड्ड्ययोर्डित्करणं स्वरार्थम् । "ययतोश्च" इति सूत्रेण विधीयमानं नञ उत्तरस्य ययदन्तस्य

---

शुक्लस्येति । **उपलक्षणमेतत्** । भाष्यादाविति । **आदिना वार्तिकम्** ।

चन्द्रमसमभिदधाना इति । **तादृशाश्च सङ्कल्पवाक्ये प्रसिद्धाः अश्विन्यादेः केवलनक्षत्रवाचकस्य तु न ग्रहणं, तेन कालयोगस्याव्यभिचारात् अप्राप्तिपूर्वकप्राप्तिरूपयोगस्यासम्भवाच्च। अद्य नक्षत्रमित्यादिव्यवहारात् नक्षत्रशब्दोऽपि नक्षत्रयुक्तचन्द्रवाचीति बोध्यम्** । पूर्वसूत्रेति । **तेन प्रत्यासत्त्या**

त्तत्वम् अवामदेव्यशब्दे मा भूत् । किन्तु अव्ययपूर्वपदस्वर एव
यात् ।

नु कृतेऽपि डित्त्वे "ययतोः" इत्यस्य प्रवृत्तिः कुतो नेति चेत् ?
ावलादित्यवेहि । तथाहि, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य'
ग्रहणे ड्यग्रहणं न भवति । 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य"
ड्ग्रहणे ड्यड्ग्रहणं न भवति । इमे च परिभाषे इहैव डित्त्वेन ज्ञाप्येते ।
याः प्रयोजनं "पूरणगुण" इति सूत्रे तव्यग्रहणे तव्यड्ग्रहणं मा
"दिव औत्" इत्यत्र दीव्यतेर्मा भूत । द्वितीयस्यास्तु अङ्ग्रहणे
ां मा भूत् "श्वयतेरः" अश्वत । नेह-अशिश्वियत् ।

"**परिवृतो रथः**" ॥ तदेकान्तग्रहणं कर्तव्यम् । नेह-पुत्रैः पौत्रैः
ः ।

"**तत्रोद्धृतम्**" ॥ **शराव इति** । भुक्तोच्छिष्ट इत्यर्थ इति
ाराः । अवशिष्ट इति तदर्थः । तथाच कल्पसूत्रेषु व्यवहारः-उ-
ष्टि न सर्वं जुहोतीति । "सास्मिन्पौर्णमासी" इति सूत्रात्प्राक् तत्र
वर्तते । तेन सप्तम्यन्तादेव प्रत्ययाः ।

"**स्थण्डिलात्**" ॥ व्रतं शास्त्रेण विहितो नियमः, तस्मिन् समु-
गम्ये । **उख्यमिति** । कथं तर्हि उख्योऽग्निः, न ह्यसौ भक्ष इति
सत्यम्, भवार्थे दिगादित्वाद्यदित्याहुः ।

"**दध्नष्ठक्**" ॥ **दध्नीति** । संस्कारश्चेह लवणादिना । यस्तु
तार्थे "प्राग्वहतेः" इति ठग्वक्ष्यते, स तृतीयान्तात । ततश्च दध्ना संस्कृ-
दाधिक एव ।

**उदकेन श्वयतीति** । क्विप् तुक् । इहैव सूत्रे निपातनात् सम्प्र-
णाभावः । **इतिशब्दादिति** । स हि लौकिकीं विवक्षामनुसारयति ।
सञ्ज्ञायामिति वृत्तिकृता प्रक्षिप्तम् । **पौर्णमासीति** । "महाराज-

प्रोष्ठपदाट्ठञ्" इत्यत्र तदस्मिन्वर्तत इत्यर्थे पूर्णमासादण उपसंख्यानादण् ।

**शतं रुद्रा इति** । शतशब्दो ऽनन्तवचनः । **सौमीति** । "हलस्तद्धितस्य" इति यलोपः । **वायव्यमिति** । "ओर्गुणः" । "वान्तो यि" इत्यवादेशः । **उषस्यमिति** । उषस्शब्दः स्त्रीलिङ्गो दिवो दुहितरं देवतां वक्ति । एतच्च "सुपेशसं सुखं रथम्" इत्यादिमन्त्रेषु प्रसिद्धम् । **शुनासीरीयमिति** । शुनश्च सीरश्चेति द्वन्द्वः । शुनो वायुः सीर आदित्य इति वृत्तिकारः । अन्ये त्वेकमेव शुनासीरमिन्द्रस्य गणमाहुः । तथा चाश्वलायनः–इन्द्रो वा शुनासीर इति । मन्त्रवर्णश्च–इन्द्रं शुनासीरमस्मिन् यज्ञे हवामह इति । मरुत्वतीयम् । मरुत्वत्यम् । अग्नीषोमीयम् । अग्नीषोम्यम् । वास्तोष्पत्यम् । वास्तोष्पतीयम् । वेश्मभूर्वास्तुरस्त्रियाम् । वास्तोः पतिर्वास्तोष्पतिः । इहैव सूत्रे निपातनात् साधुः । गृहमेधीयम् । गृहमेध्यम् । गृहमेधशब्दोऽकारान्तः । 'मरुद्भ्यो गृहमेधेभ्य' इत्याश्वलायनः । गृहमेधा स आगत' इति मन्त्रलिङ्गञ्च ।

**"कालेभ्यो भववत्"** ।। कालेभ्यो ये भवे प्रत्यया वक्ष्यन्ते ते "सा ऽस्य देवता" इत्यस्मिन् विषयेऽनेन सूत्रेणातिदिश्यन्ते । वत्करणं सर्वसादृश्यार्थम् । तेन यस्माद्यो विहितस्ततः स एव भवति । तथैवोदाहरति—**मासिकं प्रावृषेण्यमिति** ।

**सकारेति** । अन्यथा प्रक्रियालाघवाय षकारमेव पठेदिति भावः ।

**"तस्य समूहः"** ।। चित्तवदाद्युदात्तमगोत्राणन्तं प्रतिपदमनुक्तप्रत्ययमिहोदाहरणम् । तथा हि–अचित्ताट्ठग् वक्ष्यते । "अनुदात्तादेरञ्, "गो-

---

अनन्तवचन इति । **प्रकृत इति शेषः । विशेषणसमासः । शतत्वसंख्यावाचिशतशब्देन तु "तद्धितार्थ" इति समासे शतश्लोकीत्यादिसिद्धिः । अयं तु न संख्यावाचीति भावः** । "ओर्गुणः" इति । **परत्वात् "अकृत्सार्व" इति दीर्घे ऽङ्गवृत्तपरिभाषाया अनित्यत्वेन पुनः प्रसङ्गविज्ञानात् "ओर्गुण" इत्यर्थः** । मरुत्वतीयमिति । **मरुत्वानिन्द्रः** । अग्नीषोमीयमिति । **"ईदग्नेः" इतीत्वम्** । निपातनादिति । **"तत्पुरुषे कृति" इति बहुलग्रहणाद-**

त्रान्ताद्वुञ्'' केदारादिभ्यः प्रातिपदं यञादय इत्याशयेनोदाहरति—**काकं वाकमिति**। एवं वार्कम्। काकबकवृकशब्दा आद्युदात्ताः। ''प्राणिनां कुपूर्वाणाम्'' इति फिट्सूत्रात्। प्राणिविशेषवाचिनां शब्दानां ये आदिभूताः कवर्गात् पूर्वे तेषामुदात्तः स्यादिति सूत्रार्थः। अथादिः प्राक्शकटेरिति ह्यधिकृतम्। यत्तु वृत्तौ न्यासे च शौकामित्युदाहृतं तत्प्रामादिकं खण्डिकादिषु शुकशब्दस्य भाष्ये वृत्तौ च पठितत्वेनाञन्तत्वादित्यवधेयम्।

''**भिक्षादिभ्योऽण्**''॥ **भैक्षमिति**। अचित्तत्वाट्ठक् प्राप्तः। **गार्भिणमिति**। ''अनुदात्तादेरञ्'' प्राप्तः। सति तस्मिन्, आद्युदात्तत्वं टिलोपश्च स्यात्। **युवतीनामिति**। वृत्तिकारस्तु भिक्षादिगणे युवतिशब्दं पठित्वा तत्सामर्थ्यान्न पुंवदित्याहुः। न चानुदात्तादेरञं बाधितुं पाठः। ''भस्याढे तद्धिते'' इति पुंवद्भावः सिद्धश्च प्रत्ययविधाविति प्रागेव। प्रत्ययनिवृत्तौ सत्याङ्कानिन्युवृषीति कनिनन्ततया आद्युदात्तत्वात् तथा च स्त्रीसङ्घयौवतमिति रूपं तन्मते स्थितम्। किन्तु नैतद्युक्तं भाष्यवार्त्तिकयोरिह युवतिशब्दपाठस्य प्रत्याख्यानात्। तथाचेह औत्सर्गिकोऽण् न तु भिक्षादित्वप्रयुक्त इत्यवधेयम्। **शत्रन्तादिति**। एवं च 'गार्भिणं यौवतं गणे' इत्यमरोक्तिः

अदः समित्संमुखवीरयौवतत्रुटद्भुजा कम्बुमृणालहारिणी।

इति श्रीहर्षोक्तिश्च भाष्यमतेऽपि नासङ्गतेति भावः॥

''**ब्राह्मणमाणव**''॥ ननु त्रयोऽप्यमी वृद्धास्तेभ्यः प्रकृतो यञेवास्तु। न हि वृद्धाद् यञि यनि वा रूपे विशेषोऽस्ति। न वा स्वरे, उभयथाऽप्याद्युदात्तत्वात्। ठञ् तु नानुवर्त्तिष्यतेऽस्वरितत्वात्। सत्यम्।

---

**भ्य आचारक्विबन्तेभ्यः कर्त्तरि क्विप् नास्त्येव। भाष्ये उदाहरणेषु दन्त्यपाठात् न ष इति बोध्यम्।**

आदिभूता इति। **अच इत्यर्थः**। कवर्गात्पूर्वे इति। **इदं फलितार्थकथनम्। पूर्वशब्दो भावप्रधानः। कोः पूर्वत्वमेषामिति बहुव्रीहिरतः सूत्रे न सर्वनामकार्यं सुडिति बोध्यम्। कवर्गावधिकपूर्वत्ववतामिति वाच्योऽर्थः।**

अन्यतो विधानार्थे यन्वचनं तत्सिद्धार्थकथनपरं वार्तिकमाह । **पृष्ठादिति ।** पृष्ठशब्दः स्तोत्रविशेषस्य सञ्ज्ञा । **पृष्ठ्य इति ।** पृष्ठानां समूहः । कथन्तर्हि 'पृष्ठ्यः षडह' इति ? मत्वर्थलक्षणयेत्यवेहि ।

"**ग्रामजनबन्धुभ्यः**" ॥ वृत्तिकृता तु वार्तिकान्तर्गतः सहायशब्दोऽपि सूत्रे प्रक्षिप्तः ।

"**अनुदात्तादेरञ्**" ॥ इह सूत्रे चित्तवन्त उदाहरणम् । अचित्तात्तु आपूपिकं शाष्कुलिकमित्यादौ परत्वाट्ठगेवेत्याशयेनाह--**कापोतमिति ।** कपोतमयूरशब्दौ मध्योदात्तौ "लघावन्ते" इति फिट्सूत्रात् ।

"**खण्डिकादिभ्यश्च**" ॥ आद्युदात्तार्थं वचनम् । अचित्ताट्ठको बाधनार्थञ्च ।

"**चरणेभ्यो धर्मवत्**" ॥ यस्याः प्रकृतेर्यः प्रत्ययो धर्मे वक्ष्यते स ततः समूहेऽपि स्यादित्यर्थः । वुञादयो हि चरणेभ्यो वक्ष्यन्ते "चरणाद्धर्माम्नाययोः" इति तु तत्र वार्त्तिकं तदप्यनेनातिदेशसूत्रेण ज्ञापितमिति बोध्यम् । **काठकमिति ।** "गोत्रचरणाद्वुञ्" । **छान्दोग्यमिति ।** "छान्दोगौक्थिक"इति ञ्यः ।

"**विषयो देशे**" ॥ तस्येत्यनुवर्त्तत इत्याह —**षष्ठ्यन्तादिति । शैबिकविधमिति ।** क्लीबत्वं लोकात् ।

"**सोऽस्यादिरिति**" ॥ अक्षरेयत्तानिबन्धनं पङ्क्त्यादिच्छन्दस्तद्वाचकात्प्रथमान्तादस्येत्यादिमति प्रत्ययः स्यात् । य आदिमान् स प्रगाथ-

---

अस्वरितत्वादिति । योगविभागसामर्थ्यादित्यपि बोध्यम् । वुञ्न्तु न सम्बन्धो व्याख्यानात्(१) । समूहप्रत्ययान्तानां नपुंसकत्वाद्यञश्चेत्यत्रापत्यग्रहणाच्च न स्त्रियां विशेष इति बोध्यम् । मत्वर्थलक्षणयेति । छान्दसस्येति शेषः । छान्दसस्तत्र मत्तोर्लुगित्यन्ये ।

फिट्सूत्रादिति । शकुनीनाञ्च लघुपूर्वमित्याद्युदात्तत्वन्तु नान्त्यात्पूर्वं लघूदात्तमिति तदर्थादिति भावः । मयूरो "मार्गीणां च" इत्यनेनापि

प्रग्रथ्यत इति प्रगाथः। "अकर्त्तरि च कारक" इति कर्मणि घञ्।
रादित्वाद्रेफनकारयोर्लोपः। रूढश्चायम्। चतुर्थषष्ठौ पादौ बार्हते प्र-
पुनरभ्यसित्वा 'उत्तरयोरवस्येत्'इत्येवमादिवचनाद्यत्र द्वयोर्ऋचोस्तिस्रः
ति स प्रगाथः। **त्रैष्टुभमिति**। कुटी कुटीर इत्यादिवत् स्वार्थिके
लिङ्गान्यत्वम्।

"**सङ्ग्रामे**"॥ प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्योऽस्ये-
ष्ठ्यन्तार्थे सङ्ग्रामेऽभिधेयेऽण् स्यात्।

"**तदस्याम्**"॥ प्रहरणं किम्? माला भूषणमस्याम्। क्रीडायाङ्कि-
खड्गः प्रहरणमस्यां सेनायाम्।

"**घञः साऽस्याम्**"॥ घञः किम्? श्येनपतनमस्यां वर्त्तते।
ऽकिम्? प्राकारोऽस्यां वर्तते। तदस्यामिति प्रकृते पुनः साऽस्यामि-
ः क्रीडायामित्यस्यानुवृत्तिर्मा भूदिति। अत एवाह--**दण्डपाता-**
**ं तिथाविति**।

"**तदधीते तद्वेद**"॥ द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः
। द्विस्तद्ग्रहणमधीयाने विदुषि च पृथग्विधानार्थम्। अन्यथा उत्तरत्र
सन्तादीनामशब्दात्मकतया अध्ययनासम्भवेन वेदितर्येव प्रत्ययः
। सिद्धान्ते तु द्विस्तद्ग्रहणसामर्थ्यात् क्रतुवसन्तादयः शब्दास्तत्प्रतिपा-
न्थे गौणा अपि प्रत्ययं लभन्ते।

"**क्रतूक्थादि**"॥ **क्रतुविशेषेति**। क्रतुशब्दस्तु न गृह्यते।
हि सति उक्थादिष्वेव पठ्येत। नापि क्रतुपर्यायाः। उक्थादिषु यज्ञ-
स्य पाठादिति भावः। **आग्निष्टोमिक इति**। संस्थाविशेषवचन-
ः अग्निष्टोमशब्दस्य तत्संस्थाके क्रतौ निरूढः प्रयोगः। **वासवद-**

---

ाङ्कः काकुभ इत्यादि प्रातिशाख्ये व्याख्यातमिति केचित्।
त्ययं लभन्त इति। अध्ययनवेदयोः सहाधिकारादुत्तरप्रत्ययानां निय-

स्तामिति । गद्यरूपो ग्रन्थविशेष आख्यायिकेति, "अधिकृत्य कृते ग्रन्थे" इति सूत्रे हरदत्तः । **सर्वादेरिति** । सादेरित्यत्र अर्थवतस्सशब्दस्य ग्रहणात्सर्वादेः पृथगुपादानम् । एतदपि अर्थवत्परिभाषायां ज्ञापकम् । **सवार्त्तिक इति** । वार्त्तिकान्तमधीत इत्यर्थः । अन्तवचने अव्ययीभावे "अव्ययीभावे चाकाल" इति सहस्य सः । ततोऽणो लुक् । **इकन्निति** । पद-शब्द उत्तरपदं यस्य तस्मादिकन् स्यात् । शतशब्दात् षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात् षिकन् स्यात् । षो ङीषर्थः । **शतपथिक इति ।** अत्र वृत्तिकारो बहुलग्रहणं कृत्वा शातपथ इति अणमप्युदाजहार । इकन् बहुलं पथोत्तरपदादित्युक्थाद्यन्तर्गणसूत्रमिति न्यासकारः ।

"**वसन्तादिभ्यष्ठक्**" ॥ उक्थादिषु वसन्तादयः पाठ्यास्ते वा वसन्तादिषु । तथा तु न कृतमित्येव । **अथर्वाणमिति** । अथर्वणा प्रोक्तोऽथर्वा । उपचारात् । यद्वा, तेन प्रोक्तमिति प्रकृत्य ऋषिभ्यो णो लुग्वक्तव्यः–वसिष्ठो विश्वामित्रोऽनुवाक इत्युदाहृत्य अथर्वणो वा अथर्वा आथर्वण इति शैषिकप्रकरणान्ते भाष्योक्तेः साधु ।

"**ण्यक्षत्रियार्ष**" ॥ ण्यप्रत्ययान्तात् क्षत्रियगोत्रप्रत्ययान्तादार्षप्रत्ययान्ताद् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक्स्यात् । "कुर्वादिभ्यो ण्यः" । कौरव्यः पिता । कौरव्यः पुत्रः । "ऋष्यन्धक" इत्यण् । श्वाफल्कः पिता । तत इञ् । लुक् । श्वाफल्कः पुत्रः । वसिष्ठादृष्यण् । वासिष्ठः पिता पुत्रश्च । "तिकादिभ्यः फिञ्" । तैकायनिः । ततोऽण् । लुक् । तैकायनिः पुत्रः । **ऋष्यण एवेति** । पाणिनशब्दे तु औत्सर्गिक

---

अणो लुगिति । **अस्याव्ययीभावत्वे ऽप्यच्छेत्राणि उपसर्ज्जनत्वान्नाव्ययत्वम् ।**

भाष्योक्तेरिति । **"रैवतिकादिभ्यश्छन्दसि" इति सूत्रे इति शेषः । अस्मादेव भाष्यप्रयोगात्तद्विषयता वैकल्पिकीत्याहुः । अत्र पक्षे "प्रोक्ताल्लुक्" तु न ।** विधानसामर्थ्यादर्थप्रतीतेरणाप्युपपत्तेः । **यद्यपि आथर्वणमादाय आथर्वणिकः सिद्धः तथापि अथर्वणा प्रोक्तमधीते इत्यर्थेऽथर्वेति निवृत्त्यर्थं वसन्तादिषु पाठः । "दाण्डिनायनादि" सूत्रे निपातनञ्चाथर्विकनिवृत्त्यर्थ-**

इति भावः ।

द्धा पाणिनशब्दो यौगिको न तु ऋषौ रूढः । लुग्विधौ तु रूढ-
हणम् । एतच्च शास्त्रान्ते भगवतः पाणिनेः सिद्धमिति वार्त्तिकनिर्दे-
पुत्रस्य पाणिनेरिति भाष्याच्च निर्णीतामित्यवधेयम् ।

ष्टकमिति । "संख्यायाः सञ्ज्ञासङ्घसूत्राध्ययनेषु" इति "सं-
अतिशदन्तायाः कन्" ।

छन्दोब्राह्मणानि" ॥ छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहणं तद्वि-
त्यर्थम् । तेन पुराणप्रोक्तानामेव तद्विषयता । नेह । याज्ञवल्क्येन
ब्राह्मणानि याज्ञवल्कानि । "कण्वादिभ्यो गोत्रे" इत्यण् । "आ-
त्र" इति यलोपः । याज्ञवल्क्यादयो नूतना इति सूत्रकारदृष्ट्या
व्यवहारः । छन्दोब्राह्मणानीति किम् ? पाणिनीयं व्याकरणम् ।

इति रक्ताद्यर्थकाः ।

---

## अथ चातुरर्थिकाः ।

स्मिन्" ॥ मतुपोऽयमपवादः । सकललोकनिरूढे यथा स्यात्

---

ऋष्यणः प्राप्तेरिति भावः ।

। पणि शब्द इति पाठः । एवं चार्षेत्यत्र प्रतिपदोक्तपरि·
त्तावपि न क्षतिः । अत एव "वाऽन्यस्मिन्" इति सूत्रे·
त् "इतश्चानिञः" इति ढकि तत इञि "ण्यक्षत्रि·
लुग् भाष्योक्तः सङ्गच्छत इति भावः । मूलन्तु प्राचामनुसारे-
यम् । अत्र पक्षे आर्ष इति स्वार्थे ऽण् ऋषिवाचिनो गोत्रप्रत्यया·
ि इति बोध्यम् ।

ानामिति । याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वादिति वार्तिक·
ारुचिश्छन्दस्त्वं मन्त्रेष्वेवेति च ।

इति रक्ताद्यर्थकाः ।

न त्वाधुनिकसङ्केतितेऽपीत्येतदर्थं इतिशब्दः। देशे तन्नाम्नीति उत्तरसूत्रत्रये ऽप्यन्वेति।

**"तेन निर्वृत्तम्"**॥ अन्तर्भावितण्यर्थाद् वृतेः कर्मणि क्तः। **चातुरर्थिकत्वमिति।** चतुर्णामर्थानां समाहारश्चतुरर्थी। तत्र भवाश्चातुरर्थिकाः। अध्यात्मादित्वाट्ठञ्। तद्धितार्थे द्विगौ तु ठञो लुक् स्यात्।

**"वुञ्छण्"**॥ सूत्रे कुमुदशब्दस्य द्विःपाठेऽपि एकशेषो न भवति प्रथमतः कुमुदान्तानां चतुर्णां द्वन्द्वं विधाय द्वितीये काशादिकुमुदान्तद्वन्द्वेन सह पुनर्द्वन्द्वविधानात्। आदिशब्दः प्रत्येकमभिसम्बद्ध्यते। तदाह—**अरीहणादिभ्य इति।**

**"जनपदे लुप्"**॥ तन्नाम्नीत्येव। नेह। उदुम्बराः सन्त्यस्मिन्नौदुम्बरो जनपदः। न ह्यत्र लुबन्तं नामधेयम्।

**वक्ष्यमाणेनेति।** अवर्णोपधात्परत्वादिति भावः। न च टिलोपस्य स्थानिवत्त्वम्। 'पूर्वत्रासिद्धे तन्निषेधात्'। नन्वेकदेशविकृतन्यायेन पदत्वाद्रुत्वं स्यादिति चेन्न। बहिरङ्गत्वेन टिलोपस्यासिद्धत्वात्। न च षाष्ठी बहिरङ्गपरिभाषा रुं न पश्येदिति वाच्यम्। कार्यकालपक्षाश्रयणात्। नन्वेवमौत्सीत्यादौ रुत्वं, घटी आमलकी इत्यादौ जश्त्वं च स्यात्। "यस्येति"

---

अन्तर्भावितेति। **निवर्त्तितेत्यर्थः।** लुक् स्यादिति। **एतद्धरदत्तानुसारेण। अर्थविशेषासम्प्रत्ययेऽतन्निमित्तादपि, पञ्चकपाल्यां संस्कृत इत्यपि विगृह्य पञ्चकपाल इत्येव यथा स्यादिति भाष्यवार्त्तिकाभ्यामव्यवि(१)कन्यायेन पञ्चकपाल्यां संस्कृत इति वाक्यमेवेति तत्प्रत्याख्यानभाष्येण च विरुद्धमेतत्। चतुरवयवोऽर्थश्चतुरर्थः। तत्र भव इति तु न्याय्यम्।**

पुनर्द्वन्द्वेति। **एतदपि हरदत्तानुसारेण। द्वन्द्वद्वयेनैव निर्वाहात्।**

न ह्यत्रेति। **लुबन्तं चेद्देशनाम तदा लुबिति सूत्रार्थ इति भावः।**

रुत्वं स्यादिति। **वेतस्वानित्यत्रेति शेषः।** बहिरङ्गत्वेनेति। **बहिर्भूतप्रत्ययनिमित्त(२)त्वादिति भावः।** जश्त्वं चेति। **चेन वेतस्वानित्यत्र रुत्वम्। "य-**

---

(१) **अव्यविकन्यायेनेति।** यथा "अवेः कः" इति सूत्रेण आविशब्दात्के निष्पन्नादविकशब्दादेव समूहेऽर्थेऽण्प्रत्यये आविकम् इत्येव भवति नतु केवलादविशब्दात् अपि सामूहिकप्रत्ययेन आवमिति इति वाचो युक्तिः शास्त्रज्ञानाम्।

लोपे कृते ऽवशिष्टस्य स्वादिष्विति पदत्वात् । न च भत्वं, यस्येति लोपस्य स्थानिवद्भावात् । न च पदत्वेऽप्येवं तस्य रुविधिना सह कार्यकालतया पूर्वत्रासिद्धे नेति निषेधादिति चेन्न । पदसञ्ज्ञानां यथोद्देशाश्रयणात् । अत एव राम औ इत्यवस्थायां पदत्वे बस्रसादेरिव स्थानिवद्भावेन रामौ इत्यादेः पदत्वम् । अन्यथा उभयत आश्रयणे ऽन्तवद्भावप्रतिषेधात् पदत्वं दुर्लभं स्यादिति दिक् ।

---

स्येति" लोप इति । वेतस्वानित्यत्र टिलोपे अन्तरङ्गे सुप्तिङन्तमिति पदत्वे कृते अस्यापि प्राप्तिरित्यपि बोध्यम् । न हि "स्वादिषु"इति पदत्वं तेभ्योऽन्तरङ्गं येनोक्तन्यायेन समाधिः स्यादिति भावः। यस्येतीति । टिलोपस्याऽप्युपलक्षणम् । कार्यका(१)लतयेति । कार्यकालपक्षे एकवाक्यतयेत्यर्थः । निषेधादिति । साक्षात्परम्परया वा पूर्वत्रासिद्धीयप्रापकप्रतिबन्धकस्थानिवत्त्वस्य तेन निषेधादित्यर्थः।

दिगिति । दिगर्थस्तु तुल्यन्यायेन भत्वेऽपि तन्निषेधः । एवं चौत्सीस्यादावपि न दोषः । एवं चैकदे(२)शविकृतन्यायेन सुबन्तत्वानिमित्तकपद-

---

पञ्चम्यतान्यतरपदप्रयोज्यविषयताप्रयोजकपदघटितत्वम् , स्वघटकपञ्चम्यन्तपदप्रयोज्यविषयतापर्य्याप्त्यधिकरणसमुदायघटकवृत्तिसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताप्रयोजकपदघटितत्वम् । स्वघटकसप्तम्यन्तपदप्रयोज्याविषयताश्रयमात्रारब्धसमुदायघटकवृत्तिसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताप्रयोजकपदघटितत्वम् , एतदन्यतमसम्बन्धेन । यथा स्वं "पुगन्त"इति शास्त्रं तद्घटकपदप्रयोज्योद्देश्यतापर्य्याप्त्यधिकरणम् अशु श्रु अ इति तद्घटक अ इत्येतद्वृत्तिविषयताप्रयोजकमचीति लक्षणसमन्वय ऊहनीयः ।

(१) कार्यकालेति । कार्यकालपक्षे पृथग्वाक्यार्थबोधाभावादिति भावः । वस्तुतस्तु चिन्त्यमिदम् कार्यकालपक्षेऽपि त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तेः । कुतः पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात् । नच बहिरङ्गपरिभाषया पूर्वस्यासिद्धत्वादभावेन यं प्रति परासिद्धत्वम् पूर्वत्र इत्यनेन वक्तुमशक्यमिति वाच्यम् । एवं तर्हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः । किं च पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः । अत एवोक्तम् भाष्ये "कार्यकालपक्षमेवोपक्रम्योक्तयुक्तीरुक्त्वाऽयुक्तोऽयम्परिहारो न वा बहिरङ्गलक्षणत्वात्" इति विसर्जनीयसूत्रे सिद्धान्तिना । त्रिपादीस्थेऽन्तरङ्गे कर्तव्येऽयम् परिहारो न युक्त इति भाष्याक्षरार्थः । किन्तु वचनमेवारब्धव्यम् इत्याशयः । अत एव 'तस्य दोष' इति वचनमेवारब्धम् इति निगाल्यते इति लत्वसिद्धिः । अन्यथा अन्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पि-

मद्विषाच्चेति । एतच्च सूत्रेणैव सूचितम् । तथा हि–प्रकृतस्य मतु-

---

वेतस्वानित्यत्र न । परत्वेन तस्यापि भत्वेन बाधादिति । एतेन
द्‌शाश्रयणे ऽपि साक्षात्परम्परयेत्याद्युक्तरीत्या पदत्वे स्थानिवत्त्वनि-
स्यादेवेत्यपास्तम् ।

स्तुत इदं सर्वं वार्त्तिकानुरोधेन । कार्यकालपक्षे ऽपि त्रिपाद्यां भाष्य-
ाहिरङ्गपरिभाषाया अप्रवृत्तेः । परपदस्थाजादेशस्यैव स्थानिवत्त्वे
ाच्च । "पूर्वत्रासिद्धीये" इति निषेधोऽप्यत्र नेति "न पदान्त" सूत्रे
ादितम् ।

तुप एवेति । न च "ह्रस्वनुड्भ्यां मतुप्" इत्यत्रैतदग्रहणार्थं ऽप्यनुबन्धको-
रणम् । परत्वाट्टिलोपे ह्रस्वात्परत्वाभावात् । न गोश्वान्निति निषेधेन
भावाच्च । सावर्णान्तत्वात् । न च वेतस्वानित्यादावुदात्तानुवृत्ति-
य न गोश्वान्नति निषेधाभावाय तत् । तत्र हि मतुब्ग्रहणमनुवर्त्तेत

---

न्यायस्योपयोगाभावेन चिन्त्यमिदम् । नच कार्यकालपक्षे दोष इति वाच्यम् । व्यव-
रुभयपक्षयोरन्यतरपक्षेण लक्ष्यनिर्वाहे प्रकारान्तरेण दोषदानस्यानुचितत्वादिति तत्रैव
उक्तत्वात् । सुबन्ततदादित्वस्य स्थानिवत्त्वेनानेतुं शक्यत्वेन कार्यकालपक्षेऽपि दोषा-
। न च ऋधातोर्लिटि द्वित्वे उरदत्वे अर् ऋ इति स्थिते अर् इत्यस्याभ्याससंज्ञार्थं
: इति समुदाये द्विर्वचनीयविधेयताश्रयद्विर्वचनीयोद्देश्यताश्रय एतदुभयारब्धसमुदायत्व-
देशायैकदेशविकृतन्यायस्यावश्यकत्वमिति वाच्यम् । स्थानिवत्त्वेनैव ऋत्वत्यभ्यासत्व-
इत्यत्रारोपेणादोषात् । नचाल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिका-
ारभूतधर्मेण साक्षादवच्छिन्ना उद्देश्यता तदुद्देश्यताके कार्ये स्थानिवत्त्वेत्यर्थकेणानल्विधौ
ूत्रेण तन्निषेध इति वाच्यम् ।

थाहि–अल्त्वव्याप्यो धर्मः ऋत्वं तद्धर्मावच्छिन्ना ऋकारनिष्ठास्थानितानिरूपितादेशता-
ार् तद्धर्मिकारोप अर् अभ्यासवान् इत्याकारकः तादृशारोपप्रकारीभूताभ्यासत्वेन साक्षा-
छन्ना "हलादिश्शेषः" इति शास्त्रीयाभ्यासत्वावच्छिन्ना अभ्यासनिष्ठा उद्देश्यतेति लक्षणसम-
। ऋ ऋ अ इति स्थिते "पूर्वोऽभ्यास" इत्यस्य द्विर्वचनविधेयताश्रयावधिकपूर्वत्वविशे-
ासासंज्ञको भवतीत्यर्थकरणेन एकदेशविकृतन्यायानङ्गीकारेऽपि ऋ इत्यत्रोरदत्वोत्तरं
त्यत्रापि द्विर्वचनीयावधिकपूर्वत्वस्य सत्त्वेनादोषात् । नच पूर्वोक्तार्थस्वीकारे देवदत्तो दे
इत्यत्राभ्याससंज्ञापत्तिः । नच प्रत्यासत्त्याभ्याससंज्ञाप्रयोजकप्रत्ययनिमित्तकाङ्गावयवा-
आदिर्हल् शिष्यते इति "हलादिः शेषः" इत्यस्यार्थकरणेन न दोष इति वाच्यम् । ऊर्णु-
तीत्यादौ हलादिशेषस्य दुर्वारत्वात् । तस्मात् "पूर्वोभ्यास" इत्यस्य द्विर्वचनविधेयता-

य एव हि डित्त्वमातिदिश्यताम् । प्रक्रियालाघवाय ड्वतुबेव वा क्रियताम् । एवं च ड्मतुब्वचनमन्यतो विधानार्थम् ।

**"शिखाया वलच्"** ॥ "दन्तशिखात्संज्ञायाम्" इति पञ्चमे वक्ष्यते, तद्देशेऽपि शिखावल इति रूपस्य सिद्धये । इदन्तु निर्वृत्ताद्यर्थम् देशे तन्नाम्न्यणो बाधनार्थञ्च ।

**कुञ्चेत्यादि** । नडाद्यन्तर्गणसूत्रद्वयम् । सौत्रः षष्ठ्या लुक् । एवं तक्षन्नित्यत्रापि ।

**इति चातुरर्थिकाः ॥**

# अथ तद्धितेषु शैषिकप्रकरणम् ।

**"शेषे" ॥ लक्षणं चेति** । स्यादेतत् । लक्षणं तावद् व्यर्थम् । चाक्षुषादीनां "तस्येदम्" इति सूत्रेण, दार्षदादीनां तु "संस्कृतं भक्षाः" इत्यनेन सिद्धत्वात् । तथा अधिकारोऽपि व्यर्थः । तं विनापि घादीनां ट्युट्युलन्तानामपत्यादिचतुरर्थीपर्यन्तेष्वर्थेषु अप्रवृत्तेर्ज्ञापकबलेनैव सुसाधत्वात् ।

तथा हि—आर्द्रका शालेत्यादयो वृद्धास्तेषां "वृद्धाच्छः" इत्येव सिद्धे उत्करादिषु पाठो ज्ञापयति नेतः प्राग् घादयः स्युरिति । "गोत्रोक्ष"इति

---

इति, "चौ" इति सूत्रभाष्ये स्पष्टमिति वाच्यम् । कुमारीत्यादावन्तोदात्तत्वानापत्त्या तेनोदात्तनिवृत्तिस्वरस्य न निषेध इत्यर्थस्य तत्सूत्रे भाष्ये एव स्पष्टत्वादिति भावः । ननु रका जाडार इत्यस्य साधयितुमशक्यत्वेन तेनान्यतो विधानस्य ज्ञापयितुं शक्यत्वेऽपि प्रकृते तदशक्यम्, मतुपाऽपि महिष्मानित्यस्य साधयितुं शक्यत्वादित्यरुचेराह-प्रक्रियेति । अन्यत इति । एवं रीत्या एतज्ज्ञापकसिद्ध्यर्थमेव प्रकृतस्य मतुपो डित्वं न कृतमिति तत्त्वम्॥

इति चातुरर्थिकाः ॥

## अथ तद्धितेषु शैषिकप्रकरणम् ।

वुञ्विधिरपीह लिङ्गम् । अन्यथा समूहस्यापि इदमर्थान्तर्भूततया "गोत्रचरणाद् वुञ्" इत्येव सिद्धे किं तेन ?

किं च, अपत्याद्यर्थानामनुवृत्त्या तस्येदंविशेषतया वा यदि तत्र घादय इष्येरँस्तर्हि "प्राग्दीव्यतोऽण्" इत्यत्रैव ण्यादिभिः सह पठ्येरन् । अथोच्येत नापत्यादिव्यावृत्तये शेषाधिकारः, किं तु अर्थसाकल्यार्थः । अन्यथा सन्निहिते जातार्थे एव घादयः स्युः । भवादौ तु प्राग्दीव्यत इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमाना अणादय एव स्युर्न तु घादयः । शेषशब्दात्तु सर्वेषु घादयः सिध्यन्तीति । मैवम् । जाताधिकारानन्तरम् "प्रावृषष्ठप्"इत्यादिभिः सह घादिषु वक्तव्येषु ततः प्राक् पाठसामर्थ्यादेवार्थसाकल्यलाभात् । तस्माद् व्यर्थमिदं सूत्रमिति चेत् ? अत्रोच्यते, अधिकारस्तावदावश्यकः, शैषिकात्सरूपः शैषिको नेति वक्ष्यमाणस्यार्थस्य विषयलाभो यथा स्यात् । शैषिकत्वप्रयुक्तं कार्यविशेषं ध्वनयितुं क्रियमाणः शेषाधिकार एव ज्ञापयति–शैषिकान्मतुबर्थीयादित्यादि । एष च श्लोकः सन्विधौ मतुब्विधौ च भाष्ये पठितः । इह तु सन्नन्ते उपन्यस्त इति तत्रैव व्याख्यास्यते । एवं स्थिते विधायकत्वमपि तस्य सुवचमिति नातीव तत्र निर्भरः कार्यः ।

**विगृहीतादपीत्यादि** । वाचकनिकमेवेदम् । सूत्रे सङ्घातस्यैव ग्रहणम् । अन्यथा वैषम्यात्संख्यातानुदेशो न स्यात् ।

**कुत्सितास्त्रय इति** । इह बहुव्रीहिरपि सुवचः । अत एव निपातनात्कोः कद्भावः । तेन 'कद्भावे त्रावुपसंख्यानम्' इति न कर्तव्यम् ।

---

त्यर्थः । तेषामर्थानामिदंशब्देनाग्रहणं ज्ञाप्यते इति तत्त्वम् । नन्वार्द्रकादिभ्यश्चातुरर्थ्यामेवेति नियमार्थं तत्स्यादित्यरुचेराह—गोत्रोक्षेतीति । (१)लिङ्गं तु लोकादेव नपुंसकत्वं बोध्यम् ।

पठ्येरन्निति । सम्भावनायां लिङ् । तेनेदं सूचितं विकारे घादिनि-

**"दक्षिणापश्चात्" ॥ पाश्चात्य इति** । कथं तर्हि 'पश्चात्त नः
नुद्यमानः' इति श्रीहर्षः । न च दिग्देशवाचिनि पश्चाच्छब्दे साव-
त्यकं कालवाचकात् ट्युट्युलौ बाधेते परत्वादिति वाच्यम् । 'अग्रादि-
ड्डिमच्' इति डिमचा ट्युट्युलोर्बाधस्य दुर्वारत्वात् । सत्यम् । पश्चात्त-
इति पश्चात्तना इति कथं चिद्योज्यम् ।

**"कापिश्याः ष्फक्"** ॥ कापिशीशब्दात् ष्फक् स्यात् । षो ङी-
। तदाह—**कापिशायनी द्राक्षेति** ।

**"द्युप्रागपाक्"** ॥ अवाची दक्षिणा दिक् । द्वितीयो वर्णः पकारो
दन्त्योष्ठ्यः । 'यदिन्द्र प्रागपागुदक्' इत्यादौ तथा दर्शनात् । प्रागा-
द्विविधाः—अव्यया अनव्ययाश्च । अस्तात्यन्ता अव्यया, अन्ये तु न ।
ऽपीह गृह्यन्तेऽविशेषात् । अथ कथं 'संस्काराः प्राक्तना इव' इति ?
वाचिनोऽव्ययात् परत्वात् ट्युट्युलाविति बोद्धव्यम् ।

**औत्तराह इति** । यदा तु उत्तरादाहिप्रत्यये ततोऽण् क्रियते तदा
तराहशब्दोऽन्तोदात्तः स्त्रियां ङीप् च बोद्धव्यः । आहजन्तस्तु आद्युदात्तः
यां टाप् चेति विशेषः । **वक्ष्यत इति** । "श्वसस्तुट् च" इत्यत्र ।

**"मद्रेभ्योऽञ्"** ॥ बहुवचननिर्देशाज्जनपदवाची गृह्यते, न तु
पर्यायः । **दिशोऽमद्राणामिति** । दिग्वाचकादुत्तरपदस्य जनपदवा-
नो मद्रभिन्नस्याचामादेर्वृद्धिः स्याद् ञिति णिति किति च तद्धिते इत्यर्थः।
**र्वमद्र इति** । मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्शब्देन सामानाधि-
ण्यात् "तद्धितार्थ" इति समासः ।

**"उदीच्यग्रामात्"** ॥ दिग्ग्रहणं निवृत्तम् । **शैवपुरमिति** ।
प्रस्थपुरवहान्ताच्च" इति वुञ् न भवति । "वृद्धात्" इति हि तत्रानुवर्त्तते।

**"भवतष्ठक्छसौ" ॥ जश्त्वमिति** । "सिति च" इति पदत्वा-
ति भावः । एतदर्थमेव हि छसः सकारः । अत एव नायं शकारादिः ।
था हि सति सित्वं व्यर्थं स्यात् ।

---

स्त्रियां टाप् चेति । **चेन अदूरे सिद्ध औत्तर इति प्रयोगनिवृत्तिश्चास्य
लमिति सङ्गृहीतम्** ।

**"काश्यादिभ्यष्ठञ्ञिठौ"** ॥ **इकार उच्चारणार्थ इति ।** ञकार एवोभयत्राप्यनुबन्धः । तस्य विपर्यासस्तु स्त्रीप्रत्ययविशेषार्थ इति भावः । **"आपदादि" इति** । अन्तर्गणसूत्रमिदम् ।

**"धन्वयोपधाद्वुञ्"** ॥ धन्वेति न स्वरूपग्रहणं वृद्धत्वासंभवादित्याशयेनाह—**धन्वविशेषेति । ऐरावतं धन्वेति** । यद्यपि 'समानौ मरुधन्वानौ' इत्यमरेण पुंस्त्वमुक्तम् । तथाऽपि नपुंसकोऽपि धन्वशब्दोऽस्ति । आष्टकं नाम धन्वेति भाष्ये ह्रस्वपाठात् ।

**"गहादिभ्यश्च"** ॥ एभ्यो देशवाचिभ्यश्छः स्यात् । पूर्वपक्षादिशब्देभ्यस्तु देशवाचित्वाभावेऽपि पाठसामर्थ्याच्छः । **'मुखपार्श्व' इति** । "अलोऽन्त्यस्य" इति सकारस्य लोपः । "यस्येति च" इत्यकारस्य । अव्ययानां भमात्रे टिलोपस्यानित्यतां ज्ञापयितुं लोपवचनम् । **मुखतीय इति** । मुखतो जातादिः । आद्यादित्वात्तसौ ततश्छः । **स्वकीयमिति** । गहादेराकृतिगणत्वाच्छः । अदेशवाचित्वेऽपि पूर्वपक्षादिवत् । तथा च "लुब्योगाप्रख्यानात्" इत्यत्र न हि स्वकीयस्यैव प्रत्याख्यानमिति न्यासः । केवलात् स्वशब्दात्तु अण् । सौवम् । एतच्च "द्वारादीनां च" इति सूत्रे आकरे उदाहृतम् । स्वीयमिति तु "प्राक्क्रीताच्छः" । चान्द्रास्तु "स्वपरजनदेवराज्ञां कुक्च" इति सूत्रयन्ति । तत्र राज्ञो नलोपे यत्नः कर्तव्यः ।

**"पर्वताच्च"** ॥ कथं तर्हि—

तत्र घोरं रघोर्जन्यं पार्वतीयैर्गणैरभूत् । इति ?

उच्यते, पर्वतीयस्य राज्ञ इमे इत्यर्थे छान्तादण् । शैषिकाच्छैषिको नेति निषेधस्तु नास्ति, असरूपत्वात् ।

**"युष्मदस्मदोः"** । इह योगो विभज्यते । तेन यथासंख्यं न । तथा हि—"युष्मदस्मदोरन्यतरस्याम्"—आभ्यां छो वा स्यात् । "त्यदादीनि च" इति वृद्धत्वान्नित्यं प्राप्ते विकल्पोऽयम् । ततः "खञ्च" । एवमुत्तरसूत्रे-

---

एभ्यो देशेति । **सति सम्भवे इति शेषस्तेनापठितेभ्यो ऽप्यदेशवाचिभ्यः**

ऽपि योगविभागो बोद्धव्यः । तेनादेशयोः खञणूभ्यां यथासंख्यं न तस्मिन् युष्माकास्माकौ तस्मिन् खञीत्यर्थः । ततो ऽणि च । अत एव खञणोरिति नोक्तम् ।

**"तवकममकावेकवचने"** । अत्रापि खञि अणि चेति वाक्यभेदेन संबद्ध्यते । अतो यथासंख्यं नेति दिक् ।

**"अ साम्प्रतिके"** ॥ सम्प्रतीत्यव्ययं प्रज्ञादौ पठ्यते । तच्च न्याय्ये वर्तते । तथा च प्रयुज्यते । 'अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रः स वा एष सम्प्रति यज्ञो यः पञ्चरात्र' इति । न न्यूनो नातिरिक्तः, सम इत्यर्थः । इदानीमित्यर्थेऽपि । 'एतर्हि सम्प्रतीदानीम्' इत्यमरात् । ततोऽण् साम्प्रतम् । ततो विनयादेराकृतिगणत्वात् स्वार्थे ठगिति न्यासकारः ।

**"द्वीपादनुसमुद्रं यञ्"** ॥ समुद्रं समया ऽनुसमुद्रम् । "अनुर्यत्समया"इत्यव्ययीभावः । सप्तम्यन्तं चेदं विद्यमानक्रियाद्वारकं द्वीपविशेषणमित्याह-**समुद्रसमीपे यो द्वीप इति** । कच्छाद्यणो मनुष्यवुञश्चापवादो ऽयम् । अनुसमुद्रं किम् ? द्वैपमन्यत् । द्वैपको मनुष्यः । "कच्छादिभ्यश्च" "मनुष्यतत्स्थयोर्वुञ्" इति सूत्राभ्यां यथायथमण् वुञ् च ।

**"कालाट्ठञ्"** ॥ इह कालविशेषवाचिनामेव ग्रहणं न तु स्वरूपस्य पर्यायाणां वेति वृत्तिन्यासपदमञ्जर्यादिषु स्थितम् । तन्मते कालिकी व्याप्तिः, कालिकः सम्बन्धः, इत्यादिप्रयोगा विरुध्यन्ते । किं च विशेषा एव गृह्यन्ते इति निर्मूलम् । मुनित्रयानुक्तत्वात् ।

यत्तु वदन्ति स्वरूपं पर्यायश्च नेह गृह्यते । ज्ञापकात् । तथा हि "सन्धि-

---

च्छेनेति यथासंख्याप्राप्तिरेवेति वाच्यम् । ससहायताद्योतनेऽपि तस्याः सम्बन्ध्यन्तरसाकाङ्क्षतया द्वयोरुपस्थित्या तत्प्राप्तेर्द्वितीयोपस्थितिं विनाऽर्थापर्यवसानात् । न च प्रत्ययत्रयविधानान्न यथासंख्यं विकल्पार्थकानां पक्षे ऽभावमात्रार्थत्वेऽपि अन्यभावार्थत्वाभावात् । प्रकृते च महाविभाषया वाक्यस्य सिद्धत्वादन्यतरस्याङ्ग्रहणबोधिततदभावेऽणेवेत्यस्य लक्ष्यसंस्कारवेलायां निर्णयेऽपि विदुष्यर्थप्रमितिकाले त्रयाणामनुपस्थित्या तदप्रवृत्तेः । यथासंख्यसूत्रे च विदुष्यर्थप्रमितिवेलायां निर्दिश्यमानगतसंख्यासाम्यं गृह्यत इति स्पष्टं "अमेङ्गणनम्"इत्यादौ भाष्ये । अत एव

वेलादि'' सूत्रेण सन्धिवेलात्रयोदशीप्रभृतिभ्योऽवृद्धेभ्योऽप्यण् विधीयते। तच्च ठञो बाधनार्थं, तदेवोक्तार्थे ज्ञापकमिति। तच्चिन्त्यम्। इदं हि विशेषग्रहणे ज्ञापकं न तु तन्मात्रग्रहणे। तथा च—"नस्तद्धिते" इति सूत्रे 'सायम्प्रातिकः, 'पौनःपुनिकः' इति भाष्यं व्याचक्षाणः कैयट आह—'यथाकथञ्चित्कालशब्दाट्ठञ्' इति। यथा च "नदीभिश्च" इति सूत्रे नदीवाचकत्वाविशेषात्स्वरूपस्यापि ग्रहणमुक्तम्। तथेहाप्युचितम्। तदेतदाह—**कालवाचिभ्य इति**। एतेन "आकालिकेप्सा" इति जैमिनिसूत्रेऽकालिकेति ह्रस्वपाठपक्षे कालाट्ठञिति कालिकमिति भट्टवार्तिकमपि व्याख्यातम्। वृत्त्यादिमते तु कालात्कालशब्दाट्ठञिति "कालाद्यत्" "प्रकृष्टे ठञ्" इति पाञ्चमिकसूत्रेणेत्येवंपरतया कुकविकृतिरिव भङ्क्त्वा व्याख्येयं स्यात्। इह गौणमुख्यन्यायो नाश्रीयते तेन कदम्बपुष्पसाहचर्यात्कदम्बपुष्पः कालो, व्रीहिपलालसाहचर्याद् 'व्रीहिपलालः, तत्र भवं कादम्बपुष्पिकं, वैहिपलालिकम्' इत्याकरः। अत्र प्रमाणं तु सन्धिवेलादिसूत्रे अनेन कालग्रहणेन नक्षत्राणां विशेषणमित्याहुः।

ननु पुष्यादिशब्दानां कालो मुख्योऽर्थः। "लुबविशेषे" इति व्युत्पादनादिति चेत्? मैवम्। पुष्यादिसमीपस्थेन चन्द्रमसा योगाल्लक्षितलक्षणया हि काले वृत्तिः। सैव लुब्द्वारा अन्वाख्यायते पौष्पादिनिवृत्त्यर्थं न त्वेतावता कालो मुख्योऽर्थः। अनन्यलभ्यस्यैव शब्दार्थत्वादिति दिक्। एवं स्थिते कालवाचिभ्य इति मूलस्य कालप्रतिपादकेभ्य इत्यर्थो बोध्यः।

**"श्राद्धे शरदः"** ॥ श्राद्धमिति कर्मनामधेयम्। श्रद्धावान् पुरुषस्तु नेह गृह्यते। व्याख्यानात्। रूढिर्योगमपहरतीति न्यायाच्च।

---

इति भाष्यमिति। **अत्र भाष्ये सायम्प्रातिकस्योदाहरणात्कालसमुदायस्याकालत्वेऽपि यथाकथंचित्कालवाचकत्वेन ठञ्। ट्युट्युलसूत्रे चिरमित्यस्य ग्रहणेनाव्ययत्वप्रयुक्तट्युट्युलोरनित्यत्वाद्भाष्यप्रयोगादेव वा तदप्रवृत्तिः।** कुकविकृतिरिति। **कुत्सितस्य कवेः कृतिरित्यर्थः।** इह गौणेति। **गौणशब्देनात्र लाक्षणिकमात्रमित्यभिमानः। वस्तुतस्तदप्राप्तिरेवेति (१)त-**

"श्वसस्तुट् च" ॥ ठञ्वा स्यादिति । "ऐषमोह्य" इत्या-
त्यबपि विकल्पितः । ट्युट्युलौ पक्षे बोध्यौ । शौवास्तिकमिति ।
इकादेशो दुर्लभः । तुटः प्रत्ययभक्ततया ठस्यादित्वाभावात्कर्मठ

---

स्यादित्वाभावादिति । प्रत्ययसन्नियोगशिष्टतया ऽन्तरङ्गत्वात्तुटि अङ्गा-
त्यर्थे तत्रष्ठस्य परत्वाभावात् कर्मठ इत्यादौ अठचष्ठस्यैवेकादेशो
। (१)यदागमा इति न्यायेन विशिष्टस्य ग्रहणे ऽपि निर्दिश्य(२)मान-

---

) यदागमा इति न्यायेन । आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्व-
वीकारादित्यर्थः । न्यायार्थस्तु—यस्यागमा यदागमा । अवयवत्वावच्छिन्नविधेयता-
ागमत्वम् । निरूपितत्वम् उद्देश्यत्वं वा षष्ठ्यर्थः । आद्ये निरूपितत्वसम्बन्धेन
ायामन्वयः । अन्त्येऽवयवत्वेऽन्वयः । तथाच–यदागमा इत्यस्य यन्निष्ठोद्देश्यता-
ावयवत्वावच्छिन्नविधेयताश्रया यन्निरूपितावयवत्वावच्छिन्नविधेयताश्रया इति
इदमुत्तरवाक्ये हेतुः । तद्गुणीभूता इति । आरोपितत्वं च्व्यर्थः । तथाच-यन्निरूपि-
वन्त इत्यर्थः । इदमप्युत्तरवाक्ये हेतुः । 'तद्ग्रहणेन गृह्यन्ते इति' आगमिग्रहणेन
विशिष्टा गृह्यन्ते इत्यर्थः । आगमिनिष्ठविधेयतानिरूपितोद्देश्यताश्रयपर्याप्ता धर्मा आग-
ष्टे अतिदिश्यन्ते इत्यर्थो बोध्यः । वैशिष्ट्यं च—स्वघटितत्व स्वनिष्ठविधेयता-
ोद्देश्यताश्रयघटितत्व स्वविशिष्टाघटितत्व एतत्त्रितयसम्बन्धेन । अत्र वै० स्वाघट-
ानिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व एतद्दुभयसम्बन्धेन प्रथमसम्बन्धोपादानेन
समभिव्याहारे केवलस्य न ग्रहणम् । द्वितीयेन केवलागमस्य न ग्रहणम् । तृतीयेन
स्य न ग्रहणम् । द्वितीयवैशिष्ट्यघटकसम्बन्धयोरन्यतरानुपादाने आगमविशिष्टस्याग्र-
तेरिति दिक् ।
२) निर्दिश्यमानपरिभाषयेति ।अत्र निर्दिश्यमानत्वम् षष्ठीप्रकृतिविशिष्टप्रकारता-
् बोध्यम् । वैशिष्ट्यं च स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्वम् ,स्वपर्याप्तप्रयोजक-
पितप्रयोज्यतावद्विशेष्यतानिरूपितत्वम् स्वजन्यशाब्दबोधीयत्वम् , एतत्त्रितय सम्बन्धे-
सुपदः, निर्जरसौ'इत्यादौ अन्तत्वनिष्ठविशेष्यतानिरूपितजराशब्दत्वावच्छिन्नप्रकारता
निरूक्तसम्बन्धेन षष्ठीप्रकृतिविशिष्टा भवतीति न कुत्रापि दोषः । परमजराशब्दे
ब्दत्वावच्छिन्नप्रकारतायाः सुपादित्यादौ पाच्छब्दत्वावच्छिन्नप्रकारतायाः सत्वेऽपि
कृतिजरापदे तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यतानिरूपितत्वाभावात् ।
ष्ठीप्रकृतिविशिष्टा न भवतीति विशिष्टस्य निर्दिश्यमानत्वम् । पदद्वित्वस्थले
: जरा जराजरा तस्मात् औ विभक्तौ स्थानिवद्भावेन जराशब्दत्वस्यैवातिदेशात् निरूक्त-
सम्बन्धेन षष्ठीप्रकृतिविशिष्टाप्रकारता तत्रास्तीति विशिष्टस्य निर्दिश्यमानत्वम्। व्याघ्रपा
ण्ण्यन्तात्कर्तरि क्विपि केनचिद्बला समासे पुनर्णिचि क्विपि व्याघ्र इति जाते तस्माच्छ-

इत्यठचो यथा । न च परत्वादिकः । आङ्गतया हि तस्य बहिरङ्गत्वात्, प्रत्ययसन्नियोगशिष्टतया तुटोऽन्तरङ्गत्वात् । न च सूत्रभङ्गेन तुक्सुकरः । "इसुसुक्तान्तात्" इति कादेशप्रसङ्गात् । मैवम् । वुञ्छणादिसूत्रे "बह्वचो मनुष्यनाम्नष्ठञ्" इति सूत्रे च ठचश्चित्त्वेनेकादेशो ऽन्तरङ्गेभ्यो बलवानिति ज्ञापितत्वात् । अन्यथा प्रत्ययाद्युदात्तत्वे कृते इकादेशः स्यादिति किं ठचश्चित्त्वेन । कृते त्विकादेशे प्रत्ययस्वरं बाधितुं चित्त्वं युज्यते ।

**"सन्धिवेला"** ॥ **तैषमिति** । तिष्याद्भ्वादौ प्रत्ययः । जातार्थे तु "श्रविष्ठाफल्गुनी" इति लुक् स्यात् । "सूर्यतिष्य" इत्यत्र "तिष्यपुष्ययोर्नक्षत्राणि" इत्युक्तेर्यलोपः ।

**"प्रावृष एण्यः"** ॥ ऋत्वणोऽपवादः । **प्रावृषेण्य इति** । प्रावृषि भवः । जाते तु ठपं वक्ष्यति । "रषाभ्याम्" इति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणम् । किं च प्रावृषेण्यमाचक्षाणः प्रावृषेण् । अत्र णकारश्रवणार्थमपि तत् । ण्यन्तात् क्विप् । णिलोपाल्लोपयलोपाः ।

**"सर्वत्राण् च तलोपश्च"** ॥ **हैमनमिति** । "नस्तद्धिते" इति टिलोपस्तु न भवति । तलोपस्य समुदायलोपत्वपक्षे "अन्" इति प्रकृतिभावात्, अवयवलोपत्वपक्षे तु "यस्येति" लोपे तस्याभीयत्वेनासिद्धत्वात्स्थानिवद्भावाद्वा । **हैमन्तमिति** । ऋत्वाणि तकारलोपो न, तस्य सर्वत्रेति प्रतिपदोक्तेनाणा सन्नियोगशिष्टत्वात् । वृत्तिकारास्तु "छन्दसि ठञ्" । "वसन्ताच्च" । छन्दसीत्येव । ततो "हेमन्ताच्च" । इह सर्वत्रग्रहणम-

---

परिभाषया समुदायस्य न स्यात् । निर्दिश्यमानस्तु व्यवहित इति भावः । प्रत्ययाद्युदात्तत्वे कृत इति । सन्नियोगशिष्टतयेति भावः । अत्र ठचश्चित्त्वेनेत्युपलक्षणं ठचश्चित्त्वं सामान्यापेक्षं ज्ञापकम् । प्रत्ययसम्बन्ध्यादेशा अन्तरङ्गेभ्यो बलवन्त इतीति बोध्यम् । ठचश्चित्त्वं तु ज्ञापकं ठस्येक इत्यत्र सङ्घातग्रहणपक्षे ऽन्तोदात्तस्य ठस्यान्तरतम्यादन्तोदात्तादेशसम्पादनेन चित्त्वसार्थक्यात् । वर्णग्रहणपक्षे ठकारादिष्वकार उच्चारणार्थो ऽनका एव प्रत्यया इत्यर्थस्याकरसम्मतत्वेन प्रत्यये व्यर्थस्य चित्त्वस्यादेशोऽन्तो

पकृष्यते। तेन लोके वेदे च हैमन्तिकम्। ततः। अण्च तलोपश्च। एवञ्च

---

(१)यदागमा इति परिभाषया विशिष्टस्य ग्रहणे ऽपि निर्दिश्य(२)मानपरिभाषया ठस्यैवादेश इत्युच्यते तदास्त्विति दिक्।

अपकृष्यत इति। **सर्वत्रग्रहणसामर्थ्यात्। अन्यथा छन्दसीत्यस्य निवृ-**

---

**(१) यदागमा इति परिभाषया इति।** अवयवत्वाच्छिन्नविधेयताश्रयत्वम् आगमत्वम्। यस्य आगमा यदागमा इति व्युत्पत्तेः। निरूपितत्वम्, उद्देश्यत्वं वा षष्ठ्यर्थः। आद्ये निरूपितत्वसम्बन्धेन विधेयतायामन्वयः। अन्त्ये अवयत्वेऽन्वयः। तथाच—यदागमा इत्यस्य यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयाः, यन्निरूपितावयवत्वावच्छिन्नविधेयताश्रया वार्थः। इह उत्तरवाक्ये हेतुः। **तद्गुणीभूता इति।** आरोपितत्वं च्व्यर्थः। तथाच—तन्निरूपितावयवत्ववन्त इत्यर्थः। इदमप्युत्तरवाक्ये हेतुः। तद्ग्रहणेन गृह्यन्ते आगमिग्रहणेन आगमविशिष्टा गृह्यन्ते इत्यर्थः। आगमिनिष्ठविधेयतानिरूपितोद्देश्यताश्रयपर्य्याप्ताधर्मा आगमविशिष्टे ऽतिदिश्यन्ते इति यावत्। वै० स्वघटितत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व, स्वविशिष्टाघटितत्व, एतत्त्रितयसम्बन्धेन। अत्र वैशिष्ट्यं च स्वाघटकत्व, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटकत्व एतदुभयसम्बन्धेन। प्रथमसम्बन्धोपादानेन आगमसमभिव्याहारे केवलस्य न ग्रहणम्। द्वितीयेन केवलागमस्य न ग्रहणम्। तृतीयसम्बन्धेनाधिकस्य न ग्रहणम्, द्वितीयवैशिष्ट्यसम्बन्धयोरन्यतरानुपादानेन आगमविशिष्टस्याग्रहणापत्तिरिति दिक्।

**(२) निर्दिश्यमानपरिभाषयेति।** अत्रत्यं तत्त्वं प्राङ्निरूपितम् निर्दिश्यमानत्वन्तु अत्र षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वम्बोध्यम्। न च जराजरसौ इत्यादौ पुर्वजराशब्दस्य जरसादेशापत्तिरिति वाच्यम्। "अचि विभक्तौ" इति निर्दिश्यमानाविशेषणेनादोषात्। नचाङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षेति शेखरविरोध इति वाच्यम्। तस्य ग्रन्थस्यासङ्गत्वेनादोषात्। अन्यथा पञ्चम्योपस्थापिताव्यवहितोत्तरत्वस्य निर्दिश्यमाने विशेषणाभावेन 'उदस्थात्' इत्यादौ पूर्वसवर्णो दुर्वारः स्यात्। इति "तस्मिन्" इति परिभाषोपस्थप्ययोः अव्यवहितोत्तरत्वाव्यवहितपूर्वत्वयोः सर्वत्र निर्दिश्यमाने एव विशेषणाच्च। नच व्याघ्रपात्पद इत्यादौ पूर्वपात् शब्दस्य पदादेशापत्तिरिति वाच्यम्। कार्यकालपक्षे "यचि भम्" इत्यस्योपस्थित्या यचीत्यस्यावृत्त्या निर्दिश्यमानेति विशेषणास्वीकारेणादोषात्। स्पष्टं चेदम् "अल्लोपोऽनः" इति सूत्रे भाष्ये। नचाकडारीयभपदसंज्ञाविषये यथोद्देशपक्ष एवेत्युक्तत्वेन "यचिभम्" इत्यस्य तत्रोपस्थितिरेव नेति वाच्यम्। अष्टाध्यायीपाठकृतपूर्वत्वपरत्वस्य सर्वत्र व्यवस्थापकत्वेन कार्यकालपक्षस्वीकारेऽपि दोषाभावात्। त्रिपादीविषये आकडारीयसंज्ञानां कार्यकालानङ्गीकारेऽपि सापादिकविधिविषये कुत्रचित्तदङ्गीकारेऽपि दोषाभावेन क्षत्यभावाच्च। नच स्नात्वाकालक इत्यादौ ल्यबापत्तिरिति वाच्यम्। क्त्वान्तो यस्समास इत्यर्थेनादोषात्। नचैव-

भाषायामपि रूपत्रयमित्याहुः । एतच्च भाष्यविरुद्धम् । भाष्ये हीदं सूत्रं प्रत्याख्यातम् । तच्चेत्थम्—हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति । 'हेमन् हेमन्नागनीगन्ति कर्णौ, तस्मादेतौ हेमन्न शुष्यत' इत्यादिप्रयोगात् । तत्र भाषायां हेमन्हेमन्तशब्दाभ्यामृत्वणि हैमनं हैमन्तमिति रूपद्वयम् । छन्दसि तु ठञा तृतीयम् । न च तत्र ठञा अणो बाधः । छन्दसि सर्वविधीनां वैकल्पिकत्वादिति । तस्माल्लोके रूपद्वयमेवेति तत्त्वम् ।

**"सायंचिरम्"** ॥ नन्वन्तरङ्गत्वात्प्रथमं तुटि 'मृत्युः' इत्यादाविव त्युशब्दस्य प्रत्ययतया अङ्गसञ्ज्ञानिमित्तो यो युस्तस्य विधीयमानो ऽनादेशो न स्यात् । न च तुगेव कार्यः । तस्य पूर्वान्ततया प्रातस्तनमित्यत्र विसर्जनीयाभावप्रसङ्गात् । अत आह—**तुटः प्रागिति । इत्यादीति ।** आदिशब्दार्थस्तु घकालतनेष्वियति । **सायन्तनमिति ।** स्यतेर्घञि सायशब्दो दिवसावसाने रूढः । तस्य प्रत्ययसन्नियोगेन मान्तत्वं निपात्यते अन्यत्र त्वकारान्त एव । सायाह्नः । आह च—'संख्याविसायपूर्वस्येति' । भारविश्च—'सायमण्डनमभित्वरयन्त्य' इति । एतच्च वार्तिकमतम् । आह हि—"सायचिरयोर्मकारान्तत्वं प्रत्ययसन्नियुक्तम्" इति । भाष्ये तु सायंशब्दस्य पाठ इह सूत्रे प्रत्याख्यातः स्वरादिषु पठितात्सायमिति मान्ताद्व्ययत्वेनैव प्रत्यये रूपसिद्धेः । न चैवं घञन्तात् कालाट्ठञि अनिष्टरूपापत्तिः ।

---

**त्यैव तत्फले सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति भावः । तत्र हेमनो लोके वृत्तिविषये एव ऋतुवाचित्वमिति हेमन्तशब्देनैव विग्रह इति बोध्यम् ।** वैकल्पिकत्वादिति । **एवं च रूपत्रयसिद्धाविदं न कार्यमिति भाष्ये उक्तम् । त्वद्रीत्या "हेमन्ताच्च" इति ठञा बाधापत्तौ हैमन्तमित्यसिद्ध्या फलभेदे प्रत्याख्यानासम्भव इति भावः । सर्वत्रग्रहणं तु "सर्वत्र विभाषा गोः" इतिवदिति नार्थसाधकम् । न च "हेमन्ताच्च" इति चेन ऋत्वणो ऽनुकर्षणात्तत्सिद्धिः । "वसन्ताच्च" इति चवद्स्यापि छन्दसीत्यनुकर्षकताया एवौचित्यात् ।**

अङ्गसञ्ज्ञानिमित्त इति । **त्युशब्दस्य प्रत्ययतया तदवयवो यो युस्तस्य विधीयमानोऽङ्गरूपसंज्ञिनिमित्तको ऽनादेशो न स्यादित्यन्वयः । प्रकृताय·**

कालवाचित्वाभावादित्याहुः ।

यद्यपि कालबोधकत्वमात्रं लाक्षणिकसाधारणं ठञ्विधौ गृहीतम् । तच्च
ारविप्रयोगात्सायशब्दे ऽप्यस्ति । तथाऽप्यनभिधानाट्ठञ्नेति बोद्धव्यम् ।
न्तत्वमिति । प्राह्णः सोढोऽस्य प्राह्णेतन इत्याद्यर्थम् । तत्र हि सप्तमी
। जाताद्यर्थे तु "घकालतनेषु" इत्यलुका सिद्धम् । **चिरत्नमिति** ।
ब्दस्य सूत्रे उपादानाद् ट्युट्युलावपि स्तः । **अग्रादीति** । डिमचो
शक्यमकर्तुम् ।

**"तत्र जातः"**॥(१)ननु जातादिष्वणादयः सिद्धा एव, चाक्षुषं रूप-
ादिसिद्धये "शेष" इति सूत्रस्य लक्षणत्वोक्तेः । अधिकारत्वाच्च घादय-
ाज्जाताद्यर्थनिर्देशो व्यर्थः । नच जातादिष्वेवेति नियमः सुवचः । चाक्षु-
याद्यसिद्धेः । तत्रास्ते शेते इत्यादौ तु अनभिधा(२)नादेव न भवि-
। 'अङ्गुल्या खनति, वृक्षमूलादागत' इत्यादौ यथा । समर्थविभक्तयस्तु
ादेव लक्ष्यन्ते । चाक्षुषमित्यत्र तृतीया यथा । तस्मात् "तत्र जातः"
दिसूत्राणि व्यर्थानीति चेत् ? अत्राहुः—"प्रावृषष्ठप्"इत्यादीनपवादां-
तत्र विशेषे वक्तुं जातादयो ऽर्थास्तावदवश्यं वक्तव्याः । ते च योगवि-
विभक्तिविशेषसमभिव्याहारेण चोक्ताः । स्पष्टत्वार्थं यानि तु निरप-
न्यर्थादेशनानि "कृतलब्धक्रीतकुशलाः" इत्यादीनि, तानि स्पष्टत्वा-
वेति ।

**पूर्वाह्णक इति** । "विभाषा पूर्वाह्णापराह्णाभ्याम्" इत्यस्यापवादः ।
**र्दिको मूलक इति** । नक्षत्राणोऽपवादः । **प्रदोषक इति** । "नि-

---

**ञ्ज्ञानिमित्तमिति त्वपपाठः । तादृशेऽर्थे हि उक्तरीत्या दोषस्याभा-**
। कालवाचित्वाभावादिति । **अवसानवाचित्वादिति भावः ।**
**ाहुरित्यत्रारुचिबीजं स्वयमेवाह**—यद्यपीति । अनभिधानादिति । **साया-**
**तनयोः सा ।**

ज्ञाप्रदीपाभ्यां च"इत्यस्यापवादः । **अवस्करक इति** । औत्सर्गिकस्याणः । केचित्तु "संज्ञायां शरदो वुञ्"इति सूत्रस्थं संज्ञाग्रहणं "कृतलब्ध" इत्येतत्पर्यन्तमनुवर्तयन्तीति वृत्तिकाराः । तेषां मतेऽसंज्ञायां यथायथमणादयो घादयश्च बोद्धयाः ।

"**अमावास्याया वा**" ॥ सन्धिवेलाद्यणोऽपवादः । "अमावस्यदन्यतरस्याम्"इति सूत्रेणामापूर्वाद्वसेर्ण्यति वृद्धौ पक्षे ह्रस्वो निपात्यते । एकदेशविकृतस्यानन्यतया ह्रस्वपक्षेऽपि अण्वुनौ स्त एव । आमावस्यः । अमावस्यकः ।

केचित्तु सन्धिवेलादिषु इह सूत्रे च ह्रस्वोपधमधीयते । तेषां दीर्घपक्षे न स्यात् 'विकृत्या प्रकृतेरग्रहणात्' इति न्यासकारहरदत्तादयः ।

वस्तुतस्तु अकृतवृद्धेर्वृद्धिप्रकृतिभूतस्येदं ग्रहणमित्याश्रित्य ह्रस्वपाठेऽपि समर्थयितुं शक्यते ।

"**अ च**" ॥ अमावास्याशब्दादकारप्रत्ययः स्यात् । अयमपि प्राग्वदुभाभ्यां बोद्ध्यः । तदिह अमावास्यायां जाते ह्रस्वदीर्घाभ्यां प्रत्ययत्रयेण षड् रूपाणि ।

"**श्रविष्ठाफल्गुनी**" ॥ इह सूत्रे स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तादयः । माधवस्तु स्वातीतिङ्येति ङीषन्तं पठति । तथा हि—"अव्ययात्त्यप्" इति सूत्रे शैषिकाणां विप्रतिषेधनिरूपणप्रस्तावे 'सौवात' इति भाष्यमुपादाय कैयटेनोक्तम्—भवार्थे ऽण्, जाते तु "श्रविष्ठा"इत्यादिना लुक् स्यादिति । "सन्धिवेलादि"सूत्रे हरदत्तेनाप्येवमुक्तम् । न च कृदिकारादिति ङीषन्तात् स्वातीशब्दाज्जातार्थे अणः श्रवणमस्त्विति वाच्यम् । लिङ्गविशिष्टपरिभाषया लुको दुर्वारत्वादिति भावः ।

विशिष्टग्रहणे केवलस्याग्रहणात्। एतच्च 'अत सातत्यगमन' इत्यत्र धातुवृत्तौ स्पष्टम्। **श्रविष्ठास्विति**। श्रविष्ठा धनिष्ठा। **इत्यादीति**। आदिशब्दाद् अनुराधः, स्वातिः, तिष्यः, पुनर्वसुः, हस्तः, विशाखः, अषाढः, बहुलः। कृत्तिकापर्यायस्य बहुलाशब्दस्य समाहारद्वन्द्वे नपुंसकह्रस्वत्वेन सूत्रे निर्देशः। **उपसंख्यानमिति**। प्रकरणाल्लुक इति बोध्यम्।

"**स्थानान्त**" **इति**॥ गोशालशब्दस्य "विभाषा सेना" इति नपुंसकस्यैव सूत्रे निर्देश इति स्पष्टम्। तत्साहचर्यात्खरशालेऽप्येवमेव। न चैवं स्त्रीत्वपक्षे लुङ् नेति भ्रमितव्यम्। लिङ्गविशिष्टपरिभाषया तत्रापि लुक्सिद्धेः। यद्यपि टाबन्तयोः पाठेऽपि न क्षतिः। एकदेशविकृतन्यायेन क्लीबेऽपि लुक्सिद्धेः। तथाऽपि लाघवार्थं ह्रस्वपाठ इति हरदत्तः।

**वत्सशाले इति**। वत्सशालायामित्यपि बोध्यम्। **इत्यादीति**। आदिशब्दादभिजित् आभिजितः। अश्वयुक् आश्वयुजः।

"**कृतलब्ध**"॥ यद्यपि कृतक्रीतत्वे जातलब्धत्वयोर्व्याप्ये, तथापि पृथगुपादानं कृतक्रीतत्वप्रकारकेऽपि बोधे उद्देश्ये शैषिकाः साधव इति बोधयितुम्। अत एव जाते लुग्भाजामपि कृते लुङ्नेति बोध्यम्।

"**प्रायभवः**"॥ न (१)च "तत्र भव" इत्यनेन गतार्थता। प्रायभवस्य

---

माधवस्त्विवति। **अत्रारुचिबीजं तु वृद्धिविरोधः**। हरदत्त इति। **अत्रारुचिबीजन्तु नपुंसकह्रस्वविशिष्टस्य लिङ्गप्रत्ययवैशिष्ट्यासम्भवेन परिभाषाप्रवृत्तेर्दुरुपपादत्वम्। तस्मात्सूत्रे समाहारद्वन्द्वगर्भो द्वन्द्वः। तेन स्त्रीलिङ्गयोर्ग्रहणम्। नपुंसकह्रस्वत्वेऽप्येकदेशविकृतन्यायेन लुगिति तत्त्वम्।**

क्रीतत्वप्रकारके इति। "**शेषः**" **इत्यनेनास्यापि सिद्धेः पूर्वं स्पष्टत्वार्थमित्युक्तम्। स्पष्टतयैतदर्थलाभार्थमिति तदर्थः। जातलब्धाभ्यामन्यथासिद्धिस्त्विह परिहृतेति न विरोधः। तदेवाह**—अत एवेति।

---

(१) **न चेति**। भवे सामान्ये प्रायभवस्य विशेषस्यान्तर्भावाभावादिति भावः। इति तेन गतार्थाशङ्का। यस्तत्र कदाचिद्भवति कदाचिन्न भवति, स प्रायभवः। यस्तु नियत एवाधाराधेयभावेन भवति स तत्र भवः इत्यनयोर्भेदः। तदाह—शब्दरत्ने। **कादाचित्काभावेत्यादिना**। अत्र भाष्यम्—"अनित्यभवः प्रायभव इति चेन्मन्यते सुघ्ने शयेन तुल्यम्। स्रौघ्नो देवदत्त इत्यादौ अवश्यमुदग्देशादीन्यपि निष्कामति

भवस्य च विशिष्टाविशिष्टत्वाभ्यां भेदात् । उपजान्वादयः सामीप्ये ऽव्ययीभावास्तेषां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् ।

"**संभूते**" ॥ इह तन्त्रावृत्त्यादिना ऽवक्लृप्तिराधेयस्याधारात्परिमाणानतिरेकश्चेत्यर्थद्वयमपि गृह्यते । **स्त्रौघ्न इति**। स्रुघ्ने सम्भाव्यते तत्परिमाणान्नातिरिच्यते वा यः सेनादिः स एवमुच्यते ।

"**कोशाड्ढञ्**"। **कौशेयमिति** । रूढोऽयम् । कोशे सम्भवस्तु सत्कार्यवादाश्रयणात्। मतान्तरे तु विकारप्रकरणे "एण्या ढञ्" इत्यस्यानन्तरं "कोशाच्च" इति पाठ्यम् । तथा च वार्तिकम्—'विकारे कोशा(१)ड्ढञ् संभूते ह्यर्थानुपपत्तिः' इति ।

"**उप्ते च**" । योगविभाग उत्तरार्थः ।

"**आश्वयुज्या वुञ्**" । उप्तेऽर्थे । ठञोऽपवादः । ञकारः स्वरार्थः, उत्तरत्र वृद्ध्यर्थश्च ।

"**देयमृणे**" । ऋणे किम् ? मासे देया भिक्षा ।

---

विशिष्टेति । **कादाचित्काभावप्रतियोगित्वविशिष्टं भवनं प्रायभवशब्दार्थः । शुद्धन्तु भवशब्दार्थ इति भावः ।**

ठञ इति । **कालादित्यर्थः ।**

---

अङ्गुलीयमिति एवं प्रायभवेऽपि भवति । इदं तर्हि प्रयोजनम् । प्रायेभव इति प्रकृत्य "उपजानूपकर्णोपनीवेष्ठक्" इति वक्ष्यति स प्राय भवे यथा स्यात् तत्र भवे माभूत् । उपजानुभवं गड्विति । अथेदानीं "तत्र भव" इति प्रकृत्य "शरीरावयवाद्यत्" विधीयते स प्रायभवे कस्मान्नभवतीति चेत् ? अनभिधानात् । अनभिधानाठ्ठगपि न भविष्यति इति व्यर्थं सूत्रम् ।

( १ ) **विकारे कोशाड्ढञ् इति** । "कोशाड्ढञ्" इति सूत्रं "तस्य विकारः" इति प्रकरणे पाठ्यम् । 'परत्वाड्ढञिति कृत्वा कोशादिति वाच्यम्' इति स्वीकृत्येदं वार्तिकम्—'विकारे कोशाड्ढञिति पठितम् कोशस्य विकारः कौशेयम्' । 'सम्भूतेऽर्थानुपपत्तिः' इति द्वितीयं वार्तिकम् । अस्यायमर्थः—कौशेयशब्दस्य लौकिकोऽर्थो हि सूत्रवस्त्रलक्षणः । स एवं नोपपद्यते लौकिकोऽर्थो न संगृहीतं स्यात् इति ।

ननु कोशस्य वस्त्रकारणत्वात् कार्यस्य च कारणे सम्भवात् कथमनुपपत्तिः । 'नैष दोषः लोकप्रसिद्धार्थबाधः एवं कृतः स्यात्। नहि कार्यावस्थायां लोकः कार्यकारणयोः सम्भव-

"**तत्र भवः**" । कालादिति निवृत्तम् । कालसम्बद्धस्य तत्रेत्यस्य ये पुनस्तत्रग्रहणात् । न च पूर्वसूत्रस्थस्य तदित्यस्य व्यावृत्तये हणमिति वाच्यम् । "तदस्य" इति सूत्रस्थेत उत्तरत्रापि सुपठत्वात् ।

"**दिगादिभ्यो यत्**" । दिश्, वर्ग, पूग, पक्ष, धान्य, मित्र, अन्तर्, पथिन्, रहस्, अलिक, उखा, साक्षिन्, आदि, अन्त, मुख, , मेघ, यूथ, उदकात् सञ्ज्ञायाम्, न्याय, वंश, अनुवंश, वेश, आकाश, दिगादिः । मुखजघनशब्दयोरिह पाठो ऽशरीरावयवार्थः । । मुखे जघने च भवं मुख्यं, जघन्यम् ।

"**दृतिकुक्षि**" । दृतिश्चर्मविकारः शरीरावयवविशेषश्च तत्र भवं म् । कुक्षिशब्दो धूमादिस्ततो "धूमादिभ्यश्च" इति वुञि प्राप्ते ऽनेन **कलशिर्घट इति** । तथा च—

दण्डाहतं कालशेयमरिष्टमपि गोरसे ।

मरस्य व्याख्यायां मन्थपात्रं कलशिरित्युक्तम् ।

'कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति'

इति माघः ।

'बस्तिर्नाभेरधो द्वयोः'

इत्यमरः । तत्र भवं बास्तेयम् । अस्तीति तिङन्तप्रतिरूपको निपा- स च तिङन्तेन समानार्थो भिन्नार्थश्च । आद्यो यथा—अस्तिक्षीरा द्वितीयो यथा—अस्तिमान् धनवानित्यर्थः । तदिहाविशेषाद् द्वयो- ग्रहणम् । आस्तेयमिति न्यासकारहरदत्तौ । 'त्रिष्वाहेयं विषास्थ्यादि' रः ।

"**ग्रीवाभ्यो ऽण्**" । ग्रीवाशब्दो धमनीसङ्घाते वर्तते । उद्भूता- भेदविवक्षया सूत्रे बहुवचनम् । तिरोहितावयवभेदविवक्षायां तु एकव-

**"ग(१)म्भीराञ्ञ्यः"**। "पञ्चजनादुपसंख्यानम्"। पाञ्चजन्यः। **परिमुखादिभ्य एवेति**। दिगादिगणानन्तरं परिमुखादिगणः पठ्यते तस्मात्सामर्थ्यादिह सूत्रे ऽव्ययीभावपदन्तन्मात्रपरमिति निर्णीयते। न हि परिमुखादीनां कार्यान्तरं विहितमस्ति। येन गणपाठश्चरितार्थः स्यात्। 'परिमुखादिभ्य' इत्येव तु न सूत्रितम्। बहुव्रीहितत्पुरुषयोरपि प्रसङ्गात्। अव्ययीभावग्रहणस्योत्तरत्रोपयोगाच्चेति भावः। परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः। तथा च–'शाखृ व्याप्तौ' इति धातौ प्रतिशाखं भवं प्रातिशाख्यम्। "अव्ययीभावाच्च" इति भवार्थे ञ्य इति माधवः।

**"कर्णललाटात्"**। अलङ्कारे किम्? कर्ण्यम्। ललाट्यम्।

**"तस्य व्याख्यान"**। इतिशब्दो वाक्यार्थं परामृशति। तत्समीपे श्रूयमाणश्चकारः "तत्र भव" इति वाक्यार्थमाक्षिपति। व्याख्यातव्यस्य ग्रन्थस्य नाम प्रतिपादकं, तच्च शक्त्या लक्षणया वेत्यत्र नाग्रहः। तस्मात् षष्ठ्यन्ताद् व्याख्यानकरणे सप्तम्यन्तात्तु भवार्थे प्रत्ययाः स्युः। यद्यपि "तस्येदं" "तत्र भव" इति सूत्राभ्यां गतार्थता तथापि ठञादीनपवादान् वक्तुमिमावर्थौ निर्दिष्टव्यावेव। प्रसङ्गात्तु अणादिकं विधीयते इति ध्येयम्। व्याख्यातव्यनाम्नः किम्? पाटलिपुत्रस्य व्याख्यानी सुकोसला। पाटलिपुत्रं हि तया व्याख्यायते 'ईदृक् संनिवेशविशिष्टम्' इति। न त्विदं व्याख्यातव्यस्य नाम, ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात्। नामग्रहणस्य च प्रसिद्ध्युपसङ्ग्रहार्थत्वात्।

**"बह्वचो ऽन्तोदात्ताट्ठञ्"**। अणोऽपवादः। बह्वचः किम्? द्व्यचष्ठकं वक्ष्यति। एकाच् प्रत्युदाहार्यः। सौपम्। अन्तोदात्तात्किम्?

---

(१) **"गम्भीराञ्ञ्यः"**। अव्ययीभावतत्पुरुषयोरपि प्रसङ्गादिति। अत्र भाष्यम्–"ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम्"। पारिमुख्यम्, पार्योष्ठ्यम्, अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधः"। अयं भावः–"अव्ययी भावाच्च" इत्येतदव्यापकत्वाद-

संहितायाः सांहितम् । गतिस्वरेणाद्युदात्तोऽयम् ।

"**पौरोडाश**"। षित्त्वान् ङीष् पौरोडाशिकी, पुरोडाशिकी । "दाशृ दाने" । कर्मणि घञ् । इहैव निपातनादस्य डत्वम् ।

"**छन्दसो यदणौ**" । द्व्यज्लक्षणस्य ठकोऽपवादः । छन्दस्यः, छान्दसः । इह अर्थयोः प्रत्ययाभ्यां यथासंख्यं न । अस्वरितत्वात् । **चातुर्होतृक इति**। चतुर्होतेति–'पृथिवी होता द्यौरध्वर्युः'इत्यादिमन्त्रस्य नामधेयम् । **आर्चिक इत्यादि**शब्दात्प्राथमिकः, आध्वरिकः, पौरश्चरणिकः, 'नामाख्यातग्रहणं सङ्घातविगृहीतार्थम्' इति वार्तिकम् । तत्र विगृहीतग्रहणमाख्यातार्थम् । नामशब्दात्तु द्व्यच्त्वादेव सिद्धम् । नामिकः, आख्यातिकः, नामाख्यातिकः ।

"**अणृगयनादिभ्यः**" । **ठञादेरिति** । आदिशब्दाट्ठकछयोः । **आर्गयन इति** । अयनशब्दो भावसाधनः, तेन समासे "अनो भावकर्मवचन" इत्यन्तोदात्तः । अभेदोपचाराद्ग्रन्थे वृत्तिः । इह ठञ्प्राप्तः । औपनिषद इत्यत्राप्येवम् । विद्यान्यायशिक्षाशब्देभ्यो द्व्यचष्ठक् प्राप्तः । व्याकरणशब्दात्तु "वृद्धाच्छः" ।

"**ठगाय**" । आयः स्वामिग्राह्यो भागः, स यस्मिन्नुत्पद्यते तदायस्थानम् । बहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः । वृद्धाच्छं परत्वादयं बाधते । आपणिकः । आकरिकः । विद्यायोनिकृतः सम्बन्धो येषां तेभ्यो वुञ् स्यात् । अणोऽपवादः । छं तु परत्वाद्बाधते । आचार्यकः । मातामहकः । मातुलकः ।

"**ऋतष्ठञ्**" । 'विद्यायोनिसम्बन्धेभ्य' इत्येव । तदाह–**वुञोऽपवाद इति** । उष्कञिति वक्तव्ये तपरकरणं ठञ्ग्रहणं च चिन्त्यप्रयोजनमिति प्राञ्चः । अत्रेयं चिन्ता–पैतृकी विद्येत्यत्र ङीबर्थं ठञ् । न च "टिड्ढ" इति सूत्रे कञ्ग्रहणेन सिद्धमिति वाच्यम्, यादृशी इत्याद्यसिद्धेः । तदनुबन्धकग्रहणे ऽतदनुबन्धकस्याग्रहणात् ।

---

ठञ् प्राप्त इति । "**बह्वचोऽन्तोदात्तात्**" इत्यनेन ।

"**गोत्रा(१)दङ्कवत्**"। अपत्यप्रत्ययान्तादङ्कवत् प्रत्ययाः स्युः। अङ्के दृष्टस्य सर्वस्यायमतिदेशो न तु साक्षाद्विहितस्यैवेत्याग्रहः। तेन "गोत्रचरणाद्वुञ्" इति वुञपि लभ्यते। स हि—"तस्येदम्" इति सामान्येन विधीयमानोऽपि अञिअन्तादन्यत्राङ्के ऽपि दृष्टः। **बैदमित्यादि**। सङ्घाङ्केत्युक्तेरञ्यञिअन्तादिहाप्यण्। **औपगवकमिति**। "गोत्रचरणात्" इति वुञ्।

"**हेतुमनुष्येभ्यः**"। मनुष्यग्रहणमहेत्वर्थम्। **समरूप्यमिति**। "विभाषा गुणे" इत्यत्र "विभाषा" इति योगविभागात् अगुणवचनादपि पञ्चमी। मनुष्येभ्य इति बहुवचनं स्वरूपविधिनिरासार्थम्।

"**मयट् च**"। योगविभागो यथासंख्यनिरासार्थः। टो ङीबर्थः। **हैमवती गङ्गेति**। हिमवतः प्रकाशते, तत्र प्रथमं दृश्यत इति यावत्।

"**विदूराञ्ञ्यः**"। अणोऽपवादः। **वैदूर्य इति**। दन्त्यमध्योऽयं शाद्वलवत्। न तु नड्वलवन्मूर्द्धन्यमध्यः। नन्वर्थासंगतिः? वालवायाद्धि असौ प्रभवति विदूरे तु संस्क्रियते। सत्यम्। अत एव समाहितं भाष्ये वालवायो विदूरं चेति। वालवायशब्दः प्रत्ययं लभते विदूरादेशं च। सूत्रे पठितेनादेशेनानुरूपः स्थानी आक्षिप्यते। "पद्दन्न" इत्यादाविवेति भावः।

"**तद्गच्छति पथिदूतयोः**"। द्वितीयान्ताद् गन्तरि प्रत्ययः स्यात्स चेत्पन्था दूतो वेत्यर्थः। तत्र साध्वसिश्छिनत्ति, काष्ठानि पचन्ति, इत्यादाविव करणस्य स्वातन्त्र्यविवक्षया पन्थाः कर्ता। **स्रौघ्नं कान्यकुब्जद्वार-**

---

**शब्दमर्यादया तथैव लाभात्। स उच्चारित एवानुबन्धो यस्येति तदर्थात्। अत एव कञ्विधायके सूत्रे नित्त्वेन स्वरसिद्धौ ञित्त्वं "टिड्ढेति" सूत्रे विशेषणार्थम्। अन्यथा याविकेत्यत्रापि प्रसज्येतेत्यपिगर्भं भाष्यं सङ्गच्छते। सूत्रे च तन्त्रेण ककारनकारोभयानुबन्धोपलक्षितस्य च ग्रहणमिति तदाशयस्तथाप्येतत्क्लेशपरिहारार्थमेव ठञ् कृत इति चिन्ताबीजमित्याशयः।**

---

( १ ) **गोत्रादिति**। अपत्याधिकारादन्यत्र लौकिकं गोत्रम् इत्युक्तम् अपत्यप्रत्य-

त। स्रौघ्नाभिमुखनिष्क्रमणे करणीभूतमिति फलितोऽर्थः। पूर्ववत्करणस्य
प्रत्ययः।

**तदित्येवेति**। अधिकृत्येत्येतदपेक्षया द्वितीयेयम्। **शारीरकीय**
। चतुर्लक्षणीसूत्रसंदर्भः। "वृद्धाच्छः"।

"**शिशुक्रन्द**"॥ अत्र वार्तिकम्—"द्वन्द्वे देवासुरादिभ्यः प्रति-
"। दैवासुरम्। राक्षोसुरम।

"**सोऽस्य निवासः**"॥ नन्वस्येति कृद्योगे कर्तरि षष्ठी। तथा
विशेषणविशेष्यभावव्यत्यासादेतत्कर्तृकवासाधिकरणं स्रुघ्न इति विग्र-
। स्रुघ्नाधिकरणकवासकर्तेह वृत्त्यर्थः। तथा च-तत्र भव इत्येव सि-
। सत्यम्। वासस्य चेतनमात्रकर्तृत्वेन प्रसिद्धत्वात् प्रकारकृतो भेदः।
न्ति हि प्रेम्णि गुणा न वस्तुनि' इत्यादौ तूपचारो बोध्यः।

"**अभिजनश्च**"॥ अभिजायते एभ्य इति व्युत्पत्त्या अभिजनाः
दयः। पूर्वसूत्रादिह निवास इत्यनुवृत्तं तत्सामानाधिकरण्यादाभिजनश-
तत्सम्बन्धिनि लक्षणा। एवं स्थिते फलितमाह—**यत्र पूर्वैरिति**।

"**वासुदेवार्जुनाभ्यां वुन्**"॥ छाणोरपवादः। "अल्पाच्तरम्"
ताद्यदन्तम्"इति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तमकुर्वन् ज्ञापयति
तोऽभ्यर्हितं पूर्वम्'इति। स्यादेतत्। वसुदेवस्यापत्यं वासुदेवः। "ऋष्यन्धक"
। तत्र "गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्" इत्युत्तरसूत्रेण वुञेवास्तु
नेन वुना। न ह्यत्र वृद्धौ विशेषः। प्रागेव वृद्धत्वात्। न च "वृद्धि-
त्तस्य" इति पुंवद्भावनिषेधो दोषः। वुन्यपि "न कोपधायाः" इति निषे-
ध्यमाणत्वात्। न च "अभ्यर्हितं पूर्वम्" इत्येतज्ज्ञापनमेव फलम्। तथा
पूर्वनिपातप्रकरण एवाभ्यर्हितग्रहणमात्रं लाघवात् कुर्यादिति। अत्र भाष्यं
षा तत्रभवत इति। अयं भावः—

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः।
ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते॥

इति स्मृतेः परमात्मेह वासुदेवः सर्वत्रासौ वसत्यन्तर्यामित्वात्सर्वमत्र वसति वा सर्वस्य ब्रह्मविवर्तत्वादिति वासुः । बाहुलकादुण् ।

'कोकः पुराणपुरुषो नलिनेशयश्च वासुर्नरायणपुनर्वसुविश्वरूपा' ।

इति त्रिकाण्डशेषः । वासुश्चासौ देवश्चेति विग्रहः । तथा च नेयं गोत्राख्या नापि क्षत्रियाख्या अतो युक्त एव वुन्विधिः ।

**"तेन प्रोक्तम्"** ॥ प्रकर्षेणोक्तं प्रोक्तमध्यापनेनार्थव्याख्यानेन वा प्रकाशितमित्यर्थः । प्रकर्षेणेति वचनान्नेह । देवदत्तेनाध्यापितम् ।

**"तित्तिरिवरतन्तु"** ॥ अणोऽपवादः ।

**"कठचरकाल्लुक्"** । कठशब्दाद्वैशम्पायनान्तेवासित्वाण्णिनिः । चरकादण् । तयोर्लुक् ।

**"कलापिनोऽण्"** ॥ वैशम्पायनान्तेवासित्वात्प्राप्तस्य णिनेरपवादः । "इनण्यनपत्ये"इति प्रकृतिभावे प्राप्ते आह—**नान्तस्येति** ।

**"छगलिनो ढिनुक्"** ॥ कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादः ।

**"पाराशर्य"** ॥ मण्डूकप्लुत्या णिनिरिह सम्बध्यते तद्विषयतेहेष्यते । तदर्थं "शौनकादिभ्यश्छन्दसि" इति सूत्राच्छन्दोग्रहणमप्यनुवर्त्यम् । सूत्रयोश्छन्दस्त्वं तु गौण्या वृत्त्या बोध्यम् । **भिक्षुसूत्रमिति** । चतुर्लक्षणीरूपम् । (१)भिक्षुनटसूत्रयोः किम् ? पाराशरम् । शैलालम् ।

---

ब्रह्मविवर्तत्वादिति । **ब्रह्मोपादानकारणकत्वादित्यर्थः** । नरायणेति । (२)**नरा अयनं स्थानं यस्येत्यर्थः । अन्तर्यामितया तेषु स्पष्टं स्थितेः । अस्मादेव स्वार्थिकेऽणि नारायणः । नरसमूहार्थकनारशब्देनायं साधुरित्यन्ये** ।

प्रकाशितमिति । **प्रथमप्रकाशितमित्यर्थः । अयमेव च प्रकर्षस्तत्स्वकृत-**

---

( १ ) **भिक्षुनटसूत्रयोः किम् ?** भिक्षुत्वसम्पादकं सूत्रम् भिक्षुसूत्रम् ।

"तेनैकदिक्" ॥ छन्दसीति निवृत्तम् । पुनस्तेनेत्युक्तेः ।

"तसिश्च" ॥ पूर्वोक्ते विषये ।

"उपज्ञाते" । उपदेशं विना ज्ञातमुपज्ञातम् ।

"कृते ग्रन्थे" ॥ तेनेत्यनुवर्तते ।

"तस्येदम्" ॥ अणादयः पञ्च महोत्सर्गा घादयश्च षष्ठ्यन्तात्सम्ब-
स्युः । अनन्तरादिष्वनभिधानान्न । **वहेरिति** । तुरिति तृन्तृचोः
यग्रहणम् । ढत्वादीनामसिद्धत्वादलौकिके प्रक्रियावाक्ये पूर्वमिट् ।
नेमित्ताभावान्न ढत्वादि । इडर्थमिदमुपसङ्ख्यानम् । अण् तु सिद्ध
यते । **आग्नीध्र इति** । णिदयं प्रत्ययः । यत्तु 'पिबाग्नीध्रात्तव'
आद्युदात्तं प्रयुज्यते तत्स्वार्थे ऽञ्पक्षे बोद्धव्यम् । तथा च वार्ति-
—"आग्नीध्रसाधारणादञ्" इति । अग्निमिन्धे इति क्विप् । अग्नीद्
ग्निशेषः । 'त्वमग्निद्दतायते' इत्यत्र तु छान्दसं ह्रस्वत्वं बोद्धव्यम् ।
**नैधेनीति** । षित्त्वात् ङीष् । "हलस्तद्धितस्य" इति यलोपः । यया
समिद्ध्यते सा समित् । सम्पदादित्वात्करणे क्विप् । ततः कर्मणि
न्तादाधानकरणे तद्धितोऽयम् ।

"रथाद्यत्" ॥ अणोऽपवादः 'रथा(१)द्रथाङ्गे' इति वार्तिकमभिप्रे-
—**रथ्यं चक्रमिति** । अत्रेदमवधेयम् । द्वयो रथयोरङ्गमिति विग्रहे
म् । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधेरुपसङ्ख्यानाद्यत् ।
र्लुगनपत्ये" इति लुक् । यस्तु द्वौ रथौ वहति स द्विरथ्यः । "तद्वह-

---

**तं वा । अतस्तेन कृतमित्यनेन न गतार्थता ।**

ञ्चेति । **ञित् णित् कित् तित् निरनुबन्धकभेदेन पञ्चेत्यर्थः । यद्वा-
ञञञञसञस्सूत्रोक्ताः पञ्च महोत्सर्गा इत्यर्थः ।** अनन्तरादिष्विति । **सम्ब-
वति शेषः ।** णिदयमिति । **न तु ञित् ।** अन्यथेतः **स्वार्थेऽञिवधानं व्यर्थं
ति भावः । भाष्ये तु ञित् पठ्यते स्त्रियां ङीबर्थं स्वार्थिकाञश्चारि-
वक्तुं शक्यमिति भावः ।** अग्निमिन्धे इति । **इन्धयतीत्यर्थः ।**
ते लुगिति । **यथाऽत्र लुक् तथा "द्विगोः" इति सूत्रे निरूपितम् । बीजा-**

---

(१) **रथाद्रथाङ्गे इति ।** "रथाद्यत्" यञ् पूर्वादञ् इत्येतयोर्योगयोरर्थनिर्देशः ।

ति" इति यत्। तस्य प्राग्दीव्यतीयत्वाभावान्न लुक्। अत एव "तद्वहति" इति सूत्रे रथग्रहणं सार्थकम्। अन्यथा रथाद्यदित्येव रथाङ्ग इव बोढर्यपी- ष्यताङ्क्तिन्तेनेति।

ननु "द्विगोर्लुगनपत्य" इत्यत्राचीत्यस्यापकर्षपक्षे कथमत्र यतो लुगिति चेत्? सत्यम्। "तद्वहति" इत्यत्र रथग्रहणमेव ज्ञापकमेतस्य यतो हलादेरपि लुग्भवतीति। अन्यथा तत्र रथग्रहणं व्यर्थमेव स्यात्।

"**द्वन्द्वाद् वुन्**"॥ अणोऽपवादः, छन्तु परत्वाद् बाधते। **काकोलू- किकेति**। काकोलूकस्य वैरमित्यर्थः। वुन्नन्तं स्त्रियाम्। 'वैरमैथुनिका- दिवुन्' इति स्त्र्यधिकारे अमरः। **कुत्सेत्यादि**। (१)कुत्सकुशिकयो- र्मैथुनिका। विवाहरूपः सम्बन्ध इत्यर्थः। मिथुनं हि दम्पती। तस्य कर्म क्रिया निष्पादनम्। मनोज्ञादित्वाद् वुञ्। तदन्तं चेदं स्त्रियां स्वभावात्।

"**सङ्घाङ्क**"॥ पूर्वस्य वुञोऽपवादः। **घोषेति**। अत एव यथा सङ्ख्यमपि न वैषम्यात्। प्रकृतयस्तिस्रः प्रत्ययार्थविशेषणानि तु चत्वारि। **परम्परेति**। यथा गवादिनिष्ठः स्वामिना गोद्वारा सम्बन्धः। **सा- क्षादिति**। यथा बिदानां विद्या। यद्यपि अङ्कलक्षणयोः पर्यायत्वं प्रसिद्धम्,

कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्।

इति कोशसिद्धं च; तथाऽपि पृथग्ग्रहणसामर्थ्यादिह विशेषपरतेति भा- वः। णित्त्वं ङीबर्थं पुंवद्भावनिषेधार्थं च। बैदी विद्या यस्य बैदीविद्यः। बिदानामसाधारणी या विद्या तद्वानित्यर्थः।

---

न्तरमाह—अत एवेति। **एतत्सामर्थ्यादेव हलादेरपि यतो लुग्भवतीति भावः**। बोढर्यपीति। **तस्येत्यस्य सामान्यविशेषसर्वप्रकृतिसङ्ग्राहकत्ववदिद मित्यस्य सामान्यरूपेण विशेषरूपेण च सर्वविशेषबोधकत्वम्। वहति वोढेति च समानार्थमिति भावः। स्पष्टं चेदम् "तस्यापत्यम्" "तद्वहति" इति सूत्रभाष्ययोः।**

स्त्रियामिति। **स्वभावादिति भावः**। क्रियेति। **विवाहरूपेत्यर्थः**।

वुञ इति। **गोत्रग्रहणानुवृत्त्या गोत्रप्रत्ययानामञादीनां ग्रहणमित्यर्थः**।

ङीबर्थमिति। **"गोत्रे ऽलुगचि" इत्यलुका वृद्धिसिद्धेरिति भावः**।

"**छन्दोगौक्थिक**" ॥ सङ्घादयो निवृत्ताः । एभ्यो ञ्यः स्यात् तस्येदमर्थे । चरणशब्देभ्यो वुञोऽपवादः । नटात्तु औत्सर्गिकस्याणः । धर्माम्नाययोरित्युक्तेर्नेह—**छन्दोगं कुलमित्यादि** ॥

**समाप्ताः शैषिकाः** ॥

---

# अथ प्राग्दिव्यतीयाः ।

"**तस्य विकारः**" ॥ घादिसम्बद्धस्य तस्य ग्रहणस्य निवृत्तये पुनस्तस्येत्युक्तम् । अणादयस्तु न निवर्त्तन्ते प्राग्दीव्यतः प्राग्भवनादिति विशिष्टावधिपरिच्छेदेनाधिकृतत्वात् । षष्ठ्यन्ताद्विकारे ऽणादयः स्युः। तत्र "प्राणिरजतादिभ्यो ऽञ्" "ओरञ्" "अनुदात्तादेश्च" "मयड्वैतयोः" "नित्यं वृद्ध-

---

नटादिति । **पाक्षिकच्छस्येति बोद्ध्यम्** । नेहेति । **नेदं वुञ्विधिमात्रविषयं सङ्कोचे मानाभावात्** ॥

इति शैषिकाः ।

---

## अथ प्राग्दिव्यतीयाः ।

तस्य ग्रहणस्य । (१)**तस्येदमित्यत्रेत्यस्य** । मयड्वैतयोर्नित्यमिति । **मयड्वैत-**

---

कार्यः । "यूनिलुक्" इति सूत्रे कैयटेन अत्रिभरद्वाजिकान्येवमुदाहृत्य प्रसङ्गाद्बहुवचनान्तद्वन्द्वाद्वुञो व्याख्यातत्वात् ।

**इति शैषिकाः ।**

---

## अथ तद्धितेषु प्राग्दीव्यतीयप्रकरणम् ।

( १ ) "**तस्येदम्**"**इत्यत्रेत्यस्येति** । तदुक्तम् भाष्ये–"तस्येति वर्तमाने पुनस्तस्य इति ग्रहणम् किमर्थम् ? इति प्रश्ने वार्तिकेनोत्तरयति। तस्य प्रकरणे तस्य पुनर्वचनं शैषिकनिवृत्त्यर्थम् । विकारावयवयोर्माभूवन्नित्येवमर्थं तस्य ग्रहणम् इत्यर्थः । "कथं च प्राप्नुवन्ति, किमधिकारात्प्राप्नुवन्ति, उत तस्येदमिति वचनात् । यद्यधिकारात्प्राप्तानां तस्य ग्रहणेन निवृत्तिः क्रियते तदा पुनरपि "तस्येदमित्यनेन प्राप्नोति । अथ "तस्येदम्" इत्यनेन प्राप्तानां तस्य ग्रहणेन निवृत्तिः क्रियते तदासौ नोपपद्यते उत्तरार्थत्वादस्य योगस्य तत्रैव चरिता-

शरादिभ्यः" "पिष्टाच्च" इत्यादिभिरपवादा वक्ष्यन्ते । अतोऽप्राणि आद्युदात्तमवृद्धं प्रतिपदमवक्ष्यमाणप्रत्ययं चेहोदाहरणमित्याशयेन तथैवोदाहरति—**आश्म इत्यादि** । अश्मन्भस्मन्शब्दौ मनिन्प्रत्ययान्तौ । मृदस्तिकन् । त्रयोऽपि नित्स्वरेणाद्युदात्ताः । प्राचीनस्य तस्येत्यस्य निवृत्तत्वात्तदधिकारोक्ताष्ठगादयो ऽपि नेह । हालः, सैरः । **मायूर इति** । "प्राणिरजतादिभ्योऽञ्" इत्यञ् । अनुदात्तादेरञः सिद्धत्वादुदात्ताद्यर्थं वृद्धेषु मयड्बाधनार्थं चावश्यकमिदं परत्वादनुदात्तादिष्वपि प्रवर्तते । **मौर्वमिति** । मूर्वाशब्दः "तृणधान्यानां च द्व्यषाम्" इत्याद्युदात्तः । पिप्पलशब्दोऽप्येवम् । "लघावन्ते द्वयोश्च" इत्युक्तेः । प्रयुज्यते च तथा—"तयोरन्यः पिप्पलं स्वादु" इति मन्त्रे ।

**"त्रपुजतुनोः" ॥ अण् स्यादिति** । बिल्वादिभ्योऽणित्यतोऽनुवृत्तेः । "ओरञ्" इत्यस्यापवादोऽयम् ।

---

**योरित्यधिकारे "नित्यं वृद्ध" इतीत्यर्थः । एतेन मयड्वैतयोरित्युपन्यासोऽसङ्गतः । तस्य पाक्षिकत्वेनाणोऽपीष्टत्वादित्यपास्तम्** । अप्राणीति । **अनुवर्णान्तमित्यपि बोद्धव्यम्** । आद्युदात्तमिति । **अनुदात्तादिभिन्नमित्यर्थः** । **इदम् प्राणीत्यादि** ॥

---

ग्रहणस्य निवर्तकम् घादीनपि निवर्तयति । तन्निवर्तनसामर्थ्यात् तस्येदमित्यनेनापि विकारावयवयोर्घादयो न भवन्ति । अन्यथा तन्निवर्तनमनर्थकं स्यादित्यर्थः । "प्राग्दीव्यत" इति अवधिविशेषाश्रयणे त्वणादीनामधिकारात् अणादय इह सम्बध्यन्त इति विपर्ययो न चोदनीयः। घादयोऽनुवर्त्तन्ताम् अणादयो मानुवर्तन्ताम् । सर्व सूत्रकिमर्थमित्याक्षेपः श्चेत् ? शृणु बाधनार्थमिति । तस्यायमाशयः—तस्येदमित्यत्राणादयो घादयश्चाणापवादा विहिता तत्र विकारावयवयोरणादय एव यथास्युः तदपवादा घादयो माभूवन्निति एवमर्थमिदमुच्यते । ये प्रत्यया अणो बाधका तस्य बाधनार्थं सूत्रं कर्तव्यम् । कथं पुनरशैषिकं बाधेत । तस्येदम् । इत्यस्मात्तस्य विकार इति सूत्रस्य पृथङ्निर्देशात् अनेन विधीयमानोऽण् प्रत्ययोऽशैषिकः कथं विकारेऽप्राप्तान् घादीन् बाधते ? इति प्रश्नः । उत्सर्गः शेष एवासौ इति ससाधनम् । असत्यस्मिन्न् पृथक् सूत्रे विकारोऽपि "तस्येदम्" इत्यत्रान्तर्भावाच्छेषो भवति घादयः प्राप्नुवन्ति । उत्सर्गत्वं विकारस्य प्रकृतिविशेषासम्बन्धात् असति हि योगविभागे "बिल्वादिभ्योऽण् विकार इति वक्तव्यम् । तत्र प्रकृतिविशेषसम्बद्ध एव विकार उपयुक्तत्वादशेषः

प्रत्ययस्य षित्त्वटित्त्वपाठयोः साध्वसाधुत्वविवेको बहुश्रुतैः कार्यः ।

**आश्मनमिति** । 'विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः' इति वचनादश्मभेदशब्दे भेदशब्दस्य लोपे ऽश्मन्निति नान्तमवशिष्यते । तथा कल्माषाङ्घ्रे राज्ञो भार्यायां मदयन्त्यां वसिष्ठेनोत्पादितः क्षेत्रजः सुतो ऽश्मको नाम तत्र सञ्ज्ञात्वद्योतकस्य कप्रत्ययस्याभावे ऽश्मन्निति नाम भवति, तस्यावयवे आश्मनं विकारेऽप्याश्मनमित्येव भवति। न च 'अश्मनो विकार' इति टिलोपः स्यादिति वाच्यम् । प्रसिद्धतरत्वेन पाषाणवाचकस्यैव तत्र ग्रहीतुमुचितत्वात् ।

वस्तुतस्तु "तस्येदम्" इति सामान्यविवक्षया भविष्यति, पैष्टी सुरेतिवत् ।

**मौद्ग इति** । मुद्गशब्दो घृतादित्वादन्तोदात्तः । **कार्पासमिति** । "कृञः पासः" इति पासप्रत्यये "सार्वधातुकार्द्धधातुकयोः" इति गुणे रपरे कृते कर्पासीशब्दो जातिलक्षणङीषन्तः । ताभ्याम् "अनुदात्तादेश्च" इत्यञं बाधित्वा बिल्वादिभ्यो ऽण् । भाषायां किम्? खादिरो यूप इति वृत्तिकाराः । यद्यपि मयटो वैकल्पिकत्वात्सिद्धमिदं तथापि वेदे बह्वचः परस्य मयटो ऽर्थान्तरत्वमेवेति तात्पर्यग्रहार्थमेवेदम् ।

ननु "द्व्यचश्छन्दसि" इति सूत्रं 'द्व्यच' एवेति नियमार्थं सदुक्तार्थे तात्पर्यं ग्राहयिष्यतीति चेत्? सत्यम् । विपरीतनियमशङ्कानिवृत्त्यर्थं भाषाग्रहणमिति तत्त्वम् । अधिकारादेव सिद्धे एतयोरिति वचनमित उत्तरेषां "प्राणिरजतादिभ्योऽञ्" इत्येवमादीनामपि विषये पक्षे प्रवृत्त्यर्थम् ।

---

बहुश्रुतैः कार्य इति । "**ञितश्च तत्प्रत्ययात्**" इति सूत्रभाष्यप्रामाण्याट्टिदेवेति लभ्यते । तत्र हि-विकारविकारेऽपि तद्विकारत्वमारोप्य तत्प्रत्याख्यातम् । अन्यथा षित्वान् ङीष् तत्प्रत्याख्याने, आरम्भे त्वञन्तत्वान्ङीबिति फलभेदे तदसङ्गतिः स्यादिति बोध्यम् ।

इदम् । **भाषाग्रहणम्** । द्व्यच एवेति । **विकारविकारावयवयोश्चेत् छन्दसि मयट् तर्हि द्व्यच एवेत्यर्थः । ततश्चान्यत्रार्थे एव छन्दसि बह्वचो मयडिति भावः** । विपरीतेति । **द्व्यचश्चेद्विकारादौ मयट् तर्हि छन्दस्येवेत्येवमित्यर्थः** ।

कपोतमयम् । लोहमयम् । इह विकारेणावयवेनैकैकेन सहाभक्ष्याच्छादनयोरिति सम्बध्यते समासनिर्देशादतो यथासङ्ख्यं न । स्यादेतत् । उत्तरमीमांसायामानन्दमयाधिकरणे भाष्यकारैः 'अन्योऽन्तर आत्मा आनन्दमयः' इति श्रुतौ 'आनन्दमय इति विकारे मयड्'इत्युक्तम् । तत्कथं सङ्गच्छताम् । भाषायामिति सूत्रयता पाणिनिना सह विरोधात् ।

किं च 'विकारशब्दान्नेति चेन्न प्राचुर्यात्' इति सूत्रयतो व्यासस्यापि आनन्दशब्दस्य बह्वच्कतया छन्दसि विकारे मयड् दुर्लभ इत्येवाशय उचितः । एवं स्थितेऽन्नमयादिप्रायपाठोऽप्यकिञ्चित्करः । उभयसम्भव एव तस्य निर्णायकत्वात् । तथा च-प्राचुर्ये मयटं वदतां प्राचां वृत्तिकृतामेव व्याख्यानं प्रबलं, न तु भाष्यकारोक्तमिति चेत् ? अत्रोच्यते । 'श्रीग्रामण्योश्छन्दसि" इति सूत्रे श्रियश्छन्दसीत्यंशस्तावद्भगवता भाष्यकारेण प्रत्याख्यातः । छन्दसि सकलविकल्पानां व्यवस्थितत्वात् । अत एव "उत्र्तत्" "नित्यं छन्दसि" "बह्वादिभ्यश्च" नित्यं छन्दसि" इत्यादयोऽपि वैयाकरणैरित्थमेव प्रत्याख्याताः, न्यायसाम्यात् । एवं स्थिते तात्पर्यग्रहस्य न्यायानुसन्धानेनैव सिद्धेस्तदर्थं पाणिनिसूत्रारम्भादर्शनाच्चेह भाषायामिति त्या-

---

तेन लोके घटमयमित्यादिव्यावृत्तिः स्यादिति भावः ।

समासनिर्देशादिति । अभक्ष्येत्यादौ समासनिर्देशादेतयोरित्यत्र तदपवादैकशेषनिर्देशाच्चेत्यर्थः । एवं च तयोः पृथगुपस्थित्यविषयत्वान्न यथासङ्ख्यमिति भावः । एतयोरित्यनेन विकारावयवयोः क्रमेणोपस्थितिरित्यर्थे मानाभावाच्च । एतेनाद्यन्तावित्यादिवत् पृथगनुपस्थितावपि तत् स्यादित्यपास्तम् । भाषायामितीति । 'भाषायां मयट् द्व्यचश्छन्दसि' इति सूत्रयतेत्यर्थः ।

तस्य निर्णायकत्वादिति । विज्ञानमयान्नरसमयाभ्यां प्रायपाठाच्चेत्यपि बोद्धव्यम् । व्यवस्थितत्वादिति । एवञ्च "वामि" इत्यनेन वैकल्पिकनदीत्वात् पक्षप्राप्तस्य नित्यार्थत्वमिति न वाच्यमिति भावः। यद्यपि सूतग्रामणीनामिति प्रयोगे समाहारद्वन्द्वपूर्वकैक(१)शेषेण सिद्धिमाश्रित्य ग्रामणीत्यंशोऽपि भा-

---

(१) एकशेषेणेति । शब्दतन्त्रमाश्रित्येत्यर्थः । तन्त्रं द्विधा शब्दतन्त्रम् अर्थतन्त्रच । [illegible]

तथा "द्व्यचश्छन्दसि" "नोत्वद्वर्ध्रबिल्वात्" इति द्विसूत्र्यपि त्याज्या। हि भाषाग्रहणे शरमयं बर्हिरित्यादिसिद्ध्यर्थं "द्व्यचः" इत्यारब्धम् । मौञ्ज्यम्, वार्ध्रं चर्म, बैल्वो यूपः इत्यादौ "द्व्यचः" इति प्राप्तं प्रतिषेद्धुं त्" इति सूत्रमारब्धम् । उक्तरीत्या तु सर्वमिदं निष्फलं, भाष्यकात्याख्यातप्रायं च । एषैव च वेदान्तसूत्रवृत्तिकृतामपि गतिः । तैरपि दमयादिपदेषु विकारे मयटः स्वीकारात् । अन्नमयप्राणमयमनोमयेषु वान्मयट्सम्भवेऽपि विज्ञानमयशब्दे विकारे मयडर्थमुक्तप्रकारस्यैवाव्यत्वात् । तथा चानन्दमयेऽपि विकारार्थतैवोचिता ऐकरूप्यात् ।

यद्वा प्राचुर्ये मयडपि प्रकृत्यर्थविरोधिनो लेशतोऽनुवृत्तिलाभात् प्रकृते ार्थः पर्यवस्यतीत्याशयः ।

अथ वा "नित्यं वृद्ध" इत्यत्र भाषाग्रहणं नानुवर्त्तते । अनुवृत्तावपि षायां नित्यम् , अन्यत्र तु काचित्क इत्याश्रित्य मयट् सुसाधः । अत ारादिषु मृच्छब्दपाठोऽप्यर्थवान् । 'मोषु वरुणमृन्मयं गृहं राजन्नहं ' इति मन्त्रे दर्शनात् । न च भाषार्थ एव मृच्छब्दपाठ इति वाच्यआरम्भसामर्थ्यादेव सिद्धे नित्यग्रहणं योगविभागेनान्यत्रापि क्वचिर्थन्तेन 'एकाचो नित्यम्'इत्युक्त्वा वाङ्मयमित्यादेराकरे उदाहृतत्वात्। दतां मृच्छब्दपाठवैयर्थ्यस्य स्पष्टत्वात् ।

यद्वा 'हेतुमनुष्येभ्य' इत्यनुवर्त्तमाने "मयड्वा" इति सूत्रेणागतार्थे ड् विकार" इति स्वार्थिकार्थकथनमेव सर्वथाऽपि शङ्करभगवत्पादोक्तिरनव-

---

त्याख्यातस्तथाऽपि व्यवस्थितविभा(१)षाश्रयणेन श्रौत्यंशस्यैव प्रत्यामित्याशयः । त्याज्येति । व्यवस्थितविभाषयैव सिद्धेः । इत्यादीति । येत्यादिशब्दार्थः । विज्ञानमयेत्यन्नरसमयस्याप्युपलक्षणम् । कृत्यर्थविरोधिन इति । ब्राह्मणा अत्र प्रचुरा इत्युक्ते नियमेनान्येषामल्पोतेरिति भावः । पर्यवस्यतीति । तत्पर्यवसानं कथम् ? इति चिन्त्यम् । पष्टत्वादिति । "एकाचो नित्यम्" इत्यनेनैव सिद्धेरिति भावः । आर्थि-

---

१) व्यवस्थितविभाषाश्रयणेनेति । तत्त्वञ्च—विभाषाशास्त्रीयोद्देश्यतावच्छेदकव्या-

घेवेति दिक् ।

**"गोश्च पुरीषे"**। पुरीषं न विकारो, नाप्यवयवः । तस्मात्तस्येदमर्थेऽयं प्रत्ययः प्रकरणाल्लिङ्गस्य बलीयस्त्वात् ।

**"गोपयसोर्यत्"** । यद्यपि सर्वत्र गोरजादिप्रसङ्गे यदुक्तस्तथाऽपि "मयड् वैतयोः" इति पक्षे प्राप्तं मयटं बाधितुं पुनरयं विधिः ।

**"द्रोश्च"** । ओरञः, "एकाचो नित्यम्" इति मयटश्चापवादोऽयम् । **द्रुवयमिति** । द्रोर्विकारभूतं प्रस्थादिपरिमाणमित्यर्थः । **आमलकमिति** । फलितस्य वृक्षस्य फलमवयवो विकारश्च । तेनान्यतरस्मिन्प्रत्ययः ।

---

कार्येति । **यो यतो निर्गतः स तस्य विकार इति लोकप्रसिद्धेरिति भावः ।**

इदमर्थे इति । **अयश्चासावर्थश्चेदमर्थस्तत्र पुरीषरूपे इत्यर्थः । तस्य पुरीषमित्यर्थे प्रत्यय इति यावत्** । लिङ्गम् । **विकारावयवत्वाभावरूपम् । एतच्च कैयटहरदत्तानुरोधेनोक्तम् । "ञितश्च तत्प्रत्ययात्" इति (१)सूत्रस्थभाष्यात्तु गोभुक्ताहारविकारे गोविकारत्वमारोप्य प्रकरणाबाध एवोक्त इति दिक् ।**

मयटं बाधितुमिति । **यो(२)गविभागसिद्धत्वेन काचित्कत्वात् "एकाचो नित्यम्" इति मयट् सुशकवारण इत्यभिमानः ।**

मयटश्चेति । **उभा(३)भ्यामपि येन नाप्राप्तिसत्त्वादिति भावः ।**

---

(१) **सूत्रस्थभाष्यात्त्विति** । तत्रहि–तयोर्विकारावयवयोः ञित् प्रत्ययः तदन्ताद्विकारावयवयोरेवाञ् प्रत्ययो भवतीति सूत्रार्थे अन्तरेणापि सूत्रसिद्धिं मत्वा पृष्टम्–किमर्थम् इदम् सूत्रम् ? विकारावयवयोर्विकारावयवयुक्तत्वान्मयट्प्रतिषेधार्थम् । इतश्च तत्प्रत्ययादञो विधानम् विकारो विकारेण युज्यतेऽवयवोऽवयवेन विकारावयवयोर्विकारावयवयुक्तत्वान्मयट् प्राप्नोति इष्यते चाञ् एव यथा स्यात्–तच्चान्तरेण यत्नं न सिद्ध्यति । सूत्रस्यावश्यकता अत्र कैयटः । कपोतस्य विकारो यन्मांसं कापोतम् । तस्यापि विकारो रसो भवति कापोतावयवस्य सक्थ्यादेः कापोतस्यावयवोऽन्यो भवति इति वृद्धत्वान्मयट् प्राप्नोति तन्निवृत्यर्थमञ्विधानम् इत्याशयः । न च अवयवे समुदायत्वस्य विकारे प्रकृतित्वस्य चादर्शनादिदमयुक्तमिति वाच्यम् । पूर्वे पाञ्चालाः तैलम्भुक्तम् इत्यादौ अवयवे समुदायत्वस्य शालीन् भुङ्क्ते मुद्गैः शालिविकारान् मुद्गविकारैः इत्यादौ विकारे प्रकृतित्वस्य च दर्शनात् । विकारावयशब्दान्न प्रत्ययो अनभिधानादिति दिक् । इत्यादिभाष्यग्रन्थेनेत्यर्थः ।

(२) **योगविभागसिद्धत्वेनेति** । योगविभागादिष्टसिद्धिरेव नत्वनिष्टापादनमिति तात्पर्यम् । सूत्रस्य विश्वतोमुखत्वादिति भावः । तेन "एकाचो नित्यम्" इत्यत्र आरम्भसामर्थ्येनैव नित्यत्वं स्यादिति "नित्यं वृद्ध" इति सूत्रं विभज्य क्वचिदन्यत्रापि भवतीति ज्ञाप्यते

"**कंसीयपरशव्ययोः**" । परशव्यस्यानुदात्तादित्वादञि सिद्धे
वचनम् । न च "यस्य" इति लोपे कृते "हलस्तद्धितस्य" इति
न सिद्धमिति वाच्यम् । ईतीत्यनुवृत्तेः ।

**प्राग्दीव्यतीयाः समाप्ताः ।**

# अथ तद्धितेषु ठगधिकारः ।

'**आहौ प्रभूतादिभ्यः**' **इति** । उपसंख्यानमित्यनुषज्यते । आहे(१)
: एकदेशस्य प्रकृतिभागस्य उच्चारणार्थेन इकारेण आहाविति निर्देशः ।
**माहेति** । क्रियाविशेषणाद्वक्तरि प्रत्ययः ।
**अभ्र्येति** । 'अभ्रिः स्त्री काष्ठकुद्दाल' इत्यमरः । दीव्यतीत्यादौ का-
संख्या अविवक्षिताः । अदेवीत् देविष्यति वा आक्षिकः । एवं देवि·

---

शव्यस्येति । **यदन्तत्वेन स्वरितान्तत्वादिति भावः । यत्तु पाक्षिकम·
वार्थमिति तन्न । अन्यथैवोपपत्तौ शास्त्रबाधे मानाभावात् ।**

इति प्राग्दीव्यतीयाः ।

---

## अथ तद्धितेषु ठगधिकारः ।

कृतिभागस्येति । **तस्य च तदर्थे लक्षणेति भावः । स्थानिवत्त्वेन धातु-**

---

ति ततो नञर्थस्य नशब्दस्य "सुप्सुपा" इति समासः । भावे क्तः येनेति कर्तरि तृ·
तथाच--यत्कर्तृकावश्यकप्राप्तिरित्यर्थः । नन्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वादिति भावः।

इति प्राग्दीव्यतीयाः ।

---

## अथ तद्धितेषु ठगधिकारः ।

) **आहेति** । क्रियाविशेषणानां कर्मत्वम् इत्यनुशासनात् क्रियाविशेषणत्वाकर्म-
हाहेति वार्तिके तदिति कर्ममात्रं निर्दिश्यते । तत द्वितीयासमर्थविभक्तिः "आहौ

ष्यासि देविष्यामि वा । दिव्यन्ति दीव्यथ दीव्यामो वा आक्षिकाः । का(१) रकं तु विवक्षितमेव । अत एव जयति जितमिति कर्तृकर्मणोः पृथगुपादानम् ।

"**संस्कृतम्**" । योगविभाग उत्तरार्थः ।

"**कुलत्थकोपधादण्**" । कुलत्थैः संस्कृतं कौलत्थम् ।

**बाहुकेति** । सूत्रे षकारः सांहितिको, न त्वनुबन्ध इति न ङीष् । तथा च-'आकर्षात्पर्पादेः' इत्यादि श्लोकवार्तिकं प्रकरणान्ते वक्ष्यते ।

**निकषोपल इति** । सुवर्णपरीक्षार्थः । **पाठान्तरमिति** । एतच्च भ्वादौ 'कषखष'इत्यादिदण्डके माधवेनोपन्यस्तम् । किं तु 'आकर्षात्पर्पादेः' इति वार्तिकस्याननुगुणम् । तत्र हि-नीरेफपाठे वृत्त्यसङ्गतिः स्यात् ।

**येनपीठेनेति** । 'पर्प गतौ' "हलश्च" इति करणे घञ् । **स पर्प इति** । एतच्च माधवरीत्योक्तम् । उज्ज्वलदत्तस्तु "खष्पशिल्पशष्पबाष्परूपतर्पतल्पाः" इति सूत्रे तर्पशब्दस्थाने पर्पशब्दं पठित्वा पिपर्तेः पः पर्पं दृढं बालतृणम्, तेन चरति पार्पिक इत्युदाजहार । इहान्तर्गणसूत्रं "पादः पच्च" इति । पादाभ्याञ्चरति पदिकः ।

यत्तु वार्तिकं 'पद्भाव इके चरतावुपसंख्यानम्' इति, सोऽस्यैव प्रपञ्चः । पर्प, अश्व, अश्वत्थ, रथ, जाल, न्याय, व्याल, पादः पत् ।

**श्वागणिक इति** । "श्वादेरिञि" इत्यत्र इकारादिग्रहणं कर्त्तव्यमिति वचनाट्ठञि द्वारादिकार्यं न । **धानुष्क इति** । वेतनादिगणे

---

त्वादिकानिर्देश इत्यन्ये ।

सोऽस्यैव प्रपञ्च इति । **केचित्तु एतद्बलाद्गणसूत्रमनार्षमित्याहुः** ।

---

(१) **कारकन्तु विवक्षितमिति** । क्रियानिरूपितावोपलक्षितजनकत्वमित्यर्थः । अत एव क्रियायामेवान्वयः । जनकत्वं चात्र कारणत्वरूपं विवक्षितम् । तेन ब्राह्मणस्य पुत्रं पन्थानं पृच्छति इत्यादौ ब्राह्मणस्य न कारकत्वम् । पुत्रेणान्यथा सिद्ध्या तत्वाभावात् । यथा कुलालजनकस्येति चतुर्थ्यान्यथासिद्ध्या इति भावः । नन्वेवमपि ब्राह्मणस्य पितरं पन्थानं पृच्छति इत्यादौ ब्राह्मणकारकत्वं दुर्वारम् । न च रासभादेरिवास्यापि पञ्चमान्यथासिद्ध्यासिद्धिरिति वाच्यम् । तथापि ब्राह्मणपितुरेव पन्थाः प्रष्टव्य इति प्रतिज्ञावत् पुरुषकर्तृकप्रश्नपरे

**"आयुधाच्छ च"** ॥ आयुद्ध्यन्त्यनेनेत्यायुधम् 'घञर्थे कविधानम्' इति कः । **उत्सङ्गेन हरतीति** । उपादत्ते नयति वेत्यर्थः । **भस्त्रयेति** । भस्त्रा चर्मविकारः येन लोहादि ध्मायते जलादिकं च नीयते । शीर्षभारशब्दोऽत्र पठ्यते । निपातनाच्छीर्षभावः सप्तमीसमासश्च, "तत्पुरुषे कृति" इति वा अलुक् । पक्षे शीर्षभारः । **एकदेशविकृतस्येति** । "वीवधाच्चेति वक्तव्यम्" इति वार्तिकं तु न्या(१)यसिद्धार्थकथनपरमिति भावः । वृत्तिकृत्तु वीवधशब्दं सूत्रे प्रचिक्षेप ।

**"त्रेर्मम्नित्यम्"** ॥ नित्यग्रहणं स्वातन्त्र्येण प्रयोगं वारयितुम् । अत एव लौकिके विग्रहवाक्ये क्त्रिन्नादीनां प्रयोगो न तु क्त्रेः । तदाह— **कृत्या निर्वृत्तमिति** । संख्यावाची त्रिशब्दस्तु नेह गृह्यते व्याख्यानात् । 'प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणात्' । "निजां त्रयाणाम्" इत्यादिलिङ्गाच्च ।

ननु नित्यग्रहणेन निर्वृत्तार्थविवक्षायां वाक्यस्य वारणेऽपि तदविवक्षायां स्वातन्त्र्यस्य दुर्वारत्वान्नेदं लिङ्गमिति चेत्? न। नित्यमिति योगं विभज्य

---

पक्षे शीर्षभार इति । सोऽपि गणे पठ्यते । एकदेशविकृतन्यायेन तु न सिद्धिः । शीर्षभारस्य विकाराभावात् । न्यायसिद्धेति । छिन्नपुच्छश्वदृष्टान्तमूलकैकदेशविकृतन्यायेनेत्यर्थः । यद्वा 'सर्वे सर्वपदादेशा' इति न्यायेन विशिष्टस्यादेश इति स्थानिवद्भावन्यायसिद्धेत्यर्थः ।

स्वातन्त्र्येणेति । निर्वृत्तेऽर्थे त्रिप्रत्ययान्तान्मब् नित्यं भवत्येवेत्यर्थः । तदविवक्षायामिति । निर्वृत्तेऽर्थे त्रिप्रत्ययान्तान्मब् भवत्येवेत्यर्थः । प्रकरणादिति भावः । योगं विभज्येति । त्रेर्मप् त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मबित्यर्थः । ततो नित्यम् । नेदं मब्विधायकम् । नित्यविकल्पयोर्व्यवस्थानापत्तेः । नापि निर्वृत्ते मपो नित्यत्वबोधकम् । एकयोगेन सिद्धेः । किं तु निर्वृत्तार्थे मबनुवादेन नित्यत्वविधायकम् । नित्यत्वं चायोगव्यवच्छेदः । शङ्खो नित्यं पाण्डुर इतिवत् । तत्र हि–न कदाप्यपाण्डुर इति प्रतीयते । एवं च निर्वृत्ते योऽयं मप् स क्त्र्यन्ताद्भवत्येव न कदाऽपि न भवतीत्यर्थः ।

---

(१) **न्यायसिद्धार्थकथनमिति** । मनुष्यग्रहणेन कस्यचित् षडङ्गुलेरपि ग्रहणमिति न्यायेनेत्यर्थः । परेतु—एवं न्यायसिद्धार्थकथने 'सुदिन' इति वार्तिकस्थसुदिनशब्देऽपि [illegible] इति मनोरमोक्तं न मनोरममित्याहुः ।

दिर्थविशेषा(१)नादरेणैव स्वातन्त्र्यवारणात् । **भावप्रत्ययान्ता-**
एवं च मप् न कर्तव्यः । तथा हि—'भावप्रत्ययान्तादिमप्' । ततः
वेत्याद्यनुवर्त्तते । नियमार्थं चेदं, तेन निर्वृत्ते तावद् वाक्यं निव-
। "नित्यम्" अनेनान्यत्रापि स्वातन्त्र्यं वार्यते ।

**चन्तामिति** "उदीचां माङः" इति क्त्वाप्रत्यये अपेत्यनेन
मासात् । "मयतेरिदन्यतरस्याम्" इतीत्वम् । तथा च—नास्मात्तृ-
त्ययः किं तु वचनात्प्रथमान्तादेवेति भावः ।

**पं वर्त्तत इति ।** प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः
इत्यकारः समासान्तः । "द्व्यन्तरुपसर्गेभ्योऽप ईत्" इति ईत्व-
त्तिमात्रं चेदम् । प्रतिकूलानुकूलपर्य्याया हीमे । एवञ्च अप्लोम-
अविवक्षितार्थाः । "ऊदनोर्देशे" इत्यूत्वं तु न अदेशत्वात् ।

**मुखमिति** । "अपपरी वर्जने" इति परेः कर्मप्रवचनीयता ।

---

**ऽपि वाक्यं न । अन्यत्रापि ञ्यन्तस्य प्रयोगो न । तदाह—**अ-
रेणैवेति । **अत एव ञ्यन्तं मब्विषयमेव यथा स्यात् केव-
गो मा भूदिति भाष्यं सङ्गच्छते । तेन पक्त्रिः क्रियते कृत्रिमह-
ति च न । एवं चाद्यसूत्रे ऽपि वेत्यस्यासम्बन्धः फलाभावादिति
तृतीयान्तञ्यन्तादिति वृत्तिस्तु अलौकिकविग्रहाभिप्रायेण ।** भा-
दिति । **निर्वृत्तेऽर्थे इति शेषः ।**
तृतीयान्तादिति । **तेनेत्यधिकारेऽपीति भावः ।** वचनादिति । **अपमि-
त्ययो भवतीति वचनसामर्थ्यादित्यर्थः ।**
नेति । **आन्वीपिकेत्यत्रेर्थः ।**

---

**अर्थविशेषानादरेणैवेति ।** नन्वत्र "त्रेर्मम्नित्यम्" । इति सूत्रे नित्यग्रह-
ाषा स्यात् । अत्र विभाषा द्वेधा महाविभाषा विभाषा च । न च पूर्वस्मिन्नेव योगे
निवृत्तमिति वाच्यम् । नित्यं त्र्यन्तं मब्विषयं यथा स्यात् । केवलस्य प्रयोगो
कथं पूर्वस्मिन् योगे विभाषा निवृत्तमिति चेच्छृणु । तत्रान्तरेणापि नित्यग्रहणं
नन्तरस्य विभाषा ग्रहणस्यास्वरितत्वात् अननुवृत्तत्वात् महाविभाषा नित्यग्रहणेन
सिद्धान्तेतु योगो विभज्यते । क्त्रेः । त्रेश्चमप् प्रत्ययो भवति पूर्वेण सिद्धे नित्या-

"पञ्चम्यपाङ्परिभिः" इति पञ्चमी । "अपपरिबहिरञ्चवः पञ्चम्या" इत्यव्ययीभावस्ततष्ठक् । स्वामिनो मुखं वर्जयित्वा यः सर्वेको वर्त्तते स पारिमुखिकः । यदा तु सर्वतोभावे परिशब्दः प्रादिसमासश्च, तदा यतो यतः स्वामिमुखन्ततो यो वर्त्तते सोऽर्थः । एवं पारिपार्श्विकोऽपि । **द्विगुणार्थमिति** । बहुवृत्ध्युद्देश्यकदानकर्मतया तस्य गर्ह्यत्वम् । **वार्द्धुषिक इति** । वृद्ध्यर्थं वृद्धिः तां प्रयच्छतीति विग्रहः ।

अथ कथं? 'वृद्ध्याजीवश्च वार्द्धुषिः' इत्यमरः 'न स्तेनः स्यान्न वार्द्धुषी' वार्द्धुष्यं लवणक्रिया, वार्धुषिः सप्तकं यथा' इत्यादि च । स्वच्छन्दवाचः कवय इति हरदत्तः । गर्ह्यं किम् ? द्विगुणां वृद्धिं च प्रयच्छत्यधमर्णः ।

**"कुसीददशैकादशात्ष्ठन्ष्ठचौ"** ॥ **निपात्यत इति** । अत एव वाक्यमप्यकारान्तेन भवतीति भावः । तदेव दर्शयति—**दशैकादशानिति** । "संख्याया अल्पीयस्या" इति पूर्वनिपातः ।

**"उञ्छति"** ॥ भूमौ पतितस्य एकैकस्योपादानमुञ्छः । **शब्दं करोतीति** । प्रत्ययादिविभागेन व्युत्पादयतीत्यर्थः । अत्रैवार्थेऽयं प्रत्ययोऽभिधानस्वाभाव्यात् । तेनेह न । शब्दं करोति बर्बरः । **दार्दुरिक इति** । कुलालः । दर्दुरो मृत्पात्रविशेषः ।

दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः ।
दर्दुरा चण्डिकायां च ग्रामजाले तु दर्दुरम् ॥

इति विश्वः ।

**मात्स्यिक इति** । 'मत्स्यस्य ङ्याम्' इति परिगणनात् "सूर्यतिष्य" इति यलोपो न । **मार्गिक इति** । (१)आरण्यकचतुष्पात्सु हरिणेषु

---

अत एवेति । प्रत्यये टिलोपेनैव सिद्धेर्निपातनवैयर्थ्यापत्त्या न प्रत्ययसन्नियोगेनैव निपातनमिति भावः । विशेषणत्वादेकादशस्य पूर्वनिपातापत्तेराह—संख्याया इति । इदं च दशाकदस्साधारणमिति "तदस्मिन्नधिकम्"

च वृत्तेर्द्व्यर्थो मृगशब्दः, तत्राद्यस्य विशेषो द्वितीयस्य तु पर्यायो हरिणशब्दः ।

**"पदोत्तरपदं गृह्णाति"** ॥ पदान्तमिति तु नोक्तम् । बहुच्पूर्वान्माभूत् ।

**"धर्मं चरति"** ॥ चरतिरिहासेवायाम् । न त्वनुष्ठानमात्रे । तेन दैववशाद्धर्मे प्रवृत्तोऽपि दुर्वृत्तो धार्मिक इति नोच्यते । आसेवा हि स्वारसिकी प्रवृत्तिः । एवमग्रेऽपि ।

**"समवायान्समवैति"** ॥ समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक् स्यात् समवैतीत्यर्थे । इह समवपूर्वस्य इणोऽर्थः प्रविश्यैकदेशीभवनम् । तत्र गुणभूतं प्रवेशं प्रति (१)प्रकृत्यर्थस्य कर्मता बोद्धया । विशेष्यानुरोधेन तु लोके सप्तमी प्रायेण प्रयुज्यते । 'कुरुक्षेत्रे समवेता' इति यथा ।

**सैन्याः सैनिका इति** । द्वितीयान्तात् ण्यठकौ । यत्तु सेनायां समवेता ये सैन्यास्ते सैनिकाश्च त इति, तत्फलितार्थकथनपरम् ।

**"सञ्ज्ञायाम्"** ॥ ललाटकुक्कुटीशब्दाभ्यां द्वितीयान्ताभ्यां पश्यतीत्यर्थे ठक् स्यात् । सम्यग् ज्ञानं सञ्ज्ञा तस्यां प्रसिद्धिविषयीभूतेऽर्थविशेष इति यावत् । **लालाटिक इति** । दूरे स्थित्वा प्रभोर्ललाटं पश्यति, न तु कार्येषूपतिष्ठत इत्यर्थः ।

लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ।

इत्यमरः ।

---

१यच्छायादिष्वेव तद्विधानात् ।

विशेष्येति । **एकदेशीभवनेत्यर्थः । संश्ले(२)षार्थत्वे सप्तमीत्यन्ये ।**

---

**(१) प्रकृत्यर्थस्य कर्मता बोध्येति ।** फलव्यापारयोरुभयोरपि धात्वर्थत्वेन क्रियात्वादभेदेन फलाश्रयत्वेन कर्मसंज्ञके फले विशेषणत्वादित्यर्थः । अयम्भावः-फलाश्रयस्य कर्मसंज्ञायामपि तस्याप्रातिपदिकत्वात् द्वितीयाया असंम्भवेऽपि तद्विशेषस्य प्रातिपदिकाद् द्वितीया भवतीति भावः ।

**(२) संश्लेषार्थत्वे इति ।** औपश्लेषिकाधिकरणे इत्यर्थः । उपसमीपे श्लेषः उपश्लेषः

कौक्कुटिको भिक्षुरिति । सन्यासी हि पादविक्षेपपर्यासदेशप-
मिव चक्षुः संयम्य गच्छतीति भावः ।

**मार्दङ्गिक इति** । मृदङ्गवादने प्रकृतेर्लक्षणा । मुख्यार्थप्रवृत्तेस्त्वन-
नान्न । **धानुष्क इति** । "इणः षः" इति षः ।

"**परश्वधाट्ठञ् च**" ॥ चाट्ठक् । 'द्वयोः कुठारः स्वधितिः पर-
परश्वधः' ।

**आस्तिक इति** । अस्तिनास्तिशब्दौ निपातौ । यद्वा वचनसामर्थ्या-
त्याख्यातात्, नास्तीति निपाताख्यातसमुदायाच्च प्रत्ययः। **दिष्ट**(१)-
**ग्यादि** । 'दैवं दिष्टं भागधेयम्'इत्यमरः । 'नालम्बते दैष्टिकतां न नि-
ते पौरुषे' इति माघः ।

यत्तु प्राचोक्तम् प्रमाणानुगा मतिर्दिष्टा सास्यातीति दैष्टिक इति । तन्न ।
रविरोधात् दिष्टशब्दस्य स्त्रीत्वे स्वोत्प्रेक्षितार्थपरत्वे च मानाभावात् ।
व, सास्यास्तीति विग्रहोऽप्ययुक्तः । न ह्यस्त्यर्थेऽयं प्रत्ययः स्मर्यते । न
नास्तिक इत्यत्रेवास्त्यर्थस्य प्रकृत्यर्थतयाऽपीह प्रवेश इत्यास्तान्तावत् ।

"**हितं भक्षाः**"। अस्येति प्रकृतमपि चतुर्थ्या विपरिणम्यते हितयो-
। यद्वा, 'तदस्मै' इतीह अपकृष्टव्यम्। प्रकृतिश्च तदीयभक्षणे लाक्षणि-
ाशयेनाह–**अपूपभक्षणं हितमस्मै इति** ।

"**श्राणा**" ॥ इकार उच्चारणार्थः ।

'यवागूरुष्णिका श्राणा विलेपी तरला च सा ।

इत्यमरः ।

"**आवसथात् छल्** " । वसतीत्यर्थे । आवसन्त्यस्मिन्निति आ-

---

ष्टाऽस्यास्तीति । **लिङ्गविशिष्टपरिभाषया दिष्टाशब्दात्प्रत्यय इति भावः** ।
भावादिति । **पूर्वोक्तकोशविरोधादितरकोशानुपलम्भाच्चेति भावः । दि-**

---

(१) **दिष्टमिति** । अत्र भाष्यकारा इत्थमभिदधुः––"किं यस्यास्ति मतिः स आ-
: । किंचातः चौरेऽपि प्राप्नोति । तस्यापि मतिसद्भावात् । अचेतनश्चपदार्थो
कः स्यादिति वक्तव्यम् । न्यायस्य तु प्रदर्शनाद्भाष्यकारेण प्रतिपदं नोक्तम् । इति
। एवं तर्हि इति स्वो योऽत्र द्रष्टव्यः । अस्तीत्यस्य मतिः आस्तिकः । नास्ती-

वसथः। उपसर्गे वसेरित्यथप्रत्ययः। **कुसीदसूत्रादिति**। कुसीदसूत्रोपात्ताभ्यां प्रकृतिभ्यामित्यर्थः। इह येषां षकारः सांहितिक इति सम्भाव्यते तेषामेव गणने छलादेः षित्त्वमनार्षमिति भ्रमः स्यात्। अतो वार्तिककारः सर्वानेव पर्यजीगणत्।

**इति ठकोऽवधिः समाप्तः।**

---

## अथ तद्धितेषुप्राग्घितीयाः।

**युग्य इति**। युगं रथाङ्गम्। तद्वहतीत्यर्थः। **प्रासङ्ग इति**। प्रासज्यतेऽसाविति कर्मणि घञ्।

"**धुरो यड्ढकौ**"। इह धुरो ढगित्येवोचितम्।

"**खः सर्वधुरात्**"। शब्दस्वरूपापेक्षया नपुंसकनिर्देशः। "बन्धुनि बहुव्रीहौ" इतिवत्। **सर्वधुरामिति**। सर्वा धूः सर्वधुरा। "पूर्वकालैक" इति समासः। "ऋक्पूः" इति समासान्तः। "परवल्लिङ्गम्" इति स्त्रीत्वम्। टाप्।

**एकधुरीण इति**। चकारेण खस्यानुकर्षणसामर्थ्यात्पक्षे श्रवणम्।

---

**ष्टमिति अस्य मतिर्दैष्टिक इति भाष्यविरोधाच्च। एतेनार्शआद्यचि सिद्धदिष्टशब्देन सूत्रे समाहारद्वन्द्व इत्यपास्तम्। तावताऽपि प्रमाणानुगतेत्यर्थालाभाच्च॥**

इति ठकोऽवधिः।

---

### अथ तद्धितेषु प्राग्घितीयाः।

युगं रथाङ्गमिति। **रथसाहचर्यात्तदङ्गस्यैव युगस्य ग्रहणमिति भावः।**

शब्दस्वरूपापेक्षयेति। **सौत्रं ह्रस्वत्वमित्यपरे।**

---

च सता विज्ञेया तत्रैव विषये लोके च प्रयोगदर्शनात्। तेन परो लोकोऽस्तीति मतिर्यस्य स आस्तिकः तद्विपरीतो नास्तिकः दिष्टशब्दो दैवपर्यायः। तेन दैवपारायणो दैष्टिकः "प्रा-

। हि चकारं विनैव च प्राकरणिकस्य यतो लुग्विधीयेत।

**जनी वधूरिति**। जायतेऽस्याङ्गर्भ इति "जनिघसिभ्यामिण्" "ज-
ोश्च" इति न वृद्धिः "कृदिकाराद्" इति ङीष्। **(१)जन्येति**।
ुर्वयस्येत्याहुः। सा हि वधूं जामातुः समीपं प्रापयति। कालि-
ु वध्वा यानवाहेष्वपि प्रायुङ्क्त 'यातेति जन्यामवदत्कुमारी'इति।
**पद्या इति**। "पद्यत्यतदर्थे" इति पद्भावः। अधनुषा किम्? चोरं
ति। सम्भाव्यते हि चोरव्यधने धनुषः करणता। यदा तु धनुषेति
ति तदा सापेक्षत्वादेव न भवति।

**"वशङ्गतः"**। वशनं वश इच्छा, "वशिरण्योरुपसंख्यानम्"
।

---

ङ्क्तेति। **तेन सूत्रे 'जन्यः' इति सविसर्गपाठ इति सूचयति। भाष्येऽपि
ब्दादेषा पञ्चमीत्युक्तम्। एतेन निर्विसर्गपाठं पठित्वा स्त्रियामेवास्य
वं वदन्तः परास्ताः।**
ापेक्षत्वादेवेति। **तन्मूलकासामर्थ्यादित्यर्थः। इदं प्राचामनुरोधेन। प्र-**

---

## अथ तद्धितेषु प्राग्घितीयप्रकरणम्।

१)**जन्येति**। "जन्या मातृवयस्या स्यात्" इति धरणिकोशानुसारात्। सा विवाहा-
ामातृसमीपं वधूं प्रापयति इति प्रथमाभिप्रायः। मनोरमाकारास्तु जामातुर्वयस्या स्यात्
। परेतु जनीशब्दादित्यर्थः। जन्या जामातुर्वयस्या नववधूयानवाहाश्चेति।

जन्या वरवधूज्ञातिप्रियभृत्यहितेषु च।

ति विश्वः।

जन्याः स्निग्धा वरस्य ये।

ति त्वमरः।

जन्या मातृवयस्या स्याज्जन्या जनिवरप्रिया।
जननीजनयित्र्योश्च जन्यं निर्वादयुद्धयोः॥

ति धरणिः।
ाष्ये तु जन्या इति किं निपात्यते? जनन्या जनीभावो यत्र। जन्या इति निपातनानर्थक्यं
निर्देशात्। "तद्वहति"इत्यनेनैव जनीशब्दात्प्रत्ययसिद्धेः। रूढिरपि पङ्कजशब्दवत् सिद्धेति
धः। ततः इदन्तर्हि प्रयोजनम् सर्वकालप्रत्ययविध्यर्थं कर्तव्यं सूत्रमित्युक्तम्। यद्यपि
न्वेऽपि संख्याकालयोरविवक्षयैतत्सिद्ध्यति। तथापि न्यायानुसारेण प्रतिपत्तिगौरवं स्यात्

**"मूलमस्याबर्हि"**। प्रथमान्तादाबर्हि इत्युपाधिकान्मूलशब्दाद्यत्स्यात्। **मूल्या मुद्गा इति**। मूलोत्पाटनं विना सङ्ग्रहीतुमशक्याः। मद्धयतो लवने क्रियमाणे कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ताः सुष्ठु शुष्का इति यावत्।

**यप्रत्यय इति**। तेन धेनुष्याशब्दोऽन्तोदात्तः। यति तु तित्स्वरः स्यादिति भावः। **संज्ञायामिति**। ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयम्।

**"नौवयोधर्म"**। अष्टभ्यो यथासंख्यमष्टस्वर्थेषु यत्स्यात्। इह तार्यादियोगे यथासम्भवं करणे कर्तरि हेतौ तुल्यार्थयोगे च तृतीया भवतीति सैवेह समर्थविभक्तिरर्थाल्लभ्यते। **मूलेनानाम्यमिति**। मूलं नाम पण्यादीनामुत्पत्त्यर्थं वणिग्भिर्नियुक्तं द्रव्यम्, तेन स्वस्मादतिरिक्तं लाभाख्यद्रव्यमात्मानं प्रति शेषीक्रियते। आङ्पूर्वस्य तु नमतेरभिभवोऽर्थः। तस्मात् "पोरदुपधात्" इति यति प्राप्तेऽत एव निपातनाण्ण्यत्—आनाम्यम् अभिभवनीयम्। आत्मानं प्रति शेषीकर्त्तव्यम्। स च लाभाख्यो भाग एव। लोके तु यावता द्रव्येण पण्यादिकं विक्रीयते तत्र समुदाये मूल्यशब्दः प्रसिद्धः। एवं च लाभमात्रे व्युत्पादितस्य मूल्यशब्दस्य तद्घटिते सङ्घाते निरूढलक्षणा बोध्या। **सीतयेति**। सीता हलाग्रन्तेन समितं सङ्गतं निम्नोन्नतादिरहितं समीकृतमिति यावत्। **तुलया संमितमिति**। संमितं परिच्छिन्नम्। रूढिश्चेयं "सञ्ज्ञायाम्"इत्यधिकारात्। अत एव सदृशमात्रे प्रयु-

---

धानस्य सापेक्षत्वात् क्रियायाः कारकांशे नित्यसापेक्षत्वाच्च प्राप्नोत्येषोऽत्र प्रत्ययः। स्पष्टं चेदं कैयटे(१)। तस्मात्करणप्रयोगे मा भूदित्यर्थमधनुषेति। अन्यथा पद्याः शर्करा इत्यत्रापि न स्यात्। सम्भाव्यते हि तत्रापि तैक्ष्ण्यस्य कारणता। चोरं विद्ध्यतीत्यादौ त्वन(२)भिधानान्नेति दिक्।

ऋणप्रत्यर्पणादेरिति। **ऋणप्रत्यर्पणपर्यन्तमित्यर्थः**।

कर्त्तरीति। **मूलेनानाम्यमित्यत्र कर्त्तरि तृतीया बोध्या**।

---

(१) **कैयट इति**। प्राधान्यस्यात्र सापेक्षत्वाद् वृत्तिप्रसङ्ग इति तत्र कैयटः।

त तुलायामाग्रहः । अत एव च वयसा तुल्यः शत्रुरित्यत्र न ।

स्निग्धो वयस्यः सवयाः

यमरः ।

**थ्यमिति** । शास्त्रीयात्पथोऽनपेतमित्यर्थः । सञ्ज्ञाधिकारान्नेह–पेतश्चोरः । मार्गादनपेत इत्यर्थः ।

**च्छया कृतमिति** । छदि संवरणे इति चुरादिः । इच्छाया-र्तते । ततो घञि इच्छापर्यायश्छन्दशब्दः "स्वच्छन्दोच्छलद्-छ" इत्यादौ । असुनि तु सान्तः । सोऽत्र प्रकृतिः । यद्यपि वेदे त्रि-षु चायमस्ति तथापीह न गृह्यते सञ्ज्ञाधिकारात् । तत्र निर्माणे ाः करणत्वात्सामर्थ्यात्तृतीयान्तादिति लभ्यत इति भावः ।

**"हृदयस्य"** । कृद्योगात्कर्मणि षष्ठी । अलौकिके तद्धितप्रकृति-वचनसामर्थ्यादेव । एवमन्यत्रापि बोध्यम् ।

**नस्य जल्प इति** । जल्पशब्दो भावसाधनः । कर्त्तरि षष्ठी ।
**य कर्ष इति** । कर्षणं कर्षः । कर्मणि षष्ठी । करणस्य कर्तृत्ववि-कर्त्तरि वा । "रथसीताहलेभ्यः" इति तदन्तविधिः । द्विहल्यः । त्रिहल्यः ।

**"तत्र साधुः"** । साधुरिह प्रवीणो योग्यो वा, नोपकर्त्ता । तत्र तस्मै हितम्" इत्यनेन भाव्यम् । **अग्र्य इति** । यत्तु प्राचा अग्रे ग्र्यः, अग्रियः, अग्रीय, इति रूपत्रयमिहोक्तम् । तन्न, "अग्राद्यत्" ौ च" इति सूत्रद्वयस्य च्छन्दोविषयत्वात् । तद्धि–"भवे छन्दसि"-कारे पठ्यते । छन्दोऽधिकारश्च आपादसमाप्तेरिति सिद्धान्तः । लोके तु अग्रिम इत्येव भवति ।

**प्रतिजनमिति**। जनो जन इति प्रतिजनम्। तथार्थे "यदव्ययम्" इति वीप्सायामव्ययीभावः। प्रतिजन, इदंयुग, संयुग, पापकुल, परस्यकुल, अमुष्यकुल, सर्वजन, विश्वजन, पञ्चजन। 'परस्यामुष्य' इति षष्ठ्योर्निपातनादलुक्।

**"गुडादिभ्यष्ठञ्"** गुड, कुल्माष, सक्तु, अपूप, मांस, ओदन, इक्षु, वेणु, सङ्घात, प्रवास, निवास, वृत्।

**वसनं वसतिरिति**। "वसेश्च" इत्यतिप्रत्ययः। स्वस्य पतिः स्वपतिराढ्यस्तस्मिन्साधु स्वापतेयम्।

**"सभायाः"**। यति तु तित्स्वरः स्यात्। 'क्रतुर्भवत्युक्थ्य' इतिवत्। "यतोऽनावः" इति तु न, यदुत्पत्तिवेलायां द्व्यचकस्य यदन्तस्य आदिरुदात्तः स्यादिति व्याख्यानात्। एतच्च वेदभाष्ये स्पष्टम्। यथाश्रुतव्याख्याने तु आद्युदात्तः स्यात् "नमः शष्प्याय च फेन्याय च"इत्यादिवत्। इह पक्षद्वये उक्थ्यफेन्यादीनां परस्परसंवादेऽपि छान्दसत्वेन निर्वाहो बोध्यः।

**"समानतीर्थे वासी"**। निपातनाण्णिनिः। गहादेराकृतिगणत्वाद्वा। **सतीर्थ्य इति**। "तीर्थे ये" इति समानस्य सभावः। तरन्त्यनेनेति तीर्थम्। "तरतेस्थक्"।

'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु।
योनौ जलावतारे च'

इति विश्वः। इह त्वध्यापकवाचिन एव ग्रहणम्। **शयितः**–स्थितौ दृष्टः 'जलाशयः' 'कुशेशयम्'इति यथा। समानमुदरमिति "पूर्वापर" इत्यादिना तत्पुरुषः। ततो यत् तित्स्वरापवाद ओकारस्योदात्तः।

---

**पदविग्रहत्वस्य नित्यत्वे प्रयोजकत्वाभावात्। नित्यसमासत्वं परमस्वपदविग्रहत्वे क्वचित् प्रयोजकमित्यन्यत्। स्पष्टं चेदं "अषडक्षाशितम्"इतिसूत्रे भाष्यपदमञ्जर्योः।**

वेदभाष्ये इति। **अत्रारुचिबीजं तु तृतीये "हनो यद्वधश्च वक्तव्यस्तद्धितो वा"इति भाष्यविरोधः। तत्र हि–वधशब्दाद्दण्डादियति वध्यः साधितः। न हि स यदुत्पत्तिवेलायां द्व्यच्कः, उक्थ्यस्तु छान्दसत्वेन साध्य इति दिक्।**

"सोदराद्यः"। "ओ चोदात्त" इति नानुवर्त्तते। "विभाषोदरे"
मासः। तत्र "तीर्थे" इत्यतो ये इत्यनुवर्त्तते। सा च विषयसप्तमी।
दर इत्यस्माद् यः। प्रत्ययस्वरः।
तर्हि–

'अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चति'

इति मुरारिः। उच्यते, सह=समानमुदरं यस्येति सभावः। अत
त्र भ्राता सहोदर' इत्यपि सिद्धम्।

## इति प्राग्घितीयाः।
## समासाश्च चातुर्थिकाः।

---

# अथ पाञ्चमिकाः।
# तत्र तद्धितेषु छयद्विधिः।

"प्राक् (१)क्रीताच्छः"। इत्यतः प्रागिति। अर्थोऽत्रावधित्वेन
न तु प्रत्ययः प्रकृतिर्वा। तेन प्राक्क्रीताद्येऽर्थास्तेष्वस्योपस्थानम्।
सजातीयो ह्यवधिमान् भवति यथा 'मासात्पर' इति कालः प्रतीयते,

---

नुवर्त्तत इति। अत एवेदं सार्थकम्। अन्यथा ये यति वा रूपे स्वरे
धाभावेन पूर्वसूत्रेणैवैकदेशविकृतन्यायेन सिद्धावस्य वैयर्थ्यं स्प-
सह समानमिति। सूत्रे तूत्तरपदार्थप्राधान्यस्यैव ग्रहः। शयित इति
येति भावः॥

इति प्राग्घितीयाः।

समासाश्च चातुर्थिकाः।

---

### अथ तद्धितेषु छयद्विधिः।

तु प्रत्यय इत्यादि। तथा सति प्राक् ठञः प्राङ्निष्कादिति वा वदे-
भावः। तेषु। तद्बोधकशास्त्रेषु। प्राक् ठञ इत्येवमकरणे फलमाह–

---

### अथ पाञ्चमिकप्रकरणम्॥

१) "प्राक्क्रीताच्छः"। अर्थस्यैव व्याख्यानादवधित्वम् इति अर्थबोधकेषु

'ग्रामात्पूर्वं' इति देशः। एवं च समानेऽर्थे प्रकृतिविशेषाद्विहितो यदादिश्छं बाधते। अन्यथा यच्छयोः सन्निधानाविशेषात्तव्यत्तव्यानीयरामिव पर्यायः स्यात्। ननु यदादिविषये छो न भविष्यति, "विभाषा हविरपूपादिभ्यः" इति विभाषाग्रहणाल्लिङ्गादिति चेत्? सत्यम्। एवं सति अवधिग्रहणं मास्तु। छ इत्येवास्तु। स्पष्टप्रतिपत्त्यर्थं तदिति चेत्तर्हि अर्थ एवावधित्वेन निर्देष्टुमुचितः। अन्यथा भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्याय आपद्येतेति दिक्।

गवाद्यन्तर्गणसूत्राण्याह—**नाभि नभं चेति**। नाभिशब्दो यत्प्रत्ययं लभते नभादेशं चेत्यर्थः। **नभ्योऽक्ष**(१) **इति**। रथाङ्गं सच्छिद्रं नाभिः। तदनुप्रविष्टः काष्ठविशेषोऽक्षः। स च तदनुगुणत्वात्तस्मै हितः। अञ्जनं तैलाभ्यङ्गः। तदपि स्नेहत्वान्नाभये हितम्। **रथेति**। शरीरावयवे तु परेण बाधान्नेति भावः। **शून्यामिति**। चकारस्यानुक्तसमुच्चयार्थत्वात् "नस्तद्धिते" इति टिलोपो न। "ये चाभावकर्मणोः" इति प्रकृतिभावस्तु दुर्लभः। संप्रसारणादौ कृते अन्रूपाभावात्। दीर्घपक्षे तद्विधानसामर्थ्याट्टि-

---

एवं चेति। अन्यथा। **प्रकृतिप्रत्यययोरवधित्वे**। सन्निधानाविशेषादिति। **प्रतिसूत्रमस्योपस्थितेरित्यर्थः**। पर्यायः स्यादिति। **शरीरावयवात् उगवादिभ्यश्चेत्यर्थः**। मास्त्विति। **"प्राग्वतेष्ठञ्"इत्यधिकारान्तराविष्टत्वान्न तदुत्तरमस्योपस्थितिरिति भावः**।

तदनुगुणत्वादिति। **चलनरूपतत्क्रियानुगुणत्वादित्यर्थः**। परेण। **आदेशासंनियुक्तेन शरीरावयवाद्यदित्यनेन**। संप्रसारणादाविति। **आदिना पूर्वरूपम्**।

**न च संप्रसारणे शु अन् इति स्थिते पूर्वरूपं बाधित्वा 'वार्णादाङ्गम्'इति न्यायेन प्राप्तटिलोपस्य "ये च"इत्यनेन निवृत्तौ पूर्वरूपे ऽपि न पुनष्टिलोपो (२)भ्रष्टावसरत्वादिति वाच्यम्। तस्य न्यायस्यात्र शास्त्रेऽनाश्रय-**

---

(१) **नभ्योऽक्ष इति**। अत्र हितार्थे यत्। नभ्यं चक्रमिति तु नाभिरिवेत्यर्थे शाखादित्वात् ये साधुः। सच्छिद्रश्चक्रावयवो नाभिः स यथाक्षाख्यं काष्ठविशेषं धारयति परिवर्तते चाञ्जनाद्यपेक्षते च। तथा चक्रमपीति सादृश्यम्। एवं नाभ्यर्थो वृक्षोऽपि नभ्य एव तादर्थ्यात्ताच्छब्द्यमिति न्यायेनेति स्पष्टं भाष्ये।

लोपो माभूत्। पक्षान्तरे तूक्तैव गतिः।

**नङ् चेति।** नञ्चेति सुवचम्। **ऊधन्य इति।** "ये च" इति प्रकृतिभावः।

**"विभाषा हवि(१)रपूपादिभ्यः"।** हविर्विशेषाणामिह ग्रहणम्। न तु स्वरूपस्य। तस्य गवादिषु पाठात्।

ननु विपरीतमेव किं न स्यात्। गवादिषु विशेषाणां ग्रहणम्। इह तु स्वरूपस्येति चेत्? मैवम्। असंजातविरोधित्वेन तत्रैव स्वरूपग्रहणस्य न्याय्यत्वात्। अपूप, तण्डुल, पृथुक, मुसल, सुवर्णकटक, कर्णवेष्टक, इत्यादीन् प्रक्रम्य पठ्यते—अन्नविकारेभ्यश्चेति। अस्यार्थः—अन्नविकारा अन्नप्रकाराः अदनीयविशेषाः तेभ्यो यद्वा स्यात्। ओदन्या ओदनीयाः।

---

णात्। निरूपितं चैतदन्यत्रेति दिक्।

सुवचमिति। ऊधन्यशब्दादाचारक्विबन्तादात्मनेपदार्थन्तु न। तत आचारक्विपोऽभावात्। ऊधन्यशब्दात्क्यच्यात्मनेपदार्थं ङित्वमिति त्वसङ्गतम्। यं समुदायं योऽवयवो न व्यभिचरति तत्समुदायोपकारक एव तदवयवधर्मो नान्यस्येति "गुप्तिजादि"सूत्रे भाष्ये स्पष्टमुक्तत्वात्। ङित्वसामर्थ्याद् न्यायबाधकल्पनापेक्षयाऽन्यत्र क्लृप्तानङ एवात्रोच्चारणमित्यस्यैव युक्तत्वात्। न चास्यानो लाक्षणिकत्वेन "ये च"इति प्रकृतिभावानापत्तौ टिलोपापत्तिः। अनुग्रहणे तदप्राप्तेः। ध्वनितं चेदम् 'ऊधसो नकारो लिङ्गाधिकारे वक्तव्यः, इह मा भूद्, महोधाः पर्जन्य इति' "बहुव्रीहेः"इतिसूत्रस्थभाष्येण। "ऊधसोनङ्"इति समासान्तप्रकरणे सूत्रं, तच्च स्त्र्यधिकारे कर्त्तव्यमिति तात्पर्यम्। तत्र नकार इति वदता सूत्र ऊधस्शब्दविषयेऽकारङकारौ व्यर्थाविति सूचितम्। तच्चोक्तकल्पनायामेव सङ्गच्छत इति दिक्।

---

त्वावच्छिन्नातिरिक्तत्वेन टिलोपशास्त्रे संकोचाभावेन टिलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तेः सत्त्वेनावसरस्याभ्रष्टत्वात्। एवं त औ इति स्थिते पूर्वोक्तदिशा वृद्धिशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तेः सत्त्वेन "तौ सत्" इति निर्देशासङ्गतेरभावाच्चेति दिक्।

(१) **"विभाषा हविरपूपादिभ्यः" इति।** यद्यपि हविरपूपादिभ्यो विभाषाया यत् इति पूर्वविप्रतिषेधप्रदर्शनात् अप्राप्तविभाषात्वमिहावगतम्। तथापि शिष्याणां सुखाव-

एवं च अपूपादीनां केषांचित्पाठः प्रपञ्चार्थः । 'हविरपूपादिभ्यो विभाषया उगवादिभ्यो यत्पूर्वविप्रतिषेधेन' । चरव्यास्तण्डुलाः । सक्तव्या धानाः । चरुर्नाम हविरिति काशिका । स्थालीवचनस्य चरुशब्दस्य तत्रत्ये हविषि उपचाराद् वृत्तिरिति कैयटहरदत्तादयः । यद्यपीदं त्रिवृच्चर्वधिकरणविरुद्धम् । तत्र 'आदित्यश्चरुः' इत्युपक्रम्य अदितिमोदनेनेति वाक्यशेषश्रवणाच्चरुशब्द ओदने शक्तः । लोके स्थाल्यामौपचारिक इति सिद्धान्तितत्वात् । तथाऽपि कैयटादीनामयमाशयः—लोके स्थाल्यां प्रयोगस्तावत्सर्वसंमतः । तथा च—स्थाल्यामेव शक्तिरस्तु । तदनुरोधेन वेदे लक्षणोचिता । लोके गृहीतशक्तिकः शब्दो वेदेऽपि बोधक इति स्वीकारात् । उक्तं च—लोकप्रसिद्धार्थसमन्वयेन वृत्त्यन्तरेण प्रतिपादिते सति शक्त्यन्तरं तत्र न कल्पनीयम् । तथा सतीह क्व नु लक्षणा भवेदिति ।

**नाभ्यमिति** । "नाभि नभं च" इति नभादेशस्तु न भवति । तस्य गवादियता सन्नियोगशिष्टत्वेन रथनाभावेव प्रवृत्तेः ।

**"खलयव"** । अत्र वृषशब्दोऽकारान्तो गृह्यते न तु नकारान्तः । अन्यथा ह्यसंदेहार्थं नलोपमकृत्वैव निर्दिशेत् । 'आत्मन्विश्वजन' इतिवत् । वृषाय हितं वृष्यम् । **ब्रह्मण्यमिति** । ब्रह्मन्छब्दो ब्राह्मणपर्यायः ।

---

तस्य—**हविःशब्दस्य** । प्रपञ्चार्थ इति । **यदा साद्द(१)श्येनाऽपूपादयोऽन्यत्र वर्त्तन्ते तदा गौण(२)मुख्यन्यायेन प्राप्तिरेवास्य न** । **अन्यत्र तथा दृष्टत्वेन प्रपञ्चार्थत्वमेवोचितमिति भावः** । कैयटेति । **"उगवादिभ्य" इति सूत्रे** । लक्षणोचितेति । **अदितिमोदनेनेति वाक्यशेषस्य लक्षणातात्पर्यग्राहकत्वात्** । प्रसिद्धार्थसमन्वयेन । **तत्सम्बन्धरूपेण वृत्त्यन्तरेणेत्यर्थः** ।

आत्मन्विश्वेति । **यद्यपि तत्र नकारो नासन्देहायाकारान्तात्मशब्दाभावात्**

---

( १ ) **साद्दश्येनेति** । तत्त्वं च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् इति तार्किकमतम् । वस्तुत अकारस्याकारेण सवर्णसंज्ञा यथा स्यात् इति पूर्वोक्तसादृश्ये वैयाकरणैः तद्भिन्नत्वं तन्निष्ठप्रतियोगिताकभेदवत्त्वम् इति स्वीक्रियते—तथाच स्वेन स्वस्य सवर्णसंज्ञोपपद्यत इति विस्तरेण प्रपञ्चितं प्राक् ।

( २ ) **गौणमुख्यन्यायेन**—अयं च न्यायः प्रातिपदिककार्ये न प्रवर्तते किन्तु

षन्शब्दाद् ब्राह्मणशब्दाच्च यतः प्राप्तिरेव नास्ति छोऽपि अनभिधाना-
करः । **रथ्येति** । रथाय हिता । गवादिषु पाठो नाङ्गीकृतः । हि-
एव यथा स्यात्, अर्थान्तरे मा भूदिति ।

**"अजाविभ्यां थ्यन्"** । अजशब्दः पुल्लिङ्ग उपात्तः । अत एव
ः घि" इत्यविशब्दस्य पूर्वनिपातं बाधित्वा "अजाद्यदन्तम्" इत्यजश-
पूर्वनिपातः कृतः । लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि थ्यन् ।
ादिष्विति पुंवद्भावः । तत्र थ्यनः परिगणनात् । **कर्मधारयादेवे-**
व्याख्यानमत्र शरणम् । **विश्वजनीयामिति** । विश्वस्य जनः स-
ारणो वेश्यादिः । विश्वो जनोऽस्येति विग्रहेऽपि स एवान्यपदार्थः ।
हितमित्यर्थः । **पञ्चजनादिति** । रथकारपञ्चमाश्चत्वारो वर्णाः पञ्च-
। "दिक्सङ्ख्ये सञ्ज्ञायाम्" इति समासः । एतत्प्रभृतिवार्त्तिकत्रितयम-
र्मधारयविषयमेव । तेन षष्ठीसमासाद् बहुव्रीहेश्च च्छ एव । पञ्चजनी-
**सर्वजनादिति** । "पूर्वकालैकसर्व" इति तत्पुरुषः । **सर्वज-**
**इति** । साध्वर्थे "प्रतिजनादिभ्यः खञ्"इति खञि तु सार्वजनीनवैश्व-
ौ व्युत्पादितौ । हितार्थे तु ख एव न तु खञ् । **मातृभोगीण**
। मातुर्भोगः शरीरं तस्मै हितः । यद्यपि अमरेण---

'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।

इत्युक्तम् । तथापि अहेरिति प्रयोगबाहुल्याभिप्रायम् । शक्तिस्तु श-
ात्र इत्याकरः । मातृपितृशब्दाभ्यान्तु औत्सर्गिकश्छ एव । मात्रीयः

---

**तु प्रकृतिपरिमाणार्थम् । तेनासमासग्रहणज्ञापिततदन्तविधिरत्र नेति
स्पष्टम् । किं च प्रकृते नकारानुच्चारणेनोभयोर्ग्रहणं प्राप्नोति तदु-
रणे ऽर्द्धमात्रागौरवं च । तथा ऽपि व्याख्याना(१)देवाकारान्तमात्रग्रह-
ाति तत्त्वम् ।** आकरः । **भाष्यम् ।** नाङ्गीकृत इति । **यथा चेनास्य सङ्ग्रहो
कारादिभिरङ्गीकृतस्तथा गवादिषु पाठेन सङ्ग्रहो नाङ्गीकृत इत्यर्थः ।**
स्त्रीलिङ्गादपीति । **अजशब्दादविशब्दाच्चेत्यर्थः । अविशब्दस्य नित्यस्त्री-
त पुंवत्त्वं नेति केचित् । अन्ये तु तमपि भाषितपुंस्कमिच्छन्ति ।** तेन
ति । **पञ्चानामित्यस्य संख्येयसापेक्षत्वेऽपि प्रकरणादिना विशिष्टसंख्ये-**

---

( १ ) **व्याख्यानादिति ।** समानार्थावेतौ वृषशब्दो वृषञ्छब्दश्च ब्रह्मञ्छब्दो

पित्रीयः । राजा(१)चार्याभ्यान्तु अनभिधानाच्छो न । किं तु राज्ञे हितमाचार्याय हितमिति वाक्यमेवेत्याकरः । **सर्वादिति** । अनुकरणत्वात्सर्वकार्याभावः । **माणवीनामिति** ।

> "अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
> नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः" ॥

इत्यपत्याधिकारे वार्त्तिकम् । एतच्च एतत्सूत्रस्थनिर्देशसिद्धार्थकथनपरमिति बोध्यम् । **चतुर्थ्यन्तादिति** । एतच्च सामर्थ्याल्लभ्यते । विकृत्यर्थायां हि प्रकृतौ प्रत्यय उच्यते । तच्च तस्यास्तादर्थ्यचतुर्थ्यैव गम्यते । यद्वा, तस्मा इत्यनुवर्त्तते । **छादिषेयाणीति** । यदा तु चर्मविकारश्छदिस्तदा परत्वाच्चर्मणोऽञ् प्राप्नोति । पूर्वविप्रतिषेधेन ढञेवेष्यते । छादिषेयं चर्म । आह च—'यञञ्यावञः पूर्वविप्रतिषिद्धं ढञ् च' इति । एवं च निरवकाशत्वे सत्येव प्रतिपदविधित्वं बलीयस्त्वे प्रयोजकम् । न तु सावकाशत्वे इति मुनिमतं लक्ष्यते । तेन स्व(२)म्पि तडाकानीत्येव युक्तम् । परत्वाद् नुम्प्रवृत्तेः प्रतिपदोक्तत्वाद्दीर्घमाश्रित्य स्वाम्पि तडाकानीति मतं

---

**यवृत्तित्वावगमे पञ्चजन इत्यत्रापि तत्संभवो बोध्यः । तच्च विकृतेर्विकृत्यर्थत्वंच** । आहचेति । **इदंच "उगवादिभ्य" इति मूले भाष्ये स्पष्टम्** ।

---

( १ ) **राजाचार्याभ्यामिति** ॥ ननु भोगोत्तरपदात् खविधाने क्रियमाणेऽपि राजाचार्याभ्यान्नित्यम्, इति वार्तिके नित्यग्रहणे केवलाभ्यां राजाचार्याभ्यां छस्य निवृत्तिर्न सिध्यति । एवं तर्हि तथा पाठः कर्तव्यः । यथेष्टं सिध्यति—राजाचार्याभ्यां नित्यं भोगोत्तरपदाभ्यामेव हि ते प्रत्यया इति ॥

(२) **स्वाम्पि इति** । अत्रायम्भावः ' छदिरुपधि"इति सूत्रे "उगवादिभ्यो यत्"इति सूत्रे छदिषे हितं चर्म इत्यर्थे छदिरुपधीति ढञः चर्मणो ऽञ् इत्यञश्च प्रवृत्तौ "छदिरुपाधिबलेर्ढञ्" इत्यस्य पूर्वविप्रतिषेधेन बाधकत्वमुक्तम् । सावकाशस्य प्रतिपदविधेर्बाधकत्वे तु छादिषेयं तृणमित्यादौ सावकाशेन "छदिरुपधि" इति ढञा प्रतिपदविधित्वेन "चर्मणोऽञ्" इत्यञो बाधे सिद्धे पूर्वविप्रतिषेधाश्रयणं व्यर्थं स्यात् । तस्मात्प्रतिपदविधेर्निरवकाशत्वे सत्येव बाधकत्वं लभ्यत इति भावः ।

तु दुर्बलमिति दि(१)क्।

**"चर्मणोऽञ्"**। चर्म्मण इति षष्ठी न तु पञ्चमी। तथा हि सति चर्मशब्दाच्चर्मार्थायां प्रकृतौ प्रत्ययः स्यात्। चर्मणे द्वीपी इत्यादौ। तदाह—**चर्मणो या विकृतिरिति**। **वर्ध्र्यै इति**। "वृधिवपिभ्यां रन्" इति रन्प्रत्यये वध्रशब्द आद्युदात्तश्चर्मवाची "तस्य विकार" इत्यण् "टिड्ढ" इति ङीप्। वार्ध्री रज्जुः। वद्ध्रीति तु वधेरौणादिके ष्ट्रनि।

नद्ध्री वद्ध्री वरत्रा स्यात्।

इत्यमरः। 'चञ्चाः पश्य वद्ध्रिकाः पश्य' इति भाष्यम्। 'प्रनु वोचं वाद्ध्र्यश्वस्य नाम' इति वेदे प्रयोग?। तत्रावग्रहकाले ह्रस्वस्तु "ङ्यापोः" इति बोध्यः।

**"तदस्य"**। स्यादिति सम्भावने लिङ्। इष्टकानां बहुत्वेन सम्भाव्यते एतत् प्राकार आसां स्यादिति। देशस्य च गुणेन सम्भाव्यते प्राकारो ऽस्मिन्स्यादिति। इह प्रकृतिविकारभावस्तादर्थ्यं च न विवक्षितम्। किं तु योग्यतामात्रम्। तेन पूर्वस्यायमविषयः। मतुब्विधाविव सकृत्तद्ग्रहणेन सिद्धे द्विस्तच्छब्दोपादानं स्पष्टार्थम्।

## छयतोः पूर्णोऽवधिः।

---

द्वीपीत्यादाविति। **इत्यादावेव स्यात्तच्च नेष्टमिति भावः।**

सम्भावने इति। **सम्भावने ऽलमित्यत्र योगविभागादुपसंवादाशङ्कयोरित्यत्र भाष्योक्तवचनाद्वेति भावः।**

छयतोः पूर्णोऽवधिः॥

---

**(१) दिगिति**। तदर्थस्तु—प्रतिपदविधेरनित्यस्य पूर्वं प्रवृत्तिः क्वाचित्की। नित्यस्य तु सेदुष इत्यादौ सर्वत्रैव, तेन इयायेत्यादौ "अचो ञ्णिति" वृद्धौ कृतायाम् "एरनेकाच" इत्यत एरित्यपकर्षविशिष्टस्य "इणो यण्" इत्यस्याप्राप्त्याऽनित्यत्वात् पूर्वं प्रवृत्तिः। तत्र एरित्यपकर्षस्तु आयन्नित्यादौ लावस्थायामडिति सिद्धान्तपक्षे अन्तरङ्गत्वात् "आटश्च" इति वृद्धौ कृतायाम् प्राप्तस्य यणो व्यावृत्तये असिद्धवत्सूत्रे भाष्ये उक्तः। एवं जुहवानीत्यादौ गुणे कृतेऽप्राप्तस्य "ओः सुपि" इत्यत ओरित्यनुवृत्तिविशिष्टस्य "हुश्नुवोः"इति यणः अतिस्त्रये इत्यादौ "घेर्ङिति" इति गुणे कृते ऽप्राप्तस्य "अचिश्नु" इत्यतो य्वोरित्यनुवृत्तिविशिष्टस्य "स्त्रियाः" इति इयङश्च न पूर्वं प्रवृत्तिः। नचैवं प्रतिपदविधित्वस्य पूर्वप्रवृत्तिप्रयोजकत्वकथनं व्यर्थं नित्यत्वादेवसिद्धेरिति वाच्यम्। सेदुषः इत्यादौ अन्तरङ्गादपि इटः प्राक् सम्प्रसारणप्रवृत्त्यर्थं

"प्राग्वतेष्ठञ्" । 'ठञ्' इत्येव वक्तव्ये "प्राग्वतेः"इति वचनं मध्ये यो ऽधिकारवान् अपवादः "सर्वभूमिपृथिवीभ्यामणञौ" "शीर्षच्छेदाद्यच्च" इत्येवमादिस्तेन विच्छेदेऽपि ठञेव यथा स्यादित्येवमर्थम् । तेन "पारायणतुरायण"इत्यादौ ठञ् लभ्यते । नन्वेवं पारायणादिसूत्र एव ठञ् निर्दिश्यतामिति चेत् ? न । उत्तरसूत्रे येषां पर्युदासस्तेभ्यः क्रीताद्यर्थे ठञ इष्टत्वात् । तस्य च प्रकृतसूत्रं विना अलाभात् । तेन गौपुच्छिकः, साप्ततिकः, इत्यादौ ठञर्थमिदं सूत्रमिति स्थितम् ।

यत्तु प्राचा "तेन क्रीतं" तृतीयान्तात्क्रीतार्थे ठक् स्यात् । सप्तत्या क्रीतः साप्ततिकः इत्युक्तम् । तन्न, अगोपुच्छेत्यादिपर्युदासेन ठकोऽसङ्गतत्वात् । "तेन क्रीतम्"इति सूत्रस्य त्रयोदशप्रत्ययानधिकृत्य कृतस्य ठक्मात्रपरत्वेन व्याख्याया असङ्गतत्वाच्च । यदपि व्याचक्षते–अतः परमार्हाद्गोपुच्छसंख्यापरिमाणाट्ठक्'इत्यधिकृत्यार्हीयान्दर्शयति । तेन क्रीतम् । त्यन्तत्वान्नायं कनादेर्विषय इत्युदाहरति सप्तत्येत्यादीति । अत्रेदं वक्तव्यम् । तेन क्रीतमित्यस्य ठञादित्रयोदशसाधारणतया आर्हीयान् दर्शयतीत्यवतारिका तावदसङ्गता अनन्यार्थस्य प्रथमोपस्थितस्य च प्राग्वतेष्ठञित्येतस्योपेक्षानर्हतया प्राग्वतीयानित्यस्य वक्तुमुचितत्वात् । किं च कनादेरित्यादिशब्दोऽनुचितः । त्यन्तत्वस्य कन्विधावेव पर्युदासप्रयोजकत्वादादिशब्दग्राह्यस्य दुर्वचत्वादिति दिक् ।

यद्यप्यत्र प्रत्ययोऽवधित्वेन गृहीतस्तथाऽपि अर्थेष्वेवोपतिष्ठते, न प्रतिप्रकृति । तेनापवादविषये न भवति । अत्र च ज्ञापकं "शूर्पादञन्यत-

---

## तद्धितेष्वार्हीयाः ।

अपवाद इति । यद्यपि ते ठञपवादठकोऽपवादास्तथापि अपवादापवादस्य सुतरान्तदपवादत्वमिति भावः । पर्युदास इति । गोपुच्छादीनामित्यर्थः । त्रयोदशेति । ठक्ठञौ २ । ठन्यतौ ४ । कन्ड्वुन्टिठनः ७ । अञ् ८ । शतमानाद्यण् ९ । ख १० । ईकन् ११ । पणादियत् १२ । त्रिंशीतिवार्तिकोक्तण

रस्याम्" इति सूत्रेऽन्यतरस्यांग्रहणम् ।

"**आर्हात्**" । **तदर्हतीति** । अर्हतीति तिङन्तस्य एकदेशः शबन्तोऽत्रानुक्रियते, न तु "तदर्हम्" इति सूत्रान्तर्गतमजन्तमिति भावः । अत्र च व्याख्यानमेव शरणमिति हरदत्तः ।

अत्र श्लोकवार्तिकम्—

ऊर्ध्वमानं किलोन्मानं परिमाणं (१)तु सर्वतः ।
आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥ इति ।

अस्यार्थः—द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना तुलादावारोपितेन येन सुवर्णादेर्गुरुत्वमुन्मीयते तदूर्ध्वारोपणादूर्ध्वमानमितिशब्देन विवक्षितं तदुन्मानम् । आरोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन व्रीह्यादि परिमीयते तत्परिमाणं प्रस्थादि । परिः सर्वतोभावे । आयामो दैर्घ्यम् । स येन मीयते तत्प्रमाणम् । तच्च क्वचित्तिर्यगव-

---

व्याख्यानमेवेति । **प्रथमोपस्थितत्यागे मानाभावादिति भावः । अन्ये तु "आर्हात्"इत्यनेन वत्यर्थग्रहणे विशेषविहितकना वतेर्बाधे, 'एकवच्चास्य' इति**

---

(१) **परिमाणं तु सर्वतः इति** । अत्र यद्वक्तव्यं तद्विस्तरेण प्राङ्निरूपितमिति ।

अत्र सूत्रे भाष्ये तु । परिमीयतेऽनेनेति परिमाणमिति क्रियाशब्दत्वात् परिमाणशब्दस्य संख्याया अपि परिच्छेदहेतुत्वात् पृथग् ग्रहणं न कार्यमिति मत्वा पृच्छति—किमर्थं संख्यायाः पृथग्ग्रहणम् । न संख्यापि परिमाणमेव तत्र परिमाणपर्युदासो भविष्यति, एवं तर्हि सिद्धे सति यत्संख्यायाः पृथक्ग्रहणं करोति तज्ज्ञापयति आचार्यः—अन्या संख्या अन्यत् परिमाणमिति । यथा प्राच्यत्वाद्भरतानां ग्रहणे सिद्धे "बह्वचः" इत्यत्र भेदेनोपादानम् अन्यत्र प्राच्यग्रहणे भरतानांग्रहणनिवारणार्थम् । तेन "इञः प्राचाम्"इति भरतेभ्यो युवप्रत्ययलुङ्न भवति । औद्दालकिः पिता औद्दालकायनः पुत्र इति । एवमिहापि संख्याग्रहणमन्यपरिमाणग्रहणे संख्याया अग्रहणार्थम् । तेन द्वाभ्यां शताभ्यां क्रीता द्विशता इत्यादौ द्विगुलक्षणस्य ङीपोऽपरिमाणान्तत्वान्निषेधः सिद्धः । यथा पञ्चाश्वा इति । पणपादेति नित्ये यति प्राप्ते "शाणाद्वा" इति "शतशाणाभ्याम्" इति वा वचनाद्यत् प्रत्ययाभावात् पक्षे "शताच्चठन्यतावशते" इत्यत्रासमासग्रहणानुवृत्त्या संख्यालक्षणस्य कनो "अध्यर्धपूर्व" इति लुकि कृते द्विशतेति भवति । तदुक्तमभियुक्तैः ।

दिष्टिप्रस्थसुवर्णादिर्मूर्तिभेदाय कल्पते ।
क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका ॥ इति ।

स्थितस्य वस्तुनः। यथा—वस्त्रादेर्हस्तादि। क्वचिदूर्ध्वाधरदिगवस्थितस्य। यथा—ह्रास्तिनमुदकम्, ऊरुद्वयसमुदकमिति। संख्या तु उन्मानपरिमाणप्रमाणेभ्यः पलादिप्रस्थादिहस्तादिभ्यस्त्रिभ्यो बहिर्भूता एकत्वद्वित्वादिर्बोध्येति। इह संख्यापरिमाणयोरेव प्रकृतत्वेऽपि उन्मानप्रमाणयोर्विवेचनं प्रसङ्गात्कृतमिति बोध्यम्।

"**असमासे निष्कादिभ्यः**"। निष्क, पण, पाद, माष, वाह, द्रोण, षष्टि, इति सप्त निष्कादयः। तत्र द्रोणशब्दः परिमाणवाची। षष्टिशब्दः संख्यावाची। ताभ्यां ठञि प्राप्ते वचनम्। इतरेषां तु पञ्चानामुन्मानवचनतया पूर्वसूत्रेण सिद्धे ठकि समासप्रतिषेधार्थं वचनम्।

अन्ये त्वाहुः- पूर्वसूत्रे परिच्छेदकमात्रं संख्याभिन्नं परिमाणशब्देन गृह्यते। तेन सर्वेभ्यष्ठञ एवापवादः। 'परिमाणं तु सर्वतः' इति भेदेन व्युत्पादनं तु

"प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये"।

इत्यादावुपयोक्ष्यते इति। एतच्च पदमञ्जर्यां स्पष्टम्।

---

प्रयोगासङ्गतिः। तद्ग्रहणे प्राग्वतेरित्यनुवृत्त्यैव सिद्धे "आर्हात्" इत्यस्य वैयर्थ्यमित्यार्हादित्यप्युक्तार्थे प्रमाणमित्याहुः। क्वचिदूर्ध्वाधरेति। तादृशस्योर्ध्वमानत्वादुन्मानत्वमपि। तद् ध्वनयन्नाह—ऊरुद्वयसमिति। यदि तु तस्य प्रमाणत्वमेव स्यात्तदा—

'प्रथमश्च द्वितीयश्चोर्ध्वमाने मतौ मम'

इत्युक्तेरत्र द्वयसज् दुर्लभः स्यात्। न चात्र प्रमाणत्वस्यापि सत्त्वात् "प्रमाणे लः" इति लुगापत्तिरिति वाच्यम्? आयामाविवक्षायां प्रमाणमित्येतद्भवतीति अत्र भाष्योक्तेर्विद्यमानस्याप्यूर्ध्वाधरभावकृतायामस्याविवक्षया तदप्रसङ्गात्। विवक्षा च प्रयोगानुसारिणीत्यदोषः। सम्भवमात्रेण तु प्रमाणत्वं तस्योक्तम्। तिर्यगवस्थितवस्तुपरिच्छेदके तु प्रमाणत्वं निर्विवादमेव। त्रिभ्यो बहिर्भूतेति। अनेन संख्यायाः सर्वथा बाह्यत्वं वदतेतरेषां परस्परग्रहणं सूचितम्। तेनोन्मानस्य परिमाणग्रहणेन ग्रहणम्। अत एव "अपरिमाणबिस्त" इति सूत्रे बिस्ताचितग्रहणं "परिमाणान्तस्य" इत्यत्र शाणपर्युदासश्च चरितार्थं इत्यलम्।

। अस्य ज्ञापनस्य प्रयोजनम् तु "अपरिमाणबिस्ताचित" इति सूत्रे परिमाणश-
आरोहतः परिणाहतश्च येन काष्ठादिनिर्मितेन मीयते तत् प्रस्थादि गृह्यते । 'परिमाणं
तः' इत्युक्तिरेवात्र बीजम्। नचैवं उन्माने द्विनिष्कीति न स्यादिति वाच्यम् ? 'सुवर्णवि-
स्नोक्षे, कम्बल्यमूर्णापलशतम्' इति कोशबलेनोन्मानभूतबिस्तकम्बल्यग्रहणस्य उन्मा-
चेन्निषेधो बिस्तकम्बल्ययोरेवेति नियमपरत्वात्। अत एव "वयसि प्रथमे" इति सूत्र-
द्वे वर्षे भूता द्विवर्षा इति प्रयोगे, द्वाभ्यां शताभ्यां क्रीता इत्यर्थे "आर्हात्"
सूत्रभाष्यप्रयोगे द्विशतेत्यादौ तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधः सिद्ध्यति ।
डान्तात्"इत्यस्य क्षेत्रे एवेति नियमार्थत्वात् द्विकाण्डी रज्जुरित्यत्र न निषेधः। तत्र भा-
विरोधः। तथाहि—एकः "अपरिमाणबिस्त" इति सूत्रस्थः, द्वितीयः "कम्बलाच्च सं-
" इति सूत्रस्थः, तृतीयः "संख्यायाः संवत्सरसंख्यस्य च" इति सूत्रस्थः । तत्राद्ये
द्वौ प्रतिषेधावुच्येते तत्रैकः शक्योऽवक्तुम् । कथम् ? एवं वक्ष्यामि परिमाणान्तात्तद्धि-
ङीब् भवतीति, "द्विगोः" इत्येव सिद्धे तन्नियमार्थं भविष्यति परिमाणान्तादेव त-
लुकि नान्यत इति । विपरीतनियमस्तु न लक्ष्यानुसारित्वाच्छास्त्रस्य । अतो बिस्ताचित-
ल्येभ्यो न । तद्धितलुकीत्येवेत्युक्तम् । यद्यत्र परिमाणपदेन 'परिमाणं तु सर्वतः' इति-
भाषिकं गृह्यते तदा बिस्तादीनां परिमाणत्वाभावेन परिमाणान्तादेवेति नियमादेव
ऽभावे सिद्धे बिस्ताचितेति द्वितीययोगो विफल एव स्यात् ।

द्वितीये—अयं योगोऽवक्तुं शक्यः । कथम् ? कम्बल्यमिति निपातनादेव सिद्धम् । किं
जनम् ? "अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि"इति। इदं तर्हि प्रयोजनम्।
याभिति वक्ष्यामि इह मा भूत् 'कम्बलीया ऊर्णा' इति । एतदपि नास्ति प्रयोजनम् ।
णपर्युदासेन पर्युदासे प्राप्ते कम्बल्यग्रहणं तत्र क्रियते परिमाणार्थम् । परिमाणञ्च तत्र सं-
इत्युक्तम् । यदि चात्र पारिभाषिकं गृह्यते तदा परिमाणपदेन कम्बल्यमित्यस्य ग्रहणा-
परिमाणपर्युदासस्याप्राप्त्या परिमाणपर्युदासेन पर्युदासे प्राप्ते इत्युक्तिरसङ्गता स्यात्।
तृतीये—"परिमाणान्तस्यासंज्ञाशाणयोः" इत्येव सिद्धे संवत्सरग्रहणमनर्थकम् । एवं तर्हि
त्याचार्यो ऽन्यत्र कालपरिमाणानां परिमाणग्रहणेन ग्रहणं नेति किम्प्रयोजनम् ? "अप-
णबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि" द्विवर्षा त्रिवर्षा परिमाणपर्युदासेन पर्युदासो न
तित्यभिहितम् । सर्वतो मानं परिमाणमिति पारिभाषिकस्य ग्रहणे तु उक्तोदाह-
प्राप्त्यभावात् संवत्सरग्रहणानर्थक्यशङ्कायाः कालपरिमाणानां परिमाणग्रहणेन ग्रहणं
समाधानस्य चासङ्गतिः स्पष्टैव ।

अत्र केचिदित्थं समादधुः-सूत्रकृद्भाष्यकृतोर्मतमन्यादृशम् । सूत्रकारेण सर्वतो मा-
ति परिमाणं स्वीकृत्य "एको योगः" 'नन्द्वयम्" "कम्बलाच्च" इति सूत्राणि प्रणीता-
भाष्यकृतस्तु परिमाणमात्रं स्वीकृत्य नन्द्वयप्रत्याख्यानं योगविभागः "कम्बलाच्च"

भाषा हविरपूपादिभ्यः" इति यत् । न्यासकारस्त्वाह–अन्नविकारत्वादेव सिद्धे

भाष्यविरोध इति। परन्त्वेवं स्वीकारे सूत्रभाष्ययोः द्विहस्ता भित्तिरित्यत्र फलभेदः स्यात् । यथाहि–सूत्रमते द्विहस्ता भित्तिः भाष्यमते ङीपि द्विहस्ती भित्तिः इति नायं पक्षो युक्तः। न च भाष्यविरोधादस्यानभिधानमिति वाच्यम् ? अन्यस्मिन् उपाये सति विरोधोद्धारे एतत्कल्पनस्यायुक्तत्वात् । तथाहि–भाष्येऽपि "अपरिमाण" इति सूत्रे सर्वतो मानामिति पारिभाषिकपरिमाणस्यैव ग्रहणम् । ततश्चद्वितीयो योगो व्यर्थः सन् पूर्वयोगस्य उन्मानातिरिक्तान्ताचेत् परिमाणान्तादेवेति नियमाकारं कल्पयति । ततो बिस्ताद्यन्ते उन्मानातिरिक्तान्तत्वाभावादेव नियमेनाव्यावृत्तेः ङीब्वारणार्थो द्वितीयो योगः, विशेषनियमफलन्तु द्विनिष्की इत्यादौ ङीपोऽव्यावृत्तिरिति न भाष्यविरोधः ।

द्वितीये—परिमाणपर्युदासेन निषेधे प्राप्ते इत्यस्य तेन पर्युदासेन द्विनिष्की इत्यादावपि निषेधरूपे विधेयङीब्रूपकार्यस्य पर्युदासे प्राप्ते उन्मानस्य चेद्बिस्तकम्बल्ययोरेवेति परिमाणविशेषे नियमाय बिस्तकम्बल्यग्रहणम् । कम्बल्यपदस्य कम्बलहितोर्णादिसामान्यार्थकत्वे तु अपरिमाणान्तत्वादेव निषेधसिद्धेः, उक्तनियमस्य चासंभवात्कम्बल्यग्रहणमनर्थकं स्यादिति न तद्विरोधः ।

तृतीये । तत्रहि "परिमाणन्तस्यासंज्ञाशाणयोः" इति सूत्रे 'माषैश्चतुर्भिः शाणः स्यात्' इति परिभाषितोन्मानभूतशाणपर्युदासात् न सर्वतो मानामिति परिमाणपदेन गृह्यते । किंतु परिच्छेदकमात्रस्येति संवत्सरस्यापि परिच्छेदकत्वात् ग्रहणं भवति इति तदानर्थक्यशंका ।

तथाचभाष्यम्—'सम्वत्सरग्रहणमनर्थकम्, परिमाणान्तस्येति कृतत्वात् "परिमाणान्तस्यासंज्ञाशाणयोः" इत्येव सिद्धम् । ज्ञापकं तु कालपरिमाणानां वृद्धिप्रतिषेधस्य । एवं तर्हि ज्ञापयत्याचार्यः कालपरिमाणानां वृद्धिर्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । द्वैरात्रिकः त्रैरात्रिकः । अत्र वृद्धिर्न भवति । नैतदस्तिप्रयोजनम्। नाप्यत्र विशेषः सत्यां वोत्तरपदवृद्धावसत्यां वा । इदं तर्हि द्वैसमिकः त्रैसमिकः इदंचापि प्रयोजनम् द्वैरात्रिकः । ननु चोक्तं नास्त्यत्र विशेषः सत्यां वृद्धावसत्यां वा । अयमस्ति विशेषः। यत्रोत्तरपदवृद्धिः स्यादचामादेर चो वृद्धिः स्यात्। अपर आह—ज्ञापकं तु कालपरिमाणानां परिमाणग्रहणस्य। एवं तर्हि ज्ञापयत्याचार्यः कालपरिमाणानां परिमाणग्रहणेन ग्रहणं भवतीति । किमेतस्य ज्ञापने प्रयोजनम्, अपरिमाणेति लुकि द्विवर्षा त्रिवर्षा परिमाणपर्युदासेन पर्युदासो न भवति इति। तस्य च परिच्छेदकविशेषग्रहणज्ञापनद्वारेत्यर्थः। शाणपर्युदासात् परिमाणग्रहणं न उन्मानप्रमाणपरिमाणानां त्रयाणां ग्रहणेऽपि संख्याया इव कालपरिमाणस्यापि ग्रहणं न भवतीति तद्भावः । तेन च "आर्हात्" इति सूत्रस्थेन सर्वतो मानार्थग्रहणप्रतिपादकभाष्येण न विरोधः । "परिमाणान्तस्य" इति सूत्रे तु परिच्छेदकविशेषग्रहणज्ञापनेन कालपरिमाणाग्रहणेऽपि उन्मानप्रमाणपरिमाणानां त्रयाणामपि ग्रहणम्, शाणपर्युदासात् । एवंच न कश्चिद्विरोधः "तदस्यपरिमा-

ादीनां प्रतिपदपाठसामर्थ्यात्तदन्तविधिर्नेति । तद्वृत्तिविरोधादुपेक्ष्यमिति । **इत ऊर्ध्वमिति** । संख्यापूर्वपदानामिति किम् ? इह मा भूत् । ारायणं वर्तयति । **द्विशूर्पमिति** । द्वाभ्यां शूर्पाभ्यां क्रीतमिति त- र्थे द्विगुः । न तावदेषा लुगन्ता प्रकृतिरिति संख्यापूर्वपदादपि "शूर्पा- यतरस्याम्" इति अञष्ठञो वा "अध्यर्द्धपूर्व" इति लुक् । **द्विशौर्पि- ाति** । ठञो द्विगुं प्रति निमित्तत्वाभावाल्लुगभावः । "परिमाणान्तस्य" रपदवृद्धिः ।

**"शताच्च"** । उत्तरसूत्रेण प्राप्तस्य कनोऽपवादः । त्यन्तशदन्ताया त्यन्तसहिता शदन्तेति उत्तरपदलोपी समासः । पञ्चक इति लौकिक्याः ाया उदाहरणम् । **बहुक इति** । पारिभाषिक्याः । **चात्वारिंशत्क** । "इसुसुक्तान्तात्कः" । अर्थवतस्तिशब्दस्य ग्रहणाद्धुत्यवयवस्य ति- स्य पर्युदासो न । कतिकः ।

**"वतोरिड्वा"** । वतोरिति पञ्चमी । सा च कन्निति प्रथमायाः षष्ठीं यतीत्याह–**वत्वन्तात्कन इति** । **अर्द्धिक इति** । अर्द्धशब्दः

---

त्तिविरोधादिति । **अपूपादिग्रहणं प्रपञ्चार्थमिति हि वृत्तिः । गणसूत्रे ऽपि ाविधिरस्त्येवेति बोध्यम** ।

त्तरपदलोपीति । **साहित्यं(१) चैकविप्रतिषेधान्वयित्वेन । सूत्रे तु द्व- र्ो बहुव्रीहिरेवेति बोध्यम्** । लौकिक्या इति । **संख्या(२)ग्रहणे कृत्रिमाकृ- यायाप्रवृत्तेरिति भावः** ।

थमायाः षष्ठीमिति । **नित्यसापेक्षत्वान्नासामर्थ्यमित्यपि बोध्यम्** ।

---

**साहित्यंचेति** । तत्वं च एकरूपावच्छिन्नस्यैकरूपसंसर्गेणैकरूपावाच्छिन्नेऽन्वयबो- ् । अत एवेदृशस्थले द्वन्द्वसाधुत्वम् । अत एव "आद्यन्तौ"इति सूत्रे भाष्ये । अजावि- वदत्तयज्ञदत्तौ इत्यादौ न ज्ञायते, कोऽजाधनः कोऽविधनः इत्येवोक्तम् । नत्वसाधुत्वम् । व एकद्वित्रिकलत्रपुत्रपशुमान् वानप्रस्थयतिब्रह्मचारिणां भागिनः क्रमेणाचार्यसच्छिष्य- ैकतीर्थिनः इत्यादिनिर्देशोपपद्यन्ते ।

२ ) **संख्याग्रहणे कृत्रिमाकृत्रिमन्यायाप्रवृत्तेरिति** । सूत्रे अतिशदन्तायाः

"**शूर्पात्**" । ठञोऽपवादः । शूर्पशब्दस्य परिमाणवाचित्वात् ।

"**शतमान**" । **ठञ्ठक्कन्नामिति** । शतमानं परिमाणम् । त-
प्राप्तः । विंशत्या क्रीतं विंशतिकम् । संज्ञाशब्दोऽयम् । असञ्ज्ञायां
विंशतित्रिंशद्भ्याम्" इति ड्वुन्स्यात् । सञ्ज्ञा च यदि परिमाणस्य तदा-
प्तः । अर्थान्तरस्य तर्हि ठक् प्राप्तः । वसनशब्दात्तु ठगेव । सहस्रं संख्या ।
'अतिशदन्तायाः' इति कन् प्राप्त इति विवेकः ।

"**अद्ध्यर्द्धपूर्व**" । अद्ध्यारूढमर्द्धं यस्मिन् तदद्ध्यर्द्धम् । प्रादिभ्यो
स्येति साधुः । अद्ध्यर्द्धपूर्वं च द्विगुश्चेति समाहारद्वन्द्वः । सौत्रं पुंस्त्व-
**अद्ध्यर्द्धपूर्वाद् द्विगोश्च परस्येति** । अनेन सूत्रे "द्विगोः" इति
त्युक्तं भवति । एतच्च वृत्तिकाररीत्या व्याख्यातम् । तत्र वार्तिकम्—
र्लुकि तन्निमित्तग्रहणे' । द्विगोर्निमित्तं यस्ताद्धितस्तस्य लुगिति वक्त-
। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । द्विशूर्पेण क्रीतं द्विशौर्पिकमिति ।
पूर्वोदाहृते द्वितीयस्य माभूत् । तथा 'अर्थविशेषासंप्रत्यये अतन्निमित्ता-
। यत्र तद्धितार्थद्विगुना सह अर्थो न भिद्यते तत्र स तद्धितो यस्य
तं न भवति तस्मादपि द्विगोः परस्य लुगिति वक्तव्यम् । द्वयोः शूर्पयोः
हारो द्विशूर्पी । तया क्रीतमिति विग्रहे ऽपि द्विशूर्पमित्येव यथा स्यात् ।
स्तु सूत्रे "द्विगोः" इति षष्ठीमाश्रित्य द्विगोर्निमित्तं यस्ताद्धित इति व्याख्ये-
द्विशूर्पेण क्रीतमित्यत्र तु अनभिधानात्प्रत्ययो नेति भाष्यारूढः पन्थाः ।

**पाञ्चकलापिकमिति** । एवं पाञ्चलोहितिकमिति बोद्धयम् । पञ्च
ाः परिमाणमस्य, पञ्च लोहिन्यो गुञ्जाः परिमाणमस्य, इति विगृह्य
द्धितार्थे"इति समासः "तदस्य परिमाणम्" इति ठञ् 'भस्याढे तद्धिते'
पुंवद्भावाल्लोहिनीशब्दस्येकारनकारयोर्निवृत्तिः । परिमाणविशेषस्य
ये एते । असंज्ञाग्रहणं प्रत्ययान्तस्य विशेषणं न तु द्विगोः । एतच्च वृत्ति-
वर्णितं सूत्राशयमनुरुध्योदाहृतम् ।

भाष्यवार्तिकयोस्तु असंज्ञाग्रहणं प्रत्याख्यातम् । तथा हि—द्विगुविशे-

---

तीयस्येति । ठञ् इत्यर्थः ।

षणमसंज्ञाग्रहणं पञ्चकलापपञ्चलोहितशब्दौ च द्विगू कृततद्धितलुकावेव संज्ञे । यस्तु ताभ्यामुत्पद्यते ठक् स श्रूयत एवेति ।

स्यादेतत् । अध्यर्द्धशब्दः संख्यावाची तथा च लोके गण्यते एकोऽध्यर्द्धो द्वाविति । अत एव "अध्यर्द्धकम्" इति कन् अध्यर्द्धकंसमिति तद्धितार्थे द्विगुश्च भवति । तत्किमध्यर्द्धपूर्वग्रहणेनेति चेत्? सत्यम् । ज्ञापनार्थमिदम्—संख्याकार्यं किंचिदस्य नेति । तेन कन्समासोत्तरपदवृद्धिभ्योऽन्यन्न भवति । तद्यथा—अध्यर्द्धं करोति । नेह कृत्वसुच् । यः सकृत् फलान्तां क्रियामभिनिर्वर्त्य पुनस्तामेव कुर्वन्मध्ये निवर्तते स एवमुच्यते ।

**"विभाषा" । अध्यर्द्धसहस्रमिति ।** "शतमानविंशतिक"इति विहितस्याणो लुक् । तदभावे तु "संख्यायाः संवत्सरसंख्य" इत्युत्तरपदवृद्धिः । इदानीमेवेत्युक्तम् अध्यर्द्धशब्दः संख्यावाचीति ।

---

स श्रूयत एवेति । **द्विगुनिमित्तत्वाभावादिति भावः ।** संख्यावाचीति । **एवं च तत्पूर्वसमासस्य द्विगुत्वात्तेनैव सिद्धम् । सूत्रे च द्विगुसाहचर्यादध्यर्द्धपूर्वो ऽपि समानाधिकरणसमास एव गृह्यते । तत्रास्य संख्यात्वेन "दिक्संख्ये" इति नियमा(१)दन्यस्याप्राप्तौ "तद्धितार्थ" इत्यादिना द्विगुरेवेति भावः ।**

उत्तरपदवृद्धिरिति । **अध्यर्धसाहस्रमित्यत्र तेनैव तन्निमित्तप्रत्ययोऽपि संगृहीतः । 'अध्यर्द्धग्रहणं च समासकन्विध्यर्थम्' इति वार्तिके समासवि-**

---

( १ ) **नियमादिति** । नियमाकारस्तु—दिक्संख्ये संज्ञायामेव समस्येते इति नियमाकारे पञ्च गावो यस्य सन्ति स पञ्चगुरिति बहुव्रीहिर्न स्यात् पञ्चानां गवां समाहारः पञ्चगवमिति "तद्धितार्थ" इति समासो न स्यात् । तस्मात् "विशेषणं विशेष्येण" इति यदि दिक्संख्ययोः समासः स्यात् तर्हि संज्ञायामेवेति नियमशरीराभ्युपगमात् । पूर्वसूत्रं, पूर्वमासः, पूर्वसमुद्रः इत्यादौ संज्ञात्वाभावेऽपि कालदेशवाचकत्वाद् समासो भवत्येव ।

ननु 'त्रिलोकनाथः, पितृसद्मगोचरः, इत्यादयः प्रयोगाः कथम् ? त्रिलोकशब्दस्यासंज्ञात्वात् । त्रयाणां लोकानां समाहार इति विग्रहे "तद्धितार्थ"इति समासे तु "द्विगोः"इति ङीप्प्रसङ्गः 'अकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट'इति स्त्रीलिङ्गत्वात् । पात्रादित्वान्न स्त्रीत्वमित्यभ्युपगमे

यदि त्रिलोकी गणना परा स्यात् ।

**"द्वित्रिपूर्वान्निष्कात्"** । अध्यर्द्धपूर्वग्रहणमुत्तरार्थमनुवृत्तमपि नेह सम्बद्ध्यते। "द्विगोः" इति तु संबद्ध्यत एव षष्ठीसमासं व्यावर्तयितुम् । अत्र च व्याख्यानमेव शरणम् । अन्यथा 'अध्यर्द्धपूर्वात् द्वित्रिपूर्वाच्च निष्कात्' इति समुच्चयः स्यात् । **द्विनैष्किकमिति** । प्राग्वतेष्ठञ् । मतान्तरे तु ठक् । "परिमाणान्तस्य" इत्युत्तरपदवृद्धिः ।

**"विंशतिकात्खः"** । "शतमानविंशतिक" इत्यणि प्राप्ते तस्य च लुकि प्राप्ते खो विधीयते ।

**"खार्याः"** । "तदस्य परिमाणम्" इति ठञि प्राप्ते तस्य लुकि ईकन् विधीयते । **प्राण्यङ्गेति** "पादस्य पदाज्यातिगोपहतेषु" इत्यत्र तावत्प्राण्यङ्गस्यैव पादस्य ग्रहणं तस्यैवाज्यादिभिर्गतिवचनैः संबन्धसंभवात् ।

---

**धिशब्देन समासरूपो विधिस्तन्निमित्तको विधिश्च गृह्यते । अन्त्यः संख्यापूर्वपदकतदन्तविधिनिमित्तकः प्रत्यय उत्तरपदवृद्धिश्चेति भावः । लुकि चाग्रहणमित्यस्य भाष्यस्य प्रत्ययलुगर्थं न कार्यं, ज्ञापनार्थं त्वस्त्वित्यर्थं इति न तद्विरोधः ।**

प्राग्वतेष्ठञिति **समासे । "असमासे निष्कादिभ्य" इति ठको ऽप्राप्तेरिति भावः ।** मतान्तरे त्विति । **"असमासे" इति सूत्रे परिमा(१)णविशेषवाचिनिष्कादीनामेव ग्रहणं तत्र तून्मानोरोभूषणादिवाचिन एव ग्रहणं प्रसिद्धत्वादिति मते इत्यर्थः ।**

---

( १ ) **परिमाणविशेष इति** । "आर्हात्" इति सूत्रभाष्ये संख्यायाः परिमाणबहिर्भावकथनात् न संख्याया परिमाणग्रहणेन ग्रहणम् । तेन द्विशतेत्यादौ अपरिमाणान्तत्वान्निषेधसिद्धिरिति तत्रैव भाष्ये स्पष्टम् ।

कालपरिमाणस्य च परिमाणग्रहणेन ग्रहणं, न तेन द्विवर्षा त्रिवर्षेत्यादौ अपरिमाणान्तत्वान्निषेधासिद्धिरिति "संख्यायाः सम्वत्सर" इति सूत्रे भाष्ये स्पष्टम् । "आर्हात्" इति सूत्रभाष्यप्रसङ्गात् उन्मानादीनां त्रयाणां वैलक्षण्योपपादनेऽपि परिमाणग्रहणेन प्रमाणोन्मानयोरग्रहणमनुक्तेः । संख्याग्रहणेनाग्रहणमुक्त्वा तस्यैव द्विशतेत्यादौ "अपरिमाण" इति निषेधप्रवृत्तिरूपफलोक्तेश्च परिमाणपदेन उन्मानप्रमाणपरिमाणानां त्रयाणामपि ग्रहणम् । अतएव "असमासे निष्कादिभ्यः" इति सूत्रस्थसमासग्रहणतदन्तविधिज्ञापकतापरं भाष्यं सङ्गच्छते । सर्वतो मानम् परिमाणम् इत्यस्य "आर्हात्" इति सूत्रे परिमाणपदेन ग्रहणे उन्मानभूतनिष्कस्य अपरिमाणत्वात् नैष्किकं परमनैष्किकम् उभयत्रापि "आर्हात्" इति ठकः प्राप्तौ निष्काच्चेदस-

पद्यतीत्यादावपि तस्यैवानुवृत्तिरिति भावः । इह तु पणमाषाभ्यां साहचर्या-त्परिमाणवाचिनो ग्रहणम् ।

**"शाणाद्वा"** । **पक्षे ठञिति** । यद्यपि शाण उन्मानं तथापि "आ-र्हात्" इत्यत्र परिमाणग्रहणेन योगवृत्त्या परिच्छेदकमात्रं गृह्यत इति वादिनां मते अस्यापि पर्युदासादिति भावः । मुख्यमते तु ठगेव बोध्यः । "शाणाद्वा" इति सूत्रे 'शताच्च' इति वक्तव्यम् । पूर्वेण नित्ये प्राप्ते विकल्पार्थम् । अध्यर्द्ध-शत्यम् । अध्यर्द्धशतम् । पञ्चशतम् । पञ्चशत्यम् । यदभावे संख्यालक्षणस्य कनो लुक् । "शताच्च ठन्यतौ" इति तु न भवति । तत्राऽसमासग्रहणस्यानु-वर्तितत्वात् ।

**"द्वित्रिपूर्वादण् च"** । वार्तिकमिदं वृत्ति(१)कृता सूत्रेषु प्रक्षि-प्तम् । **शाणादित्येवेति** । शतग्रहणं तु नेह संबध्यते, व्याख्यानात् । अत्र च भाष्यं प्रमाणमिति भावः ।

यत्तु न्यासकृतोक्तम्–'शतशाणाभ्यां वा' इति सूत्रयितव्ये "पणपाद" इति पूर्वसूत्रे शतग्रहणं क्रियते तस्येदं फलम् । शतशब्दः स्वरितत्वेनानुव-र्त्तमानोऽपि "शाणाद्वा" इत्यत्रैव सम्बध्यते तदुत्तरसूत्रे तु न सम्बध्यते । तेनाण् नेति । तदेतत्सामर्थ्यवर्णनमणिविधायके वार्तिके सूत्रत्वभ्रमप्रयुक्तमि-त्यास्तां तावत् । **त्रैरूप्यमिति** । अणि एकम् । यति द्वितीयम् । ठञो लुकि तृतीयम् ।

---

तस्यैवानुवृत्तिरिति । **अर्थाधिकारस्यौचित्यादिति भावः ।**

परिच्छेदकमात्रमिति । **उन्मानमपीत्यर्थः । तत्र तद्ग्रहणस्यैव भाष्यसंमत-त्वात् ।** मुख्यमते त्विति । **दर्पणकारादिभिर्मुख्यमतत्वेन व्यवहृते त्वित्यर्थः । तुना ऽरुचिर्बोधिता । तद्बीजं तु तस्य भाष्यासंमतत्वम् ।** पूर्वेणेति । **'पणपाद'इत्यनेन ।**

अत्र च भाष्यं प्रमाणमिति । **शाण(२)शब्दस्यैव तत्रोदाहरणादिति भावः ।**

"तेन क्रीतम्" । तृतीयान्तात् क्रयणकर्मणि वाच्ये ठञादयस्त्रयो-
त्यया यथायथं स्युः । ननु देवदत्तेन क्रीतं, पाणिनिना क्रीतं, सन्तोषे-
तम्, इत्यादावतिप्रसङ्ग इति चेत् ? सत्यम् । करणे तृतीयैवेह सम-
क्तिः । सापि मूल्यद्रव्यसमर्पकाच्छब्दादुत्पन्ना, न त्वन्यापि । अन्यत्र हि
धानान्न प्रत्ययः । एतच्च 'तद्धिता' इति महासञ्ज्ञाकरणाल्लभ्यते ।
प्रयोगेभ्यो हिता इति व्याख्यानात् ।

"पुत्राच्छ च" । कथं पुत्रीयः क्रतुरिति ? न हि क्रतुः संयोगो
पात इति चेन्मैवम् । संयुज्यते ऽनेनेति व्युत्पत्त्या हि येन यागादिक-
पुरुषाः फलेन संयुज्यन्ते स यागादिरपि संयोगः । न केवलं संबन्ध
ग्रह इति हरदत्तः ।

"तस्येश्वरः" । तत्र विदित इति च । योगविभागो यथा-
निरासार्थं उत्तरार्थश्च ।

"तस्य वापः" । "तस्य" इति वापापेक्षया कर्मणि षष्ठी, न कर्त्तरि ।
वदत्तस्य वापः क्षेत्रमित्यादौ न ।

"तदस्मिन्" । शुल्कग्रहणं प्रपञ्चार्थम् । तस्याप्यायविशेषत्वात् ।
च—शौल्कशालिक इत्यत्र "ठगायस्थानेभ्यः" इति ठग्भवति ।

अर्द्धिक इति । "अर्द्धाच्चेति वक्तव्यम्" इति टिठन्प्राप्तः । सति
स्मिन् ङीप्स्यात् । इष्यते तु टाप् । रूपकस्येति । रूपकं कार्षापणम् ।
इति । तथा च—भागवदपेक्षत्वेनासामर्थ्यं नोद्भावनीयमिति भावः ।
व्यान्तरमिति । अत्र पक्षे भारभूतार्थाभिधायित्वाद्वंशादयो भारश-

---

न्यत्रेति । मूल्यद्रव्यभिन्ने करणे कर्तरि चेत्यर्थः ।
रदत्त इति । अत्रारुचिस्तु भावसाधनग्रहणे न मानं नापि फलमिति
स्थसंयोगो नामेदं कृत्वेदमवाप्यते इति प्रतीके करणव्युत्पत्त्या यागादे-
योगत्वं कैयटेनोक्तम् । धनपतिसंयोगोऽपीदृश एव । तेनापि पुरुषाः फ-
न्नवासआदिरूपेण संयुज्यन्ते एवेति ।
थासंख्यनिरासार्थं इति । अनुवृत्तेन 'सर्वभूमिपृथिवीभ्याम्'इत्यनेनेति भावः ।
कर्तरीति । व्या(१)ख्यानादिति भावः ।

यन्ते । प्रत्येकं सम्बन्धविवक्षया एकवचनम् ।

**वस्नद्रव्याभ्याम्"** । वस्नो मूल्यम् ।

**सम्भवत्य"** । आधारप्रमाणादाधेयप्रमाणस्य यदनाधिक्यं तदुप-
ारणं सम्भवतेरर्थः । अतः सकर्मत्वात्तदित्यनुवृत्त्या लभ्यमाना द्वितीया
भक्तिर्न विरुध्यते । तदाह-**स्वस्मिन्नित्यादि** । सूत्रे अवहरती-
ष्ठ उपसर्गस्तद् व्याचष्टे-**उपसंहरतीति** । **तत्पचतीति** । पच-
सम्भवत्यवहरतिनिवृत्त्यर्थम् । द्रोणप्रमिते व्रीह्यादौ द्रोणशब्दः ।

**आढकाचित"** । **पक्षे ठञिति** । न तु ठक् । आढकादीनां
त्वात् ।

**'द्विगोः ष्ठंश्च"** । ष्ठन्निति च्छेदः । तदाह—**षित्त्वादिति** ।
**रिमाणेति** । तस्मिन्सूत्रे आचितशब्दस्य साक्षादुपादानादिति भावः ।

**'तदस्य परि"** । इह परिमाणशब्देन परिच्छेदकमात्रं गृह्यते न
तो मानमेव, उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणात् । षष्टिर्जीवि-
णमस्य षाष्टिकः ।

**ञ्चदश मन्त्रा इति** । 'साम्ना स्तुवीत' 'एकं साम त्यृचे क्रिय-
। हि श्रुतिः । तत्र त्यृचस्य पञ्चकृत्व आवृत्त्या पञ्चदश मन्त्राः । सप्त-
ोमे अन्त्यायाः सप्तकृत्व आवृत्तिः । एकविंशे त्यृचस्य डित्करणमेक-
िलोपार्थं त्रयस्त्रिंशादौ टिलोपार्थञ्च ।

**'पङ्क्तिविंशति"** । पञ्चन्शब्दस्य टिलोपस्तिप्रत्ययः । "चोः
ति कुत्वम् । **रूढिशब्दा इति** । तथा चात्र नावयवार्थे ऽभिनिवे-
। पङ्क्तिशब्दो हि नानार्थः । अस्ति च्छन्दोविशेषे यस्य पञ्च पा-

---

यात्यमिति तात्पर्यम् । प्रत्येकमिति । यद्यपि तथा विवक्षा न व्युत्प-
द्रा तथा ऽपि सौत्रत्वादेव तथा विवक्षां कृत्वा एकवचनं प्रयु-
भावः ।

त्र तृतीयोपसर्गभ्रमं व्यावर्तयति—षष्ठ इति । स च हरतियोगे उप-
समानार्थ इति भावः ।

इति । अत्र मानमुत्तरसूत्रे ह्याढकीति भाष्यप्रयोगः ।

दाः। अस्ति च क्रमसंनिवेशे ब्राह्मणपङ्क्तिरिति। अस्ति दशसंख्यायाम् 'कृतवान् पङ्क्तिरथो विलङ्घ्य यत्' इति। दशरथ इत्यर्थः। द्वयोर्दशतोर्विन्-भावः शतिश्च प्रत्ययः। अपदत्वं च। द्वौ दशतौ परिमाणमस्य विंशतिः। त्रयाणां दशतां त्रिन्भावः शच्च प्रत्ययः। चतुर्णां दशतां चत्वारिंभावः। पञ्चानां दशतां पञ्चाभावः। षण्णान्दशतां षष् तिश्च प्रत्ययः। अपदत्वम्। सप्तानां दशतां सप्तभावः। अष्टानां दशतामशी। नवानान्दशतां नवभावः। दशानां दशतां शभावस्तश्च प्रत्यय इति दिक्।

**"पञ्चद्दशतौ"**। **पञ्चक इति**। "संख्यायाः"इति कन्। त्रिंशच्चत्वारिंशतोरिति पञ्चम्यर्थे षष्ठीद्विवचनम्। चत्वारिंशत इति सूत्रपाठे तु समाहारद्वन्द्वात्पञ्चम्येकवचनम्। अत्र ब्राह्मणसंज्ञायामिति षष्ठीसमासेन निर्देष्टुमुचितम्। एवं हि ब्राह्मणस्य चेत्संज्ञेति स्फुटो भवति। अन्यथा तु यस्य कस्यचित् संज्ञायां ब्राह्मणस्थे च प्रयोगे इति संभाव्येत। मन्त्रे भाषायां च डुवुन्न स्यात्। इष्यते तु सः। तस्मादिष्टानुरोधेन व्याख्येयम्।

**"छेदादि"**। इह नित्यग्रहणं भाष्ये प्रत्याख्यातम्। नित्यग्रहणं न कर्तव्यमित्युपलक्षणं, सूत्रमेव मास्तु इति तदाशयः। "तदर्हति"इत्यनेन सिद्धत्वात्।

---

शतिरिति। **अत्र पक्षे निपातनादन्तोदात्तत्वम्। अत एव भाष्ये एष्वव्यु(१)त्पत्तिपक्षोऽप्युक्तः। शतिजिति पाठस्तु युक्त एव**। अपदत्वं चेति। **तत्फलमनुस्वारः**।

मन्त्रे भाषायां चेति। **तथा चेत्यादिः**।

भाष्ये इति। **विग्रहदर्शनान्नित्यग्रहणमनर्थकमिति हि भाष्ये उक्तम्। एवं च छेदमर्हतीत्यत्रार्थ एवास्य साधुत्वं तच्च "तदर्हति" इत्यनेनैव सिद्धमित्याशयेनाह**-सूत्रमेव मास्त्विति।

---

( १ ) **अव्युत्पत्तिपक्षो ऽप्युक्त इति**। व्युत्पत्तिपक्षमभिधाय पठितम्, भाष्ये अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु, अनारम्भो वा पुनः विंशत्यादीनां न्या-

"दण्डा" । पूर्वसूत्राद्यदनुवर्तत तदाह—यत्स्यादिति । केचित्तु "दण्डादिभ्यो य" इति सूत्रं पठन्ति । तद्भाष्यविरोधादुपेक्ष्यमिति हरदत्तमाधवादयः ।

तथा हि—क्यब्विधौ 'हनो वा वधः, 'तद्धितो वा' इत्युक्तम् । यदि चेह यद्विधीयेत तदैतदुपपद्यते । क्यप्याद्युदात्तत्वं सत्यपि तद्धिते "यतोऽनावः" इत्याद्युदात्तमेवेति । यदि त्वत्र यो विधीयेत तदा स्वरो भिद्येत ।

यत्तु प्रमाणान्तरोपन्यसनं इभवधमेधशब्दा दण्डादयस्ते च छन्दसि यदन्ता आद्युदात्ता दृश्यन्ते । 'इभ्यान्न राजा वनान्यत्ति' 'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति' 'अपां मेध्यं यज्ञियम्'इत्यादीनि । तन्न । दण्डादिभ्यो यविधानेऽपि तस्य भाषायां चरितार्थतया "छन्दसि च" इत्युत्तरसूत्रेण बाधस्य न्याय्यत्वात् । तेन हि प्रातिपदिकमात्रात् छन्दस्यर्हतीत्यर्थे यद्विधीयते । यप्रत्ययं वदद्भिरपि "छन्दसि च" इति मण्डूकप्लुत्या यत एव विधेयत्वादिति दिक् ।

"कडङ्करदक्षिणाच्छ च" ॥ कडङ्गरेति पाठस्तु हरदत्तमाधवादिविरोधादुपेक्ष्यः ।

"स्थालीबिलात्" ॥ छयतावनुवर्तेते । पाकयोग्या इति । त्रिष्फलीकृता इति यावत् ।

**यज्ञमृत्विजं वार्हतीति** । अर्थसमर्थो विद्वान्, शास्त्रेणापर्युदस्त इत्यर्थः । देशस्यानेवंविधत्वादुपसंख्यानम् । **यज्ञियो देश इति** ।

---

क्यब्विधाविति । केचित्तु वाग्रहणाकरणलाघवानुरोधेन "मृजेर्विभाषा" इत्यनन्तरमिदं वार्तिकं पठन्ति वधादेशश्च हलन्त इति प्रपन्नास्तन्मतानुसारेणेदम् । अवश्चे तु "कृत्योकेष्णुच्चार्वादयश्च" इत्यस्य प्रवृत्तेर्न दोषः । भाष्ये तु यद्विधाविदं वार्त्तिकं पठितं 'हन्तेर्वा यत्' इति च व्याख्यातम् । "दण्डादिभ्यो यः" इति पाठाशुद्धिस्तूभयथाऽपि सिध्यतीति लाघवानुसारेणैवमेवोक्तम् । कृत्यस्याप्यर्हे विधानान्नार्थभेदस्तयोरिति बोध्यम् । आद्युदात्तत्वमिति । धातुस्वरेणेति शेषः । स्वरो भिद्येतेति । अन्तोदात्तत्वापत्तेः । यद्विधौ "हनो वा" इत्यादि । अत्रेऽपि यति "यतोऽनावः" इत्याद्युदात्तत्वादिति

यज्ञानुष्ठाने योग्य इत्यर्थः ।

**आर्हीयाणां ठगादीनां द्वादशानां गतोऽवधिः ॥**

## अथ तद्धितेषु ठञधिकारः ।

**"पारायणतुरायण"** ॥ आदित आरभ्य आन्तादविच्छेदेन वेदस्याध्ययनं पारायणम् । तच्च गुरुशिष्याभ्यां निर्वर्त्यते, अन्यतरासंनिधौ अध्ययनक्रियाया अनुत्पादात् । तथापि शिष्ये एव प्रत्यय इष्यते, न तु गुरावित्याकरः । तद्दर्शयति—**पारायणिकश्छात्र इति । तौरायणिको यजमान इति** । इदमपि यजमान एवेष्यते । ऋत्विक् तु यद्यपि पुरोडाशादिकं निर्वर्त्तयति तथापि तत्र नेष्यत इति भावः ।

**विषयीभूतोऽर्थ इति** । सन्देग्धरि तु प्रत्ययो नेष्यत इति भावः । तथाच—'ज्ञानप्रामाण्यं स्वतो न गृह्यते सांशयिकत्वात्' इति संदिह्यमान एव वृद्धाः प्रयुञ्जते ।

यत्तु 'सांशयिकः संशयापन्नमानस' इत्यमरेणोक्तं तदपि संशयापन्नं मानसं यस्मिन्विषये इति व्याख्येयमिति भावः । **ततोऽभिगमनमिति** । अत्र पञ्चम्यन्तात्प्रत्ययः ।

**"पन्थो ण नित्यम्"** ॥ अत्र नित्यग्रहणं भाष्ये प्रत्याख्यातम् ।

**"उत्तरपथेन"** ॥ चकाराद्गच्छतीति प्रत्ययार्थ आकृष्यते, तदाह—**उत्तरपथेन गच्छतीति** ।

**"कालात्"** ॥ स्वरूपग्रहणमिह न भवति, "तमधीष्टो भृतो भूतो

---

त्रिष्फलीकृता इति । **त्रिः कण्डनैः संस्कृता इत्यर्थः** ।

आर्हीयाणां ठगादीनां गतोऽवधिः ।

## अथ तद्धितेषु ठञधिकारः ।

**वार्त्तिकोक्ततत इत्यस्य सार्वविभक्तिकत्वभ्रमं व्यावर्त्तयति**—पञ्चम्यन्तादिति । प्रत्याख्यातमिति । **"विग्रहदर्शनान्नित्यग्रहणानर्थक्यम्" इति तत्रोक्तम् । मूले**

भावी" इत्यत्यन्तसंयोगे द्वितीयानिर्देशात् "मासाद्वयसि" इत्यादौ मासादीनां कालेन विशेषणाच्च ।

**"तेन निर्वृत्तम्"** ॥ तेनेति करणे तृतीया । चतुर्थ्यान्तर्गते "तेन निर्वृत्तम्" इत्यत्र तु कर्तरि तृतीयेति विशेषः । उभयत्राप्यन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः ।

**"मासाद्वयसि"** ॥ खञो ञित्करणं स्वरार्थं पुंवद्भावप्रतिषेधार्थं च । मासीनाभार्यः ।

**"द्विगोर्यप्"** ॥ पित्त्वादनुदात्तः । तेन कालान्ते "द्विगौ" इति पूर्वपदप्रकृतिस्वरोऽवतिष्ठते ।

**यबपीति** । अत्र च व्याख्यानं शरणम् । **द्वैयह्निक इति** । नन्वत्र "राजाहःसखिभ्यः" इति परत्वाट्टचा भाव्यम् । नच महाविभाषया टचो विकल्पो 'बृहतीजात्यन्ताः समासान्ताश्च' इति नित्येषु परिगणनादत आह—**समासान्तविधेरिति** ।

**द्विवर्षीणो व्याधिरिति** । व्याधिशब्देन प्रत्ययार्थस्याचेतनतोक्ता । चित्तवति हि नित्यं लुग्वक्ष्यते । परिजय्य इत्यस्य विवरणं **जेतुं शक्य इति** ।

**महानाम्न्यो नामेति** । तथा चाभाषितपुंस्कत्वात्पुंवद्भावो नेति भावः । **हरदत्तस्त्विति** । यौगिकोऽयं, न तु रूढ इति मन्यते ।

**इति ठञधिकारे कालाधिकारस्य पूर्णोऽवधिः ।**

---

व्याख्यानमिति । **वृत्तिकारादीनामिति शेषः** । "अवय(१)सि" **इति सूत्रभाष्या नु अत्राप्यननुवृत्तिरेव लभ्यते** । परत्वादिति । **उत्कृष्टत्वादन्तरङ्गत्वादित्यर्थः । एतेन विग्रहवाक्ये एव समासान्तप्रवृत्तेः परत्वमयुक्तमित्यपास्तम् । समासान्ते कृते ऽहन्शब्दान्ताद्विगोरभावात् प्रकृतसूत्रस्यैवाप्राप्तिरिति भावः । तत्र शङ्कते**—न चेति । समासान्तेति । **तदप्रवृत्तौ हि "अल्लोपोनः" इत्यलोपे द्वैयह्निक इत्यस्य सिद्धिरिति भावः ।**

मन्यत इति । **अत्रारुचिस्तु भाष्यकृतो 'माहानाम्निकम्' इत्यकृतपुंवद्भावो-**

---

(१) **अवयसीति** । "अवयवसि ठंश्च" 'इत्यनन्तरस्यानुकर्षः' इति वार्तिकम् पठितम् । तत्रानन्तरस्येति प्रतीकमादाय ण्यत इति कैयटः । नच यथा "द्वितीयाटौस्वेनः" इत्यत्रैतद इव इदमोऽपि अनुवर्तते, तथात्रापि व्यवहितस्यापि क्वचिदनुवृत्तिर्दृश्यत इति वाच्यमित्याशङ्क्योत्तरितम् । तदाचार्यः सुहृद्भूत्वा अन्वाचष्टे "अवयसि ठंश्च" इत्यनन्तरस्यानुकर्षार्थः, इति

**अव्ययसङ्घातादिति** । वचनसामर्थ्याद्वाक्यादपि प्रत्यय इति भावः ।

**"कालाद्यत्"** ॥ **काल्यं शीतमिति** । प्रातःकाले काल्यशब्दस्य व्युत्पत्त्यन्तरं मृग्यम् ।

**"प्रकृष्टे ठञ्"** ॥ प्रकृष्यते ऽयमिति प्रकृष्टः । कर्मणि क्तः । ठञ्ग्रहणं विस्पष्टार्थम् । अन्यथा ऽनन्तरस्य यतोऽनुवृत्तिराशङ्क्येत ।

**ठञः पूर्णोऽवधिः ॥**

---

# अथ तद्धितेषु नञ्स्नञधिकारः ।

**"तेन तुल्यं क्रिया चेद्वतिः"** ॥ तुल्यमिति सामान्ये नपुंसकम् । **ब्रा(१)ह्मणेनेति** । ब्राह्मणशब्दस्तत्कर्तृके ऽध्ययने लक्षणया वर्तते, ब्राह्म-

---

दाहरणविरोधः । वाक्यादपीति । **अपिना अखण्डाव्ययादित्यपि सूचितम्** ।

**कल्यशब्दस्येति पाठे तस्यैवेत्यर्थः । कल्यशब्दोऽहर्मुखवाचीति "संख्याया विधार्थे" इति सूत्रे भाष्यकैयटयोः** । मृग्यमिति । **तदलाभात्तस्याव्युत्पन्नत्वमेवेति तात्पर्यम्** ।

ठञः पूर्णोऽवधिः ।

---

## अथ तद्धितेषु नञ्स्नञधिकारः ।

नपुंसकमिति । **सूत्रे उदाहरणे चेति शेषः । तत्रापि व्यापारविशेषणत्वात्** । लक्षणयेति । **एतेन जातिविशिष्टं द्रव्यं ब्राह्मणशब्दार्थो न च तेन क्रियाया-**

---

( १ ) **ब्राह्मणेनेति** ब्राह्मणादयः शब्दा गुणसमुदाये वर्तन्ते । एवं ह्याह—

तपः श्रुतं च योनिश्च एतद्ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥ १ ॥

ब्राह्मणशब्दश्च लक्षणया ब्राह्मणकर्तृकाध्ययनक्रियायां वर्तत इति । तथा च—ब्राह्मणकर्तृकाध्ययनतुल्यमध्ययनमिति वाक्यार्थो निष्पन्नः । तुल्यत्वं च सादृश्यं । सादृश्यं च भेदघटितमिति नैयायिकाः । तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वमिति लक्षणम् । वस्तुतस्तु वैयाकरणमते सादृश्यस्य भेदघटितत्वे नञ्विषयत्वमिति [illegible]

र्त्रिकाध्ययनतुल्यमध्ययनं वाक्यार्थः। **गुणतुल्य इति**।अक्रियया तु(१)-
इत्यर्थः । अत एव महानसवदिति वतेः साधुत्वरक्षणार्थं प्रतिज्ञावाक्ये
ान् भवितुमर्हतीत्यादि क्रियापदं प्रयुञ्जन्ते वृद्धाः । अर्वाचीनास्तु महान-
शः पर्वत इति व्याचक्षाणाः सूत्रविरोधादुपेक्ष्याः ।

ननु तद्रीत्या व्युत्पन्नस्य तादृशबोधोऽप्यनुभवसिद्ध इति चेत् ? सत्य-
तादृशेऽर्थे साधुत्वमात्रं निराकुर्मो न तु बोधमपि ।

ा हि–

भेद्यभेदकसंम्बन्धोपाधिभेदानियन्त्रितम् ।
साधुत्वं तदभावेऽपि बोधो नेह निवार्यते ॥

अव्युत्पन्नस्य साधुभ्योऽप्यबोधात् तत्रैव व्युत्पन्नस्यासाधुभ्योऽपि बो-
कस्मात्किं बुद्ध्यते इति न नियन्तुं शक्यम् । किं तु किंविशेष्यके
कारके किंसंसर्गके बोधे उद्देश्ये किं साधु किं नेत्येव शास्त्रीयविचा-
यः । उक्तं हि भगवता "सत्यामर्थावगतौ शब्दैश्चापशब्दैश्च भक्ष्या-
ादिवन्नियमः क्रियत" इति ।

**"तत्र त(२)स्येव"** ॥ द्रव्यगुणादितुल्यार्थ आरम्भः । क्रिया चेदि-
ानुवर्त्तते ।

---

त्वमत्यन्तभेदादित्यपास्तम् । **सौष्ठवादिश्च साधारणो धर्मः** । इत्यर्थ
**गुणपदमक्रियोपलक्षणमित्यर्थः** । उपेक्ष्या इति । **पर्वते षष्ठीसप्तम्योर-**
**ात् "तत्र तस्येव" इत्यनेनापि न वतिः**। भेद्येति। **भेद्यं विशेष्यं, भेदकं वि-**
**ं, सम्बन्धस्तयोः संसर्गः, उपाधिः पश्वादिः** ।

**ानु मथुरायामिव पाटलिपुत्रेऽधीते इत्यस्य मथुरया च तुल्यत्वा-**
**ूत्रेणैव सिद्धमत आह**—द्रव्यगुणादीति ।

---

( १ ) **अक्रियया तुल्य इति** । गुणतुल्ये द्रव्यतुल्ये च इत्यर्थः । द्रव्यतुल्ये चोदा-

**"तदर्हम्"**॥ अर्हशब्दः पचाद्यजन्तस्तद्योगे कर्मणिषष्ठीप्राप्तौ सौत्रो विभक्तिव्यत्यय इत्येके । अन्ये तु "कर्तृकर्मणोः" इति षष्ठ्या अनित्यत्वे लिङ्गमिदम् । तेन 'धार्यैरामोदमुत्तमम्' इति भट्टिप्रयोगः समाहित इत्याहुः । **विधिमर्हतीति** । द्वितीयान्तादेव प्रत्यय इति स्फुटीकर्तुं तिङन्तविग्रहः । कथं तर्हि–'ततो यथावद्विहिताध्वराय' इति । उच्यते यथाशब्दो वृत्तिविषये सत्त्वार्थकः, तथात्वं यथात्वमित्यादिषु त्वतलादिदर्शनात्तथा च द्वितीयान्तादर्हार्थे वतिः योग्यतामर्हति विधानमाख्यानं वेत्यर्थात्क्रियायोगेऽपि सुलभः ।

**"तस्य भावस्त्व(१)तलौ"** ॥ **प्रकृतीति** । न तु यः कश्चिद् धर्मः, घटत्वमित्यत्र द्रव्यत्वादेरभानात् । **गोर्भाव इति** । इह गोशब्दोऽर्थपरः स्वरूपपरो वेति पक्षद्वयम् । आद्ये धर्मविशेषः प्रत्ययार्थः । स च धर्मत्वेनैव भासते । प्रकृतिजन्येत्यादिस्तु प्रयोगोपाधिः । द्वितीये तु जन्यबोधप्रकारः प्रत्ययार्थः, बोधप्रकारमात्रं वा । जन्यत्वं तु संसर्गः । सर्वं चेदं सूक्ष्मदृशां भाष्यकैयटारूढमेव । एवं स्थिते कृत्तद्धितसमासेषु एकार्थीभावाभ्युपगमात्

---

इत्याहुरिति । **अत्रारुचिबीजं तु भाष्याद्यनुक्तत्वम्** । आख्यानं वेति । **'यथावत्ख्यातवृत्ताय' इत्येतदभिप्रायकमिदम् । योग्यं यद्विधानमाख्यानं वा तत्कर्माध्वरादिसंबन्धि नेत्यर्थः ।**

द्रव्यत्वादेरिति । **पृथिवीत्वमादिग्राह्यम्** । प्रयोगोपाधिरिति । **वस्तुगत्या प्रकृतिजन्यबोधे प्रकारो यस्तस्य धर्मत्वेन भानमित्यर्थः । एतावतैव प्रयोगोपाधिरिति व्यवहारः** । द्वितीये त्विति । **तुनाऽरुचिः सूचिता । तद्बीजं तु सर्वत्र प्रकृतेर्लक्षणायां न मानम् । किं च तस्येत्यस्यात्र शब्दपरत्वे "गुणव-**

---

( १ ) **तस्य भावस्त्वतलाविति** । षष्ठ्यन्ताद्भाव इत्यर्थे त्वतलौ स्त इत्यर्थः । अभिप्रायादौ भावशब्दो वर्तत इत्याह–प्रकृतिजन्यबोधे प्रकारो भावः । त्वतल्प्रत्ययौ यत उत्पत्स्येते तस्मात् प्रकृतिभूतशब्दात् व्यक्तिबोधे जायमाने यज्जात्यादिकं विशेषणतया भासते, तद्व्यक्तिविशेषणम्भावशब्देन विवक्षितमित्यर्थः । यथा गोशब्दाद्धि व्यक्तिबोधे जायमाने गोत्वं विशेषणत्वेन भासते । गोशब्दस्य गोत्ववतीषु व्यक्तिषु गोत्वं वा शक्तिग्रहणात् । नहि गोत्वं विहाय गोव्यक्तिषु गोशब्दस्य शक्तिग्रहः सम्भवति । अतीतानागतानां वर्तमानानाञ्चानन्तत्वेन युगपदुपस्थित्यसंभवात् । गोशब्दात् पशुत्वप्राणित्वादिरूपेणापि गोव्यक्तिप्रतीत्याप्रतेश्च ।

रत्वतलादिभिरपि उक्तरीत्यैवार्थबोधनिर्वाहे तत्र नापूर्वं शक्त्यन्तरं क-
, किं तु तत्र प्रकृतिप्रत्यययोः पूर्वोत्तरपदार्थयोश्च संसर्गोऽपि प्रायेण
तया प्रविशति। 'औपगवो, राजपुरुष' इत्यादौ लुप्तषष्ठ्यर्थस्य वृत्तौ प्र-
म्भवात्पाचक इत्यादावपि कारकाणां प्राधान्यात्, कर्तृत्वादेश्च सम्ब-
शेषात्मकत्वात्। तदेतदभिप्रेत्य हरिकारिकायामुक्तम्—'कृत्तद्धितसमासे-
सम्बन्धाभिधानं भावप्रत्ययेन' इति। विस्तरः शब्दकौस्तुभे बोध्यः।

**"पृथ्वादिभ्य इमनिज्वा"॥ अणादीति।** ये इगन्ता लघु-
मृदुप्रभृतयस्तेष्वणः समावेशः, चण्डखण्डादिषु गुणवचनेषु ष्यञः,
त्सादिषु वयोवचनस्याञ इति बोद्ध्यम्। त्वतलौ तु पूर्वसूत्रेणैव लब्धौ।

**"वर्णदृढादिभ्यः"॥** गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम्।
**चर्तीति।** ब्राह्मणादेराकृतिगणत्वात्ष्यञ्। "हलस्तद्धितस्य" इति
ः। एवं याथाकामी। अत्र गणसूत्रं "वेयातिलाभमतिमनःशारदानाम्"।

---

**इति सूत्रे कर्मणीत्यनेनान्वयः।** भाष्ये तु संज्ञाशब्दे **द्रव्यमात्रबोधक-
ति मते प्रकृतिप्रत्ययार्थयोर्भेदानुपपत्तिमाशङ्क्यायं पक्ष एकदेशिनोक्त
बोध्यम्।** प्रकारतयेति। **प्रवृत्तिनिमित्ततयेत्यर्थः। एतन्मूलिकैव सम्बन्धा-
नमित्युक्तिरित्यन्यत्र विस्तरः। शब्दकौ(१)स्तुभे "वृद्धिरादैच्"सूत्रस्थे।**
योवचनस्याञ इति। **अञ् ग्रहणं तदपवादपुरोहितादियकोऽप्युपलक्ष-
। एतेन बालस्य पुरोहितादिषु पाठेन 'बालादञ्'इत्ययुक्तमित्यपास्तम्।**

---

(१) **शब्दकौस्तुभ इति।** तत्र हि कुत्वं कस्मान्नभवतीति वाक्ये कुशब्दस्य "अ-
" इत्यनेन संज्ञात्वेन विनियोगात्तत्र चावच्छेदकभेदेऽपि लाघवाच्छक्तिरेकैव। औपाधि-
द इति प्रवादस्तु उपाधिभिन्न इत्यत्र पर्यवसन्न इति मतेन प्रथमकल्पः। उपाधिस्थि-
स्थितिको जीवब्रह्मवदुपपद्येऽपि भेदोऽस्तीति मतेन द्वितीयः कल्पः। इति मतद्वयसत्वा-
विशेषः प्रवृत्तिनिमित्तम्। व्यक्तिविशेषोपहिता सत्तैव वा, शब्दस्वरूपं वा। तथा-
त्रितयान्यतममपि त्वप्रत्ययार्थः। प्रकृतिजन्यबोधे प्रकारीभूतं त्वप्रयोगोपाधिमाश्रित्य-
मूलधर्मस्य त्वतलर्थताया सत्वात्।
यद्वा प्रकृतिः शब्दस्वरूपपरा तत्प्रवृत्तिनिमित्तत्वे तु त्वतलादीनां शक्तिरेवेति मतान्त-
स्ति। उपयथापीहत्वप्रत्ययेन स्वार्थाश्रयः ककारो लक्ष्यते। तेन कुत्वं नेत्यस्य ककारा-
नेति पर्यवसितोऽर्थः।

विशब्दादुत्तरे ये यातादयः पञ्च तदन्तानां समासानामनन्तरः ष्यञ् भवतीत्यर्थः। वियातत्वम्। वियातता। वियातिमा। वैयात्यम्। विलाभत्वम्। विलाभता। विलाभिमा। वैलाभ्यम्। विमतित्वम्। विमतिता। विमतिमा। वैमत्यम्। इगन्तत्वादणपि। वैमतम्। वैमनस्त्वम्। विमनस्ता। विमनिमा। वैमनस्यम्। विशारदत्वम्। विशारदता। वैशारद्यम्। विशारदिमा। "समोमतिमनसोः"। संमतित्वम्। संमतिता। संमतिमा। सांमत्यम्। पूर्ववदण्। सांमतमित्यादि।

"**गुणवचनब्राह्मणादिभ्यः**"॥ कर्मेह क्रिया कार्य्यं च। **ब्राह्मणादिराकृतिगण इति**। केषांचित्पाठस्तु कार्यान्तराय। तथाहि—"अर्हतो नुम्च" इति नुमर्थः पाठः। एकभाव, त्रिभाव, अन्यभाव, इत्येषां पाठः स्वार्थे विधानार्थः। तथा च—वार्तिकप्रयोगः 'आन्यभाव्यं तु कालशब्दव्यवायात्' इति।

यत्तु व्याकरणाधिकरणे ऽपप्रयोगमिति भट्टैरुपन्यस्तम्। तत्पूर्वपक्षिणः प्रौढिवादमात्रम्। प्रायेण तस्मिन्प्रघट्टके तादृशानामेवोपन्यासात्। तद्यथा-अविरविकन्यायेनेत्युदाहृतम्। तदपि हि वस्तुतो निर्दोषमेव। अविः, अविकः, अनयोर्मद्ध्ये विकारादिप्रत्ययः कप्रत्ययान्तादेव, न तु केवलात्। तेन आविकं मांसमिति, नतु आवमिति व्युत्पादितम्। तत्र अविरविकमिति सुबन्तद्वयसमुदाये चरमं सुपं विहाय प्राग्भागमनुकृत्य अविरविकन्यायेनेति भगवता व्यवहृतं तत्र को नाम दोषः। न हि विभक्तिविशिष्टमेवानुकर्त्तव्यमिति नियमे बीजमस्ति। अस्यवामीयमित्यादिनिरूढव्यवहाराच्च। एतेन 'नासदासीयं ब्रह्मसूक्तम्' इति शाङ्करभाष्यप्रयोगो ऽपि व्याख्यातः। आसीदित्यत्र तकारं विहाय प्राग्भागस्यैवानुकरणात्। "प्राग्रीश्वरात्" इत्यादावप्यनर्थकस्यैकदेशस्यानुकरणं प्रसिद्धमेव। अस्तु वा आसीदिति तान्तस्यानुकरणं, ततः, "अनुकरणं चानितिपरम्" इति निपातत्वादव्ययत्वे 'अव्ययानां भमात्रे' इति टिलोपः। प्रकृतमनुसरामः।

---

सिद्धे इति। **ष्यञीत्यर्थः**। इगन्तत्वादणपीति। **इदं चात्र वेत्यनुवर्त्तयतां मते**

सर्ववेदा इति । "पूर्वकालैक" इति समासः । चतुर्वेद इति ।
र्थे द्विगुः । अणो लुक् । चतुर्विद्येति । "विद्यालक्षणसूत्रान्तात्"
क् । तस्य लुक् ।

सङ्घातग्रहणमिति । वर्णग्रहणे तु अकारस्य "यस्य" इति लोपे
पूर्वविधौ स्थानिवद्भावादयादेशः स्यादिति भावः ।

ननु सङ्घातग्रहणे ऽपि "अलोन्त्यस्य" इति कुतो नेति चेत् ? आर-
न्थ्यात् 'नानर्थकेऽलोन्त्यविधिः' इति निषेधाद्वा ।

"कपिज्ञात्योः" । इह कपिज्ञातिशब्दौ द्वौ, अर्थावपि द्वौ, तयोर्य-
ङ्यं नेष्यते । एवं "पत्यन्तपुरोहितादिभ्यः" "हायनान्तयुवादिभ्यः"
द्रमनोज्ञादिभ्यः" इत्यत्रापि बोद्धव्यम्। ब्राह्मणादित्वादिति । यद्य-
ह्मणादिषु राजन्शब्दः केवलः पठ्यते तथाऽप्ययमेव 'असे'इति प्रतिषेधो
ाति 'अस्त्यत्र राजशब्देन तदन्तविधिः' इति । एवं च ब्राह्मणादिपाठस्य
से चरितार्थत्वादसमासे विशेषविहितोऽयमेव भवति । अत एव अवेष्ट्य-
णे 'राज्ञः कर्म राज्यं ब्राह्मणादित्वात् ष्यञ्'इति शाबरभाष्यं भट्टपादै-
तम् ।

केचित्तु भाष्यं समर्थयमाना इत्थमाहुः—ब्राह्मणादेराकृतिगणत्वादेव
तात् ष्यञि सिद्धे राजन्शब्दस्य तत्र पाठो यका सह समावेशार्थ इति ।
व हरदत्तमाधवाभ्यामेकीयमतत्वेनोपनिबद्धम् ।

प्राणभृज्जाति" ॥ प्राणिजातीत्येव सुवचम् । प्राणभृदिति किम्?
त्वम् । जातीति किम्? देवदत्तत्वम् ।

---

नात्र समाधाने ऽनास्था सूचिता । तद्बीजन्तु "अनुकरणं चानिति" इत्य-
कृत्स्नविषयत्वसिद्धान्त इति बोध्यम् । सर्ववेदा इति । प्रतीकपाठः ।
एकीयमतत्वेनेति । अत्रारुचिस्तु बहूनां पाठस्यैवं वैयर्थ्यमापततीति ।
सुवचमिति । प्राणसंबन्ध्यर्थकस्य प्राणकर्तृत्वार्थकस्य च न पर्यायत्वं
ठे तु न विशेष इत्यन्यदिति भावः । देवदत्तत्वमिति । पारिभाषिकजा(१)ति-

---

(१) पारिभाषिकजातित्वस्येति । अत्र प्राञ्चः—भिन्नेष्वभिन्नाभिधानप्रत्यय-
मित्तं जातिः । अभिधीयते अनेन इत्यभिधानम् । प्रत्ययः प्रतीतिः अभिधानं च प्रत्ययश्च
भिधानप्रत्ययौ तयोर्निमित्तं हेतुः । एवं च भिन्नेषु पदार्थेषु अभिन्नाभिधाननिमित्तं जातिः ।

**औद्गात्रमिति।** उद्गात्रादिषु ये ऋत्विग्वचनास्तेभ्यो "होत्राभ्यश्छः" s प्राप्ते ऽञ् विधीयते। सुष्टुदुष्टुशब्दाभ्यां गुणवचने ष्यञि, वधूश- ान्तलक्षणे ऽणि, शेषेभ्यस्त्वतलोः प्राप्तयोः।

**श्रोत्रियस्येति।** "श्रोत्रियश्छन्दोऽधीते" इति छान्दसः श्रोत्रभा- प्रत्यय इति यदा व्याख्यानम्, तदेह 'घलोप' इति यथाश्रुतम्। यदा क्यार्थे पदवचनम्' इति पक्षः, तदा घशब्देन इय इति रूपं लभ्यते। ु 'यलोपश्च' इति पाठः। तत्र येति सङ्घातग्रहणं द्रष्टव्यम्।

**'इगन्ताच्च"** ॥ लघुः पूर्वोऽवयवो यस्येति प्रातिपदिकविशेषणम्।

---

**तत्राभावादिति भावः।**

ातग्रहणमिति। **अन्यथा "यस्य"इत्यकारलोपस्यासिद्धत्वात्स्थानिव-**

---

त्यर्थः। नित्यत्वोक्त्या घटस्य समवायेनानेककपालवृत्तित्वेऽपि न जातित्वम्। जातीयान्यरहितत्वम्। तच्च स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्य स्व- करणाभावप्रतियोगित्व, स्वावृत्तिजात्यभावत्व एतच्चतुष्टयसम्बन्धेन स्वविशिष्ट य- ामानाधिकरण्याभावरूपम्। यज्जातित्वेन विवक्ष्यते तत्स्वपदेन ग्राह्यम्। अनेन विशे- गाकाशसंयोगादेर्न जातित्वम्। स्वसामानाधिकरण्यादिपूर्वोक्तचतुष्टयसम्बन्धेन दिगा- गविशिष्टो यो दिक्कालसंयोगः तत्सामानाधिकरण्यस्यैव दिगाकाशसंयोगे सत्त्वेन तद- तजातीयद्वितीयरहितस्य तत्रासत्वात्। प्रथमसम्बन्धानुपादाने पटादिगततद्व्यक्ति- ादिवैशिष्ट्यात् तत्सामानाधिकरण्यात् घटत्वादिजातावव्याप्तिः। द्वितीयसम्बन्धानु- पटादिगततद्व्यक्तित्वे घटादिवैशिष्टत्वात् पूर्ववदव्याप्तिः। तृतीयसम्बन्धानुपादाने ौ घटादिवैशिष्ट्याद् तत्सामानाधिकरण्यात् घटत्वादौ अव्याप्तिः। चतुर्थानुपा- वीत्ववैशिष्ट्यस्य पार्थिवपरमाण्वाकाशसंयोगे सत्वात् तत्समानाधिकरण्यात् पृथिवी- प्तिः। संयोगस्याव्याप्यावृत्तित्वेन तृतीयसम्बन्धस्यापि सुवचत्वात्। पृथिवीत्वावृत्ति- जातेः तत्र सत्वेन चतुर्थसम्बन्धाभावान्न चतुष्टयसम्बन्धेन स्वविशिष्टधर्मसामाधिकर- वीत्वे इति लक्षणसमन्वयो बोध्यः।

प्रययः शङ्खादिषु सर्वत्र शुक्लः इति समानप्रतीत्या समानशब्दप्रयोगेण तेषामपि वत् नित्यत्वमेकत्वं च सिध्यति। अतस्तत्रातिव्याप्तिवारणयतृतीयलक्षणमाह—जनने- ि या सा जातिः। इदमपि वुत्वत्यादावव्याप्तमिति प्राचीनमतखण्डयितुम् नव्याः भाष्योक्तं लक्षणम्।

पूर्वत्वं च सन्निधानादिगवधिकमेव । इगन्तात्किम् ? घटत्वम् । लघुपूर्वात्किम् ? पाण्डुत्वम् । **कथं काव्यमिति** । यद्यपि कुधातोः "ओरावश्यके" इति ण्यति काव्यमिति सुसाधम् । तथाऽपि कवेः कर्मेत्यर्थे काविमिति स्यादिति प्रश्नः ।

**आभिधानीयकमिति** । अभिधेयस्य भावः कर्म वेत्यर्थः । **सहायाद्वेति** । सूत्रेण नित्ये प्राप्ते विकल्पार्थं वचनम् ।

"**गोत्रचरणात्**" ॥ अपत्याधिकारादन्यत्र लौकिकं गोत्रम् । तेनापत्यप्रत्ययान्तेभ्य इत्यर्थः । प्रवराध्याये पठितेभ्य इत्यपरे । 'गोत्रं च चरणैः सह' इति जातित्वात् "प्राणभृज्जाति" इत्यञि प्राप्ते वचनम् । **श्लाघेत्यादि** । श्लाघादिषु विषयभूतेष्वित्यर्थः । **प्राप्त इति** । इणः प्राप्त्यर्थत्वात् । **अवगतवान् वेति** । अवपूर्वस्येणो ज्ञाने प्रसिद्धत्वात् । **गार्गिकयेति** । "आपत्यस्य" इति यलोपः ।

"**होत्राभ्यश्छः**" ॥ **होत्राशब्द इति** । जुहोतेस्त्रन् ।

"**ब्रह्मणस्त्वः**" ॥ **नेति वाच्य इति** । छप्रत्यये प्रतिषिद्धे "तस्य भावस्त्वतलौ" इत्येव त्वः सिद्धः । विभक्तेरनुच्चारणात् लाघवं चेति भावः । **ब्राह्मणेति** । अनेन 'होत्राभ्य' इत्यनुवृत्तेः फलं दर्शितम् ।

## नञ्स्नञोरधिकारः समाप्तः ।

---

त्वाच्चेकारान्तस्य भत्वाभावेन "यस्य" इति लोपाप्राप्ताविकारस्य यणेव स्यादिति भावः ।

इगवधिकमेवेति । तेन कृशानुत्वमित्यत्र न ।

इत्यपरे इति । इदमेव युक्तम् । विषयभूतेष्विति । श्लाघत इत्यादिपदान्तरोपादानेन तद्विषयोऽस्त्येवेति भावः ।

विभक्तेरिति । त्वशब्दोत्तराया इत्यर्थः ।

नञ्स्नञोरधिकारः समाप्तः ।

## अथ तद्धितेषु मत्वर्थीयाः ।

**"धान्यानां भवने"** ।। भवनापेक्षया कर्त्तरि षष्ठीयम् । भवतिरिहोत्पत्तिवचनः ।

**"व्रीहिशाल्योः"** ।। निर्देशादेव षष्ठी समर्थविभक्तिः । सा च भवनापेक्षया कर्त्तरीत्युक्तमेव । अलौकिके प्रक्रियावाक्ये तु तद्धितविधावनुवादसामर्थ्यादेवेति बोद्धव्यम् ।

**"यवयवक"** ।। अत्र प्रत्ययार्थसामर्थ्याल्लभ्या षष्ठी समर्थविभक्तिः ।

**"विभाषा"** ।। खञि प्राप्ते वचनम् । न चोमाभङ्गयोर्धान्यत्वे विप्रतिपत्तव्यम् "शाणसप्तदशानि धान्यानि" इति स्मरणात् । तत्र चोमाभङ्गयोरपि पाठादिति भाष्ये स्थितम् ।

**"सर्वचर्मणः"** ।। अत्र तृतीया समर्थविभक्तिः सामर्थ्यात् । कृत इतीह प्रत्ययार्थः । तत्र चर्मणः करणत्वमेवोचितम् ।

**"यथामुख"** ।। दृश्यतेऽस्मिन्निति दर्शन आदर्शादिः । अधिकरणे ल्युट् । ननु असादृश्य इति प्रतिषेधात्कथं समासस्तत्राह—**निपातनादिति** । एतच्च वृत्तिग्रन्थमनुसृत्योक्तम् । भट्टिकाव्ये तु पदार्थानतिवृत्तौ यथाशब्द आश्रितः । तथा च मायामृगं प्रक्रम्योक्तम्—

"यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्"

---

### अथ तद्धितेषु मत्वर्थीयाः ।

धान्यानाम् । इयम् । **धान्यानामित्येषा** ।

निर्देशादेवेति । "व्रीहिशाल्योः" इति "धान्यानाम्" इति च षष्ठीनिर्देशादेवेत्यर्थः । नन्वलौकिके भवनशब्दयोगाभावेन कृद्योगलक्षणषष्ठ्या दुर्लभत्वेन कथं सा समर्थविभक्तिरत आह—अलौकिक इति । न चालौकिके तृतीयेति युक्तम् । प्रत्ययवाच्यभवनस्याक्रियत्वेन तस्या अप्रवृत्तेः । कर्तुरेव श-

इति । **'यथामुखं दर्शन' इति** । अव्ययीभावस्यापि यथामुखशब्दस्योन्मत्तगङ्गादिवत्सत्त्ववचनत्वात् कर्मशक्तियोगे सति कृद्योगलक्षणा षष्ठी, "नाव्ययीभावात्" इति अम् ।

**सर्वस्येति** । 'संमुखस्य' इति तु नोक्तम्, प्रत्ययसंनियोगेनान्त्यलोपनिपातनात् । संशब्दस्तु समशब्दस्यार्थे प्रायेण न दृश्यते । 'संमुखो भव' इत्यत्र 'अभिमुखो भव' इत्यर्थप्रतीतेः । तत्र च खप्रत्ययस्यानिष्टत्वात् । कथं तर्हि—

"संयुगे संमुखीनं तमुद्यद्गदं प्रसहेत कः" ।

इति भट्टिः ? अभिमुखावस्थानात्साधर्म्यादिति हरदत्तः । **सर्वपथीन इति** । "पूर्वकालैक" इति समासः । "ऋक्पूः" इति समासान्तः । तस्य पथ्यन्तग्रहणेन ग्रहणात् खः ।

**"अनुपदसर्वा"** । **बद्धाभक्षयतिनेयेष्विति** । निपातनात्तिङन्तस्य द्वन्द्वः । **अनुपदमिति** । "यस्य चायाम" इति यथार्थे हि 'अव्ययम्' इति वा ऽव्ययीभाव इत्यर्थः । **स्थलविशेष इति** । गतिविशेष इति व्याख्यान्तरम् । नयतेः प्रधाने कर्मणि यत् । अप्रधाने द्वितीया । अत्रेयं द्यूतशास्त्रमर्यादा—चतस्रो वीथयः प्रत्येकं द्वादशकोष्ठोपेताः, शारास्तु त्रिंशत् । ते च एकैकेन कितवेन पञ्चदश स्ववामपार्श्वस्थप्रथमकोष्ठपर्यन्तं प्रदक्षिणप्रसव्य-

---

ब्दः कर्मव्युत्पन्नोऽपीति भावः । कर्मशक्तियोगे सतीति । इदं वृत्त्यभिमतार्थके । प्रत्ययसंनियोगेनेति । अत एव भाष्ये 'समभुखस्य दर्शन' इति विग्रहो दर्शितः । साधर्म्यादिति । संमुखीनादर्शादिनेति शेषः । हरदत्त इति । कैयटोऽप्येवम् ।

ग्रहणेन ग्रहणादिति । समासान्तानां समासावयवत्वादिति भावः ।

यस्य चेति । पादसंबन्धिदैर्घ्यसदृशदैर्घ्यवतीत्यर्थः ।

यथार्थे इति । पदेन सदृशीत्यर्थोऽत्र । स्थलविशेष इति । अयानयपदस्य गतिविशेषे रूढस्य स्थलविशेषे लक्षणेति एतद्भावः । युक्तं चैतदेव । अयः

गतिभ्यां नेयाः सर्वेऽप्ययानयीनाः ।

ससहायस्य शारस्य परैर्नाक्रम्यते पदम् ।

असहायस्तु शारेण परकीयेण बाध्यते ।

एष बहुसंमतोऽर्थः ।

यत्तु कैयटेन द्वयोः पर्युदासेन त्रयोदशानामेवायानयीनतेत्याशं
तान्तरं केचित्त्वित्यादिनोक्तम् , तन्मते द्वे एव वीथी; शेषं प्राग्वत्
क्षिणप्रसव्यते च एकैककितवं प्रति विवक्षिते न तु कंचित्प्रति किं
ते च पङ्क्तिचरमकोष्ठस्थाभ्यां द्वाभ्यामितरेषामेवेति बोध्यम्। **शार**
शृणन्त्यनेन द्यूतकाराः परस्परमिति शारः । द्यूतसाधनविशेषः ।
कादू घञ् ।

**"परोवर"** ॥ **अवरस्येति** । आदेरिति शेषः । उ
"आद्गुणः"। **अवारपारङ्गामीति**। 'गमेरिनिः' 'आङि णिच्च'
हुलवचनात्केवलादपि णिनिः । 'भविष्यति गम्यादयः' इति भवि
लता । न्यासकारस्तु 'आवश्यके णिनिः सोऽपि भविष्यत्येव' इत्याह

**"अद्यश्वीना"** ॥ अविभक्तिको निर्देशो न तु स्त्रीलिङ्गनि
यम् । अद्यश्वीनो गोसमूहः । अद्यश्वीनं गोमण्डलमित्यादावपीष्टर
**आसन्नामित्यर्थ इति** । "अवाच्चालम्बना" इति सूत्रेण आवि
म्भेः षत्वविधानादवष्टब्धशब्द आसन्नपर इत्यर्थः । अद्य वा श्वो वे
समासोऽपि निपातनादेव ।

---

गतिभ्यां नेया इति । **सर्वत्र ससहायपदे स्थापनपूर्वकमिति शेषः** । ते
**हायपदरूपमयानयं स्थानविशेषं प्राप्यैव फलकशिरः प्राप्यन्त इत्य**
**ना इत्युच्यन्त इत्यर्थः** । तदाह—ससहायस्येति । **शेषं द्वादशकोष्ठोपेत**

**केचिन्मते द्वयोः पर्युदासे बीजमाह**—प्रदक्षिणप्रसव्यते चेत्यादि
**एकैकं कितवं प्रति दक्षिणप्रसव्यते च । अत्र मते गतिविशेष एवा**

गोशब्दो गोः प्रतिदाने लक्षणया वर्त्तते इति दर्शयति–**प्रत्यर्पणापेक्षामिति । आगवीन इति ।** "आङ्मर्यादाभिविध्योः" इत्यव्ययीभावे उपसर्जनह्रस्वत्वे च कृते खप्रत्ययः । "ओर्गुणः" ।

**गोः पश्चादिति** । पश्चादर्थे ऽव्ययीभावः । **पश्चात्समिति** । क्रियाविशेषणम् । अत्र हरदत्तः–द्वितीयान्तादिह प्रत्ययः । अनुग्विरत्यस्य क्रियाविशेषणत्वात् । न चालङ्गामीत्यस्य "सुप्यजातौ" इति णिनिप्रत्ययान्ततया कृद्योगलक्षणा षष्ठी स्यादिति वाच्यम , क्रियाविशेषणात्तदप्रवृत्तेः । शोभनं पाचक इत्यादौ तथा दर्शनादित्याह । कृत्प्रकृत्यर्थं प्रति हि कर्मत्वम् । तच्च न भावनामात्रं प्रति, तत्कर्मणो विक्लित्त्यादेः प्रातिपदिकार्थत्वाभावात् सङ्कोचे मानाभावाच्च । किंतु विक्लित्त्यनुकूलव्यापाररूपं पूर्णं प्रकृत्यर्थं प्रति कर्मणस्तण्डुलादेरेव षष्ठीति तस्याशयः ।

अत्रेदं वक्तव्यम्–पश्चादर्थे ऽव्ययीभावोऽयमिति निर्विवादम् । पश्चादिति चास्तात्यर्थे निपातितम् । तच्च यद्यपि विभक्तित्रयसाधारणं, तथापीह योग्यताबलात्सप्तम्यर्थवृत्ति । अतस्तस्य कर्मत्वायोगात् प्रथमान्तादेवेह प्रत्यय उचितः । कृद्योगलक्षणषष्ठीशङ्काप्यत एव नेति ।

---

एवं च "अकेनोः" इति षष्ठीनिषेधाद् द्वितीया । तत्र भविष्यदधिकारविहितणिनेर्ग्रहणे तु न मानम् । अत एव 'अंशं हारी' इति निर्देशः सङ्गच्छत इति तद्भावः ।

तत्कर्मण इति । भावनामात्रकर्मण इत्यर्थः । संकोचे । प्रकृत्यर्थैकदेशकर्मणो ग्रहणे । तस्याशय इति । यदि तु एवं द्वितीयाऽपि न स्यात्तद्विधावपि संपूर्णप्रकृत्यर्थं कर्मणो ग्रहणापत्तेरित्युच्यते तदा षष्ठीविधौ कर्तृसाहचर्येण धात्वर्थं प्रति भेदेनान्वयि यत्कर्म तद्गृह्यते क्रियाविशेषणस्तोकादीनां तु नैवंविधत्वमिति न ततः षष्ठी । द्वितीया तु भवत्येवाऽत्रैव तद्विधायके साहचर्याभावात् इति तदाशयो बोध्यः ।

"**अभ्यमित्रात्**" ॥ "लक्षणेनाभिप्रती" इति समासः । क्रि
शेषणत्वात् द्वितीया समर्थविभक्तिः ।

"**गोष्ठात्खञ्**" ॥ गावस्तिष्ठन्त्यस्मिन्निति गोष्ठः । "घञर्थे क
नम्" इत्यधिकरणे कः । "अम्बाम्बगोभूमि" इति षत्वम् ।

**एकाहेनेति** । नन्विह "प्रहवृदनिश्चिगमश्च" इत्यपं बाधित्वा
रिमाणाख्यायां सर्वेभ्यः" इति घञ् प्राप्नोति । अस्ति चात्र परिमाणा
एकाहेनेति परिच्छेदावगमात् ? सत्यम् । अस्मादेव निपातनादप् ।
स्येति कर्त्तरि षष्ठी ।

"**शालीनकौपीने**" ॥ रूढिशब्दावेतौ ।अवयवार्थे तु न
भिनिवेष्टव्यम् । **शालाप्रवेशमिति** । अप्रागल्भ्यादन्यत्र गन्तुम
शालामेव प्रवेष्टुमर्हतीत्यर्थः । **कूपपतनमिति** । यदकार्यं तत्प्रच्छ
यत्वात्कूपावतरणमर्हतीत्यर्थः ।**तदाच्छादनमिति** । वासःखण्ड इ
अपर आह-अकार्यशब्दे करोतिः क्रियासामान्यवचनस्तेन लज्जाहे
द्रष्टव्यत्वात् पुरुषलिङ्गं कौपीनम् । अस्पृश्यत्वात्तदाच्छादनमिति ।

"**व्रातेन जीवति**" ॥ व्रातशब्दो यद्यपि सङ्घातवाची तथा
त्र्यभाष्यादिपर्यालोचनया विवक्षितमर्थमाह-**शरीरायासेनेति**
वहनादिनेत्यर्थः ।

**सप्तभिः पदैरिति** । तद्धितार्थे द्विगुः । अवाप्यत इत्यर्थे

"**हैयङ्गवीनम्**" ॥ **दोहः क्षीरमिति** । गोर्दोह इति
मासः । ह्यस् शब्दस्य तेन सह "सुप्सुपा" इति समासः । ततो
ऽनुदात्तलक्षणस्याणोऽपवादः खञ् । अत्र ह्यस्शब्देन कालप्रत्यासत्ति

---

क्रियाविशेषणत्वादिति । फलद्वारा क्रियान्वयित्वादिति भावः । गाम

ता। **नवनीतमिति**। यद्यपि वृत्तौ भाष्यादौ च घृतमित्युक्तम्। अमरेणापि—

तत्तु हैयंगवीनं यद् ह्योगोदोहोद्भवं घृतम्।

इत्युक्तम्, तथाऽपि नवनीतमेव तत्र विवक्षितमिति हरदत्तादयः।

**"तस्य पाक"**। पाकः परिणामः। मूलमुपक्रमः। जाहचो जकारस्य नेत्त्वं प्रयोजनाभावात्। **पक्षतिरिति**। प्रतिपत्। पाक्षिणां पक्षमूलं च।

**"तेन वित्तः"**॥ वित्तः प्रतीतः। "वित्तो भोगप्रत्यययोः" इति निपातनात्साधुत्वम्। **विद्याचुञ्चुरिति**। उकारद्वयगर्भोऽयं प्रत्ययः।

**"विनञ्भ्याम्"**। नाञो ञकारो वृद्ध्यर्थः स्वरार्थश्च।

**"संप्रोदश्च"**॥ चाद्वेः। क्रियाविशिष्टसाधनवाचकात्स्वार्थे प्रत्ययः। रूढिशब्दाश्चैते। **"अलाबूतिला"इत्यादि**। भङ्गाभ्य इति पाठः। भङ्गाशब्दश्चाबन्तः। विकारप्रत्ययापवादोऽयम्। रजसो विकारत्वात्। **अलाबूकटमिति**। "ओरञ्" "मयड्वैतयोः" इति मयड्वेह प्राप्तः। तिलोमाशब्दाभ्यां घृतादित्वादन्तोदात्ताभ्याम् "अनुदात्तादेश्च" इत्यञ् मयट् च प्राप्तः। "उमोर्णयोर्वा" इति वुञ्च। 'असंज्ञायां तिलयवाभ्याम्' इति मयट् चेति हरदत्तः। तत्र तिलशब्दस्य घृतादित्वकल्पने बीजं चिन्त्यम्। "तृणधान्यानां च द्व्यषाम्" इति फिट्सूत्रेणाद्युदात्तस्यैव न्याय्यत्वाद्। तथैव तद्वृत्तावुदाहृतत्वात्। 'तिलाश्च मे' इत्यत्र तथैव वेदे पाठाच्चेति दिक्।

"भङ्गायास्तृणधान्यानां च द्व्यषाम्" इत्याद्युदात्तत्वादणमयट् च प्राप्तः।

**गवां स्थानमिति**। 'तस्येदम्' इत्यर्थे 'सर्वत्र गोरजादिप्रसङ्गे' इति यत्प्राप्तः। **सङ्घात इति**। अप्रसृतावयवः समूहः सङ्घातः। प्रसृतावयवस्तु विस्तारः। कटच्पटचौ द्वावपि सामूहिकानामपवादौ।

**अवटीटमिति** । नासिकासाधने नमने वर्त्तमानात्स्वा 'क्लिन्नस्य'। अत्र वदन्ति-अस्येति न वक्तव्यं क्लिन्ने चक्षु रले, पुरुषे तु मत्वर्थेऽच् । अर्शआदिषु "स्वाङ्गाद्धीनात्"इति अमरोऽप्याह—

स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्ने ऽक्ष्णि चाप्यमी

इति । वार्तिकमते तु पुरुषे व्युत्पादितानां तदवयवे लक्षण

"**प्रमाणे द्वयसच्**" ॥ प्रमाणे विद्यमानात्प्रथमान्तात् 'अ दिष्टे प्रमेयेऽर्थे त्रयः प्रत्ययाः स्युः । प्रमाणमिह परिच्छेदकमात्रं द्वयसजूद्घ्नचौ तु विशेषे स्मर्येते । तथा च-भाष्यम्

"प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम" ।

इति । ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानमूर्वादि । ते नादौ न भवति । अत एव द्विकाण्डा क्षेत्रभक्तिरिति । अत्र द्व ति प्राचां ग्रन्थः प्रामादिक इत्यवोचाम ।

'**प्रमाणे ल' इति** । लुक एषा पूर्वाचार्यसंज्ञा । प्रमाण प्रसिद्धा दिष्टिहस्तादयः ततः परस्यैवायं लुक् । **शमो दि स्तिरिति** । एषु मात्रचो लुक् । इतरयोरसम्भवात् । शमादीन त्वात् । **द्विगोर्नित्यमिति** । द्विगोरप्रमाणत्वात्तदन्ताद्विद्धयभा प्राप्तो लुग् विधीयते ।

---

वर्त्तमानादिति । **अवशब्दादिति शेषः** । अर्शआदिष्विति । **स न्यतरस्यांग्रहणेन प्राप्तोऽपि मतुबनभिधानान्नेति सर्वं भ स्पष्टम्** ।

प्रमाणे इति । **तच्च प्रकृतिविशेषणमर्थद्वारेति भावः** । परिच्छे **नत्वायामपरिच्छेदकमेव व्याख्यानादिति भावः । कैयटोऽपि**

ननु नेह विकल्पः प्रकृतः, तत्किं नित्यग्रहणेन ? तत्राहुः—अनुपदं
माणः संशये मात्रच् शममात्रमित्यादौ यथा न लुप्यते 'प्रमाणे लः'
य पूर्वविधिविषयत्वात् । एवं द्विगोरपि न लुप्येत । इष्यते तु लुक् ।
शमौ स्यातां न वा द्विशम इति । तथा चाधिकसंग्रहार्थं नित्यग्रहणमिति ॥
**"पुरुषहस्तिभ्यामण् च"** ॥ "इनण्यनपत्ये" इति प्रकृतिभावः ।
तनम् । अत्र काशिका 'द्विगोर्नित्यं लुक् द्विपुरुषमुदकम्' इत्यादि ।
यद्यपि "प्रमाणे लः, द्विगोर्नित्यम्" इत्यस्य नायमनुवादः पुरुषहस्ति-
शमादिवत्प्रमाणशब्दत्वेनाप्रसिद्धत्वात् । अत एव हि पुरुषद्वयसमित्यादौ
णे लः' इति लुग् न भवति तथाऽप्यपूर्वोऽत्र लुग्विधीयते इति हरद-
एतच्चासंगतं मणीवादीनां प्रतिषेध इत्यत्र मुनित्रयानुक्तत्वादप्रामा-
क्तवद्भिर्न्यायसाम्यादिहापि तथैव वक्तुमुचितत्वात् । विधीयते इत्यस्या-
यते इत्यर्थः ।
अयं भावः—"द्विगोः" "तद्धितलुकि" इत्यनुवर्तमाने "पुरुषात्प्रमाणे
रस्याम्" इति ङीब्विकल्प्यते । तदेव लुकमनुमापयतीति अनुमीयमा-
लुग् द्वयसजादीनां न त्वणः । 'ग्रहणवता प्रातिपदिकेन' तदन्तविधिप्र-

---

**ामर्थ्यादेवप्रमाणान्तद्विगोर्मात्रच्।** नेहेति। **"समर्थानाम्" इत्यादेर-
ेन तत्संबद्धमहाविभाषाया अप्यसंबन्ध इति भावः।** तथा चाधिकेति।
**ामर्थ्यादेव प्रमाणान्तद्विगोः संशये मात्रच्। नतु परिमाणाद्यन्तात्
ः। तेन पञ्च कुडवाः स्युर्नवेति संशये वाक्यमेवेति दिक्।**
माणशब्दत्वेनाप्रसिद्धत्वादिति। **कदाऽप्यायामापरिच्छेदकत्वादित्यर्थः।
ात्प्रमाण" इति सूत्रे प्रमाणशब्दस्तु परिच्छेदकमात्रपर इति भावः।**
यतीति। **द्विहस्तीति (१)तु चिन्त्यमेवेति भावः। न च द्वौ पुरुषौ प्रमा-
ा इत्यर्थे "तदस्य परिमाणम्" इति ठकप्रत्ययो वा "अध्यर्धपूर्व" इति**

तिषेधाद् द्विगोरणः प्रात्ययभावात् ।

"यत्तदेतेभ्यः" ॥ यावानिति । "आ सर्वनाम्नः" इ
ननु प्रमाण इत्येवानुवर्त्यतां किं परिमाणग्रहणेन इति चेत् ? अत्र व

डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते ।

मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः ॥ इति ।

अस्यार्थः—इह शास्त्रे वतुपं विधाय तस्मिन्परे आत्वं विहितम्
चार्यास्तु डावतुं विदधिरे, तद्रीत्या निर्देशोऽयम्—डावताविति ।
इति विशेषस्तस्य भावो वैशेष्यं तस्मादर्थभेदादित्यर्थः । प्रमाणप
भेदस्य प्रागेवोक्तत्वादिति भावः । स्यादेतत् । एवं सति यावानध्व
रज्जुरित्यादि न स्यात् । 'आयामस्तु प्रमाणं स्यात्' इत्युक्तेः । उपमान
तीति चेत् ? तर्हि प्रमाणग्रहणमेवानुवर्त्यताम्। उक्तप्रयोगाश्च मुख्य
ये तु परिमाणे प्रयोगाः 'यावान् धान्यराशिः' इत्यादयस्त एवोपमाना
त्राह—मात्रादीति। विशेषविहितो हि वतुब् मात्रजादीन् बाधेत ते
त्रमित्यादि न स्यात् । परिमाणग्रहणे सति तु भिन्नोपाधिकत्वाद् ब
कभावो नेति भावः ।

---

लुकि शास्त्रस्य चारितार्थ्येन कथं तत्सामर्थ्याल्लुक्कल्पनं तत्र ।
णशब्देन परिच्छेदकमात्रमिति सिद्धान्त इति वाच्यम् ? "अतदि
इत्यत्र तद्धितस्य प्रमाणपदमुच्चार्य विहितस्यैव ग्रहणं प्रत्य
वृत्त्यनुसारेणानुमानमित्याशयादिति दिक् ।

ननु प्रमाण इत्येवेति । पूर्वसूत्रे प्रमाणग्रहणं परिच्छेदकमात्रपरं प्र
ादिसिद्ध्यर्थम । इदमपि यावानध्वा, यावती रज्जुः, यावज्जलम्',
रणैतावत्त्वे च" इति प्रयोगात् परिच्छेदकमात्र इष्यत इति भावः।
'किमर्थं परिमाण इत्युच्यते न प्रमाणमित्येव सिद्धम्' इत्युक्तम्
परिमाणयोरेकार्थत्वं मत्वा प्रश्न इति कैयटः ।

प्रागेवोक्तत्वादिति । एवं चेह परिमाणग्रहणं सर्वतो मानमात्र

नन्वेवमपि बाधः स्यादेव पूर्वसूत्रे प्रस्थमात्रमित्यादिसिद्धये प्रमाणग्रहणस्य परिच्छेदकमात्रपरतया व्याख्यातत्वेन वतुपो विशेषविहितत्वानपायात् । तस्मात् 'वतुप्च' इत्येव सूत्र्यताम् । माऽस्तु परिमाणग्रहः । अस्तु च 'प्रमाणे' इत्यर्थाधिकारः । एवं च 'यावती रज्जुः, यावान् धान्यराशिः, यावती बुद्धिः' इत्यादित्रिविधप्रयोगा अपि उपचारं विनैव निर्वहन्तीत्यपरमनुकूलमत आह— **भावः सिद्धश्चेति** । डावतोरिति पञ्चम्यन्तम् । अर्थभेदे सति वत्वन्तान्मात्रजादीनामुत्पत्तिः सिद्ध्यति । तत्परिमाणमस्य तावद्धान्यं राशीकृतम् । तावत्प्रमाणमस्य कुड्यादेस्तावन्मात्रम् । यावद्राशीकृतस्य धान्यादेर्दैर्घ्यं तावद्दैर्घ्यं कुड्यादेरपीत्यर्थः । एकविषयत्वे तु वतुपैव विशिष्टस्य प्रमेयस्योक्तत्वात्तदन्तान्मात्रजादयो न स्युः । यस्य हि तावत्प्रमाणं तस्य तदपि । एवं च तावच्छब्द एव प्रयुज्येत । अन्यथा मात्रजादिप्रत्ययमालाप्रसङ्गात् ।

**"किमिदंभ्यां वो घः"** ॥ **कियानिति** । "इदंकिमोरीश्की" । "यस्य" इति लोपः । **इयानिति** । प्रत्ययमात्रमिहावशिष्यते ।

---

ति । परिमाणग्रहणस्य सर्वतोमानपरत्वादिति भावः ।

नन्वत्र पक्षे मात्रादीति आदिग्रहणं व्यर्थम् ? पूर्वसूत्रे प्रमाणग्रहणेनायामग्रहणे 'प्रथमश्च' इत्यादिना द्वयसज्दघ्नचौ प्रमाणादय आकृष्योर्ध्वमाने विधीयते । एवं चायामार्थकप्रमाणग्रहणानुवृत्तावप्युपाधिभेदात् तद्बाधाप्रसक्तेः । न च प्रमाणशब्देनोन्मानस्यापि ग्रहणम् ? रूढित्यागे सर्वग्रहणापत्तेः । तदङ्गीकारे उन्मानस्य कथं ग्रहणमतो वार्त्तिकस्याद्यामवतरणिकां सोपस्कारामाह—नन्वेवमपीति । वतुप् चेति । चेन मात्राद्यनुकर्षः । प्रथमश्चेत्यादेर्व्यवस्थापकस्यात्रापि प्रवृत्त्या नाऽव्यवस्थेति भावः । यावती बुद्धिरिति पाठः । इदं चोन्मानम् । बुद्धेरूर्ध्वदेशाया अपि सत्त्वेनोन्मानत्वात् । त्रिविधेति । प्रमाणपरिमाणोन्मानेत्यर्थः । भावः सिद्धश्चेति । चेनार्थवैशेष्यमात्राद्यप्रतिघातयोः संग्रहः ।

न च चेतनमात्राद्यप्रतिघातः सिद्ध इति वाच्यम् ? सर्वतो मानोपाधा-

पठन्ति च–

उदितवति परस्मिन्प्रत्यये शास्त्रयोनौ
गतवति विलयं च प्राकृतेऽपि प्रपञ्चे ।
सपदि पदमुदीतं केवलः प्रत्ययो यत्
तदियदिति मिमीते को हृदा पण्डितोऽपि ॥

वैयाकरणानामौपनिषदानां च प्रक्रियामाश्रित्य प्रवृत्तो द्व्यर्थोऽयं

**"किमः संख्या"** ॥ संख्यायाः परिमाणं परिच्छेदस्तस्मि
यः प्रश्नस्तत्र वर्त्तमानात्किमोऽस्येति षष्ठ्यर्थे डतिः स्यात् । संख्य
किम् ? क्षेपे मा भूत् । कयमेषां दशानां संख्या ।

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥

इत्येवं संख्येयद्वारेणेह संख्यायाः कुत्सा बोद्धया ।

**"संख्याया अवयवे"** ॥ यं प्रत्यवयवत्वं सोऽवयवी प्र
'अस्य' इत्याधिकारात् । यथा द्व्यसजादिषु प्रमाणे प्रकृत्यर्थे प्रमेयत्वं
र्थस्तद्वत् ।

**"उभादुदात्तो नित्यम्"** ॥ इहान्तोदात्तत्वं चित्स्वरेणैव
सर्वोदात्तत्वं तु बाधितम् । "अनुदात्तं पदमेकवर्जम्" इति वचनात्
'हे उभये' इत्यत्रामन्त्रिताद्युदात्तत्वं बाधितुं वचनम् । पुरस्तादपवा

---

न कर्मधारयादित्येतन्मूलभूतगौरवेणानुत्पत्तेरित्यलम् ।

परस्मिन् प्रत्यये । प्रत्ययसंज्ञके । परस्मिन् ब्रह्मणि तद्विषये ज्ञ
प्रकृतिः प्रत्ययस्य प्रकृतिर्माया च तत्संबन्धिनि प्राकृते । यत्केवल
ब्रह्मरूपम् । पदसंज्ञं च । इयत् । परिच्छेद्यम् । इयदित्येतत् ।
जानाति । औपनिषदाः—वेदान्तिनः ।

रेणैव बाद्ध्यत्वात्तस्मादुदात्तवचनसामर्थ्यादादेरेवायम् । तथा च--प्र
। 'उभयं शृणु वत्वन' इति । तदेतदाह--स चेति ।

"**शदन्तविंशतेश्च**" ॥ प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति
नियमः स्यात् । तं वारयितुमन्तग्रहणम् । तेन एकात्रिंशं शतं एकच-
ामित्यादि । न चैवं गौः त्रिंशदधिका अस्मिन् गोशत इत्यादावति-
: । "संख्याया अवयवे तयप्" इत्यत्र संख्याग्रहणानुवृत्तेः । अन्तग्र-
विंशतिशब्दानन्तरं बोद्ध्यम् । शद्विंशत्यन्तादेरिति । एतेन एकविंशं श-
सिद्ध्यति । अन्यथा 'ग्रहणवता' तदन्तविधिप्रतिषेधादिह न स्यात् ।

"**तस्य पूरणे डट्**" ॥ तस्येत्येकत्वमविवक्षितं पूर्यते ऽनेनेति पूरणः ।

---

ध्यत्वादिति । **सति शिष्टत्वेन आद्युदात्तस्य बाधकत्वाच्चेत्यपि बोद्ध्यम्** ।
कात्रिंशमिति । **एकत्रिंशदादयः संख्याविशेषा एव न संख्यासमुदायरूपा**
ावः । **अत एव "नान्तात्" इति सूत्रे 'असंख्यादेः' इति चरितार्थम्** ।
त्यादिति । **विंशत्यंशे व्यपदेशिव(१)द्भाव इष्यते । "अचः परस्मिन्"
सूत्रे 'विंशं शतम्' इति भाष्योदाहरणात्** ।

---

(१) **विंशत्यंशे व्यपदेशिवद्भाव इष्यत इति** । सूत्रकारः स्वघटकावधिकपर-
स्वघटकावधिकपूर्वत्वाभाववत्वम्, एतदुभयसम्बधेन स्वविशिष्टत्वरूपान्तत्वम् । स्वघट-
पूर्वत्वम् स्वघटकावधिकपरत्वाभावत्वम् एतदुभयसम्बन्धेन स्वविशिष्टत्वरुपादित्वं
आभ्याम् इत्यादौ अकारादौ स्वघटकावधिकपरत्वाभावेन अकारान्ताङ्गाद्यभावेन
त्या दीर्घादिसिद्ध्यर्थम् "आद्यन्तवदेकस्मिन्" इति सूत्रं प्रणिनाय । तत्र वार्तिककारः
लक्षणयोः स्वघटकावधिकपूर्वत्वस्य स्वघटकावधिकपरत्वस्य च सम्बन्धस्य प्रयो-
ेन तयोस्तत्रानुपादानेन अभ्यामित्वत्राकरान्तत्वस्य सुवचत्वेन सूत्रं निष्फलम्
अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धम् इति । भाष्यकारस्तु--विषयितासम्बन्धेन
रणवृत्यभावप्रतियोगितानवच्छेदकत्वम्, विषयितासम्बन्धेन स्वाभाववद्वृत्तिताव-
वमेतदुभयसम्बन्धेन समुदायविशिष्टधर्मवत्वम् घटकत्वम् । विषयितासम्बन्धेन स्वा-

ण्यन्तात्करणे ल्युट्। **एकादशानामिति** । उद्भूतावयवभेदः स
प्रकृत्यर्थः । अवयवः प्रत्ययार्थः । इह यस्मात्संख्यावाचिनः प्रत्ययस्त
वृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्ययः। यथा–"अतिशायने "क्
इत्यादिषु प्रवृत्तिनिमित्तस्यैवातिशयादिकं गृह्यतेऽन्तरङ्गत्वात् । तथे
तथा च–तत्र 'याप्यो वैयाकरणः' इति विग्रहः । न तु याप्यं वैयाक
मिति तथेहापीति भावः । एवं च व्युत्क्रमेणाध्यायेषु गण्यमानेषु "
पदविधिः" इत्यध्यायो यदा चरमे गण्यते तदा सोऽप्यष्टमो भवत्येव

"**नान्तादसंख्यादेर्मट्**"॥ **डट इति**। "डट्"इति प्रथमा
नुवृत्तस्य "नान्तात्"इति पञ्चम्या षष्ठी कल्प्यत इति भावः । यद्यपी
प्रत्ययत्वेऽपि न क्षतिः । तथाऽप्युत्तरत्र आगमत्वमेव द्रष्टव्यम्। अनु
यथा स्यात्। प्रत्ययत्वे हि आद्युदात्तः स्यात्। तथा चैकरूप्येणैव
व्याख्यानमुचितम्।

"**षट्केति**"। इह षष्ठीनिर्देशबलात् षडादीनामागमित्वम्
चानुवृत्तो डट् अर्थात्सप्तम्या विपरिणम्यते। तदाह–**डटीति** । 
थुट् तु न कृतः षष्ठे जश्त्वापत्तेः। चतुर्थे रेफस्य विसर्गापत्तेश्च।
पूर्वसूत्रेऽपि मुगेवास्त्विति वाच्यम्? पञ्चमः सप्तम इत्यादौ नलोपाभाव

**आद्यक्षरेति**। अच्सहितं व्यञ्जनमक्षरं आदेर्व्यञ्जनस्येत्य
आदेरच इति व्याख्याने तु द्विर्वचनन्यायेन तकारस्यापि लोपः स
हरदत्तः। विशेषणविशेष्यभावव्यत्यासेन व्याख्याने प्रमाणं तु "द्वि
तीयचतुर्थे" इति सूत्रे 'तुर्याणि' इति निर्देशो बोद्ध्यः।

---

अवयवः प्रत्ययार्थ इति। **वृक्षे शाखेतिवदिति भावः** । प्रवृत्तिनिमित्त
**तत्सहचरितधर्मस्याप्युपलक्षणम्**। तथेहापीति। **तेनैकादशानां** 

"**द्वैस्तीयः**"॥ **डटोऽपवाद इति**। डटो द्विशब्दस्य वा ऽऽदेश-स्तु न भवति 'द्वितीया' इति निर्देशात् ।

**तृतीय इति**। रेफस्य ऋकारः संप्रसारणम् । "हलः" इति दीर्घ-स्तु न । अण इत्यनुवृत्तेः । 'त्रेस्तृ च' इति नोक्तम् । प्रत्ययो मा विज्ञायीति ।

"**विंशत्यादिभ्यः**" ॥ इह प्रत्यासत्त्या "पङ्क्त्यादि" सूत्रे नि-पातिता विंशत्यादयो गृह्यन्ते, न लोकप्रसिद्धाः । विप्रकृष्टत्वात् । इति भा-ष्यमतम् । लौकिकानां ग्रहणं तु वृत्तिमतम् । **एकविंशतितम इति**। यद्यपि भाष्यमते 'ग्रहणवता प्रातिपदिकेन' तदन्तविधिर्दुर्लभस्तथाऽपि "ष-ष्ठ्यादेश्चासंख्यादेः" इति सूत्रे संख्यादिपर्युदासो ज्ञापयति इह प्रकरणे त-दन्तानामपि ग्रहणमिति । एवं स्थिते एकान्नविंशतेः पूरण एकान्नविंशतितम इत्यपि सिद्ध्यति, लौकिकानां ग्रहणमिति वृत्तिमते तु नैतत्सिद्ध्येत् । विंश-तेः प्रागभावित्वादस्याः संख्यायाः । स्पष्टं चेदं कैयटहरदत्तग्रन्थयोः ।

यत्तु प्राचीनप्रक्रियां व्याचक्षाणैरुक्तं विंशत्यादयोऽत्र लौकिका गृह्यन्ते न पङ्क्त्यादिसूत्रनिर्दिष्टास्तथा सत्येकविंशत्यादेर्न स्याद् 'ग्रहणवता' इति तद-

---

व्यत्यासः कुतोऽत आह–विशेषणेत्यादि ।

द्वितीयेतीति । "**विभाषा द्वितीयातृतीया**" इति निर्देशादित्यर्थः। डडा-देशत्वे तत्र ङीप्प्रसङ्गः द्विशब्दादेशत्वे तु तदश्रवणप्रसङ्ग इति भावः ।

निपातिता इति । निपातनार्थं पठिता इत्यर्थः । एवं लोकप्रसिद्धा इत्यस्य प्रसिद्धतया लोके व्यवह्रियमाणा इत्यर्थः । भाष्यमतमिति । भाष्ये "षष्ठ्यादे-श्च"इति सूत्रस्थासंख्यादेरित्यस्यैकषष्टे प्रयोजनमुक्त्वा तदन्तविध्यभावा-त्प्राप्तिर्नेत्युक्त्वा इदमेव ज्ञापकमेतत्प्रकरणे तदन्तविधेस्तेनैकविंशतितम इति सिद्धमित्युक्तम् । लौकिकग्रहणे तु तदसङ्गतिः स्पष्टैव । अयमेव निषे-धो 'ग्रहणवता' इत्यस्य प्रत्ययविधिविष(१)यत्वे मानमिति तदाशयः । नैत-त्सिद्ध्येदिति । सहस्रादिभ्यस्तमडापत्तिरित्यपि बोध्यम् ।

न्तविधिनिषेधात् । एकोनविंशत्यादेरतिप्रसङ्गाच्चेति । अत्रेदं वक्तव्य
लग्रन्थो भाष्यमतसाधारणः । तस्य बलाद्वृत्तिमतपरतया नयनं त
मनुचितं च ।

किं च तदन्तविधिप्रतिषेधादतिप्रसङ्गाच्चेति स्वोक्तिः परस्पर
यदि हि तदन्तविधिर्न कुत्रत्यस्तर्ह्यतिप्रसङ्गः । अथ ज्ञापकाच्च
त्वित्यध्याहृत्य कथं चित्स्वोक्तिरपि व्याख्येयेत्यभिमतम् । तदपि न
नविंशतितम इत्यस्येष्टतया तत्रातिव्याप्तेर्दुर्वारत्वात् । प्रत्युत स्वप
व्याप्तिरेव दोष इत्यास्तां तावत् । इदं त्ववधेयम् । अनारम्भो वा प्र
कविज्ञानाद्यथा सहस्रादिष्विति वदता कात्यायनेन यद्यपि "पङ्
सूत्रं प्रत्याख्यातं तथाऽपि इहार्थमावश्यकं तत् । अत एव तत्र भ
क्तम्-'नासूया कर्त्तव्या यत्रानुगमः क्रियत' इति ।

"**नित्यं शतादि**" ॥ ननु "षष्ट्यादेश्च" इत्युत्तरसूत्रेण
शतादिग्रहणेनेति चेन्मैवम् । 'असंख्यादेः' इति वक्ष्यति । एतत्तु संख
तदेतद् ध्वनयन्नुदाहरति-**एकशततम इति । मासादेरि**
ख्यावाचित्वाभावेऽपीति भावः ।

**संख्यादेस्त्विति** । एतच्च प्राक् शताद् बोध्यम् । "नित्यं
इत्युक्तत्वात् ।

"**मतौ च्छः**" ॥ **मत्वर्थ इति** । मतोर्विषय इत्यर्थः ।
र्थविभक्तिः प्रकृतिविशेषणं प्रत्ययार्थश्चेति सर्वं संगृह्यते ।

"**तत्र कुशलः**" ॥ "गोषदादिभ्यो वुन्" इत्यतो वुननु
"**आकर्षादिभ्यः कन्**" ॥ वुना सिद्धे कन्ग्रहणमिदुक
अशमिकः । शकुनिकः । त्सरुकः । **मुख्य इति** । हरदत्तस्वरसादि
"**उदराट्ठगाद्यूने**" ॥ **अविजिगीषाविति** । "

जिगीषायाम्" इति तत्रैव निष्ठान्तत्वविधानात्।

"**सख्येन**"। कर्त्तरि तृतीयेयम्। परितो जातः परिजातः परिगत इत्यर्थः। **अत एवेति**। "अकेनोः" इति निषेधादिति भावः।

"**तन्त्रात्**"॥ तन्त्रं तन्तुवायशलाका। तन्यन्ते तन्तवो ऽस्मिन्निति व्युत्पत्तेः। अचिरः कालो ऽपहृतस्येति "कालाः परिमाणिना" इति समासः।

"**ब्राह्मणकोष्णिके संज्ञायाम्**"। ब्राह्मणशब्दादायुधजीवित्वोपाधिकात्प्रथमान्तात्सप्तम्यर्थे कन् प्रत्ययः। अन्नशब्दात्तु अल्पत्वोपाधिकात्तदाह— **आयुधेत्यादि**।

"**शीतोष्णाभ्याम्**"। शीतमिव शीतं, मन्दमित्यर्थः। शीतं हि मन्दतायुक्तम्। सति शीते कार्यकरणे पाटवाभावात्। उष्णमिवोष्णं, शीघ्रमित्यर्थः। क्रियाविशेषणाभ्यां द्वितीयान्ताभ्यां प्रत्ययः कृद्योगलक्षणषष्ठी तु क्रियाविशेषणान्नेत्युक्तम्।

"**अधिकम्**"॥ **अध्यारूढशब्दादिति**। "गत्यर्थाकर्म" इत्यादिना रुहेः कर्त्तरि कर्मणि च क्तो विहितः। आद्ये कर्मणोऽनभिहितत्वाददध्यारूढशब्दयोगे द्वितीया। अध्यारूढो द्रोणः खारीमिति ग्रामं गत इतिवत्। तथाधिकशब्देनापि योगे द्वितीयायां प्राप्तायां "यस्मादधिकम्" "तदस्मिन्नधिकम्" इति च निर्देशद्वयात्पञ्चमीसप्तम्यौ भवतः। द्वितीये तु कर्मणो ऽभिहितत्वात्प्रथमा। अधिका खारी द्रोणेन।

---

निषेधादिति। **एतदुपपादितम्**।

क्रियाविशेषणाभ्यामिति। **लौकिकविग्रहवाक्याभिप्रायेण बोद्धव्यम्**।

"**अनुका**" ॥ सूत्रे समाहारद्वन्द्वे लिङ्गव्यत्ययः । अ
**मिति** । ससाधनक्रियावाचिभ्यामित्याकरः । क्रियाविशिष्टस
मिति तस्यार्थः । **कन्निति** । स्वार्थे ।

**अनृजुरिति** । तिर्यगवस्थानात्पार्श्वमनृजु, तत्साधम
एवमग्रेऽपि ।

"**अयः शूल**" ॥ अयःशूलदण्डाजिनशब्दौ गौणौ
ष्णपार्श्वायःशूलदण्डाजिनशब्देभ्यो मुख्यार्थेभ्यः प्रत्ययो नेष

"**तावतिथं ग्रहणमिति लुग्वा**" ॥ यथा
इत्यत्र तस्येति षष्ठ्यन्तानां सामान्यनिर्देशस्तथाऽत्र "ता
पूरणप्रत्ययान्तानां सामान्यनिर्देशः । **कन् स्यादिति** । अ
कठञौ नानुवर्त्तेते अस्वरितत्वादिति भावः । **पूरणप्रत्यय**
कनो लुक्, वाग्रहणानर्थक्यप्रसङ्गात् । पञ्चमं पञ्चमकम् इति
साध्यम्, तच्च महाविभाषाधिकाराद्विकल्पेन कन उत्पत्त
तस्माद् लुग्वाग्रहणं कुर्वतः सूत्रकारस्य पूरणप्रत्ययलुगेवाभि
ता च तथैव व्याख्यातमिति तदनुरोधेनेहापि व्याख्यातमुदाह

वार्त्तिककारस्तु कन एव लुगिति व्याख्यानमभिप्रेत्याह—
मिति लुग्वावचनानर्थक्यं विभाषाग्रहणादिति । तन्मते द्वितीयक
रूपं बोद्धव्यम् ।

"**श्रोत्रियँश्छन्दोऽधीते**" ॥ छन्दःशब्दस्य श्रो
त्ययश्च छन्दोऽध्यायिनि निपात्यते ।

"**श्राद्धमनेन**" ॥ श्राद्धशब्दः कर्मनामधेयम् । तत्सा

---

तस्यार्थ इति । **साधनस्यैव प्राधान्यानुभवात् आकरे सह**
**मात्रवाचीति भावः ।**

णया वर्तते। **आद्धी आद्धिक इति**। अद्यतन एवेष्यते। अद्य भुक्त श्वः श्राद्धिक इति मा भूत्।

"**पूर्वादिनिः**"॥ पूर्वमिति क्रियाविशेषणात् द्वितीयान्तात्प्रत्ययः।

"**छन्दसि**"॥ पर्यवस्थातृशब्दाच्छत्रुपर्यायात् स्वार्थे इनिप्रत्ययः। अवस्थातृशब्दस्य च पर पन्थ इत्येतावादेशौ निपात्येते। "अपत्यं परिपन्थिनम्" "मा त्वा परिपरिणो विदन्" उभयत्रापि परिशब्दे ऽवग्रहः। **लोके त्विति**। 'अनुपस्थितपरिपन्थिभिः पार्थिवैः' इत्यादौ।

**अनुपदमिति**। पदस्य पश्चादर्थे ऽव्ययीभावः। **अनुपदी गवामिति**। पदापेक्षया षष्ठी। गोपदात्पश्चादन्वेषणं च गवामेव तेन हिरण्यादावन्वेष्ये न भवतीति हरदत्तः।

"**साक्षाद्द्रष्टरि**"॥ साक्षाच्छब्दो ऽव्ययम्, "प्रकृतिवदनुकरणम्" इति सूत्रे पञ्चम्या लुक्। **साक्षीति**। 'अव्ययानां भमात्रे' इति टिलोपः।

"**क्षेत्रियच्**"॥ परक्षेत्रशब्दात्सप्तम्यन्ताद्घच् परशब्दस्य लोपश्च निपात्यते। **क्षेत्रियो व्याधिरिति**। किं च क्षेत्रियं विषं यत्परशरीरे संक्रमय्य चिकित्स्यते। अपि च क्षेत्रियाणि तृणानि यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि विनाशयितव्यानि। किं च क्षेत्रियः पारदारिकः। परदाराः परक्षेत्रं तत्र चिकित्स्यो निग्रहीतव्यः। सर्वं चैतदाकरे स्थितम्।

---

अद्यभुक्त इति। **अद्य श्राद्धभोजने कृत इत्यर्थः।**

गोपदादिति। **प्राणिनामुपलक्षणम्। गवामित्यस्य पदविशेषणत्वेऽपि नित्यसापेक्षत्वान्न दोषः।** तेन हिरण्यादाविति। **एतेनान्वेष्टृशब्दात् प्रत्यय एष्टृशब्दस्य पदादेशो ऽविद्यमानप्रकृतिप्रत्ययमेव वाऽन्वेष्टरि निपातनमित्यपास्तम्। हिरण्याद्यन्वेष्टर्यपि तदापत्तेः।**

सस्यार्थे क्षेत्र इति। **सस्य(१)निर्माणाय कृष्टे क्षेत्रे इत्यर्थः।**

**"इन्द्रियमिन्द्र"** ॥ इन्द्र(१)शब्दात् घच् । इन्द्रेण ह
'मम चक्षुः' 'मम श्रोत्रम्' इत्यादिक्रमेण, सृष्टमदृष्टद्वारा, जुष्टं प्रीणि
वा । दत्तं यथायथं विषयेभ्यः ।

**"तदस्यास्त्यस्मिन्निति मतुप्"** ॥ अस्तीति पुरुषव
विवक्षिते, कालस्तु विवक्षित एव । इतिशब्दो विषयविशेषल
तथा हि—

भूमनिन्दाप्रशंसासु नित्ययोगे ऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु
ति वार्त्तिकार्थः ॥

**भूमा,** बहुत्वं । तच्च आपेक्षिकम् । यस्य हि यावदुचितं ता
शब्देनापि प्रतीयते यथा पञ्चषाभिरपि गोभिर्देवदत्तस्य बह्व्यो
व्यवहारः । राज्ञस्तु सहस्रगोरपि गावोऽल्पा इति । गोमान् । यव
'यवमतीभिरद्भिर्यूपं प्रोक्षति' इत्यादौ जातिमात्रसम्बन्धस्य विवक्षितत्व
भावे मतुप् । भूमादिग्रहणं हि प्रायेण भूमादयोऽपि प्रतीयन्त इ
**निन्दायाम्** ककुदावर्त्तिनी कन्या । **प्रशंसायाम्**
**नित्ययोगे** क्षीरिणो वृक्षाः । **अतिशायने** उदरिणी
**संसर्गे** दण्डी । संसर्गस्संयोगः । तेन संयुक्तदण्ड एवोच्यते न

---

अविवक्षिते इति । **तयोः प्रथमातिक्रमे कारणाभावेन प्रवृत्**
**शास्त्रसङ्कोचे मानाभावादिति भावः । अत एवाहमस्येत्यर्थे मद्व**
**दृष्यति** । विवक्षित एवेति । **अत एव गवामतीतत्वे ऽनागतत्वे व**

स्थितदण्डोऽपि ।

**गुणवचनेभ्य इति** । गुणेन तद्वति च प्रसिद्धाः शुक्लादय एवह गृह्यन्ते न तु रूपादयोऽपि ।

**"मादु(१)पधायाः"** ॥ म् च अश्च मम् । समाहारे द्वन्द्वः । तेन मतुबाक्षिप्तं प्रातिपदिकं विशेष्यते तदाह—**मवर्णावर्णान्तादिति** । "उपधायाश्च" इति वाक्यान्तरम्, उपधाभूतान्मात् परस्य मतोरित्यर्थः । 'येन नाव्यवधानन्यायेनान्त्यालूव्यवहितेऽपि भवति । एवमक्षरार्थे स्थिते फलितमाह—**मवर्णावर्णोपधादिति** ।

**"झयः"** ॥ इदमपि आक्षिप्तस्य प्रातिपदिकस्य विशेषणम् । तदाह—**झयन्तादिति** । यत्तु केचिद्, 'वन्हिमद्वान्' इत्यादि प्रयुञ्जते तत्प्रामादिकमेव । मत्वन्तान्मतुपो निषेधात, अपदान्तत्वे जश्त्वायोगाच्च ।

**"प्राणिस्थात्"** ॥ **शिखावान् दीप इति** । प्रत्युदाहरणदिगियं दर्शिता । शिखाशब्दस्य व्रीह्यादिषु पाठेन लचो ऽप्रसङ्गात् । चूडावान् वृक्ष इति तु प्रत्युदाहार्य्यम् । **प्राण्यङ्गादेवेति** । एतच्चेतिकरणानुवृत्तेर्लभ्यते ।

**"सिध्मादिभ्यश्च"** ॥ अत्र वार्त्तिकम् 'लजन्यतरस्यामिति समुच्चय' इति । अस्यार्थः—"प्राणिस्थात्" इति सूत्रेण लचि विकल्पिते, पक्षे मतुबिति चूडालश्चूडावानिति रूपद्वयं यद्यपि सिद्ध्यति, तथाऽपि सिध्मादिषु दोषः । अत्र हि—सिध्मनिष्पावमांसेत्यादयो ये ऽदन्तास्तेभ्य इनिठनौ स्याताम् । तस्मादन्यतरस्यांग्रहणं समुच्चयार्थं निपातानामनेकार्थत्वात् । तेन मतुप्समुच्चीयते तस्यैव प्रकृतत्वात् । अस्ति चेह लिङ्गं "केशाद्व" इत्यत्रान्यतरस्यांग्रहणम् । ताद्धि इनिठनोः प्राप्त्यर्थं क्रियते । प्रकृतस्यान्यतरस्यांग्रहणं सङ्गच्छते ।

चूडावान वृक्ष इति । **अत्र वृक्षो वटादिः** ।

---

(१) **मादुपधाया" इति** । मात्, उपधाया इति च्छेदः मादित्यावर्तते । मूच

णस्य विकल्पार्थत्वे तु एतदनुवृत्त्यैव सिद्धौ किं तेन । क्रिय स्यान्यतरस्यांग्रहणस्य समुच्चयार्थतां ज्ञापय(१)तीति स्थितम

**लज्वेति** । वाशब्दः समुच्चये ।

वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये ।

इति कोशात् ।

**वातेरित्यादि** सिध्माद्यन्तर्गणसूत्रम् । **ऊङ् चेति** देशः । **वातूल इति** अन्तोदात्तम् ।

यत्तु प्राचा 'बलादूलः, वाताच्च' इत्युक्तं तदुपेक्ष्यम् मध्योदात्तप्रसङ्गात् । गणसूत्रबलेनान्तोदात्तस्येष्टत्वात् । "पा श्च" पार्ष्णिलः, धमनीलः । "क्षुद्रजन्तूपतापाच्च" । यूकाल उपतापो रोगः 'विपादिकालः' इत्यादि ।

**"वत्सांसाभ्याम्"** ॥ **कामवतीति** । कामबल त्वर्थीयाच्प्रत्ययान्ताविति भावः । **वत्सल इति** । स्नेहव त्तिविषये वत्सांसशब्दौ स्नेहबलयोर्वर्त्तेते । यद्यपीह प्रकरणे स मुच्चीयते तथापीह नेष्यते । मतुबन्तेन अर्थान्तरमेव प्रतीयते अंसवान् दुर्बलः ।

---

अत्र हीति । अत एव भाष्ये ऽत्रैव सूत्रे तद्वार्त्तिकोक्तिः । न च "द्युद्रुभ्यां मः" इत्यस्य नित्यत्वार्थं तत् विकल्पात हि नित्यम्मो न्याय्य इति वाच्यम् ? तेषां रूढिशब्दत्वेन ऽभिधातुमशक्यत्वेन तस्य नित्यत्वसिद्धेः । 'द्युद्रुभ्यां मे सिद्धेश्च ।

ङित्वादन्तादेश इति । अन्यथा प्रत्ययत्वभ्रमः स्यादिति भा मिति । प्रत्ययो लाजिति भावः । तद् ध्वनयन्नाह–यत्त्विति । यद्यपि "ज्योत्स्नादिभ्यो ऽण उपसंख्यानम्" इति वार्त्तिक

---

(१) ज्ञापयतीति । 'यदयं पिच्छादिभ्यस्तुन्दादीनां नानायोगं करो

"लोमादि" ॥ इह 'लोमपामपिच्छादिभ्य' इति सुवचम् । "नन्दिग्रहिपचादिभ्य" इतिवत् । 'अङ्गकल्याण' इति गणसूत्रमर्थतः पठति—अङ्गादिति । 'शाकीपलालीदद्र्वो ह्रस्वत्वं च' । महत् शाकं शाकी तद्वत् शाकिनम् । महत्पलालं पलाली तद्वत्पलालिनम् । 'दरिद्रातेर्यालोपश्च' । चाद्रूः दद्रूः त्वग्रोगविशेषः, तद्वान् दद्रुणः ।

विषुण इति । विषु नाना अञ्चतीति विष्वाञ्चि तान्यस्य सन्तीति विषुणः विषुवदाख्यः कालः । तस्य हि नानागतानि दिनानि सन्ति दिनान्तराणां न्यूनाधिकभावस्य तन्मूलकत्वात् । तथा मृत्युर्वायुरव्यवस्थितचित्तश्च विषुणशब्दार्थः । इह यदि कृते यणादेशे उत्तरपदलोपः स्यात् तर्हि वलि लोपे विष्ण इति स्यात् । अत उक्तम्-अकृतसन्धेरिति । समर्थानामित्यस्यापवादोऽयम् ।

"प्रज्ञाश्रद्धा" ॥ प्राज्ञो व्याकरणमिति । गुणभूतया क्रियया कर्मत्वेन सम्बन्धः । कृद्ग्रहणात्तद्धितप्रयोगे षष्ठी न कृतपूर्वी कटमितिवत् ।

---

क' इत्युदाहृतम् । तथापि कौण्डलसाहचर्यात् अर्हार्थकमेवेति वृत्त्याद्याशय इति भावः ।

यद्यपीत्यादि वृत्तौ स्पष्टम् ।

महत् पलालमिति । इदमादर्शकारानुरोधेन । भिन्नानि शालिकोद्रवपलालानि पलालीति कैयटः । पलालक्षोद इत्यन्ये । नानागतानीति । नानाप्रकाराणीत्यर्थः ।

इतिवदिति । इदं कैयटानुरोधेन । यदि(१) कृतपूर्वीत्यादौ कृदन्तमात्रश-

---

(१) यदि इति । अत्रायं भावः । प्राज्ञो व्याकरणम् इत्यादौ प्रज्ञानं प्रज्ञा "स्त्रियाम्" इत्यधिकारे प्रपूर्वकाज्ज्ञाधातोः "आतश्चोपसर्गे" इति भावे अङ् प्रत्ययः । प्रज्ञा अस्यास्तीति विग्रहः । उपसर्जनभूतामपि प्रज्ञानक्रियां प्रति व्याकरणस्य कर्मत्वाद्द्वितीया कृद्योगे षष्ठीत्वत्र न प्रवर्तते । "कर्तृकर्मणोः कृति" इत्यत्र कृद्ग्रहणे न तद्धितयोगे तन्निषेधात् । कृद्ग्रहणसामर्थ्यात् कृदन्तपर्याप्तानुभाविकशक्तिग्रहप्रयोज्यशाब्दबोधविषयक्रियानिरूपितकर्तृकर्मणोः षष्ठी इति सूत्रार्थाङ्गीकारात् कृष्णस्य कृतिः तण्डुलानां पाचक इत्यादौ च तमवादि-

**प्राज्ञोति** । "प्रज्ञादिभ्यश्च" इत्यणि ङीब् भवति इह तु टाप्
मेवेह प्रज्ञाग्रहणस्य फलमिति भावः । **'वृत्तेश्च'** इति वार्त्तिकम् ।
काकृता तु वृत्तिशब्दः सूत्रे प्रक्षिप्तः । विच्छिन्नस्य प्रतिविधानं वृत्ति
**स्वीति** । असन्तत्वात् सिद्धे अणा बाधा मा भूदिति वचनम् ।
**ति** । अत्र इनिना ठनपि बाध्यते । **ज्यौत्स्न इति** । शुक्लपक्षः
लः कृष्णपक्षः नरकविशेषश्च । तमःसमूहस्तामिस्रम् मत्वर्थीयो रः
ह्यवयवभूतानि तमांसि विद्यन्ते । तदस्मिन्नस्तीति रान्तादण् । स्त्रिय
मिस्रा । यत्त्वमरेणोक्तम्—

तमिस्रा तामसी रात्रिर्ज्योत्स्नी चन्द्रिकया ऽन्विता ।

इति, तत्र रान्तं न त्वणन्तमिति न विरोधः ।

**"सिकता"** ॥ देशविशेषस्य वक्ष्यमाणत्वादाह—**घट इति**
शब्दद्वयस्योदाहरणममरः संजग्राह—

---

**क्त्या नोपस्थितिरिह त्वस्त्येवेत्युच्यते तदा षष्ठ्यवेति बोद्धव्यम्**
**व्युत्पन्नप्रज्ञशब्दात्प्रज्ञाद्यणि सिद्धे किमत्र प्रज्ञाग्रहणेनेत्यत आ**
भ्यश्चेति ।

विच्छिन्नस्येति । **यस्य द्रव्यलाभादेर्विच्छिन्नस्यापि प्रतिविधानं**
**धानं भवति सा वृत्तिरित्यर्थ इति सम्प्रदायः** । असन्तत्वादिति । **अ**
**दित्यस्याप्युपलक्षणमेतत्** । तत्र **तमः समूहे** । तत्र रान्तमिति । **त**
**स्यामित्यर्थः** ।

---

पश्चात् कर्म्मान्वयस्य तद्धितविषये एव भाष्यप्रामाण्यात् स्वीकारेण धात्वर्थनि
तानिरूपितकर्मत्वसम्बन्धावच्छिन्नकटादिनिष्ठप्रकारताकबोधं प्रति कटादिपदसम
कृतपूर्वीति तद्धितान्तस्यैव कारणत्वात् न कटादीनां कृदन्तपर्याप्तशक्तिग्रहप्रयोज्य
क्रियानिरूपितं कर्मत्वम् इति न ततः षष्ठी इति भावः । भाष्ये तु—कृतेऽपि
कृतपूर्वीकटम् इत्यत्र षष्ठी दुर्वारा । कृतेतिक्तप्रत्ययात्मककृद्योगस्य सत्वात् इत्युक्त
कद्ग्रहणसामर्थ्यात् एतद्भाष्यप्रयोगाच्च प्रकृत्यन्तर्भावानापन्नकृद्योगस्य विवक्षाय

स्त्री शर्करा शर्करिलः शार्करः शर्करावति ।
देश एवादिमावेवमुन्नेयाः सिकतावति ॥

इति ॥

"**दन्तउन्नत**" ॥ 'करयन्त्रणदन्तुरान्तरे' इत्यादयस्तु प्रयोगा लाक्षणिकाः ।

**ऊषसुषि**" ॥ समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । ऊषा ईरिणः पांसवः । सुषिश्छिद्रम् । **खर इति** । महत्कण्ठविवरं खम्, तद्वानित्यर्थः । गर्दभे रूढोऽयम् । **नगरमिति** । नगा वृक्षाः पर्वताश्च । जातिशब्दोऽयम् । तथा च नगरीत्यत्र जातिलक्षणो ङीष् भवति । **पाण्डुर इति** । पाण्डुः शुक्लो वर्णस्तद्वान् । **अव्युत्पन्न एवेति** । गुणमात्रे गुणिनि च वर्त्तते ।

हरिणः पाण्डुरः पाण्डुः

इत्यमरः ।

गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ।

इति च ।

'**कच्छ्वा**' ॥ कच्छूस्त्वग्रोगविशेषः ।

"**द्युद्रुभ्यां मः** ॥ **द्युम इति** । द्यौरस्यास्ति "दिव उत्" इत्युत्वम् । केचिद् द्युशब्दमव्युत्पन्नं प्रातिपदिकमुकारान्तं द्योनामधेयमाहुः । द्रुर्वृक्षः । सोस्यास्ति जनकतयेति द्रुमोऽपि वृक्ष एव ।

"पलाशी द्रुद्रुमागमाः"

इत्यमरः । इह रूढिशब्देषु मतुब् न विकल्प्यते तदर्थस्य मतुपाऽभिधातुमशक्यत्वात् । **इत्यत इति** । वप्रत्ययो ऽनुवर्त्तते । **अर्णव इति** । अर्णो जलम् अर्त्तेरसुन्नुट् च । **यणोति** । सूत्रे सांहितिको यण् न तु "ण्य-स्यात्" इतिवत् कृतयणादेशस्यानुकरणम् । लक्ष्ये यणो ऽभावादिति भावः ।

"अधिरोहति गाण्डिवं महेषौ" इति ।
"गाण्डीवी कनकशिलानिभं भुजाभ्याम्" ॥

इति च ।

**आसुतीवल इति ।** षुञ् अभिषवे, क्तिन् आसुतिरभिषव
**परिषद्वल इति ।** परितः सीदतीति परिषत् "सत्सूद्विषत्" इति कि
"सदिरप्रतेः" इति षत्वम् । **पाठान्तरमिति ।** "शृॄभसोऽदिः" इत्
प्रत्ययो बाहुलकात्पृषेरपि भवति । तथा च भाष्यम् 'पार्षदकृतिरेषा तत्र
ताम्' 'सर्ववेदपार्षदं सशास्त्रम्' इति च । प्रयुज्यते च–'पर्षदेषा दशावरा' इ

पर्षद्वलान्महाब्रह्मैरटनैकटिकाश्रमान् ।

इति भट्टिः । 'समज्या परिषत्पर्षत्' इति चन्द्रकोशः । **भ्रातृ
इति ।** 'वले' इति सूत्रे ऽण इत्यनुवृत्तेर्नेह दीर्घः । पुत्रवलादौ तु स्
त्राह–**सञ्ज्ञायामित्यनुवृत्तेरिति ।** "वनगिर्योः" इति सूत्र
ति भावः ।

**"ज्योत्स्ना" ॥** ज्योत्स्ना चन्द्रप्रभा, तत्रावयवीभूतं ज्योतिरस्
मत्वर्थीयोपपत्तिः । एतेन तमःसमूहे तमिस्राशब्दो व्याख्यातः । कथं त
'तमिस्रं तिमिरं तम' इत्यमरः ? समूहसमूहिनोरभेदोपचारात् । **स्त्रीत्वमत
मिति ।** व्याख्यानमत्र शरणम् । ऊर्जस्विन् गोमिन्नित्यत्र नान्तत्वाि
क्तये नलोपो न कृतः ।

**"तुन्दादिभ्य इलच्च" ॥ मतुप् चेति ।** अन्यतरस्यामि
वृत्तेः । अत्र 'स्वाङ्गाद्विवृद्धौ' इति पठ्यते । विवृद्ध्युपाधिकात्स्वाङ्गव
इलजादयः स्युः । विवृद्धौ कर्णावस्य कर्णिलः । कर्णी । कर्णिकः । कर्ण

**"एकगोपूर्वात् ॥ ऐकशतिक इति ।** एकं च तच्छतं
"पूर्वकाल" इत्यादिना कर्मधारयः । षष्ठीतत्पुरुषात् बहुव्रीहेर्द्वन्द्वाच्च न, अ

भाष्यमुपादाय कैयटो व्याख्यत् । "एकगोपूर्वात्" इति ठञो भाष्यकारवचनाल्लोपः । 'अत' इति च तत्र निवृत्तं गौत्रिकादिसिद्ध्यर्थम् । गवां समूहो गोत्रा । साऽस्मिन्नस्तीति गौत्रिकमिति । तत्तु भाष्याभिप्रायवर्णनमात्रं न तु तात्त्विकम् । अन्यथा एकविंशतिः एकचत्वारिंशद्वा ऽस्यास्तीत्यत्रातिप्रसङ्गात् । अनेनैवापरितोषेण पक्षान्तरमाह—**अथ वेति** । अस्मिंश्च पक्षे गौत्रिकमित्यनभिमतं लक्ष्यते । अभिमतत्वे तु "प्राणिस्थादातः" इत्यतो मण्डूकप्लुत्या 'आत' इत्यनुवर्त्य समाधेयम् । नित्यग्रहणं मतुपो बाधनार्थम् । कथमेकद्रव्यवानिति ? असाधुरेवायम् । एकेन द्रव्यवानिति वा विग्रहीतव्यम् । कथमेकदण्डीति ? एकदेशिनैकाधिकरणे इनिरपि क्वचिद्भवतीति ।

**"रूपादाहत"** ॥ आहतप्रशंसाविशिष्टेऽर्थे वर्त्तमानाद्रूपशब्दान्मत्वर्थे यप् स्यात् । **आहतमिति** । आहननमाहतम्, ताडनमित्यर्थः । ततो निष्पन्नं यत्कार्षापणादिरूपं तदपि कार्ये कारणोपचारादाहतमित्युच्यत इति न्यासकारः । **हिम्या इति** । भूम्नि यप् । **गुण्या इति** । दृशिग्रहणादिनिरपि । तथा च माघः—

"गुण्यगुण्य इति न व्यजीगणत्" ।

**"अस्मायामे"** ॥ **यशस्वीति** । "तसौ मत्वर्थे" इति भत्वाद्रुत्वं

---

भाष्याभिप्रायेति । **वस्तुतो भाष्याभिप्रायवर्णनानुरूपत्वादत इत्यस्य निवृत्तिरेवोचिता । गोविंशतिरेकविंशतिरस्यास्तीत्यादौ त्वनभिधानान्न । किं चानुवृत्तौ गौशकटिको न सिद्ध्यति । शकटशब्देन वृत्तौ सिद्धावपि शकटिशब्देन वृत्तौ गोशकटिमानित्यस्यापत्तेरिति प्रकृतसूत्रभाष्ये स्पष्टमुक्तत्वात्।** पक्षान्तरमिति । **अथ वा मत्वन्तान्मत्वर्थीयो लुप्यतइत्यनेनावयवधर्मस्य समुदाये उच्चारणमाह । इह तु मुख्येऽर्थंवत्त्वे सम्भवति उपचरितस्याश्रयो ऽयुक्त इति कैयटे उक्तम् ।** आत इत्यनुवर्त्येति । **इदं चिन्त्यम् । "आत" इत्यनुवृत्तौ यदि एकगोपूर्वादाकारान्तादित्यर्थस्तर्हि ऐकशतिकासिद्धिः । एकगोपूर्वादाकारान्ताच्चेत्यर्थे अन्याकारान्तेभ्यो ऽपि ठञापत्तिरितीति दिक् ।**

ततो निष्पन्नमिति । **दीनारादिष्विति शेषः ।** न्यासकार इति । **कर्मणि क्तप्र-**
[illegible]

न । **यशस्वानिति** । पूर्वेण नित्यग्रहणेन तत्रासंबद्धमन्यतरस्यांग्रहणं मतुपूसमुच्चयार्थमिह संबद्धयत एव । "तसौ मत्वर्थे" इति सूत्रे यशस्वानिति भाष्योदाहरणादिति भावः । **क्विन्नन्तत्वादिति** ।

यत्तु प्राचोक्तं "चोः कुः" इति तन्न, तदपवादतया "व्रश्च" इति षत्वापत्तेरिति भावः । यदि तु "व्रश्च" इति षत्वं 'मृजियज्योः पदान्ते क्विन्प्रत्ययस्येति कुत्वस्यापवाद' इति निष्कर्षो गृह्यते तदा "ऋत्विक्" आदिसूत्रेण पदान्तविषये कुत्वनिपातनादिति बोद्धयम् ।

"**हृदयाच्चालुरन्यतरस्याम्**" । अन्यतरस्यांग्रहणम् इनिठनोः प्राप्त्यर्थम् । चकारस्य "चुटू" इतीत्संज्ञा । एवमन्यत्रापीति हरदत्तः । तेन हृदयालुशब्दे ऽन्तोदात्तः । **शीतोष्णेति** । इह चालुरनुवर्त्तते । यत्तु प्राचोक्तम् । तृष्णाभ्य इति, आलुजिति च । तदुभयमप्यनाकरत्वादुपेक्ष्यम् । **पुरोडाश** इति । "न तृप्रा उरुव्यचसम्" इति मन्त्रस्य भाष्ये उणादिवृत्तिषु च तथा व्याख्यातत्वादिति भावः । **माधव इति** । सुबूधातुवृत्तौ स्थितमिदम् । **हिमाच्चेति** । एकारादिरयं प्रत्ययः । **बलादिति** । सिध्मादिषु मत्वर्थे वातूलबल्लूलशब्दौ प्रकारान्तरेण व्युत्पादितौ ।

"**तप्पर्वमरुद्भ्याम्**" ॥ पित्त्वमनुदात्तत्वार्थम् । हरदत्तस्तु तन् इति पठित्वा आद्युदात्तत्वार्थो नकार इत्याह । तच्चिन्त्यम् । मरुत्तशब्दस्य मध्यो-

---

तत्र । "**एकगोपूर्वात्**" **इति सूत्रे** । भाष्योदाहरणादिति । "**प्रकृत्यैकाच्**" **इति सूत्रे स्रग्वत्तर इति भाष्योदाहरणाच्चेत्यपि** ।

आद्युदात्तः स्यादिति । **पर्वतशब्दे तु न विशेषः । पर्वशब्दस्य वनिबन्तत्वेन "नब्विषयस्य" इति फिट्सूत्रेण चाद्युदात्ततया तपि तनि चाद्युदात्तत्वात् । पर्वधातोरतच्चि अन्तोदात्तोऽपि पर्वत इत्यन्यत्** । अपसिद्धान्तादिति । **ददाति वृत्तं वा पुनरेतद्भविष्यति मरुद्भिर्दत्तो मरुत्त इति एतत्प्रत्याख्यानपरभाष्यविरो(१)धादित्यर्थः । मरुच्छब्दस्योपसर्गत्वविधानसामर्थ्यादजन्तत्वाभावे**

(१) **भाष्यविरोधादिति**—भाष्येतु–"विभाषा सुप्" इति सूत्रे तु ग्रहणं किमर्थम् ? तुग्रहणम् नित्यपूर्वार्थम्–नित्ये पूर्वी यथा स्यात् विभाषा माभूदिति व्याख्याय नहि विभाषाग्रहणेन पूर्वमभिसम्बध्यते किं तर्हि [illegible]

दात्तत्वात् । तथा हि—मरुच्छब्दो "मृगोरुतिः" इत्युतिप्रत्ययोऽन्तोदात्तः । तस्मात्तस्यापि मद्ध्योदात्तत्वं स्पष्टम् । तनि तु नित्स्वरेणाद्युदात्तः स्यात् । न चेष्टापत्तिः । अपसिद्धान्तात् । स्यादेतत् ।

'मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे'

इत्यैतरेयब्राह्मणप्रयोगस्तावत्स्वरांशे उदासीनः । एकश्रुत्या पाठात् । तत्कथमभिमतस्वरावधारणमिति चेत् ? प्रथमाध्यायस्थाकरग्रन्थेभ्य एवेत्यवेहि । उपसर्गसंज्ञायां हि मरुच्छब्दस्योपसंख्यानं पठ्यते । तत्र यद्यप्यधिकारबलान्निपातसंज्ञा प्राप्ता तथाऽपि सा नेष्यते । सत्यां तस्यां "निपाता आद्युदात्ता" इतीह स्वरः स्यात् । स च मरुत्तशब्देऽपि श्रूयेत । "तृतीया कर्मणि" इति पूर्वपदप्रकृतिस्वरात् । किं च निपातत्वे सत्यव्ययत्वं स्यात् ।

ननूपसर्गत्वे ऽप्यङ्किविधौ कुतो नेति चेत् । अनभिधानाद् बाहुलकाद्वेत्युत्तरम् । संज्ञाप्रयोजनं तु तत्सामर्थ्यादजन्तत्वाभावे ऽपि "अच उपसर्गात्" इति तत्वप्रवृत्तिः ।

नन्वेवं मरुन्नयतीत्यत्र तकारव्यवायेऽपि णत्वं स्यादिति चेत् ? सत्यम् । तत्वविधावेवोपसर्गसंज्ञेति वक्तव्यम् । एवं चाङ्किविधौ अपि नेत्यपरमनुकूलम् । एतच्च सर्वं कैयटहरदत्ताभ्यां स्पष्टमुक्तम् । तदनन्तरं तप्प्रत्ययान्ततयाऽपि मरुत्तशब्दस्य व्युत्पादनं करिष्यत इति वदन् कैयटः स्पष्टमेव पित्त्वमाह ।

यत्तु मत्वर्थीयप्रकरणे हरदत्त आह 'मरुत एनं देयासुर्मरुत्त' इति व्युत्पत्तावपि "तृतीया कर्मणि" इति पूर्वपदप्रकृतिस्वरो भवन्नाद्युदात्त एव

---

ऽप्यच उपसर्गादिति तत्वम् । मरुत्तः । मरुच्छब्दश्चान्तोदात्त इति तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरेण मरुत्तो मध्योदात्त इति फलाभेदायात्रापि पित्पाठ एव । "उपसर्गाश्चाभिवर्जम्" इति मरुत आद्युदात्तत्वं तु न, तत्वे एवोपसर्गत्वस्वीकारादिति भावः । तदेतद् ध्वनयन्नाह—स्यादेतादित्यादिना ।

अव्ययत्वं स्यादिति । तथा च 'मरुद्भिर्दत्त' इति भाष्यप्रयोगे विभक्तिश्रवणानापत्तिरिति भावः ।

उत्तरमिति । अत एव तत्ववत्तानि भाष्ये नोदाहृतानि । तत्वविधाविति ।

भवति । "उपसर्गाश्चाभिवर्जम्" इति फिट्सूत्रादिति । तदति
प्रथमशेषे स्वयमेवाह ।

ननूपसर्गसंज्ञायामपि "उपसर्गाश्चाभिवर्जम्" इत्या
देव । नानेनापूर्वमाद्युदात्तत्वं विधीयते किं तर्हि निपाता इ
प्रतिषेधार्थमेतदिति । तस्मात्तनो नित्त्वं स्वीकृत्य प्रवृत्तः प्रा
ग्रन्थः प्राचीनग्रन्थविरुद्धो ऽपसिद्धान्तग्रस्तश्चेति स्थितम् । ए
आद्युदात्तार्थ इति प्राचो ग्रन्थं व्याचक्षाणानामुक्तिरपि प्रत्युक्त
यम् । उक्तरीत्या "उपसर्गाश्चाभिवर्जम्" इति फिट्सूत्रं सुत्यजम
सुवचम् । अतिनिष्कर्षे तु नाभिरित्यपि मा ऽस्तु । एवादिष्वभि
'एवादीनामन्त' इति हि फिट्सूत्रम् । एवमादीनामिति पाठान्त
माधवेन ऋग्भाष्ये ध्वनितम् । तथा हि "आत्वेता निषीद
"उपसर्गाश्चाभिवर्जम्" इति वचनात्प्रातिपदिकान्तोदात्तत्वमित्
मर्ता अभिद्रुहन्" इति मन्त्रे एवमादीनामन्त इत्युपन्यास्थत् ।
नुपसक्तेन । प्रकृतमनुसरामः ।

**"स्वामिन्नैश्वर्ये"** ॥ **ऐश्वर्यवाचकादिति** । स
र्यवाचित्वमेतद्वृत्तिविषयकमेव बोद्धव्यम् ।

**"कंशंभ्याम्"** ॥ अत्र प्रथमप्रत्यये दन्तोष्ठ्य आदि
तदाह—**अनुनासिकौ बयाविति** ।

**"तुण्डिवलिवटेर्भः"** ॥ **मूर्धन्योपध इति** ।
तोडने इति धातौ माधवेनोक्तम्—तुण्डिः । इन् । वृद्धा

---

अत एव । "उपसर्गाश्चाभिवर्जम्" इति फिट्स्वरोऽपि न
स्पष्टमेव पित्त्वमार्हति । तत्पक्षे मध्योदात्तत्वेन नित्वे ऽत्र फ

तुण्डिलः । तुण्डिकः । "तुन्दादिभ्य इलच्" इत्यत्र "स्वाङ्गाद्विवृद्धौ" इति गणसूत्रेण इलच् । तुन्दिल एव तुण्डिभः । "तुण्डिवालिवटेर्भः" इति मत्वर्थीयो भ इति । **वाटिभ इति** । वट वेष्टने इन् ।

इति मत्वर्थीयाः ॥

---

# अथ तद्धितेषु प्राग्दिशीयाः ।

"**एतदोऽन्**" ॥ भाष्यारूढोऽयं पाठः । वृत्तिकारस्तु एतदोऽश् इति पठित्वा शकारः सर्वादेशार्थ इत्याह । **आभ्यामिति** । सर्वनामत्वात्प्राप्तोऽपि तसिल् 'अद्व्यादिभ्य' इति पर्युदासान्न । एतेन 'नूनं मत्तः परं वंश्या' इत्यत्र तसिलन्तभ्रमेण "युष्मदस्मदोरनादेश" इत्यात्वमाशङ्क्य "सार्वविभक्तिकस्तसिः" इति परिहृत्य "तसेश्च" इति तस्य तासिलादेशे पुनः शेषलोपमाशङ्क्य सुब्विभक्तावेव स इष्यत इति स्वोत्प्रेक्षयैव समाधानं कुर्वन् कश्चिद् दुर्घटवृत्तिकारः परास्तः । पर्युदासविषयतया इह तसिल्प्रत्ययस्य तसिलादेशस्य चोक्तिसंभवाभावात् ।

"**सप्तम्यास्त्रल्**" ॥ इह त्रल्तसिलौ स्वतन्त्रौ प्रत्ययौ न तु सप्तमीपञ्चम्योरादेशौ । तेन कुत्र बहुत्र कुतः बहुतः इत्यादौ "अच्च घेः" "घेर्ङिति" इत्यादिकं नेति दिक् ।

ननु तसिलोऽवकाशः कुतो ऽवहीयते कुतो ऽवरोहति । तसेस्तु ग्रामत आगच्छतीत्यादिरवकाशः । कुत आगच्छतीत्यादौ तूभयप्रसङ्गे परत्वात्तसिः । तस्य विभक्तित्वाभावाद् विभक्तिकार्याणि न स्युरिति चेत् मैवम् । "तसेश्च" इति सूत्रेण अद्व्यादिभ्यः किमादिभ्यः परस्य

---

भप्रत्ययेन बाधः । "बलादिभ्य" इति सूत्रादर्थाधिकाराश्रयणेन विकल्पार्थकान्यतरस्यांग्रहणानुवृत्तेः । "तुन्दादि" सूत्रे चेनेनिठनोः समुच्चयार्थान्यतरस्यांग्रहणानुवृत्तेस्तेषां विधानात्तेऽप्यत्र बोद्ध्याः ।

इति मत्वर्थीयाः ॥

तसेस्तसिलादेशविधानात्, तस्य च विभक्तित्वात् ।

"**किमोऽत्**" ॥ "न विभक्तौ तुस्माः" इति नेह प्रवर्तते । अ
कारेण मकारपरित्राणार्थेनानित्यताज्ञापनात् । **वाग्रहणमिति** । "
ऽद्वा" इति सूत्रं पठितव्यम् । ततः "ह च च्छन्दसि" इति । य
भागवृत्तिकारो भाषायां अलं नेच्छति । वामनस्याप्यत्रैव स्वरसः । तथ
वामनेनोक्तमेकदेशिमतमेवेह पुरस्कृतम्, बहुप्रयोगदर्शनात् । तथा चामर

साहचर्याच्च कुत्र चित् ।

श्रीहर्षोऽपि—

नान्यत्र कुत्रापि च साभिलाषम् इति

"**वाह च छन्दसि**" ॥ पूर्वोक्तस्य वाग्रहणापकर्षस्य स्फुटीक
र्थमिदमुपन्यस्तम् ।

**अधुनाप्रत्यय इति** । निपातनान्मध्योदात्तोऽयम् । भ
मतं चेदम् । वृत्तिकारस्त्वाह—इदमोऽशूभावः, धुना च प्रत्यय इति ।

"**सद्यः परुत्**" ॥ **अहनीति** । सप्तम्यन्तस्याहन्शब्दस्यार्थे
र्थः । तद्दर्शयति—**समानेऽह्नि सद्य इति** ।

"**प्रकारवचने थाल्**" ॥ सामान्यस्य भेदको विशेषः प्रक
यद्यपि "प्रकारे गुणवचनस्य" इत्यत्र सादृश्यं प्रकारः । तथाऽपि नेह सा
गृह्यतेऽनभिधानात् । **तेन प्रकारेण तथेति** । प्रथमान्तात्तु न भव
प्रकारस्तथेति । अनाभिधानादिति भावः । किंसर्वनामबहुभ्यो विशेषवि

---

नेहेति । **अतस्तकारे इत्यर्थः** । उकारेणेति । **स हि तदर्थं चरितार्थ**
**त्संज्ञया निवर्तते । "णौ गमिः" इत्यादौ तिवकानिर्देशः, गमेरिडिवि**
**धातुस्वरूपभङ्गभिया तूपधालोपो न । उच्चारणार्थानामपीत्संज्ञाया**
**स्य लोप" इति सूत्रे भाष्ये स्पष्टमुक्तत्वादिति दिक्** ।

इदमिति । **छान्दसमपीदमित्यर्थः** ।

वृत्तिकारस्त्वाहेति । **भाष्योक्तयोर्द्वयोः पक्षयोर्मध्ये ऽमुमेवादरेणाहेत्य**
अनभि(१)धानादिति । **'अन्यथा' 'सर्वथा' इत्यादौ तदप्रतीतेः । यथा हि**

---

(१) **अनभिधानादिति** । परे तु थाल्सूत्रे प्रकारशब्देन सादृश्यस्यैव प्र
यथेत्ययं प्रकारवचने थाल् च सादृश्ये वर्तते इति भाष्याक्षरस्वारस्येन यत्सादृश्यवा

नापि थाला जातीयर् न बाध्यतेऽर्थभेदात् । प्रकारे हि थाल् । जातीयर् तु तद्वति स्वभावात् । अत एव भाष्ये प्रयुक्तम्—तथाजातीयोऽन्यथाजातीय इति ।

"इदमस्थमुः" ॥ अनेन एतेन वेति । द्वितीयान्तादपि थमुर्भवत्येव इममेतं वा प्रकारमापन्न इत्थंभूतः । तथा च सौत्रो व्यवहारः—"लक्षणेत्थंभूताख्यान" इत्यादि । एतेन कथंभूतो व्याख्यातः ।

**प्राग्दिशीयानां पूर्णोऽवधिः ॥**

## अथ तद्धितेषु प्रागिवीयाः ।

**पुरः पुरस्तादिति** ॥ अथ कथं—

'पश्यामि तामित इतः पुरतश्च पश्चात्'

इति भवभूतिः ।

'नीरसतरुरिह विलसति पुरतः'

इति कश्चित् । 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः, 'पुरतः प्रथमे चाग्रे' इति विश्वश्च । चिन्त्यमेतदिति भाषावृत्तिः । काश्चित्तु विभाषाग्रहणं योगाद्विभज्यते । तेन पूर्वशब्दादतसुच् । "अस्तातिच" इति सूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात्पुरादेश इत्युत्प्रेक्षितवान् । तन्निर्मूलम् । पुरत इति तु समानकालीनं पूर्वकालीनमित्यादिवदप्रामाणिकमेवेति प्रामाणिकाः ।

---

द्वौ यत्सदृशो हरिस्तत्प्रकारवान् हर इति बोधापत्तेः । हरिसदृशो हर इति बोधानापत्तेश्च । सिद्धान्ते तु यत्प्रकारवान् हरिस्तत्प्रकारवान् हर इतिशाब्दबोधे वृत्ते स बोधः फलतीति बोध्यम् । तथाजातीय इति । यदि थालपि प्रकारवति स्यात्तदा जातीयोपादानं व्यर्थं स्यादिति भावः ।

प्राग्दिशीयानां पूर्णोऽवधिः ॥

"**संख्याया विधार्थे धा**" ॥ विधाशब्दस्याथे
ष्योदनपिण्डोऽपि विधाशब्देनोच्यते तथाऽपीह न गृह्यते
त्यादौ न भवति । इह 'विधायाम्' इति वक्तव्ये अर्थग्रहण
विधाशब्दो यत्रार्थे प्रसिद्धतरस्तत्रैव यथा स्यात् ।
एव । स च क्रियाविशेषणक एव गृह्यते । अभिधानस्व
**क्रियाप्रकारे वर्त्तमानादिति** । कथं तर्हि
गुण, इत्यादि अत्रापि उपदिश्यत इति वा भवतीति वा

"**याप्ये पाशप्**" ॥ कुत्सित इत्यत्रैव नायं वि
प्रसङ्गात् ।

"**पूरणाद्भागे**" ॥ पूरणार्थत्वात्तीयप्रत्ययः पूरण
ग्रहणं चोत्तरार्थम् । मुखतीयः पार्श्वतीय इत्यत्र तु अन
ष्यति । भाग इति पुंस्त्वं विवक्षितम् । तेन समानेऽप्य
यां चतुर्थी पञ्चमीत्येव भवति । अनि सति तु ट
प्रसज्ज्येत ।

"**भूतपूर्वे चरट्**" ॥ "गोष्ठात् खञ्" इत्यत्रैव
विहितेन खञा चरटो बाधा मा भूत् । सन्निप्तौ हि सामान

---

**अथ ताद्धितेषु प्रागिवीयाः**

विधाशब्दस्येति । इदं वृत्त्याद्यनुरोधेनेति बोध्यम् । वि
भवन्तीति तु भाष्यं विधाया विध इति घञर्थे पुंलिङ्ग
धशब्दस्यार्थे इति समासः । एवं चैका गोविधेत्यत्र
इति । सामान्यस्य भेदको विशेष इत्यर्थः । अनि सति
काद्शभ्य इत्यन् प्राप्तिः । अत एव "विभाषा द्वितीया"
ख्यानं भाष्यकृतोक्तं सङ्गच्छते ।

भवति । यद्यपि दूरस्थस्यापि बाधो न्याय्य एव तथापीह गौरवं स्वीकृत्य दूरे पाठसामर्थ्याद् बाधो नेति भावः ।

**"षष्ठ्या रूप्य च"** ॥ भूतपूर्व इत्यनुवर्त्तते । तच्च यद्यपि पूर्वसूत्रे ङ्याप्प्रातिपदिकस्य विशेषणं तथापीह न तथा । षष्ठ्यन्तार्थस्य विशेषणत्वात्तदाक्षिप्तस्य सम्बन्धिनः प्राधान्यात्, प्रधानेतरसन्निधौ च प्रधाने कार्यसम्प्रत्ययस्य न्याय्यत्वात्तदेतदाह–**भूतपूर्वेऽर्थे रूप्यः स्यादिति** ।

**"अतिशायने तमबिष्ठनौ"** ॥ आतिपूर्वाच्छेतेर्ल्युट् । अतिशयनमेवातिशायनम् । अस्मादेव निर्देशाद्दीर्घः, न तु सौत्रः । तेन लोकेऽपि दीर्घः साधुः । 'अबाधकान्यपि निपातनानि' । तेन ह्रस्वोऽपि साधुः ।

यद्यपि केवलः शेतिः स्वप्ने वर्तते तथाऽप्यातिपूर्वः प्रकर्षे । प्रकर्षश्चात्र नाधिक्यम्, किं त्वभिभवः । सकर्मको ह्ययम् । "पूर्वान्महाभाग तया ऽतिशेषे" इति दर्शनात् । अतिशयश्च न प्रत्ययार्थः । तथा हि सति लघोरतिशायनं लघुतममिति स्यात् । प्रत्ययार्थस्य प्राधान्यात् । नापि प्रकृत्यर्थः । तथा हि सति प्रकर्षातिशयादिभ्य एव स्यात, नतु पट्वादेः । किं तु प्रकृत्यर्थविशेषणम् । प्रत्ययस्तु द्योतकः । तदेतदाह–**अतिशयविशिष्टत्वा-**

---

इत्यत्रैवेति । **ततः प्रागित्यर्थः** । इति भाव इति । **एतद् भाष्ये न दृष्टम्** ।

प्राधान्यादिति । **तद्विशेषणमिति शेषः । एवं च स्वार्थिकप्रकरणविरोधो भवतीति षष्ठ्या एव विशेषणं न्याय्यम् । भूतपूर्वसम्बन्धे या षष्ठी तदन्तादित्यर्थ उचित इत्यन्ये ।**

शेतेर्ल्युडिति । **स च कर्त्तरि बाहुलकादिति भाष्यस्वरसाभाव इत्यन्ये** ।

अबाधकान्यपीति । **इदं वृत्त्यनुरोधेन** । ह्रस्वोऽपि साधुरिति ।

**परे तु बाधकान्येवेति सर्वादिसूत्रे भाष्यात् । एवं च ह्रस्वो ऽसाधुरेव ।**

अभिभव इति । **स्वापेक्षयेतरस्य न्यूनीकरणमित्यर्थः** । सकर्मक इति । **अत एव भाष्ये कर्तृल्युटि अतिशायनस्य प्रत्ययार्थत्वपक्षे कालीमतिशेते कालः कालितर इति प्राप्नोति कालतर इति चेष्यते इति द्वितीयान्तात्प्रत्ययापा-**

दि । द्व्यवयवे समुदाये यदा एकस्यातिशयो विवक्ष्यते, तदा **तरबीयसु**नावपवादौ वक्ष्येते । परिशेषाद् बहूनां मध्ये यदैकदेशस्य निर्द्धारणं **सोऽस्य** विषयस्तदाह-**अयमेषामिति । आढ्यतम इति । सुबन्तात्तमप्** । "सुपो धातु" इति लुक् ।

यद्यपि प्रातिपदिकात्तद्धित इति इह वृत्तिकारस्य स्वरसः प्रतीयते **तथा-ऽपि** तदीयग्रन्थः सुबन्तपरतया भङ्क्त्वा नीतः । अन्यथा हि-पूर्वाह्णेतरां **पूर्वाह्णे**तमामित्यादौ "घकालतनेषु कालनाम्नः" इति सप्तम्या अलुग्विधानं **बाध्येत** । उक्तं च भाष्ये-प्रियकुत्सनादिषु ततः प्रवर्त्ततेऽसौ विभक्त्यन्त इति ।

"**तिङश्च**" ॥ **तमप्स्यादिति** । इष्ठन् तु नोक्तः 'अजादी **गुण**वचनादेव' इति नियमात् ।

"**तरप्तमपौ घः**" ॥ आतिशायनिकप्रकरण एव "तादौ घ" **इति** वाच्ये प्रकरणान्तरं गुरुसूत्रकरणमत्यन्तस्वार्थिकस्यापि तरपो **ज्ञापकम्** । तेन "अल्पाच्तरम्" 'लोपश्च बलवत्तरः' इत्यादिसिद्धम् ।

---

**कर्तृल्युडन्तता ध्वनिता। अतिशयकर्त्तरि वर्त्तमानात् प्रातिपदिकात् स्वार्थे प्रत्यय इति सूत्रार्थः । अतिशयविशिष्टार्थवृत्तेरित्यस्य तत्कर्तृकरूपार्थवृत्तेरित्यर्थः** । अतिशयो विवक्ष्यत इति । **इतराभिभवकर्तृत्वं विवक्ष्यत इत्यर्थः । ततः** प्रवर्ततइति । **अन्त(१)रङ्गत्वेन पूर्णपदं पदान्तरेणान्वेतीति व्युत्पत्त्या च स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्यलाभोत्तरमित्यर्थस्तदाह**—विभक्त्यन्त **इति** ।

---

( १ ) **अन्तरङ्गत्वेनेति** । अत्रान्तरङ्गत्वम्—यथा मनुष्योऽयं प्रातरुत्थाय **स्वश**रीरकार्याणि करोति ततः सुहृदां ततः सम्बन्धिनाम् । अर्थानामिति जातिव्यक्तिलिङ्गसं**ख्या का**रकाणां बोधक्रमः शास्त्रकृत्कल्पितः तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति **तत्क्रमेणैव** च तत्कार्याणि भवन्ति इति "अचः परस्मिन्" सूत्रे भाष्ये स्पष्टम् । एवंच पूर्वपूर्वनि**मित्तकत्वं** स्पष्टमेव । तथाच-स्वार्थे परिपूर्णम्पदमर्थान्तरेण युज्यते इति न्यायेन सुबन्तात्त**द्धितोत्पत्तेः** ततः प्राग्वत् "ङ्याप्सोः" प्रवृत्तौ कारणमन्तरङ्गत्वम् । तथाहि-स्वार्थः प्रवृत्तिनिमित्तम् ।

केचित्तु योगापेक्षं ज्ञापकमित्याश्रित्य ईयसुन्प्रत्ययस्यापि क्वचिदत्यन्तस्वार्थिकतेत्याहुः ।

"**किमेत्**" ॥ आमोऽकारो यदि त्यज्येत तर्हि पचतितरामित्यादौ "ह्रस्वनद्याप" इति नुट् स्यात् । "यस्य" इति लोपस्य परेण नुटा बाधात् । सिद्धान्ते त्वननुबन्धपरिभाषया नुड्विधौ नास्य ग्रहणम् ।

"**द्विवचनविभज्योपपदे**" ॥ द्वयोरर्थयोर्वचनं द्विवचनं करणे ल्युट् , कर्मणि षष्ठ्या समासः । येन पदेन द्वावर्थावुच्येते तत् द्विवचनं विभक्तव्यं विभज्यम् । "ऋहलोर्ण्यत्" इति ण्यति प्राप्ते तदपवादो यन्निपात्यते । तेन विभाग्यमिति न भवति । विभाज्यशब्दस्य तु स्मृतिषु प्रयुक्तस्य साधुत्वं चिन्त्यमिति हरदत्तः । अत्रेयं चिन्ता—यद्यपि ण्यत् दुर्लभः । निपातनेन बाधात् ।

न च 'निपातनान्यबाधकानि' इति पक्षमाश्रित्य निर्वाहः शक्यः । ण्यति

---

इत्याहुरिति । **अत एव 'गरीयांसं(१) यत्नमारभत' इति भाष्यप्रयोगः सङ्गच्छते ।**

तद् द्विवचनमिति । **न तु रूढो द्विवचन(२)शब्द इति भावः । तेनास्माकं च देवदत्तस्य च देवदत्तोऽभिरूपतर इति सिद्धम् । "अस्मदो द्वयोश्च" इत्यनेनैकस्मिन्नर्थे बहुत्ववद्भावविधानात् । स च स्वनिमित्तकशास्त्रीयकार्यप्रवर्त्तको न त्वेकत्वनिमित्तकानिवर्त्तकः । न च दन्तोष्ठस्य दन्ताः स्निग्धतरा इति न सिद्ध्येत् समाहारस्यैकत्वात् वर्तिपदार्थानां बहुत्वादिति वा·**

---

( १ ) **गरीयांसमिति**—एतद्भाष्यप्रयोगादेवेति भावः ।

( २ ) **द्विवचनशब्द इति** । द्व्यर्थप्रतिपादके विभजनीये चोपपदे द्वयोर्मध्ये ऽन्यतरापेक्षातिशयविशिष्टस्वार्थवृत्तेर्विभागप्रयोजकीभूतधर्मवाचकाच्च स्वार्थे प्रत्ययः । विभज्यांशे उपपदशब्दबोधितसुबन्तत्वम् । प्रतिपदोक्तत्वात् । पञ्चमीविभक्ते" इति विहितपञ्चम्येवेति बोध्यम् तेन साकाश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका आढ्यतमा इत्यत्र न तरप् । पञ्चम्यपि न विभागस्याभावात् । एते खल्वपि नैर्देशिकानां वार्तान्तरका इति

सति कुत्वस्य दुर्वारत्वात्तथा ऽपि ण्यन्तादचो यति विभाज्य इति
न चार्थभेदः । 'निवृत्तप्रेषणात्प्राकृते ऽर्थे णिच्' इति "णेरणौ"
व्युत्पादनादिति दिक् ।

द्विवचनं च विभज्यं चेति द्वन्द्वः । तस्योपपदेन कर्मधा
द्व्यर्थवाचके विभजनीये चोपपदे सतीत्यक्षरार्थः । अन्वर्थं चोपपद
रितं पदमिति । न तु कृत्रिमम् । तद्धितविधौ तस्यासम्भवात् ।
ग्रहवाक्ये एव प्रयुज्यते वृत्तौ तु गतार्थत्वान्नावश्यकम् । एवं
दग्रहणं स्पष्टार्थम् । इह द्वे उपपदे द्वे च प्रकृती सुप्तिङन्ते । प्रत्
तथापि यथासंख्यं नेष्यते । द्विवचनोपपदमुदाहरति–**अनयोर्**
भज्योपपदमुदाहरति–**प्राच्येभ्य इति** । "पञ्चमीविभक्ते" इति
कथं तर्हि ? मरुद्भवान् पटुरासीत् ऐषमस्तु पटुतर इति ?
एकस्यापि धर्म्मिणो गुणभेदेन भेदाध्यासात्प्रतियोग्यपेक्षः प्रकर्ष
प्रत्यय इति । व्यपदिशन्ति च—"अन्य एवासि संवृत्तः" ।
एवासि धनंजयस्त्वम् इति ।

**"अजादी गुणवचनादेव"** । इष्टतोऽवधारणार्थं एवक

**"तुश्छन्दसि"** ॥ पूर्वेण नियमेन व्यावर्त्तितयोः प्रतिप्र
त्वपूर्वो विधिः । तेनोपाधिसङ्करो न । **दोहीयसीति** । इयम
येन दोग्धी, "भस्याढे तद्धिते" पुंवद्भावः "सिद्धश्च प्रत्ययविधौ

---

**कथम् ? वृत्तौ विशेषणेषु संख्यानुपादानाद्न्तोष्ठलक्षणवर्त्तिपद**
**द्व्यप्रतिपादकत्वेनाक्षतेः** । यन्निपात्यत इति । **अपादाने इति शेषः** । द्
**तत्पक्षाभावाच्चेत्यपि बोध्यम** । सूत्रे व्युत्पादनादिति । **हर्यादिभिरि**

विभजनीये । **विभागावधौ** । तच्च **उपपदं च** । नावश्यकमिति
**दिना निर्णयादिति भावः** ।

इष्टत इति । [illegible]

चेत्यन्तमपि निवृत्तं दीर्घशब्दात्प्रत्ययः । ततस्तृचि निवृत्ते षत्वजश्त्वयोरपि निवृत्तिः । अलौकिके वाक्ये प्रागेव तयोरप्रवृत्तिरिति तु तत्त्वम् । गुणस्तु प्रवर्त्तते । लुप्तेऽपि तृचि प्रत्ययलक्षणध्रौव्यात् । छान्दसमपि "तुः" इति सूत्रं 'णाविष्ठवत्' इत्यतिदेशेन लोकेऽप्युपयोक्ष्यमाणत्वादिहोपन्यस्तम् ।

**"प्रशस्यस्य श्रः"** ॥ 'अजादी' इत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह—**अजाद्योरिति** ।

**"ज्यादादीयसः"** । ज्यादुत्तरस्य ईयसुन आकारादेशः स्यात् ।

**"वृद्धस्य च"** । स्वरूपस्येह ग्रहणं न तु "वृद्धिर्यस्याचामादिः" इति परिभाषितस्य, व्याख्यानात् । अस्य "प्रियस्थिर" इति वर्षादेशोऽपि पक्षे भवति । न च तस्येमनिचि सावकाशता । वृद्धशब्दादिमनिचोऽभावात् । एवं च इहैव 'वृद्धस्य वर्षिश्च' इति सूत्रयितुमुचितम् । एवं हि द्विर्वृद्धग्रहणं न कर्त्तव्यमिति लाघवम् ।

**"स्थूलदूर"** । परग्रहणं यविष्ठो ह्रसिष्ठ इत्यत्र पूर्वयणादेर्लोपो माभूदिति । पूर्वग्रहणं तु स्पष्टार्थम् । परस्मिन् लुप्ते सामर्थ्यात् पूर्वस्यैव गुणलाभात् । **स्थविष्ठ इति** ।

नन्वत्र "ओर्गुण" इत्येव सिद्धं तत्किं गुणवचनेनेति चेद् ? मैवम् । परयणादिलोपस्याभीयत्वेनासिद्धत्वात् । क्षिप्रे ओरभावात् । क्षुद्रे अनन्त्यत्वाच्च ।

**"इष्ठस्य यिट् च"** ॥ पूर्वसूत्रं संपूर्णमनुवर्त्तते, तदाह—**बहो**-

---

न्दसमप्यत्र व्याख्यातम् । निवृत्त इति । **अनुत्पन्न एवेत्यर्थः** । षत्वजश्त्वयोरपि निवृत्तिरिति । **सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया ऽप्रवृत्तिः । तदेवाह—** प्रागेव तयोरप्रवृत्तिरिति । ध्रौव्यादिति । **एभ्यः परत्वात्सपादसप्ताध्यायस्थत्वाच्चेत्यपि बोध्यम्** । तुरिति सूत्रमिति । **"तुरिष्ठेमेयस्सु" इति सूत्रमित्यर्थः । तस्य छान्दसत्वं तु निमित्तभूतेष्ठनीयसुनोश्छान्दसत्वादिति बोध्यम् । "तुश्छन्दसि" इत्यस्येष्ठनि परतः पूर्वकार्यत्वाभावेन णावतिदेशाभावात्** ।

द्विर्वृद्धेति । **न च तद्ग्रहणसामर्थ्यात् पृथ्वादेराकृतिगणत्वेनेमनिचि वर्षिमेतीति वाच्यम् ? वर्षादेशस्य चारितार्थ्येनेष्ठनि ज्यादेशेन बाधापत्तौ वर्षिष्ठ इत्याद्यनापत्तेः** ।

स्पष्टार्थमिति । **ह्रसिष्ठे इकोऽसम्भवादिकः क्षेपिष्ठादौ प्रत्ययस्यैकस्य व्यवधानादप्राप्तिशङ्कावारणार्थं पूर्वमात्रस्येत्यर्थकं तदिति भावः** । अनन्त्यत्वाच्चेति ।

रित्यादि । भूरादेशश्चेत्यपि द्रष्टव्यम् । अत्र आदिलोपे कृते यि
गमः । यद्वा लोपापवादो यकार आगमः । इकारस्तूच्चारणार्थः । प
दं भाष्ये स्थितम् ।

**"युवाल्पयोः"** ॥ युवेति स्वरूपग्रहणम्, न तु युवा(१)प

**"विन्मतोर्लुक्"** ॥ **स्रजिष्ठ इति** । विनो लुकि कृते
दकार्याभावः । अस्मादेव ज्ञापकाद्विन्मतोरजादी ।

**"प्रशंसायां रूपप्"** ॥ प्रकृत्यर्थस्य परिपूर्णतेह प्रशं
स्तुतिः । तेनेहापि भवति–चौररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति ।
पहरणेन चौर्यं परिपूर्यते । **पचतिरूपमिति** । 'क्रियाप्रधानमा
क्रियायाश्चासत्त्वरूपत्वेऽपि एकवचनं भवति, औत्सर्गिकत्वात् । ते
रूपं पचन्तिरूपमित्यादि । इह प्रथमैव विभक्त्यन्तराणामप्राप्तेरित्याहु
त्यादियोगे कर्मणि द्वितीया ऽप्यस्तीति तत्त्वम् । क्लीबत्वं लोका
पचतिकल्पमित्यादावपि बोद्धव्यम् ।

**"विभाषा सुपः"** ॥ सूत्रे सुप इति षष्ठ्यन्तम्, "षष्ठ्य
येन"इत्युक्तेः । **सुबन्तादिति** । प्रागित्यपकृष्यते । तच्च यद्यपि स
स्ताच्छब्दस्य विवरणं तत्समानार्थं तथाऽपि तद्योगे षष्ठी न प्रवर्त
न्यारात्" इति सूत्रे अञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि "षष्ठ्यतसर्थप्रत्य
तद्बाधनार्थं पृथग्ग्रहणमिति सिद्धान्तयित्वा प्राक् प्रत्यग्वा ग्राम
तत्वात् ।

काशिकायां तु वृत्तावपि पुरस्ताच्छब्दः प्रयुक्तः । अत ए
दिति तदुक्तिर्हरदत्तेन भङ्क्त्वा व्याख्याता–ल्यब्लोप एषा पञ्
भूतं सुबन्तं प्रकृतित्वेनाश्रित्येत्यर्थ इति ।

यत्तु प्राचोग्रन्थं व्याचक्षाणैरुक्तं सुबन्तादिति ल्यब्लोपे
तद्भ्रमसात् । न हि हरदत्तेन काशिका भङ्क्त्वा नीतेत्येव सर्वं त
वैषम्यस्य स्फुटत्वात् । **प्रागेवेति** । सौत्रस्तुशब्दो अवधारणे

---

औत्सर्गिकत्वादिति । **संख्यायास्तिङोक्तत्वेऽपि एकवचनमिति**
गादिति भावः ।

भावः। तेन बहुजेव विकल्प्यते न तु पूर्वत्वम् , अन्यथा प्राक्त्वं विकल्पेत। तथा च पक्षे बहुच्परः स्यात् ।

भाष्यकारस्त्वाह—तुशब्दस्य नेदं फलम् । तथा हि—"उदश्वितोऽन्यतरस्याम्" इत्यादौ प्रत्यय एव विकल्पते, प्रधानत्वात् ; न तु परत्वं गुणत्वात् , 'गुणानां च परार्थत्वात्' इति न्यायात् । तद्वदिहापि विभाषाग्रहणेन बहुजेव सम्भन्त्स्यते' न पुरस्तादित्येतत् । किं तु अवधारणार्थस्य तुशब्दस्येहान्यदेव प्रयोजनम् । पुरस्तादेव सर्वं यथा स्यात् । तेन लिङ्गसंख्ये अपि प्राक् प्रत्ययोत्पत्तेः । प्रकृत्यवस्थायां ये दृष्टे ते एव स्तः । प्रयोगश्च प्राक् प्रकृतेरिति । तेन बहुगुडो द्राक्षा, लघुर्बहुतृणं नरः, इत्यादौ न विशेष्यनिघ्नता ।

ननु 'स्वार्थिकाः प्रकृतितो लिङ्गवचनानि लभन्त' इत्येव सिद्धमिति चेत् सत्यम् । एतदेव ज्ञापयति—'ईषदसमाप्तौ ये स्वार्थिकास्तेषु अभिधेयवदेव लिङ्गवचने स्तः' इति । तेन गुडकल्पा द्राक्षा, शर्कराकल्पो गुड इत्यादि सिद्धम् । यत्तु काशिकायां बहुगुडेति स्त्रीलिङ्गं पठ्यते, तत्प्रामादिकम् , भाष्य(१)विरोधादिति हरदत्तः ।

"**प्रागिवात्कः**" ॥ 'सुप' इत्यनुवर्त्तते तेन तिङन्तात्को न ।

---

गादिति भावः। प्राक्त्वम् । **प्रत्ययस्य पूर्वदेशत्वम्** । पुरस्तादेवेति । **पुरस्ताच्छब्दाच्चरयैतदर्थलाभः** । अभिधेयवदेवेति । **न तु प्रकृतिवदित्यर्थः । तेन प्रकृतिलिङ्गाद्यतिक्रमो ज्ञाप्यत इति तात्पर्यम्** ।

---

(१) **भाष्यविरोधादिति**—भाष्येतु—"विभाषा सुपः" इति सूत्रे तुग्रहणं किमर्थम् ? तुग्रहणम् नित्यपूर्वार्थम्—नित्यं पूर्वो यथा स्यात्, विभाषा माभूदिति व्याख्याय नहि विभाषाग्रहणेन पूर्वमभिसम्बध्यते किं तर्हि बहुजभिसम्बध्यते विभाषा बहुज् भवतीति। यदा च भवति तदा पूर्वो भवतीति उक्तम्, पुनश्चदं तर्हि प्रयोजनम् प्रागुत्पत्तेर्यल्लिङ्गं वचनं

"**अव्ययसर्वनाम्नाम्**"॥ **तिङश्चेति**। मण्डूक
"ङ्याप्प्रातिपदिकात्" 'सुप' इति चानुवर्त्तत एव।

"**कस्य च दः**"॥ **कान्ताव्ययस्येति**। सर्वनामग्रह
नेह सम्बध्यते, तयोः कान्तत्वासम्भवात्। अधोक् अधोगित्
कत्वम्। यद्यपि शक्नोतेर्यङ्लुकि लङि तिपि अशाशगिति सम्
यङ्लुकोऽसार्वत्रिकत्वान्नेदृशं लक्ष्यमस्तीति भावः।

**ओकारसकारेति**। अकज्विधौ सुपोऽप्यनुवृत्त्या
च टेर्विशेषणे कामचाराद्व्यवस्थाप्रसङ्गे भाष्यकारवचनाद् व्य
**ओकारसकारेत्यादि**। सङ्कोचश्च युष्मदस्मन्मात्रविषयः
उदाहृतत्वात्। अन्येषां त्वविशेषेण प्रातिपदिकस्यैव टेः प्रा
सुबन्तस्य। तेन सर्वकेण, इमकेन, भवकन्तमित्यादि सिद्ध्य

"**शीले क**" **इति**। शीलं स्वभावो नियमश्च। **तू**
"केऽणः" इति ह्रस्वस्तु न, भाष्यकृता दीर्घस्योदाहृतत्व
स्यानित्यत्वाद्वा। दुर्घटवृत्तिकारस्तु "न कपि" इत्यत्र नेति योग

"**नीतौ च तद्युक्तात्**" ॥ **हन्त ते धानका इ**
स्त्रीलिङ्गः। ततः कः। "केऽण" इति ह्रस्वः। कप्रत्ययान्ता
त्ययस्थात्" इतीत्वेन भवितव्यम्। प्रायेण तु धानका इति प
ज्ञातिवृत्तिर्द्रष्टव्येति हरदत्तः। "कर्मव्यतिहारे णच् स्त्रियाम्" इ
ज्ञापितम्–'स्वार्थिकाः प्रकृतितो लिङ्गं क्वचिदतिवर्तन्तेऽपि इ
मिति भावः।

"**घनिलचौ च**" ॥ चकाराद्यथाप्राप्तमिति काशिका
णैव ठज्विहितः। वावचनात्कोऽपि। चकारेण तु कस्याप्यनु

---

सुप इति चेति। क्वचित्प्रातिपदिकस्य टेर्ग्रहणं क्वचित्सुबन्त
लाभार्थमुभयोरनुवृत्तिरिति बोध्यम्।

म् । योगविभागे फलमपि चिन्त्यमिति हरदत्तः ।

**"ठाजादौ"** ॥ समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । आदिग्रहणं चिन्त्यप्रयोजनम् । 'यस्मिन्विधिस्तदादौ' इत्येव सिद्धम् । **अस्मिन् प्रकरण इति** । प्रत्यासत्त्या तयोरेवार्थयोर्बुद्धौ संनिधानादिति भावः । **सर्वं लुप्यत इति** । एतच्चोर्ध्वग्रहणसामर्थ्याल्लभ्यते । अन्यथा "आदेः परस्य" इति द्वितीयादचो यः परस्तस्यादेरेव लोपः स्यात् ।

ननु ठग्रहणं व्यर्थम्, इकादेशे कृते ऽजादावित्येव सिद्धत्वादिति चेत् ? न, उको द्वितीयत्वे ततः परस्य ठावस्थायामेव लोपे ठस्य कादेशार्थं ठग्रहणात् इदं ध्वनयन्नुदाहरति—**वायुक इति** । किं च यदा चित्रगुप्रभृतिभ्यष्ठच् तदा प्रथममिकादेशस्यासम्भवेनाजादिलक्षणो लोपो न स्यादिति, तदर्थमपि ठग्रहणमिति बोद्धव्यम् ।

**"प्राचामुपादेः"** । **उपेन्द्रदत्त इति** । स्यादेतत् , कृतसन्धेरुपेन्द्रशब्दादेकादेशस्य पूर्वान्ततया ग्रहणात् उपादेरिति विधीयमानौ प्रत्ययौ स्तां नाम । लोपस्तु नकारादेरेव स्यात् । ततश्च उपड उपक इति रूपे न स्याताम् । एवं घनिलच्ठच्स्वपि दोष एव । तस्मादिहैव 'द्वितीयं संध्यक्षरं चेत्'इति वार्त्तिकं वक्तुमुचितमिति चेत्? सत्यम् , प्रकारान्तरेणैव निर्वाहसम्भवान्नोक्तम् ।

तथा हि—अकृतव्यूहपरिभाषया आद्गुणात्पूर्वमेव प्रत्ययः । न च

---

कस्येति । न कस्यापीत्यर्थः । हरदत्त इति । अत्रारुचिस्तु योगविभागसामर्थ्यात् "बह्वचः" इत्यस्यात्रासंबन्धस्तेनाबह्वचोऽप्येतौ ततः कठच्सिद्ध्यर्थश्चकार इति वृत्त्याशय इति । यस्मिन् विधिरिति । प्रत्यासत्त्योपस्थितप्रकृतप्रत्ययस्य विशेष्यसत्त्वादिति भावः । औपदेशिकप्रतिपत्त्यर्थं तु नादिग्रहणम् । ठग्रहणवैयर्थ्यशङ्कापरभाष्यासङ्गतेः ।

ठावस्थायामिति । नित्यत्वादिति भावः । कादेशार्थमिति । न च शौवस्तिकासिद्धये ठचश्चित्वेन सामान्यापेक्षज्ञापकेन सर्वतः पूर्वमिकादेशापत्तिरिति वाच्यम् ? साक्षादनुक्त्या ज्ञापकसिद्धस्यासार्वत्रिकत्वेन तस्यैतद्विषयेऽप्रवृत्तेः । एवंरी

परिनिष्ठितत्वपरेण समर्थग्रहणेन सौस्थितिः, वैक्षमाणिरित्यत्रैव परि
शङ्क्यः। "प्राग्दिश" इति सूत्रे समर्थग्रहणं निवृत्तमित्युक्तत्वात्प्रा
कबलेन समर्थग्रहणप्रत्याख्यानपक्षेऽपि ज्ञापकस्य विशेषपरत्वादिति
उपेन्द्रः, उपगुः, उपकर्ता इत्यादिषु उपडादीनां पञ्चानां रूपाणां
प्रकरणादिना विशेषोऽध्यवसेयः।

**"जातिनाम्नः"** ॥ ये शब्दा जात्यन्तरे प्रसिद्धा मनुष्येषु
विनियुक्तास्त इहोदाहरणम्। **द्वितीयामिति**। एचः सन्ध्यक्षरा
चां संज्ञा। **वागाशीरिति**। वाचि आशीर्यस्येति विग्रहः।
**इति**। यद्यत्र द्वितीयादच ऊर्ध्वस्य लोपः स्यात्। तदा ऽकृतव्
षया वाच् आ इक, इति स्थिते "यस्य" इति लोपे तस्य स्थानिव
रान्तस्य भत्वे ऽन्तर्वर्तिनीं विभक्तिमाश्रित्य चकारान्तस्य पदत्वेन
योः कृतयोर्वागिक इति स्यात्। उत्तरपदलोपे तु अज्झलादेशत्वेन

---

निमित्तविनाशसंभावनासत्त्वादिति भावः। ज्ञापकस्य। अकृतसन्धि
विशेषपरत्वादिति। **अस्वार्थिकप्रत्ययविषयत्वादित्यर्थः। दिग**
**न्द्रस्य परस्य" इति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यापेक्षया**
**स्याप्येकादेशस्य पूर्वमप्रवृत्तेर्न दोष इति।**

इहोदाहरणमिति। **अत एव नामपदं चरितार्थम्**। अकृतव्यूहप
**अस्य यद्यपीत्यादिः। इदमुपलक्षणम्। इकादेशपर्यन्तं**
**दसपाद्यायीस्थकार्यप्रवृत्तियोग्यतया कुत्वाद्यप्रवृत्तिरित्यपि**
"यस्येति" लोप इति। **अस्य सिद्ध्यति तथाऽपीति शेषः। इकं नि**
**चान्ते भसंज्ञासत्त्वात् कुत्वाप्रवृत्त्या तत्सिद्धिरिति भावः।** स्थानि

---

णान्तरङ्गनिमित्तविनाशे तत्स्थानिकादेशविनाशे पश्चात् संभाविते सति पूर्वमन्त
इत्यर्थः स्वीक्रियत इति। इयं च संभावना अन्तरङ्गशास्त्रप्रवृत्त्यभावसंभावनाप्रयो
नत्वन्तरङ्गशास्त्रप्रवृत्तिसंभावनाप्रयोज्या। अन्यथा प्राचीनोक्तभनिनिमित्तविनाश
वैतदर्थलाभे एतत्कथनवैयर्थ्यापत्तेः। तथाच–स्वप्रवृत्त्यभावसम्भावना प्रयोज्या
स्वनिमित्तविनाशसम्भावना तत्र स्वमन्तरङ्गं पूर्वं न प्रवर्तत इति प्राचीनाभिप्रेतो

स्वाभावात्तुल्यावधिकया भसंज्ञया पदसंज्ञा बाद्ध्यते । तत्रापि ताद्धिताश्रयाया अपवादत्वादेव बाधः । विभक्त्याश्रया तु एकसंज्ञाधिकारात्परत्वाद् बाध्यत इति विवेकः । **कथमिति** । अत्राप्युत्तरपदलोपे जश्त्वं न स्यादिति प्रश्नः । **'षष' इति** । अत्र सौत्र एव लोप इष्यते । न त्वौपसंख्यानिक इत्यर्थः ।

---

**न चास्यापि स्थानिवद्भावस्य परम्परया पदान्तविधिप्रापकतया भत्वेऽपि "न (१)पदान्त" इति स्थानिवत्त्वनिषेध इति वाच्यम्? षडिकेऽपि दोषापत्तेः । यदि तु द्वितीयाच ऊर्ध्वं श्रूयमाणस्य लोपविधायकवचनप्रामाण्याद्भत्वे स्थानिवत्त्वम्, तर्हि प्रकृतेऽपि तुल्यम् ।** इष्यत इति॥ **एतच्च "स्वादिषु"**

---

( १ ) **न पदान्तेति**–अत्रेदं तत्त्वम्–साक्षात् पदचरमावयवसाधकः, परम्परया पदचरमावयवसाधकः, साक्षात्पदचरमावयवप्रतिबन्धकः, परम्परया पदचरमावयवप्रतिबन्धकः, इति चतुर्विधेष्वपि स्थानिवद्भावेषु "न पदान्त" इति सूत्रेण द्वितीयं वर्जयित्वा त्रिविधोऽपि निषिध्यते । तत्र साक्षात्पदचरमावयवसाधकस्थानिवत्वनिषेधे सध्रीव इत्युदाहरणम् । अत्र हि अचः इति अल्लोपस्य स्थानिवद्भावः साक्षात्पदचरमावयवसाधकः । साक्षात् पदचरमावयवप्रतिबन्धकस्थानिवत्वनिषेधफलम् 'एषो यन् हसति' इति । अत्र इणो यणादेशस्य स्थानिवत्वं साक्षात्पदचरमावयवोत्वप्रतिबन्धकम् ।

ननु पदसँस्कारपक्षे तत्र स्थानिभूतादचः पूर्वत्वेन इष्टत्वाभावात्स्थानिवत्वाप्राप्तिः । नच देवदत्तस्य नः देवदत्तनः तस्मादाचारक्विबन्तात्क्वित्वपि तस्मादौ देवदत्तन् औ इति स्थिते साक्षात् पदचरमावयवदीर्घप्रतिबन्धकस्थानिवत्वस्य निषेधः फलमिति वाच्यम् । दीर्घविधौ तन्निषधात् 'क्वौ लुप्तं न स्थानिवत्' इति निषेधाच्च । नच दीर्घशब्देन त्रैपादिकदीर्घस्यैव ग्रहणादिदमुदाहरणं सम्यगेवेति वाच्यम् । मानाभावादिति चेन्नैवम् ।

यशस् ऋ इत्यस्मादाचारक्विबन्तात् 'अ प्रत्यय' इत्यनेनाप्रत्यये गुणे तस्य स्थानिवद्भावः साक्षात् पदचरमावयवोत्वप्रतिबन्धक इति यशो–रा इति फलस्य विवक्षणेनादोषात् । परम्परया पदचरमावयवप्रतिबन्धकस्थानिवत्वनिषेधस्य फलं दध्यारः दध्यर्चे इति । अत्र हि—"कर्मण्यण्" इति अण्निमित्तकगुणवृद्ध्योः स्थानिवद्भावः "ऋत्यक" इति प्रकृतिभावसम्पादनद्वारा यण् प्रतिबन्धकः । परम्परया पदचरमावयवसाधकस्थानिवत्वस्य निषेधो न भवतीत्यस्य फलं षडिक इति । अत्रहि भसंज्ञाप्रतिबन्धार्थं स्थानिवद्भावः पदसंज्ञासंपादनद्वारा पदचरमावय-

"**वत्सोक्षाश्व**" ॥ तनुत्वं न्यूनता । सा च प्रवृत्तिनिमि
सत्तेः । क्वचित्तु तत्सहचरितधर्मान्तराणाम् । तत्र वत्सः प्रथमव
सश्च प्रथमस्य न्यूनत्वं नाम वयोऽन्तरप्राप्तिः । तदाह—**द्विती**
तरुण उक्षा । तारुण्यस्य च तनुत्वं तृतीयवयःप्राप्तिः । अश्वेन
न्नोऽश्वः । अश्वत्वं च जातिः । तत्सहचरितस्योक्तधर्मस्य न्यूनत्व
पितृकत्वात् । तथा च गर्दभेनैवाश्वायामुत्पादितो ऽश्वतरः । **ऋ**
वोढा । मन्दशक्तिस्तु ऋषभतरः ।

"**किंयत्तदः**" । निर्द्धार्यमाणवाचिभ्यः प्रत्ययोऽयम् ,
स्वभावात् । नेह—'कयोरन्यतरो देवदत्तः, ययोस्तयोरिति' । ए
म् , "द्वयोः" इति कर्मणि षष्ठी मा भूत् । तथा हि सति अस्मि
देवदत्तयज्ञदत्तावित्यत्रापि स्यात् ।

"**वा बहूनां जाति**" ॥ जातिश्च परिप्रश्नश्चेति समा
तत्र जाताविति सर्वेषां विशेषणं, परिप्रश्नग्रहणं तु योग्यताबलात्किम
तच्च क्षेपनिवृत्त्यर्थम् । तत्र जातिग्रहणं प्रायोऽभिप्रायम् । क्रिया
रपि निर्द्धारणे डतमच इष्टत्वात् । तथा पूर्वसूत्रे द्वयोरिति प्रायोभिप्र
नां निर्द्धारणेऽपि डतमच इष्टत्वात् । तथा च वार्तिकम्-"किमादीनां
प्रत्ययविधानादुपाख्यानर्थक्यम्" इति । अत्र कैयटः-'द्वयोः'इति

---

**इति सूत्रे भाष्ये स्पष्टम् । एवं च 'एकाक्षरपूर्वपदानाम्' इति वा**
**व्यतिरिक्तविषयकमिति भावः ।**

धर्मान्तराणाम् । चापलादीनाम् । **अश्वेनाश्वायामुत्पन्नत्वादीन**

कयोरन्यतर इत्यादि । **इत्यर्थे कतरोऽनयोरित्यादिप्रयोगः स्यादि**
एकस्येति किमिति । **द्वयोर्मध्ये एकस्यैव निर्द्धारणादिति प्रश्नः** । कर्म
**कर्मके निर्द्धारण इत्यर्थः स्यात्तदेति भावः** । इत्यत्रापीति । **अपिरेव**

प्रश्ने इति च न कर्त्तव्यमिति भाव इति। तदेतदाह —**प्रत्याख्यानमाकर इति** । तथा च कतमो भवतामध्यापकः, शूरो देवदत्तो वेति सिद्धम् । **महाविभाषयेति** । समर्थप्रथमग्रहणयोः "प्राग्दिश" इति सूत्रे निवृत्तत्वेऽपि वाग्रहणानुवृत्तेरुक्तत्वादिति भावः । एतेन वाग्रहणस्यापि निवृत्तिरिति प्राचो ग्रन्थं व्याचक्षणानामुपेक्षणीयतां ध्वनयति । **किमोऽस्मिन्निति** । द्वयोरित्यस्य प्रत्याख्यातत्वादिति भावः ।

**प्रागिवीयानां पूर्णोऽवधिः ॥**

---

# अथ तद्धितेषु स्वार्थिकाः ।

**अश्वक इति** । नायं स्वार्थिकः । अश्वशब्दो ह्यश्व एव वर्त्तते, कन् प्रत्ययस्तु प्रतिकृतिरूपे सदृशे इत्येके । अन्ये तु गौर्वाहीक इतिवदश्वशब्दः सादृश्यनिबन्धनादभेदोपचारात् प्रतिकृतौ वर्त्तते । कन्प्रत्ययस्तु औपचारिकत्वद्योतक इत्याहुः । प्रतिकृतौ किम् ? गौरिव गवयः । तृणचर्मकाष्ठादिनिर्मित्तं प्रतिमापरपर्यायं वस्तु प्रतिकृतिः । गवयस्तु नैवम् ।

**अश्वसदृशस्येति** । प्रकृतिप्रत्ययसमुदायसंज्ञेति बोद्धयम् ।

---

**भाष्यप्रयोगादिति भावः ।** इति च न कर्तव्यमिति । **जातिग्रहणाकर्त्तव्यत्वे तात्पर्यम् । परिप्रश्नग्रहणे तु क्षेपार्थनिवृत्तये आवश्यकमिति बोद्ध्यम ।** आकर इतीति । **पूर्वसूत्रस्थद्वयोरित्यस्य प्रत्याख्यानभाष्यव्याख्यानावसरे (१)कैयटइत्यर्थः।** अनुवृत्तेरुक्तत्वादिति । **अत एव "अवक्षेपणे" इति सूत्रे 'क एतयोरर्थयोर्विशेष' इति भाष्यप्रयोगः संगच्छते । तमादयः प्रागवक्षेपणे कनो नित्या इति तु प्रायिकमिति भावः ।**

प्रागिवीयानां पूर्णोऽवधिः ॥

---

**अथ तद्धितेषु स्वार्थिकाः ॥**

**वासुदेव इत्यादि** । याः प्रतिमाः प्रतिगृह्य गृहाद् गृहं
माणा अटन्ति ता एवमुच्यन्ते । देवलकानामित्यनेन त एव भिक्ष
प्रेताः । यास्त्वायतनेषु प्रतिष्ठाप्यन्ते पूज्यन्ते च, तासु तु
लुक् । तदुक्तम्—

अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥

इति ।

अर्चासु-शिवः, विष्णुः । चित्रकर्मणि-अर्जुनः, दुर्योधनः ।
कपिः, गरुडः, सिंहः । **हस्तिकानीति** । ईदृशमेव वि
प्रेत्य पठन्ति—

रामं सीतां लक्ष्मणं जीविकार्थे
विक्रीणीते यो नरस्तं च धिक् धिक् ।
अस्मिन् पद्ये योऽपशब्दान्न वेत्ति
व्यर्थप्रज्ञं पण्डितं तं च धिक् धिक् ॥ इति ।

**"द्रव्यं च भव्ये"** ॥ द्रुशब्दादिवार्थे यत् ।

**"समासाच्च तद्विषयात्"** । **छः स्यादिति** । इ
बोद्धव्यम् । "पूगाञ्ञ्यः" इत्यतः प्रागिवेत्यधिकारात् । शस्त्रीश्य
त्वेक एव इवार्थः, स च समासेऽन्तर्भूत इति छो न भवति । क
**लीय(१) इति** । प्रकृतसूत्रादेव ज्ञापकादिवार्थे समासः । "सुप्सु

**तद्विषयादित्यस्य तद्विषयकसर्वावयवकादित्यर्थस्तथैव भाष्ये**
**णात्तत्फलमाह**—शस्त्रीश्यामेति । एक एवेति । **पूर्वपदभूत एव शब्द**

(१) **काकतालीय इति** । प्रकृतसूत्रादेवसमासस्वीकारो ज्ञापनात् ।
इति त्वगतिकगतिः । इह हि आगच्छतः काकस्याकस्मात् तालपतनाद्यथा वधः,
कस्मिकचोरसमागमाद्देवदत्तवधः । एवम् अजाया आगच्छन्त्या कृपाणपतनाद्य
तथा तत्सदृशो वधः इति निष्कर्षः । शाब्दबोधप्रक्रिया तु—पूर्वपदस्योपमानका

वा । उभयथाऽपि विशेषसंज्ञाविनिर्मुक्तः । स च छप्रत्ययविषय एव । तेन स्वातन्त्र्योपाध्यन्तरयोगो विग्रहश्च नेत्याकरः ।

"पूगाञ्ञ्यः" ॥ अग्रामणीपूर्वादिति किम् ? देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः । । "स एषां ग्रामणीः" इति कन् । अत्र समुदायः पूगवचनः ।

"व्रातच्फञोः" । उत्सेधजीवित्वं व्रातस्य पूगाद्विशेषः । उत्सेधः शरीरायासः ।

**पार्शव इति** । पर्शुरिति जनपदशब्दः, ततोऽपत्ये "द्व्यञ्मगध" इत्यण् । बहुत्वे तद्राजत्वाल्लुक् । पुनः संघविवक्षायामनेनाण् । **यौधेय इति** । युद्ध्यतेऽसौ युधा, युधेरिगुपधलक्षणः कः । युधाया अपत्यं "द्व्यच" इति ढक् । तदन्तात्सङ्घरूपविवक्षायामनेनाञ्, आद्युदात्तत्वम् ।

किं च यौधेयस्याङ्को लक्षणं वा यौधेयः । "सङ्घाङ्कलक्षण" इत्यण् । एवं यौधेयादिषु ये ढगन्तास्तेषु सर्वेषु प्रयोजनद्वयमूह्यम् । **यौधेया इति** । अञो लुक्, अन्तोदात्तत्वम् ।

"पादशतस्य" ॥ "तद्धितार्थ" **इति समासे इति** । यद्यपि प्रकृत्युपाधिर्वीप्सा तथाऽपि वुनो द्योत्येति तद्धितार्थो भवत्येवेति भावः । **द्वौ द्वौ पादौ ददातीति** । समर्पणमात्रमिह ददातेरर्थो, न तु परस्वत्वापादनपर्यन्तम् ।

---

षयो नोत्तरपदभूतस्तद्विषय इत्यर्थः । एक एवेवार्थ इत्यस्य समासस्य पुनर्नेवार्थे वृत्तिरिति कश्चिद् भ्राम्येदतः स्वोक्तिं व्याचष्टे—स चेति । स एवेत्यर्थः । समासोत्तरमिवार्थयोगसम्भवेऽपि समासे द्वाविवार्थौ नान्तर्भूताविवत्यर्थः । स्वातन्त्र्यम्—काकतालः, उपाध्यन्तरयोगः—काकतालो महान् । विग्रहः । काकतालमिवेति । आकर इति । विग्रहस्य भाष्येदर्शनमत्रारुचिः ।

समुदाय इति । कनन्त इत्यर्थः । कनन्ताद् ञ्यो नेति भावः । समुदायस्योद्भूतावयवभेदत्वाद् बहुवचनम् ।

उत्सेधजीवित्वमिति । शरीरायासेन जीवित्वमित्यर्थः ।

संघविवक्षायामिति । सङ्घलक्षकत्वे इत्यर्थः । आयुधजीविसंघादित्यनुवृत्तेरिति भावः । किं च 'यौधेयस्याङ्क' इत्यादिग्रन्थो हरदत्तानुरोधेन । "स्त्री-

तथात्वे हि–उत्तरसूत्राविषयत्वं स्यात् । केचित्तु व्यवसृजतेर्धातोः प्रयोगे सत्येव उत्तरसूत्रस्य प्रवृत्तिमाहुः ।

"**दण्डव्यवसर्गयोश्च**" ॥ अत्राप्युदाहरणे "तद्धितार्थे" इति समासः, स्त्रीलिङ्गं च तद्धितार्थः । यद्वा प्रकृत्यर्थ एव तद्धितार्थः स्वार्थिकत्वाद् वुनः ।

"**स्थूलादिभ्यः**" ॥ प्रकारो भेदः सादृश्यं च उभयत्रापि यथासंभवङ्कन् । **चञ्चत्क इति** । चञ्चतिश्चलनकर्मा । चञ्चन्निव कश्चिच्चञ्चत्कः । एवं बृहद्विशेषो बृहत्कः । यद्वा अचञ्चन्नबृहन्नपि प्रभाविशेषाच्चञ्चन्निव बृहन्निव मणिविशेषो लक्ष्यते सोऽर्थः । **सुरक इति** । "केऽण" इति ह्रस्वः ।

**छिन्नकमिति** । ईषत् छिन्नमित्यर्थः । प्रकृतिवाच्यया क्रियया क्तप्रत्ययवाच्यस्य साधनस्य व्याप्तिरत्यन्तगतिः, सेह नास्ति ।

"**न सामिवचने**" ॥ **प्रकृत्यैवेति** । सामिवचनेनेत्यर्थः ।

**अषडक्षीणमिति** । अविद्यमानानि षडक्षीण्यस्मिन्निति बहुव्रीहिः । अक्षिशब्दोऽत्र श्रोत्रेन्द्रिये वर्तते । "बहुव्रीहौ सक्थ्यक्ष्णोः" इति षच् । मन्त्रो मन्त्रणम् । **आशितङ्गवीनमिति** । अश्नातेराङ्पूर्वात् "आशितः कर्त्ता" इति ज्ञापकात् कर्त्तरि क्तः । ण्यन्तात्कर्मणि वा । उभयथाऽपि प्रभूतं यवसमिति फलितोऽर्थः । **अलंपुरुषीणः** प्रतिमल्लादिः । **ईश्वराधीन इति** । अधिशब्दः शौण्डादिरित्युक्तम् । **प्राक्तन इति** । "अवक्षेपणे क-

---

ददातीतिवत् । उत्तरसूत्रेति । तत्र व्यवसर्गपदेन मुख्यदानस्यैव ग्रहात् । केचित् तु दानार्थकददातियोगेऽपि वीप्साविवक्षायामन्तरङ्गत्वादयमेव वुन् तस्य पदान्तरप्रतिपाद्यदण्डव्यवसर्गयोगनिमित्तकत्वेन बहिरङ्गत्वाद्वीप्सा तु वुन्द्योत्यैवेत्यस्यान्तरङ्गत्वमित्याहुः । आहुरिति । अत्रारुचि-

न्”इति विहितात् । **प्राग्वुन इति** । “पादशत” इति विहितात् । **आमादय इति** । “किमेत्तिङव्ययघादाम्” इत्यादयः । **बृहतीजात्यन्ता इति** । बृहतीशब्देन “बृहत्या आच्छादने” इति विहितः कन्नुपलक्ष्यते । जात्यन्तशब्देन “जात्यन्ताच्छः” इति च्छः । बहुवचननिर्देशात्पाशबादीनां ग्रहणम् । यो हि वैयाकरणपाशादिशब्दैरर्थः प्रतीयते, नासौ प्रकृतिमात्रेण । अतस्तेऽपि तमबादिवन्नित्या एवेति स्थितमाकरे । मूलेऽवाचकप्रयोगास्त्वार्षग्रन्थानुवादत्वान्न दोषाय ।

“**विभाषाञ्चेः**” ॥ दिक्(१) चासौ स्त्री चेति कर्मधारयः । **प्राचीना ब्राह्मणीति** । क्रियानिमित्तो देशकालनिमित्तो वा अयं शब्दः । **प्राचीनमिति** । प्राच्यां दिशि इत्यर्थे “दिक्शब्देभ्य” इत्यस्तातिः । “अञ्चेर्लुक्”इति लुक् । “लुक्तद्धितलुकि” इति ङीपो लुक् । “तद्धितश्चासर्वविभक्तिः” इत्यव्ययत्वात् स्त्रीत्वाभावः । खे तु कृते स्वभावान्नपुंसकत्वम् ।

**ब्राह्मणजातय इति** । भावप्रधानो ब्राह्मणशब्दः, बहुव्रीहिः । ब्राह्मणत्वजात्याधारभूतः पिण्ड इत्यर्थः । **ब्राह्मणजातिरिति** । षष्ठीतत्पुरुषः । भावप्रधानेन सह कर्मधारयो वा । **जातेरिति** । अयं भावः—बन्धुशब्दो द्विविधः—रूढो यौगिकश्च । तत्राद्यो ज्ञात्यादिषु प्रसिद्ध आप्तपर्यायः पुँल्लिङ्ग एव । स नेह गृह्यते, “बन्धुनि” इति नपुंसकनिर्देशात्, किं तु क्रियाशब्दोऽयम् । बध्यतेऽस्मिन् जातिरिति विग्रहः । “शृस्वृस्निहि” इत्यादिना अधिकरणे उप्रत्ययः ।

---

ऽयादिर्मन्त्र **इत्यर्थः** । यो हीति । **कुत्सादिरूप इत्यर्थः** । आकरे । **अत्रैव कैयटादिग्रन्थे । ध्वनितं चेदशानां नित्यत्वम् “नित्यं कौटिल्ये गतौ” इत्यत्र भाष्ये । डतरडतमयोस्त्वत्यन्तस्वार्थिकत्वेन ताभ्यां विना ऽपि प्रकृत्या स्वार्थप्रतिपादनं शक्यं कर्त्तुमिति तयोर्न नित्यत्वम्** । अवाचकेति । **बृहतीशब्दो हि कनोऽवाचक इत्यर्थः** ।

क्रियेत्यादि । **प्रकर्षेण गतिशीला पूर्वदेशस्था, पूर्वकालिकीति वार्थः प्रत्ययात्** ।

---

(१) **दिक् चासौ स्त्री चेति** । अत्र भाष्यम्–“विभाषा” इति सूत्रे दिग्ग्रहणम् किमर्थम् ? 'अस्त्रियाम्' इत्युच्यमाने प्राचीना ब्राह्मणी प्राचीना शिखा इत्यत्रापि प्रसज्येत दिग्ग्रहणे क्रियमाणे कर्मधारयाश्रयणान्न दोषः । अथ स्त्री ग्रहणं किमर्थम् ? न यावता दिक् शब्दः स्त्रीविषय एव भवति, अपि तु दिक्शब्दः कश्चिदस्त्रीविषयोऽपि तद्यथा—प्राक्

**पितृस्थानीय इति** । स्थानं सम्बन्धविशेषः पदमिति प्रसिद्धिः । पितुरिव स्थानमस्येति बहुव्रीहिः । **गोस्थानमिति** स्थानं देशः । इतिकरणं विवक्षार्थम् । तेन तुल्यस्थानशब्दाच्छो न ।

"**अनुगादिनः**" ॥ अस्मादेव निपातनादिनिरिति इह उत्तरसू हरदत्तः । वस्तुतस्तु "सुप्यजातौ" इति सूत्रेणैवात्र णिनिरिति तत्रैव वक्ष्या

"**संख्यायाः**"॥ अभ्यावृत्तिशब्देन द्वितीयादिप्रवृत्तिग्रहणे षट्कृ प्रवृत्तौ पञ्चकृत्व इति स्यात् । अतोऽत्र विवक्षितमर्थमाह–**अभ्यावृत्ति** न्मेति । **भूरिवारानिति** । भूरिशब्दस्य लौकिकसंख्यावाचित्वेऽपि ग्रहणम् । "बहुगण" इति सूत्रे बहुगणस्य नियमार्थत्वात् , 'अनियतसं वतश्चेद्भवति तर्हि बहोरेव, इति नियमशरीरम् ।

रूपे विशेषाभावेऽपि वस्तुगतिमनुरुध्याह–**संयोगान्तस्येति** । चो ग्रन्थं निरस्यति–**न त्विति** । यदि सोरुकार उच्चारणार्थस्तर्हि निर न्धकत्वात्स एव ग्राह्यो न तु सुच् । यदि तु उकार इत् तथाऽपि सुज दुर्लभः । सुच उकारस्योच्चारणार्थत्वात् । अथाऽयमपीत्संज्ञक इति ग्रहस्तथाऽपि तदनुबन्धकपरिभाषया ऽदोष एव । किं च सुतिसीति चर्याद्विभक्तय एव तत्र गृह्यन्ते तदाह–**सिच इवेति** ।

**बहुधा दिवसस्य भुङ्क्त इति** । "कृत्वोर्थप्रयोगे काले करणे"इति षष्ठी इति हरदत्तः । एतच्च प्रामादिकं शेषाधिकारबलेन ष्याः समासनिवृत्तिफलकतया तिङन्तेनोदाहरणमिति प्रागुक्तनि विरोधात् ।

---

संख्यावाचित्वेऽपीति । **अपिना अरुचिर्बोधिता । तद्बीजं तु बहुशब्द यं संख्यावाची । अत एव च "बहुगण"इति सूत्रे बह्वादीन् प्रक्रम्य 'अ संख्येत्याह संख्यावदिति गम्यते, इति भाष्ये उक्तम् । संख्यात्वं च नि**

**"तत्प्रकृतवचने मयट्"** ॥ **प्राचुर्येणेति** । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढः, तथाऽपीह वचनग्रहणादयं विशेषो लभ्यते । तद्धि यादृशस्य प्रकृतस्य लोके मयटा वचनं प्रत्यायनं तत्र यथा स्यादित्येवमर्थम् । **आद्ये इति** । प्रथमान्तात्प्रकृते द्योत्ये प्रत्ययः । स्वार्थिकत्वात्प्रकृतितो लिङ्गम् । अस्मिन् पक्षे तद्ग्रहणं व्यर्थम् । **द्वितीये इति** । अस्मिन्पक्षे उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणम्, ल्युटोक्तमधिकरणत्वं तु मयडर्थः । अत एव विशेष्यनिघ्नता, तदाह—**अन्नमयो यज्ञ इति** । अन्नं प्रकृतमुच्यते ऽस्मिन्नित्यर्थः ।

यत्तु प्राचोक्तं तदिति प्रथमासमर्थात्प्राचुर्येण प्रस्तुतमन्नेत्यर्थे मयट् स्यादिति । यच्च व्याचख्युः—प्राचुर्येणेत्यादि प्रत्ययार्थे विशेषणमिति । तत्रेदं वक्तव्यम् । वच्यार्थत्यागान्न्यूनता, अधिकरणस्य क्रियासाकाङ्क्षत्वेन तदध्याहारे गौरवं चेति मूले दोषः । टीकायां तु प्रकृत्यर्थेति वक्तव्ये प्रत्ययार्थेत्युक्ती रभसकृता आकरविरुद्धा चेत्यास्तां तावत् ।

**निपातसमुदाय इति** । उपदेशपारंपर्ये वर्त्तते । वचनाच्चाप्रातिपदिका-

---

दर्थस्य" इत्यादौ "प्रैष्यब्रुवोः" इत्यत्र च शेष इत्यस्य निवृत्त्या कृत्वोर्थेति सूत्रेऽपि तस्यासम्बन्ध इति हरदत्ताशयोऽत्रेत्यन्ये ।

प्रथमान्तादिति । प्रचुरार्थबोधकादित्यर्थः । तदाह—प्रकृते द्योत्य इति । तद्ग्रहणंव्यर्थमिति । प्रकृतवचने वर्त्तमानस्य प्रथमान्तत्वमेव सम्भवतीति भावः । उच्यमानतेति । न च वचनशब्दीयप्रकृतिप्रत्ययार्थयोः प्रकृत्यर्थस्य मयट्प्रकृत्यर्थविशेषणता, ल्युडर्थस्य विधेयप्रत्ययविशेषणतेत्यस्यान्याय्यत्वमिति वाच्यम्? प्रकृतेति लुप्तसप्तम्यन्तं भिन्नं पदं, वचने इति च । प्रत्ययार्थः कस्य वचनाधिकरण इत्याकाङ्क्षायां प्रकृत्यर्थस्यैव लाभात्तस्यैवोच्यमानतेत्याशयेनैवमुक्तेः । ल्युटोक्तमिति । ल्युडन्तोक्तं वचनाधिकरणत्वमित्यर्थः । मयडर्थ इति । न चैवं स्वार्थिकप्रकरणविरोधः । आद्ये तत्प्रकरणपाठस्य चारितार्थ्यात् । वस्तुत उच्यमानता प्रकृत्यर्थस्य प्रायिकी । अत एव

'निजामयोऽध्यामपि पावनीमयं भवन्मयो ध्यायति नावनीपतिः'

दपि प्रत्ययः । **भेषजमिति** । भिषज्यतेः कण्ड्वादियगन्तात्क्विप्
भिषजामिदं भेषजम् । अस्मादेव निपातनादेकारः ।

**पितृदेवत्यमिति** । पितर एव देवतेति कर्मधारयः, ततो

**अर्घ्यमिति** । 'मूल्ये पूजाविधावर्घः' इत्यमरः ।

**आग्नीध्रमिति** । "अग्नीधः शरणे रण् भं च"
न्तोदात्तं शैषिकेषु व्युत्पादितम्, तस्मादञ्, आद्युदात्तत्वं फलम् ।
माह—**स्त्रियामिति** । समानं धारणमस्याः साधारणी भूः । अने
शिष्टसम्बन्धात् । पृषोदरादित्वात्समानस्य सभावः, ततो ऽञ्,
अञभावे टाप् ।

"**वर्णो चानित्ये**" ॥ अनित्यत्वमिह स्वसमानाधिकरणध्वं
गित्वम् । अत एव "रक्ते" इत्युत्तरसूत्रं सार्थकम् । लाक्षादिना र
रयस्य यावदाश्रयमवस्थानेन नित्यतया पूर्वेणासिद्धेः ।

"**लिङ्गबाधनं वा**"**इति** । प्रातिपदिकात्तद्धिता इति पक्षम्,
विधानमात्रेणापवादत्वमिति पक्षञ्च आश्रित्येदं वार्त्तिकम् । अत्र च वे
यम्, शिष्टोऽनुवादः । प्रतिपदविहितेन कना लिङ्गनिमित्तस्य प्रत्यय
बाधः प्राप्तः, स वा वक्तव्य इत्यर्थः । न च ङ्याब्ग्रहणसामर्थ्यादि
एतश्येतशब्दाभ्यामत्यन्तस्वार्थिके कनि प्राप्ते तद्बाधेन चरिता

---

कण्ड्वादियगन्तादिति । "**नैतेभ्यः कर्तरि क्विप् दृश्यते**" इति कण्ड्
स्थभाष्यं तु अजन्तकण्ड्वादिपरम् । तत्रैवानिष्टानां प्रागुक्ता
कण्डूरित्यादौ कर्त्रर्थानवगमाच्च तेभ्यः क्विबिति तदाशयं कैयट
च प्रकृते तदस्ति । भिषगित्युक्ते कर्त्रर्थावगमादित्याशयः ।

वस्तुतस्तु सुबन्तात्ताद्धिताः। निरवकाशत्वेनैवापवादत्वम्, तथा चेदं वार्त्तिकं न कर्तव्यम्। अत एव ङ्याब्ग्रहणं व्यर्थमिति स्वम्पीति रूपं प्रबलमित्यवोचाम।

**उपायेति**। उपायशब्दष्ठकं लभते ह्रस्वत्वं चेत्यर्थः। अकस्मादितीह पठ्यते, तद्दान्तं न तु तान्तम्। तेन कादेशो न, अव्ययत्वाट्टिलोपः, आकस्मिकम्।

**वाचिकमिति** । 'अतिवर्तन्ते अपि स्वार्थिकाः क्वचिल्लिङ्गम्' इति नपुंसकत्वम्।

**"मृदस्तिकन्"** ॥ "प्रत्ययस्थात्" इत्येव सिद्धे इकारोच्चारणं प्रक्रियालाघवार्थम्। टापो लुक्यपि श्रवणार्थं च पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिको घटः।

**"सस्नौ"** ॥ इह "प्रशंसायां रूपप्"इत्यस्यानन्तरं "वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि"। 'मृदः सस्नौ' 'तिकंश्च' इति वक्तुमुचितम्। तथा तु न कृतमित्येव।

**"बह्वल्पार्थात्"** ॥ कारकात्किम्? बहूनां स्वामी। अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च। भूरिशो ददाति। त्रिशः। **मङ्गलेति**। प्रायिकं चैतत्। अन्यत्रापि हि दृश्यते। "अपेतापोढमुक्तपतितापत्रस्तैरल्पशः" इति। कारकत्वं तु समसनक्रियां प्रति पञ्चम्याः कर्मत्वात्। तदभिधायित्वाच्चाल्पशब्दस्य। तथा च व्याचक्षते–'अल्पा पञ्चमी समस्यत' इति।

**परिमाणशब्दा इति**। तथा च–एकवचनग्रहणेन वृत्तावेकार्थता-

---

**स्य 'ङ्याब्'इति निवृत्तमिति भाष्यानुसारी मार्गः। 'न चेत्यादिरवोचाम' इत्यन्तं तु रक्षिताद्यनुरोधेनेति दिक्।**

ह्रस्वत्वं चेति। **दीर्घस्येति शेषः।**

लुक्यपि श्रवणार्थमिति। **इदमित्वप्रकरणस्थकैयटानुरोधेन।**

वक्तुमुचितमिति। **मात्रालाघवपर्यालोचने इति शेषः। "तिकश्च" इत्यस्य मण्डूकानुवृत्तिकल्पने तमबादयः प्राक्कनो नित्या इति मृच्छब्दसाधुत्वायैषामग्रहणाय व्याख्यानाश्रयणे च गौरवं यद्यालोच्यते तदा न वक्तु-**

नियताः परिमाणशब्दा एव गृह्यन्ते इति भावः । अत एव प्र
**घटं घटमिति** । घटादयो हि जातिशब्दा नैकार्था भवन्ति ।
गस्य एकानेकसाधारणत्वात् । किंत्वभेदैकत्वसंख्यामुपाददते ।
जयादित्यमेतन्नोक्तम् । वामनस्तु मन्यते जातिशब्देभ्योऽपि
तथा च—"जश्शसोश्शिः"इति सूत्रे जसा सहचरितस्य शसो ग्र
भवति—कुण्डशो ददाति, वनशः प्रविशतीति । अथ कथम् 'ए
तृसंयुक्तानि' इति द्विर्वचनशसोः सह प्रयोगः इति चेत् ? ह
कुर्वन्तीति हरदत्तः । अत एव "सुप" इति सूत्रे एकैकश इति
प्रामादिक इत्यवोचाम । **द्वयोर्द्वयोरिति** । कथं तर्हि—

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशस्समेतानां परिषत्त्वं न विद्यते ॥

इति ।

न ह्यत्र वीप्सा ऽस्ति नापि कारकत्वमिति चेत् ? अत्राहु
समेतास्तेषामपि परिषत्त्वं नेत्यर्थः । तथा च समवायक्रियां प्रति
प्सा चास्त्येवेति । एतेन 'एकश एकवचनादिसंज्ञानि स्युः'इति
एकशब्दार्थस्य अस्तिक्रियां प्रति कर्तृत्वात् ।

**कृष्णतः प्रतीति** । "प्रतिनिधिप्रतिदाने च यस्मात्"
**आद्यादिभ्य इति** । "तस्यादित उदात्तमर्धह्रस्वम्" इत्येत

---

नैकार्था इति । एकत्वविशिष्टस्यैवार्थस्य बोधका नेत्यर्थः
कत्वसंख्यामिति । भेदशब्देनैतत्सहचरितं द्वित्वादि, एकत्वं
इत्यर्थः । एतच्चान्यत्र प्रपञ्चितम् । एवं च वृत्तिजन्य
संख्याया अभानेऽपि पश्चान्मनसा प्रस्थश इत्यादावेकत्व
भानं शब्दशक्तिस्वभावादिति तत्रैव शसिति भावः ।
घटं घटमितिवत् घटौ घटौ ददातीत्यपि बोधो
तात्पर्यम् । जयादित्येति । प्रथमद्वितीयपञ्चमषष्ठा जयादित्यकृ
तरे वामनकृतवृत्तय इत्यभियुक्ताः । जातिशब्देभ्योऽपीति

"**वक्तव्यम्**" **इति** । वृत्तिकारस्तु 'अभूततद्भाव' इति सूत्रमध्ये प्रचिक्षेप ।

"**अरुर्मनः**" ॥ **च्विश्चेति** । पूर्वेण सिद्धस्यापि च्वेरनुवादोऽयं लोपस्य तत्सन्नियोगशिष्टत्वार्थः ।

"**विभाषा साति**" ॥ विभाष्यते विकल्प्यते इति विभाषा "गुरोश्च हलः" इत्यकारस्ततष्टाप् । नन्विदमव्ययम्, 'द्वयोर्विभाषयोर्मध्ये, 'पयसस्तु विभाषया, इत्यादौ विभक्तेर्दर्शनात् ।

"**डाचि विवक्षित**" **इति** । परसप्तम्यां तु अन्योन्याश्रयः स्यात् । डाचि कृते द्वित्वे सति द्व्यजवरार्द्धता, तस्यां च सत्यां डाजिति भावः । **खरटखरटाकरोतीति** । खरटदित्यस्य द्वित्वादि पूर्ववत् । द्व्यजर्द्धादित्युक्तेऽत्र न स्यात् । नह्यस्यार्द्धं द्व्यच् किं तु त्र्यच् ।

यत्तु प्राचोक्तं टिलोपे सति द्व्यचो ऽवरं यत् तदर्द्धं यस्येति । तन्न, सत्यन्तस्य निर्मूलत्वात् । खरटखरटाकरोतीत्यादौ अव्याप्तेश्च । यदपि व्याचख्युः—परमापकर्षे क्रियमाणे द्व्यचो ऽवश्यम्भाव्यपकर्षो विवक्षित इत्याह-टिलोपे सतीत्यादि । तदपि उक्तदोषादाकरविरोधाच्चोपेक्ष्यम् ।

**बीजेन सहेति** । वृत्तिविषये बीजशब्दो बीजावापसहिते विलेखने वर्त्तते ।

"**समयाच्च**" ॥ **कालं यापयतीत्यर्थ इति** । हरदत्तस्त्वाह—'समयो नियमः' अद्य कर्त्तव्यत्वेन निर्णीतमर्थं विघटयितुमद्य मे पारवश्यं श्वोऽस्य समय इत्येवं यो बहुषु दिवसेष्वाह स एवमुच्यते इति ।

"**सपत्रनिष्पत्रात्**" । पतन्त्यनेनेति पत्रम् । शराणां पुङ्खगतो बर्हः । **सपत्रं निष्पत्रं वा करोति भूतलमिति** । पत्राणि पर्णानि ।

---

प्रतिपाद्यत्वात् ।

द्व्यचो ऽवरमिति । द्व्यजपेक्षया न्यूनमित्यर्थ इति तद्व्याख्यातारः । द्व्यचोऽवश्यंभावीति । न तु ततो न्यूनतेति तदर्थः । उक्तदोषात् । सत्यन्तस्य निर्मूलत्वरूपात् । पटपटाकरोतीत्यस्यासिद्धिश्च, टिलोपे सत्युत्तरार्द्धस्यैकाच्त्वादिति बोद्धव्यम् ।

वर्त्तत इति । एतेन बीजेन सह भुवः कर्षणे बीजानामपि कर्षणे इष्टासिद्धिः

"शूलात्पाके" ॥ पाकं किम् ? शूलं करोति क
मुदररोगः ।

"सत्यादशपथे" ॥ भाण्डं रत्नादिद्रव्यजातम् । क्रेत
मयैतद् ग्राह्यमिति बुद्धया परीक्षादिना सत्यंकारद्रव्यप्रदानेन
त्यर्थः । तथैव तथ्यम् । "पादार्घाभ्यां च" इति चकारस्या
त्वात् स्वार्थे यत् ।

**परिवापणमिति** । कर्मव्यापारमात्रवाचिनो
ल्युट् । **माङ्गल्यमुण्डनेनेति** । चौलदीक्षादौ ।
**भद्राञ्चेति** । भद्रादित्यर्थग्रहणमिति तु नोक्तम् । मङ्गलादिभ

**इति तद्धितेषु स्वार्थिकाः ।**

इति तद्धितप्रक्रिया ॥

# अथ द्विरुक्तप्रक्रिया ।

"**सर्वस्य द्वे**" । "नित्यवीप्सयोः" इत्येवमादीनां विधे
देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधिकारोऽयं तदाह—**इत्या**
एतदर्थरूपमधिकृत्येत्यर्थः । स्वरूपग्रहणं तु न भवति । "नाम्रे
तु वा" इति लिङ्गात् । सर्वशब्दोऽवयवकार्त्स्न्ये । सर्वावयवोपे
तु कश्चिदप्यवयवो वर्ज्यत इत्यर्थः । इह "द्वे" इत्यस्य संख्येय

---

**थापनायामित्यर्थः । कर्त्तव्यस्यावसरप्राप्तिः समयः । स एव**

कर्मव्यापारेत्यादि । **निवृत्तप्रेषणादित्यर्थः** । हेतुमण्णिचि । **पु**
**पारे इत्यर्थः** ॥

**इति तद्धितेषु स्वार्थिकाः ।**

इति तद्धितप्रक्रिया ॥

## अथ द्विरुक्तप्रक्रिया ।

इत्येवमादीनामिति । **साकाङ्क्षत्वादित्यनेनान्वयः** । स्वरूपेति
दिः । **ननु वाक्यधात्वोर्द्विर्त्ववारणायावश्यकेन पदस्येत्यप**
**"सर्वस्य" इति व्यर्थमत आह**—सर्वशब्द इति । न तु काश्चिदिति ।
**मनाविरहेण 'एकाज्द्विर्वचनन्यायेन' सर्वावयवद्वित्वं सिद्धं**

रूपे गृह्येते । शब्दानुशासनप्रस्तावात् । "सर्वस्य" इति स्थानषष्ठी । सोऽयं स्थानेद्विर्वचनपक्षः ।

यदि तु उच्चारणमेव संख्येयं तदा स्थान्यादेशभावो नास्ति । निवृत्तिधर्मा हि स्थानी । सर्वं चेन्निवृत्तं किमुच्चार्य्येत । अतः "सर्वस्य" इति अध्याहृतोच्चारणशब्दापेक्षया "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी । सर्वं द्विरुच्चारयेदिति फलितोऽर्थः । सोऽयं 'द्विःप्रयोगो द्विर्वचनम्'इति पक्षः ।

नन्वाद्ये पक्षे स्थानिवद्भावेन समुदायस्यैव पदत्वं स्यान्नावयवयोस्ततश्च पदकार्याणि न स्युः । तद्यथा-अपचन्नपचन्निति ङमुट्, वृक्षान् वृक्षानित्यत्र "पदान्तस्य" इति णत्वनिषेधः, अग्नेऽग्ने "एङः पदान्तात्" इति पूर्वरूपत्वमित्यादि । किं चापदान्तत्वप्रयुक्तानि कार्याणि स्युः । तद्यथा-अश्नीताश्नीत "अतो गुणे" इति पररूपं स्यादिति चेत् ? अत्राहुः, यदि प्रत्यस्तमितावयवभेदः समुदाय एक एव आदेशः स्यात्, द्वे इति द्विवचनमनुपपन्नं स्यात् । अतो 'द्वे' इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते । तत्र स्थानिवद्भावेन समुदायस्य पदत्वम् । स्वत एव चावयवयोरपीति न कश्चिद्दोषः । द्विःप्रयोगपक्षे तु प्रत्येकं पदसंज्ञा स्पष्टैव । समुदायस्य त्वित्थम्—पचसि पचसीत्यादौ हि स एव धातुः प्रत्ययश्च द्विः पठ्यते । ततश्च यस्मात् प्रत्ययो विहितस्तदादितदन्तमिति विधीयमाना

---

योग एव स्यादिति बोध्यम् । तदाह—सर्वस्येति स्थानषष्ठीति । ते च शब्दरूपे प्रत्यासत्त्या 'स्थानेन्तरतम' परिभाषया च स्थानिसमानाकारपदरूपे एवेति बोद्ध्यम् । कर्मणि षष्ठीति । एवं च स्थानषष्ठीत्वाभावेन तस्य स्थानित्वाप्रसक्तिरेवेति बोध्यम् । पूर्वरूपत्वमित्यादीनीति पाठः । प्रत्यस्तमितेति । अज्ञायमानेत्यर्थः । द्विवचनमनुपपन्नं स्यादिति । द्विरिति सुजन्तमेवोच्यतेति.

पदसंज्ञा समुदायस्यापि वर्त्तते । तेनावग्रहादि सिद्ध्यति । यद्यप
यस्यैव पदत्वं, नावयवानामिति भाष्यस्वरसस्तथाऽपि भाष्यं भङ्क
अवयवे पदकार्याणां प्रागुक्तानां निर्वाह्यत्वादित्यन्यत्र विस्तरः
किम् ? "स्वादिषु" इति पदसंज्ञामादाय वृक्षाभ्यामित्यादौ प्रक्
त्रस्य मा भूत् ।

"**नित्यवीप्सयोः**" ॥ **द्योत्ये इति** । "नपुंसकम
इत्येकशेषः । एकवद्भावश्च बोध्यः । **पदस्येति** । वक्ष्यमाण
व्यमिति भावः । तेन नित्यतायां विधीयमानं द्विर्वचनं धातुमात्रस
ति । किं च पदस्योच्यमानं द्विर्वचनं बहिरङ्गमन्तरङ्गं धातोर्यङं न
अन्यथा हि भृशार्थे सावकाशो यङ् पौनःपुन्ये परेण द्विर्वचनेन बा

यत्तु वदन्ति, परिगृहीतसाधना क्रिया व्यवहारोपयोगिनी
धानाच्च धातुमात्रस्य द्वित्वं नेति । तच्चिन्त्यम् , उक्तरीत्या नानाव

---

पि भवतीति भावः। लक्ष्यभेदाद् द्वित्वात् पूर्वं प्रवृत्तत्वेऽपि 'लक्ष्ये
इतिन्यायस्याविषयः ।

यत्तु प्रथमसिपः प्रकृतिमध्ये प्रवेशेन तद्ग्रहणेन तद्ग्रहणाद्
प्रत्ययमध्यपातेन तद्ग्रहणेन ग्रहणाद्वा समुदायस्य पदत्वमिति । त
स्यैव प्रकृतितादिपर्याप्त्यधिकरणत्वेन तत्समुदायमद्ध्यपातितस्य
ग्रहणायोगात् । तदन्तसंज्ञासूत्रे भाष्येऽस्य न्यायस्य "नेदमदसो
ज्ञापकमूलकत्वोक्त्या शास्त्रीयमध्येपाताविषयत्वाच्च । पौनःपु
तु कृताष्टमिकद्वित्वादप्रातिपदिकत्वेऽपि कस्कादिषु कौतस्कुत
तद्धित इति ज्ञापनेन सिद्धमिति भावः। तेनेति । अवयवस्य
न्वयः । पुनः पुनर्जायमाना पुराणीत्यादौ पदावयवत्वविशिष्टपद
सिद्धिः। अवान्तरपदत्वे एवावग्रहादिति भावः । आदिना
इत्यत्र समुदायस्य सुबन्तत्वाड्ञ्सिद्धेः सङ्ग्रह इत्यभिमानः ।
इति । समुदाये वाक्यपरिसमाप्तिकतया पदत्वमिति हि

ष्टक्रियासमर्पकस्य वाक्यस्यैव द्वित्वापत्तेः । किं च भावार्थकलकारान्तानामव्ययकृतां च त्वदुक्तरीत्या द्वित्वं न स्यात् ।

ननु तत्र नित्यतावगत्यनन्तरं पदान्तरैः साधनाकाङ्क्षा परिपूर्यत इति चेत् ? तर्हि तत्रैव धातुमात्रस्य द्वित्वं केन वार्यताम् । किं च तद्वदेव कर्तृकर्मलकारस्थलेऽपि धातुमात्रद्वित्वं दुर्वारमित्यास्तां तावत् ।

नन्वेवं पदाधिकारस्यापकर्षे सगतिकस्य द्विर्वचनं न स्यादिति चेन्न । वार्त्तिककारवचनादेव तत्सिद्धेः । तत्रापि ह्येषैव गतिः ।

यत्तु वदन्ति प्रपचतिप्रपचतीत्यादौ धातूपसर्गसमुदायः क्रियाविशेषवाची । अडादिव्यवस्थार्थं परं धातूपसर्गयोः पृथक्कल्पनम् । ततश्च क्रियाधर्मो नित्यता यस्य समुदायस्येति तस्यैव द्विर्वचनमित्यादि । अत्रेदं वक्तव्यम्—कल्पितेनैव पृथक्त्वेन यथाऽऽगमः षाष्ठं द्वित्वं च व्यवतिष्ठते । एवमाष्टमिकद्वित्वस्यापि प्रवृत्तिं को वारयेत् । क्रियाधर्मो नित्यत्वमित्यपि व्यर्थ उपन्यासः । लकारार्थयोः कर्तृकर्मणोरपि क्रियानिरूप्यतया विशिष्टादेव लकारापत्तेः । तस्य धातुत्वं नास्तीति चेत् ? तर्हि न स्युरेव लादयः । तद्विधीनां निरुपसर्गे चरितार्थत्वात् । इदं त्ववधेयम् । सगतिकस्य द्वित्वे एकपद्यं नास्त्येव । स्थानिनः पदत्वाभावेन आदेशेऽपि तस्य दौर्लभ्यात् । द्विःप्रयोगपक्षे तु प्रथमगतिं विहायावशिष्टस्य समुदायस्य पदत्वं प्राप्तं तस्मिन् सत्यपि न क्षतिः ।

---

उक्तमेव विवृणोति—किं चेत्यादिना ।

नित्यतावगत्यनन्तरमिति । यङन्ते साधनसम्बन्धात्प्रागपि धातोर्नित्यतासम्बन्धदर्शनादिति भावः । आबाधादिविषये वाक्यद्वित्ववारणार्थमपकर्ष आवश्यक इत्यपि बोध्यम् ।

वार्त्तिकेति । "सगतिकस्येति वक्तव्यम्" इति हि तद्वचनम् ।

विशिष्टादेव । उपसर्गविशिष्टादेव आभीक्ष्ण्यस्य क्रियाविशेषधर्मत्ववत्तयोरपि क्रियाविशेषनिरूप्यत्वादिति भावः । समुदायस्य पदत्वमिति । पचतिप्रपचतीत्यस्योक्तरीत्या तिङन्तत्वादित्यर्थः । न क्षतिरिति । न च मन्दं प्रति एकस्यैव

वस्तुतस्त्विह द्विःप्रयोगपक्षो दुर्बलः । पौनःपुन्यं पौनःपुनिक इ
ष्यञ्ठञोरनुत्पत्तिप्रसङ्गात् । तत्र हि अन्तरङ्गत्वादव्ययात्सुपो
प्रवर्त्तते । किं च तत्रैकपद्याभावे पुनः पुनर्जायमाना पुराणी
ऽपि न सिद्ध्येदित्यन्यत्र विस्तरः ।

**आभीक्ष्ण्यमिति** । तद्धि क्रियाविशेषणम् । तेन तद्द्यो
क्रियाप्रधानानामेव न्याय्यम् । क्रियाप्राधान्यं चाख्याते ऽस्ति क्
"अव्ययकृतो भावे" इति वक्ष्यमाणत्वादिति भावः । **वीप्सा**
व्याप्तुमिच्छा वीप्सा व्याप्तिप्रतिपिपादयिषेति यावत् । सा च
आबाधवत् । गतगत इत्युक्ते प्रियस्य चिरगमनादिना पीडितो
इति यथा प्रतीयते तथा वृक्षंवृक्षं सिञ्चतीत्यादावपि व्याप्तिं बु
वाक्यमित्यवगमात् । शाब्दबोधविषयस्तु व्याप्तिरेव । साच का
आधिकारिकम् । सर्वे ब्राह्मणा आमन्त्रिता इत्यादौ यथा । न

---

सुलभत्वेनेष्टापत्तेरित एव वाऽरुचेराह—वस्तुतस्त्विति । पौनःपुन्यि
हि पुनः पुनर्भवितरि वर्त्तमानात्पुनः पुनः शब्दाद्भावे भवे च प्रत्
त्वादिति । लुक्त्वाच्चेत्यपि बोध्यम् । एवं च यत्र संघाते पूर्वो भ
नियमार्थेन समासग्रहणेनाप्रातिपादिकत्वात्प्रत्ययानुत्पत्तिः ।
स्यार्थवत्परत्वमिति भाष्यसंमतपक्षेऽपि दोष एव । आ
वत्वात् । बोधावृत्तिस्तु द्वावित्यादिवन्न । स्थानेद्विर्वचने तु
त् प्रातिपदिकत्वं "न ङिसंबुद्ध्योः" इति ज्ञापकेन प्रत्ययलक्षणे
इति निषेधाप्रवृत्तिज्ञापनात्स्थानिनः प्रातिपदिकत्वे आदेशे ऽ
लभ्यात् । कालबोधकप्रातिपदिकप्रकृतिकसुबन्तत्वमप्युद्भु
मुदायस्यादेशत्वादुक्तरीत्या सुलभम् । अत एव कस्कादिषु क
पाठश्चारितार्थः । ऐकपद्याभाव इति । तदभाववादिनां मते इत्यर्थः
न्मतमसंगतमिति प्रागुक्तमित्याद्यावेव दोषौ बोध्यौ । अन्य
अयं भावः—यद्यपि कौस्तस्कुतपाठेन कृताष्टमिकाद्वित्वाद
ऽपि तद्धितोत्पत्तिरित्यपि वक्तुं शक्यम् । तथापि
तायामेव ज्ञापकत्वमुचितमिति ।

इति यावदिति । **तस्यां योगरूढोऽयमिति भावः** । प्रयोक्तृध
धेयधर्मत्वे हि पीडितवीप्सादिशब्दानामेव स्यान्न गतवृक्षा

सर्वादिप्रयोगेऽपि असङ्कोचवृत्तिता नियन्तुं शक्या । उपपदादिमहिम्ना संकोचस्यावश्यकत्वात् । यत्र तु संकोचकं नास्ति तत्रासंकोच इष्ट एव । जातोजातो निधनमुपैतीतिवत् । न चैवं वृक्षंवृक्षमित्यादौ बहुवचनप्रसङ्गः । बहूनां भानेऽपि बहुत्वसंख्यायास्तत्राभानात् । प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासते । अत एव प्रत्येकं विधेयसंबन्धो लभ्यते ।

तथाहि—ब्राह्मणाय ब्राह्मणाय शतं देयमित्युक्ते प्रत्येकं शतं दीयते । एकशेषे तु नैवम् । ब्राह्मणेभ्यः शतं देयमित्युक्ते नियमेन प्रत्येकं शतं देयमित्यर्थस्यालाभात् । अत एवैकशेषे एकवचनं न । यदा तु परिगृहीतद्वित्वानां वीप्सा तदा ब्राह्मणाभ्यां ब्राह्मणाभ्यां शतं देयमिति भवत्येव । एवं त्रिभ्यस्त्रिभ्य इत्याद्यप्यूह्यम् । तदयं निर्गलितोऽर्थः । द्विर्वचनैकशेषयोरनेकप्रतीतिर्नियता । किं तु आद्ये एकत्वं द्वित्वं बहुत्वं वा व्यवस्थितमेव प्रतीयते पदार्थकार्त्स्न्यं च । द्वितीये तु द्वित्वबहुत्वे एव प्रतीयेते कार्त्स्न्यं तु नेति । स्यादेतत् । परिगृहीतैकत्वानामपि बहुत्वमभिधातुं द्विर्वचनादुत्तरकालं बहुवचनोत्पत्तिरस्तु । तथा हि—एकशेषे यथा ऽन्येषामर्थः शिष्टेन गम्यते, तद्वदत्र विशेषेऽपि शिष्टाभ्यामितरार्थधीः ।

यत्तु वदन्ति-अप्रातिपदिकत्वान्न भविष्यतीति, तदव्यापकम् । सरित्सरिद्योषा योषेत्यादौ उक्तदोषानिस्तारादिति चेत् , अत्रोच्यते—अन्तरङ्गैकसंख्यावरुद्धो द्विरुक्तार्थः संख्यान्तरे निराकाङ्क्ष एव । न हि वस्तुगत्या बहु-

---

पृथक्संख्यायुक्तेत्युक्तेर्जात्यभिप्रायेण प्रयोगे न द्वित्वम् । एकशेषविषये च न । तच्च तेषां क्रियागुणद्रव्याभावैर्युगपदन्वये प्रतीयते । तत्रबुद्धिस्थेत्यस्य फलमाह—सर्वेत्यादिना । एवं च सर्ववृक्षसेचनाभावेऽपि न क्षतिः ।

पृथक्संख्यायुक्तेत्यस्य फलं दर्शयितुमाह—एकशेषे त्विति । अत एव बुद्धिविषयाणां बहूनां मध्ये कतिपयानामेव वृक्षाणां शोभनत्वे प्रतिपाद्ये न द्वित्वम् , यथा—'अस्मिन् वने पञ्च माषाः शोभना' इति । एवं

त्वमस्तीत्येतावतैव तस्य शाब्दबोध आपादयितुं शक्यते । असत्त्वा
तदापत्तेः । अयोग्यं तदिति चेत्समं प्रकृतेऽपि । अत्र च लिङ्गम् "
प्राचाम्" इति निर्देश इति दिक् ।

"**परेर्वर्जने**" ॥ अत्र वार्त्तिकम्–"परेरसमासे" । नेह परित्रि
देवः । "वेति च वक्तव्यम्" । तथा च कारकेषूदाहृतम्–अप हरेः
संसार इति ।

"**उपर्यध्यधसः**" ॥ कथं तर्हि 'उपरि शिरसो घटं
इति ? अत्राहुः–औत्तराधर्यमात्रमिह विवक्षितं न तु सामीप्यम्
वस्तुतस्तत्सत्त्वेऽपि न द्वित्वम् । विवक्षा हि शब्दप्रधानकारणम् ।
"उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति सन्नन्तप्रयोगो ज्ञापक इ

"**वाक्यादेः**" ॥ **सुन्दरसुन्दरेत्यादि**। "स्वरितमाम्रेडि
सम्मतिकोपकुत्सनेषु" "आम्रेडितं भर्त्सने" इति सूत्राभ्यां यथाय
प्लुतो वैकल्पिकत्वान्नेह कृतः । उक्तं हि प्राक् "सर्वः प्लुतो वैकल्पिकः

"**एकं बहुव्रीहिवत्**" ॥ 'द्वे' इत्यनुवर्त्तते । तच्चानुवा
तदाह—**द्विरुक्त इति** । **तेनेति** । यद्यप्येतौ बहुव्रीहौ वि
विहितौ, तथाऽपि तत्र दृष्टावित्येतावतैवातिदिश्येते इति भावः ।
**यात्सुबिति** । तच्चैकवचनमेव । यथा चैतत्तथा प्रागेवोक्तम्
**भाग इति** । न तूत्तरभागेऽपि । तथा हि—द्वेधाऽत्र पुंवद्भावः
नाम्नो वृत्तिमात्रे" इति वा, "स्त्रियाः पुंवत्" इति वा । तत्राद्यः पूर्व
"भस्त्रैषा" इति ज्ञापकादित्युक्तम् । द्वितीयस्तु समानाधिकरणपरत्वे वि
न चोत्तरभागस्य तदस्तीति भावः ।

---

स्थानिवत्त्वेन कृतद्वित्वे तत्सुलभमिति । एकैकमित्यादौ स
तिदेशेन प्रातिपदिकत्वस्य सत्त्वाश्चेत्यपि बोध्यम् ।

एतेनेह सूत्रे "द्वे" इत्यस्याननुवृत्तौ एकेत्यत्र पुंवद्भावापादनं हरदत्तादिभिः कृतं प्रत्युक्तम् । एकैकयेत्यत्र पूर्वभागे टापो निवृत्तिरिति स्वग्रन्थविरोधाच्च 'द्वे' इत्यनुवृत्तिस्तु स्पष्टार्था चेत्यन्यदेतत् ।

**"आबाधे च"** ॥ **इहेति** । बहुव्रीहिवद्भावादित्यनुषज्यते । तथा च—"स्त्रियाः पुंवत्" इति प्रवर्त्तते । न चेदमुत्तरपदं नेति वाच्यम् ? अतिदेशबलेनैव उत्तरपदत्वस्यापि लाभात् । ननेत्यत्र "नलोपो नञः" इत्यपि तर्हि स्यादिति चेत् ? मैवम् । अत्र हि उत्तरपदाधिकाराविशेषेऽपि नञः साक्षाच्छिष्टेन कार्यित्वेन निमित्तभावो बाद्ध्यते । यथा च मद्रह्रदो भद्रह्रद इत्यत्र "अचो रहाभ्याम्" इति रेफस्य द्वित्वप्रसङ्गे आकरे उक्तम्—'नेमौ रहौ कार्यिणौ किं तर्हि निमित्तमेतौ द्विर्वचनस्य' इति ।

---

हरदत्तादीति । **आदिना कैयटः** । स्पष्टार्थेति । **स्पष्टप्रयोजनेत्यर्थः । अत एव तन्मया नोक्तमिति भावः** । तच्चैक इत्यादौ बहुव्रीहिवद्भावेन सुब्लुगभावः । अन्यथा स स्यादेव । दधि इत्यादेरिव विभक्तिरहितस्यैव साधुत्वं स्यात् ।

न च पुनः सुप् "लक्ष्ये लक्षणस्य" इति न्यायात् । अनेन च प्रातिपदिकत्वातिदेशे तेनैव सुब्लोपतदुत्पत्ती सिद्धे इति अनेन सुपः पृथगनतिदेशात्कार्यातिदेशे लक्षणभेदात्पुनः सुबिति न वाच्यम् । न च प्रत्ययान्तत्वात् कथं प्रातिपदिकत्वम् । द्वित्वे कृतेऽपि समत्वात् । स्थानिवद्भावेन तस्यापि प्रत्ययान्तत्वात् । लुप्तेऽप्येकदेशविकृतन्यायेन तत्त्वात् ।

यदि तु बहुव्रीहिवद्भावात्प्रत्ययान्तत्वेऽपि तत्र दृष्टत्वमात्रेण सूत्रभाष्यप्रामाण्यात्प्रातिपदिकत्वं तर्हि प्रकृतेऽपि तुल्यं, स्पष्टं चेदं भाष्ये । सुब्लोपपुंवद्भावावित्यत्र तन्निमित्तं प्रातिपदिकत्वं लक्ष्यते । अन्यथा सुबुत्पत्तिरपि वक्तव्या स्यात् ।

यत्तु एक इत्यत्रान्तोदात्तत्वं तत्फलम् । स ह्याद्युदात्तः । पूर्वपदोत्तरपदयोरभावात् प्रकृतिस्वराप्राप्तेरिति । तन्न । व्यपदेशिवद्भावेन पूर्वपदत्वसत्त्वादिति तात्पर्यम् ।

बाध्यत इति । **इदं च प्राचामनुरोधेन । यदि तु तक्रकौण्डिन्यन्यायो 'येन**

नन्वेवमपि धूर्धूः, पन्थाःपन्था इत्यादौ समासान्तः स्यादि
न। "समासाच्च तद्विषयात्" इत्यतः समासादित्यनुवर्त्तमाने "
इति पुनः समासग्रहणं हि समासाधिकारविहितो यः समासस्तत्पा
तेनातिदेशिके समासान्तानामप्रवृत्तेरिति दिक् ।

"**प्रकारे गुणवचनस्य**" ॥ यद्यपि भेदोऽपि प्रकार
बहुभिः प्रकारैर्भुङ्क्ते बहुभिर्विशेषैरित्यवगमात् । तथापीह विवक्षि
**सादृश्य इति** । अत्र च व्याख्यानं शरणम् । अस्ति च सा
रशब्दः ब्राह्मणप्रकारोऽयं माणवको ब्राह्मणसदृश इत्यवगमात् ।
इति । "पुंवत्कर्मधारय" इत्यादिसूत्रात् । तच्च कोपधादिष्वपि
बहुव्रीहिवद्भावे प्रकृते कर्मधारयवद्भावोक्तिर्न व्यर्थेति बोद्ध्यम्
रिति । इह द्वित्वेन जातीयरो बाधो नेष्यते इति वामनः
ब्राह्मणजातीय इत्यादावगुणवचनेऽपि भेदरूपेऽर्थे सावकाश
गुणवचनेषु सादृश्ये परेण द्वित्वेन बाद्ध्येतेति भावः ।

जयादित्यस्तु जातीयर्विधौ विशेष एव प्रकारशब्दार्थ इत्
चनस्येति किम् ? सिंहो माणवकः, अग्निर्माणवकः । यद्यपि

---

णेन नान्तरीयकादाविव नलोपो वारणीयः । "नभ्राण्नपात्"
स्त्रार्थमेवेति दिक् । धूर्धूः पथिपन्था इति पाठः ।

दिगिति । दिगर्थस्तु ननेत्यादौ "नञ्सुभ्याम्" इति स्वरे
"वनं समासे" इत्यतः समासग्रहणापकर्षणेन मुख्यसमास
तत्र समासग्रहणापकर्षसामर्थ्यादेव समासान्तोदात्तत्वमपि
प्रकृत्या" इत्यादेरपि 'समासस्य' इत्यनुवृत्त्या मुख्यसमास एव
ङितस्वरतत्स्वरयोर्विशेषाभावेन तदतिदेशाभावाच्च । अत्र
ऽपि अतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति सिद्धा
नुदात्तत्वं सर्वस्वरबाधकं "नञ्सुभ्याम्" इति तु इतरस्व
पवादः स्यादिति बोध्यम् । अत एव भाष्ये सुब्लोपपुंवद्भा

हशब्दाभ्यां जघन्यवृत्त्या गुणो गम्यते, तथाऽपि गुणवचनग्रहणसामर्थ्यात् मुख्यवृत्त्या गुणपराणामेव द्वित्वं, न त्वन्येषामित्याकरः ।

'नवं नवं प्रीतिरहो करोति' इत्यत्र वीप्सायां द्वित्वम् । अनेन तु द्वित्वे सुब्लुक् स्यात्

यथा—'नवनवा वनवायुभिराददे' इति पुंवद्भावः ।

कथं ?–'भीतभीत इव शीतमयूखः' इति भारविः ।

इवशब्देन सादृश्यस्योक्ततयेह प्रकारे द्वित्वायोगात् । सत्यम् । भीतेभ्यो भीत इति कथंचिद् व्याख्येयम् । तेनातिभीत इति फलितम् ।

यत्तु "आधिक्ये द्वे" इति वार्तिकेन भीतभीतादौ द्वित्वमिति दुर्घटवृत्तिकारादिभिरुक्तं तदतिरभसोक्तिमात्रम् ।

अथ कथम्–

'खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघुपयः स्रोतसां चोपयुज्य' ।

इति मेघदूतः । एकस्यापि खेदावस्थासु क्षयावस्थासु च भेदं परिकल्प्य वीप्सा बोद्धव्या ।

अथ कथम्–

'मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्' इति मेघः ।

'मन्दमन्दमुदितः प्रययौ खम्' इतिवल्लुक्प्राप्तेर्वीप्सार्थस्य चासंभवादिति चेत्, सत्यम् । स्वतो मन्दगामिनं त्वां पवनो मन्दं नुदतीति कथञ्चित् व्याख्येयम् । सिद्धस्य गतेश्चिन्तनीयत्वात् ।

**आनुपूर्व्येति** । वीप्साभावादारम्भः ।

---

यान्ते ततः सादृश्यविवक्षायां चारितार्थ्यांचेति तात्पर्यम् । अन्यथा ऽनवकाशत्वेनेति बोध्यम् ।

आकर इति । भाष्यमित्यर्थः । पुंवद्भाव इति । पुंवत्त्वं भवति तथा सुब्लुक् स्यादिति भावः ।

**न्यायसिद्ध इति।** यावद्भिः शब्दैः सम्बोध्योऽर्थमवगच्छति तावतां प्रयोक्तव्यत्वादिति भावः।

**"कर्मव्यतिहार" इति।** क्रियाविनिमय इत्यर्थः। **द्वे इति।** नित्यमेवेदं द्वित्वम्, बाहुलकं तु समासवद्भावस्यैव। **सुपः सुर्वक्तव्य- इति।** अत्र केचित्–द्वितीयादीनामेवेदं स्वादेशविधानम्। अत **एवोत्तरदले**ऽपि द्वितीयादय एव न तु प्रथमा, ततोऽप्येकवचनमेव न तु वचना**न्तरम्।** एतच्च दुर्गपरिशिष्टकण्ठाभरणादिष्ववर्वाचीनग्रन्थेषु स्पष्टम्। तदेतदुक्तं **प्राचा** 'द्वितीयैकवचनान्तत्वं परपदस्य' इति। एतच्च सर्वमपाणिनीयम्, भाष्या**द्यनु**क्तत्वात्। तदेतद्ध्वनयन् वचनान्तरमुदाहरति—**अन्योन्याविरुद्धा'दि। माघ इति।** स च भाष्यानुगुण एवेति भावः। तथा चार्वाचीनमतं **कव**योऽपि नानुरुद्धयन्ते इत्युक्तम्। तथा च भारविः—

'क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैः'

इति प्रायुङ्क्त। अत्र हि–अदृष्टः परस्परो यैरिति विग्रहे प्रथमा**न्तता** स्पष्टैवेति दिक्।

तृतीयादिषु पुंवदिति प्राचो ग्रन्थं परिष्कुर्वन्नाह–**अत्र केचिदिति।** वस्तुस्थितिमाह—**अन्ये त्विति।**

**अतिप्रसङ्गादिति।** तथा च–एकशेषप्रतिबन्धाद् द्विर्वचन**स्यापि** वृत्तित्वमाश्रित्य तद्बलेन पुंवद्भावो न शक्यो, लक्ष्यविरोधात्।

---

लानीतिवदिति परे। वीप्साभावादिति। एकस्यैकमेव मूलम्। इतरेषां तूपरिसन्निवेशापेक्षो गौणो मूलव्यपदेशः। न चैकरूपं भागानां स्थौल्यं किं तु यथामूलमुपचीयते स्थौल्यमिति तदभाव इति भावः।

समासवद्भावस्यैवेति। तच्च लक्ष्यभेदेन क्वचित्प्रवृत्तिरेव, क्वचिदप्रवृत्तिरेव। अत एव भाष्ये ऽन्यशब्दस्य समासवद्भावरहितमेवोदाहरणमितरशब्दस्य तत्सहितमेव दत्तम्। वचनान्तरमिति। द्वितीयादीनामिति शेषः। एकशे-

'कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत्'

इति 'अकथित'सूत्रस्थभाष्यविरोधाच्चेति भावः ।

यत्तु प्राचो ग्रन्थं व्याचक्षाणैरुक्तमन्यामन्यामिति द्विर्वचने कृते "सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव" इति पूर्वोत्तरपदयोरपि पुंवद्भाव इत्यादि, तत्सर्वं रभसात् । एतच्च मूले एव ध्वनितम् ।

यच्चापि तृतीयादिषु पुंवद्भावो विशेषस्तेन टाब् न । अत्र तृतीयादिष्विति अविवक्षितम् । द्वितीयायामपि पुंवत्त्वस्येष्टत्वादिति । तच्चिन्त्यम् । पुंवत्त्वं विशेष इति, विशेषाभिधानमविवक्षितमिति च स्वोक्तेः परस्परव्याघातात् । मूलकृता पुंवद्भावस्यास्पृष्टत्वात्तद्ग्रन्थस्याज्ञस्यैव व्याख्यातत्त्वाच्चेति दिक् ।

**"यथायथम्" इति । "न लोक" इति षष्ठीनिषेधः ॥**

सिद्धान्तकौमुदीव्याख्या सेयं प्रौढमनोरमा ।
समाप्तं तत्र पूर्वार्द्धं तेन तुष्यतु शंकरः ॥ १ ॥

## इति भट्टोजिदीक्षितविरचितायां प्रौढमनोरमायां सिद्धान्तकौमुदीव्याख्यायां पूर्वार्द्धं समाप्तिमगात् ॥

---

मन्येत सेति । यत्पदद्वित्वेन वीप्सितार्थोपस्थित्यैकेनापि तत्पदेन पूर्वोपस्थितरूपेण परामर्शोपपत्त्या प्रयोजनाभावान्न तत्पदे वीप्साऽत्र । क्वचित्तु स्पष्टत्वाय तच्छब्देऽपि द्वित्वम् । 'व्यञ्जनान्यपि यस्याचः कार्यमुच्यते तं तं भजन्ते' इति "अजादेः" इति सूत्रे भाष्यप्रयोगात् ।

रभसादिति । द्विर्वचनस्य वृत्तित्वाभावः पूर्वपदे एव तस्य प्रवृत्तिश्च राभस्यबीजम् ।

परस्परव्याघातादिति । तृतीयादिषु विशेष इत्युक्तेऽन्यत्र विशेषाभाव इति लभ्यते । तृतीयादिष्वित्यस्याभावे सर्वत्रैव तल्लाभे तस्य विशेषत्वभङ्ग इति भावः । अस्पृष्टत्वादिति । पुंवद्रूपमिति हि तेनोक्तमिति भावः । आज्ञस्येनेति । अत्र केचिदित्यादिना मदुक्त्या मूलस्थरीत्येति भावः । विस्तरस्त्वस्मत्कृते शब्दरत्ने मदन्तेवासिकृतशब्देन्दुशेखरमञ्जूषयोश्च द्रष्टव्य इति शुभम् ॥

इति श्रीमद्दीक्षितभट्टोजिपौत्रदीक्षितहरिविरचिते प्रौढमनोरमा

ॐ

# अथ तिङन्ते भ्वादिगणः ।

ग्रन्थमध्ये कृतं मङ्गलं शिष्यशिक्षार्थमुपनिबध्नाति-**श्रौत्रेति** । "हायनान्तयुवादिभ्योऽण्" इति सूत्रे "श्रोत्रियस्य यलोपश्च" इति वार्तिकाच्छ्रौत्रं श्रोत्रियत्वम् । आर्हन्ती योग्यता । "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति सूत्रे "अर्हतो नुम्च" इत्युक्तेः । ताभ्यां वित्तैः ।

किंच गुण्यैर्गुणवद्भिः । "रूपादाहतप्रशंसयोर्यप्" इति सूत्रे "अन्येभ्योऽपि दृश्यते" इत्युक्त्वा 'गुण्या ब्राह्मणा' इत्यस्य भाष्यादावुदाहृतत्वात् । **तोष्टूयमान इति** । स्तौतेर्यङन्तात्कर्मणि शानच् । अपिशब्देनापाततो विरोधं(१) ध्वनयति ।

वस्तुतस्तु न विरोधः । स्तुतिप्रयोजकीभूतानामनन्तकल्याणगुणानां श्रुतिसिद्धत्वेऽपि वियदादिवद् व्यावहारिकत्वात्तदभावस्य पारमार्थिकत्वात् । एतच्चोत्तरमीमांसायां निरूढमेव ।

**पूर्वार्द्ध इति** । हलन्तेषु क्विबादिव्युत्पादनं तु प्रास(२)ङ्गिकमिति भावः । **अथेति** । इहापि कृत्सु "णचः स्त्रियामञ्" "अणिनुणः" इत्यादिप्रास-

---

**अथ तिङन्ते भ्वादिगणः ।**

ग्रन्थमध्ये कृतमिति । **"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि" इत्यादिभाष्योक्तफलोद्देशेनेत्यर्थः** । ताभ्यां वित्तैरिति । **"तेन वित्तः" इति चणप् । वेदाध्ययनकर्तृत्वेन तदुक्तानुष्ठानकर्तृत्वेन च प्रसिद्धैरित्यर्थः** । श्रुतिसिद्धत्वे ऽपीति । **"एष आत्मा ऽपहतपाप्मा" इत्यादिश्रुतिसिद्धत्वेऽपीत्यर्थः** । पारमार्थिकत्वादिति । **"नेह नानास्ति किंचन" इति**

ङ्गिकं बोध्यम् । प्राधान्येन तु तृतीयाध्यायस्था एवेहोच्यन्त

इह प्राचा "धातोः" आतृतीयाध्यायान्तवक्ष्यमाणाः प्र इत्युक्तम् । यङ्विधौ धातुग्रहणं योगविभागेन व्याचष्टे इति त तत्सर्वमिहोपेक्षितं, योगविभागस्य निर्बीजत्वात् ।

**दशेति** । अनुबन्धवैलक्षण्यादिति भावः । **प्रदृ** यद्यपि पञ्चमलकारे रूपाणीह न व्युत्पाद्यन्ते तथापि स्वरूपे र्श्येते । "लः कर्मणि" "लस्य" इत्यादिसूत्रविषयत मिति भावः ।

**"वर्त्तमाने लट्"** ॥ (१)वर्त्तमान इति । प्रकृत्यर्थविशे

---

तत्सर्वमिति । **मूलं व्याख्यानं चेत्यर्थः । तत्र मूले** **सूत्रम् । "गुप्तिज्किद्भ्यः" इत्यादौ वक्ष्यमाणे तदसम्बन्धा** **इत्यादौ तत्सम्बन्धाच्च व्याख्यानमप्यसङ्गतमित्याह—**ये

प्रकृत्यर्थेति । **प्रतिधातु अनन्तलडादेशानां शक्तिकल्प**

---

**विजयेततरामिति**। सर्वोत्कर्षेण प्रवर्तत इत्यर्थः। "विपराभ्याम्" इ तदन्तात् "द्विवचनविभज्योपद" इति तरप् । "किमेत्तिङव्ययघादाम्" तरबेव कुतः ? विजयते इत्यत्र प्रातिपदिकत्वाभावात् तिङन्तत्वाभाव

नच "सह सुपा" इत्यत्र सहेतियोगविभागात् तिङन्तेन विशब्दस्य सुलभमिति वाच्यम् । सच समासः छन्दस्येव इति ग्रन्थविरोधापत्तेः ।

किञ्च प्रातिपदिकत्वाभ्युपगमे रोरुत्पत्तिः स्यात् । नच लिङ्गसर्वनाम सोर्लुक्स्यादिति वाच्यम् । नपुंसकह्रस्वत्वस्य दुर्वारत्वात् । समुदायान्तः तिङन्तत्वेऽपि विशब्देन साकांक्षत्वेनासामर्थ्यात्ततोऽपि भवितुं नार्हति " त्युक्तत्वात् । आमन्तेन विशद्बयोग इति कल्पनायां त्वन्तरङ्गत्वात्परस्मैपदप्र इति स्यादिचेदत्राहुः-समुदायान्तर्गताज्जयते इत्यस्मादेव तरप् । नच कांक्षितत्वादसामर्थ्यं शङ्क्यम् । तिङन्तस्य प्रधानत्वेन सापेक्षितत्वेऽपि दोष द्योतका इति मुख्यपक्षे प्रत्येकमर्थ एव नास्तीति साकांक्षताया वक्तुम

( १ ) **वर्तमानकालस्थिवति** । वर्तमानकालिकक्रियावृत्तिरित्यर्थ

**वर्त्तमानेत्यादि । लट् स्यादिति ।** तस्य वाच्यं तूत्तरसूत्रे स्फुटम् । वर्त्तमानकालस्तु द्योत्यः। एवं लङादिष्वपि भूतादिकालो यथायथं द्योत्य एवेति निरूढः पन्थाः । वस्तुतस्तु वाच्यत्वेऽपि न क्षतिरिति विध्यादिसूत्रे वक्ष्यामः ।

**"लः कर्मणि च"** ॥ चात्कर्त्तरीत्यनुकृष्यते । सकर्मकविषयं चेदम् । अकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात् । उत्तरवाक्येन तत्र विशेषविधानाच्च । तदेतदाह—**सकर्मकेभ्य इति** । 'भावे च' इति चकारेणापि कर्त्रैवानुकृष्यते न कर्म, असंभवात् । तदाह–**भावे कर्त्तरि चेति** । यद्यपि भावकर्मणोरात्मनेपदविधानात् "शेषात्कर्तरि" इति परस्मैपदविधानाच्च ज्ञापकाल्लकाराणां भावकर्मकर्त्तारोऽर्था अनुमातुं शक्यन्ते, तथाऽपि असत्यस्मिन् सूत्रे सकर्मकेभ्योऽपि घञादिवद्भावे लकाराः स्युः । ततश्च घटं क्रियते देवदत्तेनेत्यादि प्रसज्येत । तन्निवृत्त्यर्थमिदं सूत्रम् ।

न चैवम् 'अकर्मकेभ्यो भावे' इत्येवास्तु भावे अकर्मकेभ्य एव इति नियमार्थमिति वाच्यम् ? भावे एवेति विपरीतनियमापत्तेः । तस्माद्भावे चेति चकार आवश्यकः ।

नचैवं 'भावे च' इत्याद्येवास्तु इति वाच्यम् ? भावे इव कर्तर्यपि अकर्मकेभ्य एवेति नियमापत्तौ सकर्मकेभ्यः कर्त्तरि लकाराभावापत्तेः ।

---

रेव शक्तिकल्पने लाघवादिति भावः। तुल्ययुक्त्या कर्त्रादीनामपि धातुवाच्यत्वं, प्रत्ययास्तद्द्योतकाः । अत एव तेषां विशेषणत्वमिति परे । तस्य । लटः । स्फुटमिति । भावकर्मकर्तृरूपमित्यर्थः । द्योत्य एवेति । तद्बीजं तूक्तम् । निरूढः । भाष्यादिप्रसिद्धः ॥

अनुमातुं शक्यन्ते इति । 'गुणः कृतात्मसंस्कारः' इति न्यायेन भावकर्मणोः कर्त्तरीति लविशेषणम् । तत्र वर्त्तमानस्येत्यर्थ इति भावः । तयोरेवेत्यस्य स्थाने कर्मणि कृत्यक्तखलर्थाः, भावेऽकर्मकेभ्य, इति न्यासः कार्यः । "अनुदात्तङित" इति "कर्त्तरि कर्मव्यतिहारे" इत्युत्तरमेव पठनीयमिति तात्पर्यम् ।

इत्येवास्त्विति । "भावकर्मणोः" इत्युत्तरं 'भावेऽकर्मकेभ्य' इति नियमार्थं

नन्वेवमपि 'लश्च' इत्यस्तु । कर्मणि तु ज्ञापकाद्धि
उत्तरसूत्रे तयोरित्यनेन परामर्शार्थं "कर्मणि" इत्यस्यावश्यक
णक्लेशस्य वैयर्थ्यात् । तस्माद्यथान्यासमेव रमणीयम् ।

अत्र नैयायिकाः—लकाराणां (१)कृतावेव शक्ति

---

लश्चेत्यस्त्विति । कर्त्तरि कृत्, लश्च, भावे ऽकर्मकेभ्य
भावे इत्यादि विधायकमेवेति भावः । ज्ञापकादिति । कर्मणि
नुवादेन तद्विधानाज्ज्ञापकादित्यर्थः । वैयर्थ्यादिति । न च
त्याद्यस्तु । चेन पूर्वसूत्रानुकर्ष इति वाच्यम् ? लाघवाभा

---

( १ ) लकाराणामिति । अयं भावः-"लःकर्मणि" इति सूत्र
रि यदि शक्तिः स्वीक्रियते तदा शक्यतावच्छेदकः कर्तृनिष्ठधर्मविशेषः
च प्रतिकर्तृभिन्ना । एवं च शक्यतावच्छेदकाः नानाः स्युः । एवं नानाध
धयोपस्थितेः गौरवस्यादतो लाघवादाख्यातस्य कर्तृनिष्ठधर्मविशेष
एवं च शक्यतावच्छेदको धर्मः यावत् कृतिषु विद्यमाना कृतित्वरूपा
लाघवम् । न च आख्यातप्रत्ययस्य कृत्यर्थकत्वं यदि स्वीक्रियते चेत
चैत्रेण पचतीति प्रयोगापत्तिरिति वाच्यम् ॥ आख्यात प्रत्ययस्य कृति
कारेण यत्र स्थले कर्तृगतसंख्या आख्यातप्रत्ययेनानभिहिता तत्र तृती
त । प्रकृतोदाहरणे च कर्तृगतसंख्याया उक्तत्वात् चैत्रः पचतीत्यादेरेव

ननु कथं ज्ञायतेऽत्र कर्तृगतसंख्या उक्तात्रानुक्तेति च शृणु-उच्यते
प्रथमान्तपदबोध्यः कर्ता संख्याभिधानयोग्यो भवतीति स्वीकारात् ।
स्य इतरविशेषणत्वेन तात्पर्या विषयत्वरूपः संकेतितोऽर्थः । तथ
तात्पर्याविषयत्वविशिष्टप्रथमान्तपदोपस्थाप्यः कर्ता संख्याभिधानयोग्यो
यार्थः । चैत्र इव मैत्रो गच्छतीत्यादिस्थले गच्छत्युत्तरवृत्याख्यातव
भवितुं नार्हति किंतु मैत्रेऽन्वयः । चैत्रपदार्थः इव पदार्थसादृश्ये विशे

तथाच-चैत्रनिरूपितं यत् सादृश्यं तत्सादृश्येन यद्गमनं तादृश

तादृशकृत्याश्रयः एकत्वसंख्याविशिष्टो मैत्र इति शाब्दबोधः । तण्डुलं
र्थसञ्ज्ञाया तण्डुलेऽन्वयवारणाय । तथा चैत्रेण सुप्यते इत्यादौ धात्व

र्त्तरि । कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात् , प्रथमान्तपदेनैव तल्लाभाच्च । देवदत्तः पचतीत्यत्र हि देवदत्तो विशेष्यो, यत्नो विशेषणम् , आश्रयत्वं तु संसर्ग इति । तन्न, पचन्तं देवदत्तं पश्य, पचते देवदत्ताय देहि इत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशत्वाविशेषेण तेभ्यः कृतिमात्रबोधापत्तेः । न चेष्टापत्तिः, तत्राभेदसंसर्गस्यैव वक्तव्यतया कर्तृवाचकत्वस्यैव त्वया ऽभ्युपगमात् । नामार्थयोरभेदस्यैव संसर्गत्वात् ।

नन्वत एव गौरवप्रामाणिकतया शत्रादीनां कर्त्तरि शक्तिः, तिबादीनां तु कृतावेवेति वैषम्यमिति चेत् ? मैवम् । स्थान्येव वाचको लाघवान्न त्वादेशो गौरवादिति हि तव मतम् । अत एव राम इत्यादौ सुप्त्वेनैकत्वे शक्तिरित्यादिस्त्वदीयानां व्यवहारः । एवं स्थिते तिबादीनां शत्रादीनां च स्मारकतया लिपिस्थानत्वं, बोधकस्तु लकार एव; स च शत्राद्यन्ते कर्त्तरि शक्त इति स्थिते तिङन्ते कथं कृतिं बोधयेत् । 'अन्यायश्चानेकार्थत्वम्' इति न्यायात् ।

अथ वैयाकरणरीतिमाश्रित्य सर्वत्रादेशा एव वाचका इति ब्रूषे, तर्हि घटं, घटेन; हरेऽव, विष्णोऽवेत्यादिषु 'सर्वे सर्वपदादेशा' इति न्यायेन पदस्फोटो(१) वाक्यस्फोटश्च सिद्ध्येदिति महत्त्वानिष्टम् ।

---

गौरवादिति । अनन्तकृतीनां शक्यतावच्छेदकत्वेऽननुगमः, तासां कृतित्वेनानुगमे च गौरवमित्यर्थः । तल्लाभाच्चेति । एवं चान्यलभ्यतया तत्र शक्तिर्वक्तुमशक्येति भावः । नामार्थयोरिति । समानविभक्तिकनामार्थयोरित्यर्थः ।

न्यायादिति । किंच त्वया लत्वं शक्ततावच्छेदकं वाच्यं, तच्च न; तद्ज्ञान-

किं च "कर्त्तरि कृत्" इति यत्कर्त्तृग्रहणं तदेव "लः कर्मणि सूत्रे चकारेणानुकृष्यते, तत्कथं ण्वुलादीनां लकाराणां च शक्तौ वैलक्ष न च नामार्थयोरभेदः संसर्ग एव ण्वुलादौ कर्त्तुर्वाच्यत्वे बीजमिति म्, पचतिरूपं पचतिकल्पं देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्त्तुरेव तौचित्यात् ।

ननु तिङ्प्रत्ययो न नामेति चेत्? अकोऽपि नेति तुल्यम् । नामेति चेत्, रूपबाद्यन्तमपि नामेति तुल्यम् । किं च 'युष्मदि समा रणे मध्यमः' 'अस्मद्युत्तम' इति सामानाधिकरण्यप्रयुक्ता पुरुषव्यवस्थ भिहिते कर्त्तरि प्रथमा'इत्यादिकं च कर्त्तृवाच्यतायां प्रमाणम् ।

यत्तु "अनभिहित"इत्यस्य अनभिहितसंख्याके इत्यर्थवर्णनम् । तद्धितसमासेषु संख्याभिधानस्याप्रसिद्धत्वात् । अपि च धातूपात्तव्याप कर्ता । तत्राश्रयमात्रं कृतां लकाराणां चार्थो न तु व्यापारोऽपि तस्य नैव लब्धत्वात् । अत एव कर्ता कारक इत्यादावपि नानन्वयः । रथे

---

महर्षिवाक्याननुसारित्वरूपदूषणापत्तिरिति भावः ।

ननु प्रत्येकं पदानामवधृतशक्तिकानां समुदायेन यथाव्युत्प तानां तदर्थोपस्थानद्वारा वाक्यार्थबोधसम्भवान्न तयोरापत्तिरित्यरु किं चेति । तत्कथमिति । एवं च लाघवात्कृतामपि कृतिर्वाच्या स्यात् केवलकृतौ प्रयोगाभावः । आख्याते ऽपि समत्वात्, पक्वा जात सत्त्वाच्च ।

ननु भावांशे तवापि कृत्तिङोर्वैषम्यं दुर्वारम्, 'असत्त्वभूतो भ ख्यातार्थः, सत्त्वभूतश्च कृदर्थ' इति । किं च 'नामार्थयोः' इति व्युत्प पदेन सत्त्वप्रधानस्य ग्रहणं, किं च नामार्थयोरित्यस्य नामजन्यप्र शेष्ययोरित्यर्थ इति न दोष इत्यरुचेराह—किं चेति ।

प्रमाणमिति । एवं च पाचको देवदत्त इत्यादाविव 'देवदत्तः इत्यादावपि "युष्मद्युपपद"इति सूत्रानुवादबोधितत्र्यनुभवसिद्ध धिकरण्यानुभवेन धर्मिणो वाच्यत्वमिति भावः । अन्यादृशसा

तीत्यादावपि न कदाचिदनुपपत्तिः, अस्मन्मते धातूपात्तव्यापाराश्रयत्वस्य रथेऽपि सत्त्वात् । तव तु अत्र यत्नं त्यक्त्वा व्यापारे लक्षणायाः कर्त्तव्यतापत्तेः ।

एवं स्थिते कृतौ शक्तिरित्यस्योक्तिसंभव एव नास्ति, कृतेरपि व्यापारविशेषतया प्रायेण धातुत एव लाभात् । क्वचित्तु त्वयाऽपि तस्यास्त्यक्तव्यत्वात् ।

एतेन कर्त्रधिकरणे आख्यातवाच्यत्वं कर्त्तुर्निरस्य अज्ञभ्यमानाधिकरणे शानजर्थत्वं स्वीकुर्वन्तो मीमांसकाः प्रत्युक्ताः ।

यत्तु तैरुक्तं शानजंशे "कर्तरि कृत्" इति व्याकरणं शक्तिग्राहकमस्तीति । तन्न । कृद्वाक्यशेषो ह्ययमनिर्दिष्टार्थेषु ण्वुलादिष्वेवोपतिष्ठते, न तु शत्रादिषु, अन्यार्थेनैव तेषां निराकाङ्क्षत्वात् । 'आकाङ्क्षितविधानं ज्यायः' इति न्यायात् । अन्यथा 'तेन शय्यमाने आस्यमाने चायं गतः' इत्यादौ भावे, क्रियमाण इत्यादौ कर्मणि च शानचो दौर्लभ्यापत्तेश्च ।

---

च कृतेर्बोधनादनन्वयः स्यादिति भावः । व्यापारे लक्षणाया इति । यदि तु व्यापारस्य धातुनैवोक्ततया तत्राश्रयत्वे (१)लक्षणेत्युच्यते तदा सर्वत्र तदेव शक्यमस्तु किमनेनप्रयासेनेति भावः । सम्बन्धरूपलक्षणाज्ञानाननुभवाच्च । क्वचिदिति । रथो गच्छति, कर्त्तेत्यादौ । किं च कर्मलकारे तव कः प्रत्ययार्थः । न फलं, तस्य धातुत एव लाभात् । न कृतिः, तस्या अभिहितत्वेन पच्यते चैत्रेण इत्यादौ तृतीयानापत्तेः ।

न चाश्रयत्वं, सर्वत्र तस्यैव शक्यत्वौचित्यात् । प्रथमान्तलभ्य आश्रय इत्यपि न, आश्रयत्वाख्यशक्तिमत्त्वेन ततोऽलाभात् । कर्त्रधिकरणे इति । तत्र हि आख्यातार्थो न कर्त्ता, प्राधान्यापत्तेः । किं तु फलावच्छिन्नव्यापारानुकूलो व्यापारः कृत्यादिरूपः । स च व्यापारत्वेनैव, अत एव जानाति

किञ्च "कर्त्तरि कृत्" इति यत् कर्तृग्रहणं तस्यैव "लः
इत्यत्राप्यनुवृत्तेः कृतां तिङां च वैलक्षण्यं दुर्लभमित्यवोचाम ।

यत्तु भट्टपादा आहुः । कर्त्तरि यदेकत्वं तत्र तिबित्यादि
कर्मणि" इत्यस्य "द्व्येकयोः" इत्यादेश्चैकवाक्यतया व्याख्यान
च्यता सूत्रादायातीति । तच्चिन्त्यम् । द्विवचनादिसंज्ञा ह्यादेशनि
तद्विधिना "द्व्येकयोः" इत्यस्य एकवाक्यताऽस्तु । न च तत्र
यद्वित्वादिविशेषणतया कथञ्चिन्नीयेत ।

ननु लविधितिबादिविध्योरपि एकवाक्यताऽस्तीति चेत् ?
क्यैकवाक्यता सा । लविधिलभ्यलकारानुवादेन आदेशविधेः प्रवृत्त
चलविधौ श्रूयमाणकर्तृग्रहणं कथं संख्यां विशिनष्टु । न हि त
स्थापकमस्ति, लकारस्य द्विवचनादिसञ्ज्ञाविनिर्मुक्तत्वात् ।

स्यादेतत् । "लः कर्मणि च" इति सूत्रे "ल" इति लङ्
बन्धयोर्न सामान्यग्रहणं, किं तूत्सृष्टानुबन्धलकारसामान्यग्रहणमिति
बादम् । तत्र "ल" इति जसन्तं मा भूत्, किं तु ङसन्तमस्तु "लः
इतिवत् । आदेशापेक्षा चेयं षष्ठी । लस्य य आदेशः स कर्मणि
केन विहितस्य लस्येहानुवाद इति चेत् ? "वर्त्तमाने लट्" इ
गृहाण । एवं च कर्त्तरि यदेकत्वमिति भट्टपादोक्तयोजनिका निर्बा
मैवम् । "ल"इत्यस्य षष्ठ्यन्तत्वे आदेशानामेवार्थ उक्तः स्यात्,
बादीनामेव, न तु शत्रादीनां ; तेषां द्विवचनादिसञ्ज्ञाविरहाद् ।
इत्यादिनाऽस्यैकवाक्यतायास्त्वयोक्तत्वात् ।

---

एकवाक्यतयेति । कर्तृगते द्वित्वे इत्यादिक्रमेण, एवं कर्त्तुर्विशे
च्यतेत्यर्थः । तद्विधिना । तिप्तस्झीत्यादिना । विशेषणतयेति । तेन
परार्थत्वात्' इति न्यायविरोधोऽपि सूचितः ।
लविधिः । लः कर्मणीत्यादिः । सत्यमिति । उक्तन्यायविरोधेन

न च त्वदुक्तरीत्या "कर्त्तरि कृत्"इत्यनेन निर्वाहः । भावकर्मणि शानचो दुर्लभत्वापत्तेरुक्तत्वात् । न च शानज्विधिना सहात्मनेपदव्यवस्थापकानामेकवाक्यतया भावकर्मणोरित्यनेनेष्टसिद्धिः, सकर्मकादपि भावे शानजापत्तेः ।

किं च, आम्विषयस्य लकारस्यार्थो न निर्दिष्टः स्यात्तस्य हि लुगादेशः । न चाभावरूपस्य द्विवचनादिसञ्ज्ञाविनिर्मुक्तस्य च तस्यार्थादेशनं युज्यते लभ्यते वा । ततश्च सोऽपि कर्त्तर्य्येव स्यात् । ततश्चानुप्रयुज्यमानोऽपि तदनुरोधेन कर्तृप्रत्ययान्त एव स्यात् । इष्यते तु भावकर्मणोरपि ।

अपि च जसन्तत्वे श्रुतेनैव सम्बन्धः । षष्ठ्यन्तत्वे त्वादेश इत्यध्याहार्य्यमिति गौरवम् । अत एव ल इति प्रथमान्ततयैव व्याख्यानं पुरस्कृतं हरदत्तेन ।

किं चोक्तरीत्या "लः कर्मणि" इति सूत्रे आदेशा अप्यनुवाद्या इति फलितं, ते च "लस्य" इत्यधिकृत्य तिप्तस्झीति विहिताः । तथा च–तदेकवाक्यतयैव पदविशेषपुरुषविशेषव्यवस्थापकानामिव वचनविशेषव्यवस्थापकस्यापि प्रवृत्तिध्रौव्ये पुनरिदानीं प्रवृत्तिर्निर्मूला व्यर्था अनिष्टावहा चेत्यास्तां तावत् ।

अत्रेदमवधेयम्–"भावे चाकर्मकेभ्यः" इत्यत्राविवक्षितकर्मकाणामपि

---

कर्मणि शानच इति । भावे तु स न दुर्लभः । भावपदार्थे संख्यानन्वयात् ।

ननु "लः कर्मणि"इत्यनेनाप्येकवाक्यतया न सकर्मकेभ्यो भावे शानजत आह—किं चेति । युज्यते इति । द्विवचनत्वाद्यभावेनेति भावः । लभ्यते वेति । अभावरूपत्वादिति भावः ।

ननु "आमः"इत्यनेन "लः कर्मणि"इत्यस्यैकवाक्यत्वाल्लुक्शब्देन तत्सहचरिताऽऽमन्तलक्षणेन न दोष इत्यरुचेराह—अपि चेति । जसन्तत्वे इति । प्रथमान्तत्वोपलक्षणमेतत् तदाह—प्रथमान्ततयैवेति(१) । भाष्यस्वरसोऽप्येवमेव । तदेकवाक्यतयेति । परिपूर्णवाक्यस्यैवानुवाद्यसमर्पकत्वान्महावाक्यार्थबोधं प्रति कारणत्वाच्चेति भावः । इदानीमिति । महावाक्यार्थबोधकाले इत्यर्थः । व्यर्थेति । "तिप्तस्झि" "द्व्येकयोः" इत्यनयोरेकवाक्यतयैव लिङ्गादौ वाच्यतायाः सिद्धत्वात् । न च कर्त्रादौ शक्त्यबोधनेन मी·

ग्रहणमिष्टं, तथा च—"णेरणौ" इति सूत्रे नेह पच्यते नेह भुज्य
लकार इति हरदत्तः । अत्यन्ताविद्यमानकर्मकाणामेवेह ग्रहणं
इत्यादौ तु कर्मण्येव लकारः, गम्यमानत्वाच्च तन्न प्रयुज्यते इ
रम् । एतच्च "गतिबुद्ध्यादि"सूत्रे हरदत्तग्रन्थे स्पष्टम् । पक्षद्वयम
कैयटहरिग्रन्थारूढं क्षोदक्षमं चेति प्रपञ्चितं शब्दकौस्तुभे ।

यत्त्वत्राविवक्षितकर्मकाणां भावे लकार इति प्रसादग्रन्थम
दिविरोधोद्भावनेन दूषयाञ्चक्रुः । तच्चिन्त्यम्, पक्षद्वयमप्याकर
त्वात् ।

किं च अविवक्षितकर्माणोऽप्यकर्मका इतिपक्ष एव प्र
हि—"समानकर्तृकेषु तुमुन्"इति सूत्रे इच्छता क्रियत इति भावे
त्तेन । वक्ष्यते च तत्र स्वयमपि तथैव । अपि च "णेरध्ययने वृ
नपुंसके भावे क्तोऽप्यकर्मकेभ्य एव "तयोरेव कृत्यक्तखलर्थाः
मात्रस्य ग्रहणात् । तत्र "भावे चाकर्मकेभ्य" इत्यनुवर्तनात् ।
कृतमित्यपि प्रसज्येतेति कैयटहरदत्तादिभिः सिद्धान्तितम् ।

---

ग्रहणमिष्टमिति । 'कृतपूर्वी कटम्' इत्यस्य "कर्तृकर्मणोः
मातुः स्मर्यत इत्यादौ कर्मणोऽविवक्षया भावे लस्य "अधी
भाष्ये उदाहृतत्वादिति भावः ।

न च कृतपूर्वी कटमितिवत् पूर्वमविवक्षितकर्मतया भ
क्रियमाणं देवदत्तेनेत्यादिप्रयोगो दुर्वारः । विवक्षायाः प्रयो
ईदृशी विवक्षा कृतपूर्वीत्यादिवृत्तिविशेषमात्रविषयेत्यर्थस्य
इति सूत्रे भाष्ये ध्वनितत्वाच्चेति ध्वनयन्नाह—प्रबल इति ।

ता गावो, भक्ता ब्राह्मणा, इत्यादौ भावे क्तान्ताद् "अर्शआद्यच्" इति निष्ठाप्रकरणे स्वयमेव वक्ष्यमाणम्, "आदिकर्मणि क्त"इति सूत्रे हरदत्तेन वक्ष्यमाणं, कृतपूर्वीत्यत्र भावे क्त इति कैयटाद्युक्तञ्च कथं सङ्गच्छताम् । कथं च 'गतन्तिरश्चीनम्' इत्यादयः प्रयोगाः ।

यद्यप्यविवक्षितकर्माणोऽपीह सूत्रेऽकर्मकग्रहणेन गृह्येरन्, "गतिबुद्धि"इति सूत्रे तु न गृह्यन्ते इत्युक्तन्तेन देवदत्तेन पाचयतीति सिद्धम् । "गत्यर्थाकर्मक"इति सूत्रेऽपि न गृह्यते, दत्तवान् पक्ववानित्याद्यर्थे दत्तः पक्व इत्यापत्तेः । इह तु ग्रहणे न कोऽपि दोष इत्यास्तान्तावत् ॥

"लस्य" । 'लुना(१)ति चूडाल' इत्यादौ कुतो नेति चेत् ? अत्राहुः । "लः कर्मणि च" इत्यत्र निर्दिष्टानां कर्त्राद्यर्थानामनुवृत्तेः कर्त्राद्यर्थे विहितस्य लस्येह ग्रहणमिति । अतोऽपि आदेशानुवादेन तत्रार्थविधिरिति कल्पना प्रत्युक्ता । अन्योन्याश्रयापत्तेरिति बोध्यम् ।

---

मिति तात्पर्यम् । भावे क्तान्तादिति । अनेनैव च तेषां परस्परग्रन्थविरोधमात्रदर्शनम् । न त्वयं सिद्धान्त इति भ्रमितव्यम् । "कर्त्तरि कृत्" इति सूत्रभाष्यात्पीतमुदकं येषां, विभक्तं धनं येषामिति कर्मक्तान्तादर्शआद्यजिति प्रतीयते तत्रत्यकैयटाच्चेति बोध्यम् । गतन्तिरश्चीनमिति । अयमभ्युच्चयः । "गत्यर्थाकर्मक" इत्यनेन तेभ्यो भावेऽपि क्तस्य विशेषतो विधानादित्यन्यत्र प्रपञ्चितम् ।

इत्युक्तमिति । प्राचीनैरिति शेषः । निवृत्तप्रेषणपक्षतृतीयकक्षायां लावयति केदारं देवदत्त इति कैयटादिप्रयोगात् । देवदत्तेन पाचयतीति । अविवक्षितकर्मकात्पचेर्णिचीदं रूपम् ।

वस्तुतः प्रयोगानुसारित्वाद्विवक्षाया अत्र तादृशविवक्षैव न । अन्यथोक्तकैयटप्रयोगविरोधो दुष्परिहरः स्यादिति बोध्यम् । सूत्रेऽपि न गृह्यत इति । अत्र च "आशितः कर्ता"इति सूत्रस्थं भाष्यं मानम् । तत्र ह्याङ्पूर्वादशेः सकर्मकत्वात्कर्तर्यप्राप्तः क्तो निपात्यते इत्युक्तम् । अन्यथा मातः स्मर्यत इतिवदवि-

यद्वा "धातोः" इत्यधिकाराद् धातोर्विहितस्यैव लस्येह ग्रहण
स्येत्सञ्ज्ञा तु न भवति, फलाभावात् । न चाश्रवणमेव फलम् । अ
धिनैव तल्लाभात् । नापि लित्स्वरः फलम्, णलो लित्त्वेन तदभावस
नादिति दिक् ।

**"तिप्तस्झि"** ॥ समाहारद्वन्द्वः पृथक्पदानि वा । इटष्टकार "
इति विशेषणार्थः । "एरत्" इति ह्युच्यमाने एधेमहीत्यत्रापि स्यात्
मलिङ्गन्तु न भवति, सप्तदशभिरादेशैः समभिव्याहारात् । महिङो
तिङ्तङ् इति प्रत्याहारार्थः समुदायानुबन्धो, न त्ववयवानुबन्धः
ख्यानात् । तेन सम्पार्पृच्छिमहे वाव्रश्चिमहे इत्यत्र "ग्रहिज्या" इति
सारणं न । तथा–इषेः कर्मण्याशीर्लिङि एषिषीमहीत्यत्र "क्ङिति

---

देन अर्थविधौ स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति न्यायेन(१) ल
र्थविहितत्वकल्पनमित्यन्योन्याश्रय इत्यभिमानः ।

न भवतीति । लस्य तु परस्मैपदमित्याद्यनुवादसामर्थ्यादिति भ
षान्तरमप्याह–फलाभावादिति । णल इत्युपलक्षणं थलोऽपि । ज्ञापनादिति
हाज्ञातविरोधन्यायेन स एव श्रवणार्थोऽस्तु, "बभूथाततन्थ" इति
लस्येत्संज्ञावश्यकत्वादिति भावः ।

एधेमहीत्यत्रापीति । टकाराभावे तत्र लिङ इत्यनुवृत्तावपि इवर्णान्
ङोऽदित्यर्थः स्यात् ।'प्रत्ययाप्रत्यययोः' इत्यस्या 'अर्थवत्' परिभाष
र्णग्रहणे ऽप्रवृत्तिरित्यङ्गसञ्ज्ञासूत्रे कैयटेन स्पष्टमुक्तेरिति भावः ।
हारादिति । सादृश्यादित्यर्थः । व्याख्यानादिति । एतेन थसस्थकार
पकारेण प्रत्याहारं कृत्वा 'स्थपान्तान्तन्ताम' इति सूत्रयितुमुचित
स्तम् । तथा सति मिपः पित्त्वानापत्तेः । इदमेव ज्ञापयति इह सूत्रे
धितसमुदायानुबन्धत्वानां नावयवानुबन्धत्वमिति । एतेन प्रत्याह
बन्धस्यावयवानुबन्धकत्वे स्थानिवदादिसूत्रस्थभाष्यविरोधः । त
ञकारस्य प्रत्याहारार्थत्वमुक्तम् । इष्यते चायचि चित्कार्यमपीति

गुणनिषेधो न ॥

"तङानौ" ॥ 'ल' इति (१)षष्ठ्यन्तानुवृत्तेर्लादेश एवानो गृह्यत इत्याह—**शानच्कानचौ चेति**। तेन "ताच्छील्यादिषु चानश्" परस्मैपदिभ्योऽपि भवति। कतीह निघ्नानाः ॥

"अनुदात्तङितः(२)" ॥ द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं सम्बध्यते। तत्रानुदात्तांशे तदन्तविधेः फलाभावात्, अंशान्तरे एव तदन्तग्रहणन्तदाह—**उपदेश इत्यादि**। "उपदेशेऽजनुनासिक" इति सूत्रात् उपदेशग्रहणमनुवृत्तं, तदपि ङिदंश एव सम्बद्ध्यते, नान्यत्र, अव्यभिचारादिति भावः। तदन्तविधिलाभार्थं विशेष्यमाह—**धातोरिति**। एतच्च "भूवादय" इति सूत्रान्मण्डूकप्लुत्याऽनुवृत्तस्य धातव इत्यस्य विभक्तिविपरिणामाल्लभ्यत इति प्राञ्चः।

वस्तुतस्तु "इको झल्" इत्यत्र सना धातोरिवेहात्मनेपदेन लकारधात्वोराक्षेपो बोध्यः। तिङां लादेशत्वात् लस्य च धातोर्विधानात्। उपदेश इति किम्? चुकुटिषति। "गाङ्कुटादिभ्यः" इति सन आतिदेशिक ङित्त्वम्।

---

सम्शाप्रच्छिमहे इति। सम्पूर्वात्कर्त्तरि तङ्। वाग्राश्रिमहे इत्यत्र कर्मणि ॥

अन्यत्राव्यभिचारादिति। द्वन्द्वसाधुत्वायानुदात्तांशे शाब्दान्वयसत्त्वेऽपि तस्य नैष्फल्यं बोधयितुमनुदात्तांशे उपदेश इत्यस्यासम्बन्धः। इति प्राञ्च इति। अत्रारुचिबीजं तु विभक्तिविपरिणामकल्पने गौरवमिति।

धात्वोराक्षेप इति। इदं च भिन्नवाक्यतया सामान्यशास्त्रविहितानामनेन नियम एतदभावे पर्यायेण प्रसक्तस्य सर्वस्यानेन निवृत्तिः क्रियत, इति न भुक्तवन्तमित्यादिन्यायविरोधो, लुगादिनेव नियमेनापि जातस्य निवृत्यङ्गी·

धातोः किम्? चङ्ङ्भ्यां मा भूत्। अदुद्रुवत्। अवोचत्।

ननु "वृद्भ्यः स्यसनोः" इति सूत्रे स्यग्रहणेन, 'विकरणेभ्यो
बलीयान्' इति ज्ञापितत्वाच्चङ्ङोर्न दोष इति चेत्? सत्यम्, स्यग्रह
रणव्यवधानेऽपि नियमप्रवृत्तिर्ज्ञापयतीति पक्षे चङ्ङोर्दोषः स्यादेव
पक्षः "शदेः शितः" इति सूत्रे भाष्यकैयटयोः स्पष्टः।

किं च तदन्तविधिलाभार्थमपि धातुग्रहणम्। फलन्तु यङन्ता
दात्मनेपदासिद्धिः। बोभूयते। ऋतीयते। कथं तर्हि शेते इति
देशिवद्भावेन शीङो ङिदन्तत्वात्। चित्रीयते इत्यादौ तु अवयवेऽ
ङकारेण क्यजन्तस्य विशेषणन्ततो (१)व्यपदेशिवद्भावेन ङिदन्ततेति

---

शब्दादौ च भाविसञ्ज्ञाश्रयणमत्र पक्षे। तत्र सर्वेषां (२)खले कपो
कवाक्यता। एतदभावे प्राप्तालिप्रसङ्गपरिहारेण परमेतेषां नियमत
इति बोद्ध्यम्।

ज्ञापितत्वादिति। अन्यथाऽन्तरङ्गत्वात्सामान्यतस्तिबादिषु सङ्ग्ध
पेक्षनियमापेक्षयाऽन्तरङ्गत्वाद्विकरणेषु "अनुदात्त" इत्यादेर्विहित
मानाभावेन तेन व्यवधानान्नियमाप्रवृत्तौ सामान्यविधिना सर्वेषां
यर्थ्यं स्पष्टमेवेति भावः। अत्र पक्षे "वृद्भ्यः" इत्यत्र स्ये इति विषयस
यङन्तादिति। अन्यथा यङाद्यन्तसमुदायस्य तिङ्निरूपिताङ्ग
वङाद्यव्यवस्था स्यादिति भावः। विशेषणमिति। तेन वैशिष्ट्यमि
बोध्यम्।

अन्ये तु स्यग्रहणमिदमेकवाक्यतया विधायकमित्यर्थस्य
तत्र धातोरिति पञ्चम्या विहितविशेषणत्वेन तत्समानाधिकरणस्

---

(१) व्यपदेशिवद्भावेति। स्वस्मिन् स्वघटितत्वस्य स्वघटकत्वस्य
तयोरतिदेशेनेत्यर्थः। सचासहाय एव। तत्वञ्च—मुख्यधर्मवदघटितत्वे सति मुख
कत्वे सति मुख्यधर्मवदसमभिव्याहृतत्वम्। प्रथमसत्यन्तदानेन सभासन्नयने
वृत्तिवृद्धत्वस्य नातिदेशः। द्वितीयेन दरिद्राघटक दरीइत्यस्य न धातु
तृतीयांशेन च भासन्नयनाकारे आदित्वस्य दरीत्यत्र अन्त्यत्वस्य च नातिदेशः

"स्वरित(१)ञितः" ॥ कर्त्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायं, कर्मण्यण् ॥

"तिङस्त्रीणि" ॥ ननु तिङः षट् त्रिकाः सञ्ज्ञास्तु तिस्र इति यथासंख्यं न प्राप्नोत्यत आह—उभयोरिति । परस्मैपदमात्मनेपदमिति चानुवर्त्तते, तेन पदद्वये प्रत्येकं सञ्ज्ञा प्रवर्त्तते इति भावः ।

ननु प्रथममध्यमोत्तमा इत्यत्र कृतद्वन्द्वानामेकशेषमाश्रित्य सञ्ज्ञा अपि षडिति कुतो नाश्रीयत इति चेत् ? एकशेषाश्रयणे गौरवाद् वैयर्थ्याच्चेति गृहाण । त्वयाऽपि हि परस्मैपदात्मनेपदग्रहणमनुवर्त्त्यमेव । अन्यथा शतृक्वसोः सावकाशा परस्मैपदसञ्ज्ञा प्रथमादिसञ्ज्ञया बाध्येत । "णलुत्तमो वा" इत्यादिज्ञापकानुसरणे तु सुतरां प्रतिपत्तिगौरवम् ॥

"तान्येकवचन" ॥ तानीत्यस्य व्याख्यानं लब्धेत्यादि । अन्यथा

---

दात्तङित" इत्यादेरपि तत्त्वमेव । तेन चङङोर्न दोषः । तदन्तस्य धातुत्वाभावात्, ततो विहितत्वाभावाच्च । "वृद्भ्यः" इत्यादौ स्य इति च विषयसप्तमीति तद्विषये विकल्पसिद्धिरित्याहुः । इदं च सूत्रं नामधातोर्न प्रवर्त्तते । एतद्विषयस्य लस्यानभिधानात् । ध्वनितं चेदं "लोहितादि" सूत्रे क्यषः ककारषकारप्रत्याख्यानपरभाष्येण । अन्यथा "वा क्यषः" इत्यस्य स्थाने "वा यात्" इति सूत्रिते आचारक्विबन्तसभ्यशब्दादौ दोषस्य स्पष्टत्वेन भाष्यासङ्गतिः । "बहुव्रीहेरूधसः" इति सूत्रे भाष्येऽपि ध्वनितमितिनिरूपितम् । अवगल्भत इत्यादौ त्वनुदात्तत्वानुनासिकत्वप्रतिज्ञासामर्थ्यात्प्रवृत्तिः । चित्रीयत इत्यादाववयवेऽचरितार्थेन ङकारेण क्यजन्तविशेषणतया व्यपदेशिवद्भावेन ङिदन्तता बोध्या ॥

इति चानुवर्त्तते इति । तच्च षष्ठ्यन्ततया विपरिणम्यते इति भावः ।

ज्ञापकानुसरणे त्विति । प्रथमादिसञ्ज्ञया परस्मैपदसञ्ज्ञाया बाधे हि परस्मैपदानां विहितो णलेव दुर्लभ इति भावः ॥

एकसञ्ज्ञाधिकारात्प्रथमादिसञ्ज्ञानाम् एकवचनादिसञ्ज्ञानां च पर्य्यायः
दिति भावः ।

**प्रत्येकमिति** । यत्तु प्राचा एकैकश इत्युक्तं तदशुद्धमिति "सु
इति सूत्रेऽवोचाम । माघवदुर्घटग्रन्थावपि एकैकश इति समर्थयितुं प्र
प्रागुक्तरीत्या प्रामादिकावेवेत्यवधेयम् ॥

**युष्मद्(१)दि** ॥ स्थानिनीत्यस्य व्याख्यानमप्रयुज्यमान इति ।
मानाधिकरणे किम् ? त्वां पश्यति । त्वया क्रियते ॥

---

पर्यायः स्यादिति । **तथा चादानीत्यादौ "आद्युत्तमस्य" इत्याट्सिद्धि**
**भावः** । प्रागुक्तरीत्येति । **"सुपः" इति सूत्रोक्तरीत्येत्यर्थः ।**

इत्यस्य व्याख्यानमिति । **स्थानं प्रसङ्ग(२)स्तद्वतीति युष्मदीति तदर्थ**
**भावः** । त्वां पश्यतीति । **तिङ्वाच्यकारकवाचित्वं हि सामानाधिकरण्यं**
**ऽभेदान्वयित्वमिति यावत्** ॥

---

( १ ) **युष्मदीति** । उपोच्चारितं पदं उपपदम् , नतु कृत्रिमम् । तस्येहानुपयुक्त
सामानाधिकरण्यम्–भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः । तथाच–
बोधकत्वं सामानाधिकरण्यम् । तच्च प्रत्यासत्त्या लकारेणैवेत्याशयेनाह—**तिङ्वाच्ये**

( २ ) **स्थानं प्रसङ्गः इति** । प्रसङ्गपदार्थश्च वृत्तिविशेष्यतावच्छेदकताव
ताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकावच्छिन्नविशेष्यता
धनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकता ।

स्थानपदार्थतावच्छेदकवृत्तित्वान्वयिनिरूप्यनिरूपकभावश्च षष्ठ्यर्थः । तथाच—"
स्थाने शरैः प्रस्तरितव्यम् , इत्यादौ दर्भनिरूपितवृत्तित्ववती या विशेष्यतावच्छेदकता
कता तादृशावच्छेदकताकं यत् दर्भकरणकं प्रस्तरणम् इष्टसाधनत्वप्रकारकभ्रमविषयः इत्य
ज्ञानम् , तादृशज्ञानीयविशेष्यतावच्छेदकं यत् प्रस्तरणत्वं तदवच्छिन्नविशेष्यताकमिष्टसा
प्रकारकप्रमाविषयत्वप्रकारकं यज्ज्ञानं शरकरणकं प्रस्तरणमिष्टसाधनत्वप्रकारकप्रमा
इत्याकारकं तादृशज्ञानीयविशेष्यतावच्छेदकतावच्छेदकता शरेषु इति लक्षणसमन्वयः ।

**अन्येतु**—अभाव एव स्थानपदार्थः, प्रतियोगितया अभावान्वयिप्रयोज्यत्वं षष्ठ

"ल्विङ् शित्" ॥ धात्वधिकारेति किम् ? हरीन् । शसः "सार्वधातुकमपित्" इति ङित्त्वे "घेर्ङिति" इति गुणः स्यात् । लिहः श्रिय इत्यादौ "सार्वधातुके यक्" इति यक् च स्यात् ।

यत्तु वदन्ति—वारिणी इति शीभावस्य सार्वधातुकत्वाल्लघूपधगुणः स्या·

---

**नन्वित्संज्ञकङकारादावित्यर्थेन गुणो वारयितुं शक्य इत्यरुचेराह—** लिह इति ।

लघूपधेति । **"वृद्ध्यौत्व" इति पूर्वविप्रतिषेधेन "सार्वधातुक" इति गुणं**

---

भवतीत्यर्थः । तेन रामाभ्याम् भवामीत्यादौ दीर्घः । रामायेत्याद्यर्थं "ङेर्यः" इत्यत्र "ङेरयङ्" इति न्यासेनाकारविधानसामर्थ्याद्दीर्घेणेष्टसिद्धिः । "सुपि च" इति सूत्रं मास्तु इति लाघवम् । व्याप्तिन्यायात् यदङ्गस्यावयवस्य "अतो दीर्घः" तदङ्गसंज्ञानिमित्तकप्रत्ययावयवपवर्गे इत्यर्थात् भो देवदत्त पचति यज्ञदत्त इत्यादौ देवदत्तोत्तरवर्त्यकारस्य पचावयवयकारे परे न दीर्घः इति केचिद्वदन्ति ।

अन्ये तु—अत्र विधेयाकारे तपरत्वमावश्यङ्करणीयम् । अतो यथोपन्यासपक्षे अ आ इति वक्तव्ये दीर्घकरणं दीर्घ एव यथा स्यात् । नतु प्लुतादिविकारः, तेनापाक्षीदोदनं देवदत्तः, नतु पचामि भो इत्यादौ, अनन्त्यस्यापि चकारोत्तरदीर्घाकारादेः "प्रश्नाख्यानयोः" प्लुत इत्याहुः ।

इतरे तु—'अत आत्' इति सुवचम् । तपरकरणसामर्थ्याद्विकारनिवृत्तिरिति प्लुतस्याप्रसङ्गः इति ताभ्यां न विरोधः । सार्वधातुकपदाननुवृत्तौ तु सारसायनभक्तः चिकित्सकन्यासः इत्यादौ दीर्घापत्त्या अनुवृत्तेरावश्यकत्वात् । तथाच—"सुपि च" इति सूत्राकरणलाघवाभावाद्दीर्घशब्दयोः संज्ञाशब्दत्वेन चार्धधातुकत्वाल्लाघवाभावादिति वदन्ति ।

केचित्तु—"शरादीनां च" इत्यत्रादन्तशरादिपाठसामर्थ्यात् "तद्धिते" अनेन दीर्घो न भविष्यति इति ज्ञापनेन सारसायनभक्त इत्यादौ दोषाभावेन सार्वधातुकानुवृत्तिर्न कार्येत्याहुः । तन्न शरावती इत्यादौ दीर्घार्थं तत्पाठस्यावश्यकत्वेन उक्तज्ञापकत्वासम्भवात् । सारसायनभक्त इत्यादौ दीर्घाभावाय सार्वधातुकानुवृत्तिरावश्यिकी । सुपि दीर्घार्थम् "सुपि च" इत्यारब्धव्यं भवावो भविष्याव इत्यादौ पवर्गाभावेन दीर्घार्थं सूत्रं कर्तव्यमिति लापयन्ति ।

अपरे तु—सार्वधातुके किम् ? केशवः अङ्गना अङ्गशब्दात्पामादित्वात्—न प्रत्ययः, केशशब्दात् "केशाद्वोऽन्यतरस्याम्" इति व प्रत्ययः । नच "शृङ्गवृन्दाभ्यामारकन्" "हृदयाच्चालुरन्यतरस्याम्" इत्यनयोरकारोच्चारणेन तद्धितेन दीर्घ इति ज्ञाप्यत इति वाच्यम् । आका·

दिति । तन्न, "क्ङिति" इति निषेधात् । इगन्तत्वप्रयुक्तस्य नुमो गुणप्रयोजकत्वे सन्निपातपरिभाषाविरोधाच्च ॥

"**झोऽन्तः**" ॥ "आयनेयीनीयिय"इति सूत्रात्प्रत्ययग्रहणमनुवर्त्तते । आदिग्रहणं निवृत्तम् । अन्यथा शयान्ते इति न सिध्येत् । शीङो लेट् "लेटोऽडाटौ"इत्यादि कृते झस्यानादित्वात्तदेतदाह—**प्रत्ययावयवस्येति** । एतेन प्रत्ययादेः झस्य इति प्राचो ग्रन्थः प्रत्युक्तः ।

यत्तु व्याचक्षते—आडागमे कृते अस्तु नाम तत्सहितोऽपि प्रत्ययो, न तु तत्सहित एवेति नियमः । अन्यथा प्रणिदापयतीति पुकि कृते दा इत्यस्यानर्थकत्वादधातुत्वाच्च घुसञ्ज्ञा न स्यात् । अत एव कैयटेनोक्तम्—'अनागमकानां सागमका आदेशा भवन्ति'इत्येतत्तु नित्यतासमर्थनायैवोक्तं, प्रक्रियादशायां त्वागमागमिभाव एवेति ।

अत्रेदं वक्तव्यम्—प्रणिदापयतीत्यादौ पुगागमात्प्रागेव घुसञ्ज्ञाप्रवृत्तौ पुग्विशिष्टस्यापि घुग्रहणेन ग्रहणान्न कश्चिद्दोषः, 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति न्यायात् ।

यत्तूक्तम् कृतेऽप्यागमे तत्सहितस्यैव प्रत्ययत्वमिति नियमो नास्तीति । तन्न, अवयवविनिर्मुक्तस्यावयवित्वायोगात् । अन्यथा भूयास्तामित्यादौ तामादीनामिडागमापत्तेः ।

---

सार्वधातुकसञ्ज्ञाअङ्गसंज्ञासापेक्षत्वेन समं बाधित्वा नुमुत्पत्तौ जातायामिति भावः । ननु "विभाषोर्णोः" इत्यादिपूर्वोत्तरसाहचर्येण धातोः परस्यैव ङित्त्वेऽप्याह–इगन्तत्वेति ।

इत्यादि कृते इति । लावस्थायामेवाटि निर्दिश्यमानपरिभाषया लस्य झीत्यादेशे कृते इति भावः ।

नियम इति । एवं च तद्रहितस्यापि प्रत्ययत्वमर्थवत्त्वं चेत्यादिग्रहणानुवृत्तावपि न दोष इति भावः । अन्यथा—तत्सहितस्यैवार्थवत्त्वादौ । अत एवेति । आदेशत्वइवागमत्वेऽपि अवयवानामानर्थक्यस्य

नन्वङ्गात्परस्य इट् यासुडन्तश्च नाङ्गमिति चेत् ? न । भवामि भविष्यामीत्यादौ विकरणान्तस्येव तदादिग्रहणबलेन त्वन्मते यासुडन्तस्यापि अङ्गताया दुर्वारत्वात् । कैयटग्रन्थोपन्यासस्तु वृथैव । न हि तेन कृतेऽप्यागमे तद्विनिर्मुक्तस्य प्रत्ययत्वमिति त्वदभिमतं लभ्यते ।

किं च—लविषीयेत्यत्र विशेषविहितत्वात्सीयुटि कृते लिङ इट् तस्यागमेनादित्वविघातात् प्रत्ययाद्युदात्तत्वं न प्राप्नोतीत्याशङ्क्य प्रत्ययस्वरे कर्तव्ये 'आगमा अविद्यमानवत्' इत्यतिदेश "आद्युदात्तश्च" इति सूत्रे भाष्यादौ स्वीकृतः । न चैतत्केवलस्यापि प्रत्ययत्वे युज्यते इत्यलमाकरविरुद्धग्रन्थसमर्थनाभिनिवेशेन ॥

"अतो दीर्घो" ॥ सार्वधातुके(१) किम् ? केशवः, अङ्गना । 'अत आदिति वक्तव्ये' दीर्घग्रहणं दीर्घ एव यथा स्यात् "अनन्त्यस्यापि प्रश्नाख्यानयोः' इति प्लुतो मा भूदित्येतदर्थम् । अपाक्षीरोदनं देवदत्त, ननु पचामि भोः ॥

---

इत्यादौ आर्धधातुकेन धातोराक्षेपाद्धातोः परस्यार्द्धधातुकस्येत्यर्थाश्र दोष इति वाच्यम् ? आर्धधातुकसंज्ञायां तु धातुविहितस्यैव निमित्तत्वेन तेन विहितपञ्चम्यन्तस्यैवाक्षेपापत्तौ दोषतादवस्थ्यात् ।

नन्वङ्गादिति । अङ्गाधिकारादिति भावः । दुर्वारत्वादिति । अङ्गनिमित्तस्यार्द्धधातुकस्येत्यर्थे ऽदोषाच्चेत्यपि बोद्धव्यम् ।

सीयुटि कृत इति । लावस्थायामिति शेषः । इडिति । इडादेश इत्यर्थः । युज्यत इति । तदयुक्तत्वञ्च प्रकृतसूत्रे भाष्ये ध्वनितम् । "स्यसिच्"सूत्रे कैयटे च स्पष्टम् । एतेनागमे कृते तद्रहितस्याप्यर्थवत्त्वमिति "येन विधिः" इति सूत्रस्थकैयटोक्तमपास्तम् । 'अनिनस्मन् ग्रहणानि'इति सुस्रोता इत्यनर्थकेनेति तत्सूत्रस्थभाष्यविरोधाच्चेति दिक् ॥

प्लुतो मा भूदिति । न चानन्त्यस्य पदस्य टेरिति तदर्थात्कथं पचामीत्यादौ तत्प्राप्तिरिति वाच्यम् ? दीर्घग्रहणसामर्थ्येनान्त्यविषय एव तत्सम्बन्धात् । वाक्यट्योः क्लृप्तसम्बन्धत्यागे मानाभावाच्च । तेन वाक्यस्यानन्त्यस्य पदस्याचः प्लुतः स्यात्, अन्त्यस्य पदस्य टेरिति तदर्थः ।

आदिति तपरकरणेन त न तद्यावाप्तिः । प्लुतस्यासिद्धत्वात् ।

"परोक्षे"(१) ॥ यद्यपि क्रिया सर्वा परोक्षैव । ख

आकारान्तरप्रश्लेषेण वारणन्तु क्लिष्टं, तत्र तात्पर्यग्राहका
वा तदुपायान्तरमिति भावः । एतच्च हरदत्तानुरोधेनोक्तम्

वस्तुत इदं चिन्त्यम् । "ज्ञाजनोर्जा" इति सूत्रे जायते
ह्रस्वादेशोऽपि "अतो दीर्घो यञि" इति दीर्घेण सिद्धे दीर्घवि
त्त' परिभाषाज्ञापक(२)त्वपरभाष्यविरोधात् । दीर्घे ऽज
प्लुतानापत्त्या तत्साधनेन जा इति दीर्घोच्चारणस्य
स्मात्तद्वैकल्पिकत्वेनेदृशे विषये प्लुताप्रवृत्तिरुचिता । दी
लोप' इति सूत्रे 'हल्यशिति वक्तव्यं लोपग्रहणवदिति बो

क्रिया सर्वेति । अवयवक्रिया समूहरूपा चेत्यर्थः । अ

---

( १ ) "परोक्षे लिट्" । परोक्षत्वं च-साक्षात्कृतमित्येतादृशवि
षयत्वम् । यद्विषयताशालिज्ञानानन्तरं साक्षात्कृतमित्याकारिकाज्ञाननिष्ठवि
लक्षणाप्रतीतिर्भवति तादृशविषयतानिरूपकं यत् ज्ञानं तदविषयत्वमित्यर्थ
इन्द्रियत्वावच्छिन्नकरणताकम् तच्च सन्निकृष्टविषयकमेवेति स
लब्धमिति परोक्षत्वं स्फुटमेव ।

ननु "क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूता न शक्य
यितुम्" इति भाष्यात् क्रियायाः अतीन्द्रियत्वेन न परोक्षे इति
चेन्न । पिण्डीभूतायाः ( समुदायभूतायाः ) तस्या निदर्शयितुमशक्यत्वेऽ
क्षात्कृतमिति प्रातीतिविषयत्वसम्भवात् । अन्यथा 'पश्य मृगो धावति'इ
दर्शनकर्मता न स्यात् । व्यापाराविष्टानामपि साधनानामेवेह परोक्षत्वस्य
अयं पपाचेत्याद्यनुरोधेन व्यापारानाविष्टानामित्यपि केचिदाहुः ।

क्रियायाः स्वप्रत्यक्षत्वात् 'व्यातेने किरणावली मुदयनः' 'चक्रे
प्रयोगाऽसंगता एव ।

वस्तुतः तिङन्तप्रतिरूपका निपाता एतेनासंगता इति बोध्यम् । व्या
प्रत्यक्षत्वोपपादने तत्वयोरभावे न आगामीन्याती तदर्थकस्य लिटोनयात्तीऽ

(२) परिभाषाज्ञापकत्वपरेति । इयञ्च परिभाषा
ताभ्याम् याभ्याम् इत्यादौ त्यदाद्यत्वे "सुपि च" इति दीर्घो न स्यात्,
स्मयाद्यादेशा न भवेयुः, अतः 'द्वयोरेकस्य' इति निर्देशाः संगच्छन्ते ।

'क्रिया नामात्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्' इति । तथापि तदनुकूलशक्तिमतां व्यापारांविष्टानां साधनानां पारोक्ष्यमिह विवक्षितम् । तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेऽपि लिट् भवत्येव । अयं पपाच, त्वं पेचिथेति । एवं स्वव्यापारस्यापि वर्तमानतादशायां व्यासङ्गादिना स्वयमप्रतिसन्धाने ततः कार्य्येणानुमितौ भवत्येव ।

'बहु जगद पुरस्तात्तस्य मत्ता किलाहम्'

इतिवत् ॥

"**लिट् च**" ॥ "लङः शाकटायनस्यैव" इति सूत्रादेवकारोऽनुवर्तते, तदाह—**आर्धधातुकसञ्ज्ञ एवेति** ॥

"**परस्मैपदानाम्**" ॥ अत्र थशब्दस्य अकारो विधीयमानोऽन्त्यस्य प्राप्नोति । न च विधिवैयर्थ्यम् ? यथासंख्यसम्पादनेन कृतार्थत्वात् ।

अत्राहुः—"धातोः" इत्यधिकारात् "आदेः परस्य" इति व्यञ्जनमात्रस्य कृते द्वयोः "अतो गुणे" इति पररूपम् ।

---

**स्यावयवशः समूहशश्चापरेण प्रमाणेन प्रत्यक्षेणादृष्टेत्यर्थः** । पूर्वापरीभूतावयवेति । **तल्लक्षणकथनम् एकैकक्षणस्तु सूक्ष्मकालत्वादप्रत्यक्ष एव । पिण्डीभूतानिदर्शयितुमशक्या, पिण्डीभावस्यैवाभावादिति भावः । अत एव तच्छेषे भाष्ये साऽसावनुमानगम्येति । (२)'पश्य मृगो धावति'इत्यादौ पश्येत्यस्य ज्ञानसामान्यपरत्वम्, तस्याः फलानुमेयत्वादिति बोध्यम् । एवं चाव्यावर्त्तकत्वात्परोक्ष इति विशेषणमनुपपन्नमिति भावः** । शक्तिमतामिति । **तां विना व्यापारावेशासम्भवादिति भावः** ।

एवकार इति । **अन्यथैकसञ्ज्ञाधिकारादन्यत्र सत्त्वेन सञ्ज्ञासमावेशः स्यादिति भावः** ॥

**ननु "धातोः" इति सूत्रे भाष्ये "तिसृभ्यः"इत्यादौ धातोरित्यस्य विहितविशेषणताया उक्तत्वेनेहाप्यधिकारात्तथैवापत्तौ "आदेः"इत्यस्याप्रवृत्ति**

---

यत्तु इष्टवदित्यतिदेशेन अभावस्याप्यतिदेशः कश्चित्, तत्तु कार्यातिदेशेनाभावातिदेशो

यद्वा द्वयोरकारयोः पररूपेण सूत्रे निर्देशः । अनेकाल्

"भुवो वुक्" ॥ अचीति किम् ? अभूत् । अभूः ।
पोऽर्योः" इति बाधित्वा परत्वाद् "हल्ङ्यादि"लोपः स्या
हल्ङ्यादिलोपादन्तरङ्गत्वाद्वालिलोप एव भविष्यति । तथा
गन्ताल्लङि तिप्सिपोः, अमामत्, अमाम इति माधवादिभि
ज्ग्रहणम् "ऊदुपधायाः" इत्युत्तरार्थमनुवर्तमानमिहाप्युपरञ्ज
रादिभिरुपयोजितं, न त्वावश्यकमित्येव निष्कर्ष उचित इ
हल्ङ्यादिलोपस्येव वुकोऽपि बह्वपेक्षत्वेन बहिरङ्गतया
वलि लोपस्य प्राप्तेरेवाभावात् । तस्मादज्ग्रहणमिहार्थमपीत्ये

"अजादेः" इति न बहुव्रीहेः षष्ठी । इन्दिद्रीयि
"नन्द्राः"इति द्वित्वनिषेधापत्तेः । किं तु कर्मधारयादेषा पञ्च
भूतादिति । भूवभूविति । अत्र धात्ववयवत्वं प्रा
वद्भावेन बोध्यम् ।

---

रित्यरुचेराह—यद्वेति ।

लोपः स्यादिति । सन्निपातपरिभाषायास्तु नैतद्विषये
रित्याद्यसिद्ध्यापत्तेरिति भावः । अन्तरङ्गत्वादिति । प्रत्ययवि
दिलोपापेक्षया वर्णमात्राश्रयत्वेन तस्यान्तरङ्गत्वमिति भ
वादिति । वलि लोपे वग्रहणप्र(१)त्याख्यानेन तदप्राप्तेश्चेत्या
माधवाद्युदाहृतं चिन्त्यमेवेति दिक् ।

निषेधापत्तेरिति । स्पष्टं चेदं संयोगसञ्ज्ञासूत्रे भाष्य
राजदन्तादित्वात् सौत्रत्वाद्वा विशेषणस्याप्यादिशब्द
भावः ।

---

( १ ) वलि लोपे वग्रहणप्रत्याख्यानेन । तत्र हि भाष
त्युक्त्वा "आस्रमाणम् जीरदानुः"इति प्रयोजनमभिधाय अतिप्रसङ्गो
अध्वनः स्त्रीह्यो ब्रह्म इति अत्र समाहितम्—उपदेशसामर्थ्यादिति । पुनः
द्यमिति चेत् ? सम्प्रसारणहलादिश्शेषेण सामर्थ्यम् । सम्प्रसारणहल

यद्यपीह चत्वार एकाचः, तत्रावयवास्त्रयः, भू, ऊ, ऊव्, इति । समुदायश्चतुर्थः, तथाऽपि समुदायैकाच एव द्वित्वम् । तस्मिन् हि द्विरुच्यमाने त्रयोऽप्यवयवा द्विरुच्यन्त एव । वृक्षचलने सर्वावयवचलनवत् ॥

"पूर्वोऽभ्यासः" ॥ अत्रेति । "एकाचो द्वे" इति प्रकरणे ॥

"हलादिः" ॥ अभ्यासस्येति जाति(१)परो निर्देशः । तेनाटतुरित्यादौ टकारादिनिवृत्तिः सिध्यति । क्वचिदभ्यासे आदेर्हलः सत्त्वमाश्रित्य सर्वत्रानादेर्लोपविधानात् ॥

---

चत्वार एकाच इति । "निजौ चत्वार एकाच" इति भाष्यस्यैकदेश्युक्तरीत्येदम् । व्यपदेशिवद्भावस्यासहाय एव प्रवृत्त्यैतद्घटके ऊकारे एकाच्त्वोपपत्त्यभावात् । सम्भावनामात्रेण त्वेकदेशिना तथोक्तमिति बोध्यम् । द्विरुच्यन्त एवेति । अवयवद्वित्वे हि समुदायस्यावयवान्तरस्य चाननुग्रहः स्पष्ट एवेति भावः । पुनः पुनः प्रवृत्त्या सर्वावयवानुग्रहः शक्य इति तु न वाच्यम् । अत्र एकवारं द्वित्वे 'लक्ष्ये लक्ष(२)णस्य' इति न्यायेन पुनर्द्वित्वाप्रवृत्तौ एकाचोऽभावेन पुनः पुनस्तदप्रवृत्तेः । युगपत्तु सर्वेषां द्विः प्रयोगोऽशक्यः । वाचः क्रमवृत्तित्वात् ।

प्रकरणे इति । "पूर्वोऽभ्यासः" इत्यस्याप्यधिकारसूत्रत्वादेतदर्थलाभः । बभुर्जहुर्ययुरित्यादौ बाहुलकादभ्यासकार्यमिति । भाष्ये तु "कृञादीनां कादौ द्वित्वं वक्तव्यम्" चक्रुर्बभ्रुर्जहुर्ययुरित्याद्युदाहृतम् । एवञ्चोणादिषु द्वित्वविधानमनार्षमिति लभ्यते ॥

लोपविधानादिति । इद(३)ञ्च "अजादेः" इति सूत्रे भाष्ये स्पष्टम् ।

---

(१) जातिपरो निर्देश इति । "ह्रस्वो अहलादिः शेषः" इति संहितापाठे अहलादिश्शेष इति छेदो बोध्यः । अभ्यासस्याहल्, हलभावो भवति, यश्चादिः स तत्र शिष्यते । इत्यर्थेन आट आटतुः इत्यादौ न कश्चिद्दोष इति केचित् ।

**"भवतेरः"** ॥ अत्र प्राचोक्तम्–भवतेरिति कर्तुर्निर्देशाइ
नत्वमिति । व्याख्यातश्च तत्पौत्रेण कर्त्रर्थयोस्तिप्शपोर्निर्देशादित्य
तन्न । धातुनिर्देशमात्रे श्तिपो विधानात् । शपश्च विकरणत्वेन अन
कर्त्रर्थके परे विहितस्यापि तस्य श्तिपः शित्त्वसामर्थ्यादिवेह प्रवृत्त
था त्वदुक्तरीत्या "उपसर्गात्सुनोतिसुवति"इत्यादीनामपि भाव
त्तौ सर्वोपप्लव एव स्यात् । अपसिद्धान्तश्चायमिति स्पष्टमेवाकरह
युञ्जते च कर्मण्यप्यकारं कवयः । तस्यातपत्रं बिभरां बभूवे । वि
बिभरां बभूविरे, इत्यादि ॥

**"असिद्धवदत्रा"** ॥ अभिविधावाङ् , भाधिकारमभिव्या

---

अनर्थकत्वादिति । स्वस्य अर्थवाचकत्वाभावाद्वाचकस्य कस्यचि
तकत्वाभावाच्चेति भावः । तस्य–शपः । शित्त्वसामर्थ्यादेवेति । इदं कै
नुरोधेन । वस्तुतः "उपसर्गात्सुनोति" इत्यादिनिर्देशाज्ज्ञापकादेव
शित्त्वस्य पिबाद्यादेशार्थम् "आदेच" इत्यात्वप्रतिषेधार्थं "रुदा
इडाद्यर्थञ्च चारितार्थ्यादिति बोध्यम् । इदञ्च "इक्श्तिपौ"इति व
एव स्फुटीभविष्यति ।

भाधिकारमिति । अर्थ(२)वतो भशब्दस्य ग्रहणादिति भावः
विधित्वे आभाद्ग्रहणमसिद्धवद्भवतो निर्देशार्थं यं प्रत्यासिद्ध
शार्थं च स्यात् । विनिगमनाविरहात् । एवञ्चाभीयमाभीये ऽसि
लाभेऽपि समानाश्र(३)यत्वं न लभ्येतात्रग्रहणञ्चानर्थकं स्यात् ।

---

बोधः । तद्यथा अब्भक्षो वायुभक्षः इत्यत्र "अप एव भक्षयति वायुमेव भ
भाष्यादिः । इत्यनेनैव लोप इति स्पष्टम् । न तु "लोपो व्योः" इति लोपः 'वा
न्यायात् । वलि लोपे वग्रहणप्रत्याख्यानात्तस्याप्राप्तेश्चेति दिक् ।

( १ ) कैयटानुरोधेनेति । श्तिपः शकारोच्चारणसामर्थ्यादकर्त्रर्थेऽ

अधिकारश्चायम् । अत्रग्रहणं समानाश्रयप्रतिपत्त्यर्थम् । आभाद्ग्रहणं विषयनिर्देशार्थम् । एवञ्च "अनुदात्तोपदेश" इत्यत्रास्योपस्थाने सत्ययमर्थो भवति–एषामनुनासिकस्य लोपः स्याज्झलादौ क्ङिति परे, स चासिद्धो भवति । अत्र झलादौ क्ङित्येव निमित्ते सति यदाभीयं प्राप्नोति तस्मिन् कर्तव्ये इति,

नत्वस्मिन् कर्तव्य इति ।

नन्वस्याधिकारत्वे यत्र यत्रोपस्थानं तत एवारभ्य यदाभीयन्तस्मिन्नेव कर्त्तव्येऽसिद्धत्वं स्यान्न तु ततः पूर्वस्मिन्नपि, ततश्च श्वसोः इत्येत्वं पूर्वस्मिन् धित्वे कर्त्तव्ये नासिद्धं स्यादिति चेद्, भवेदयं दोषः शब्दाधिकारे । अयन्त्वर्थाधिकारः । ततश्चेह "श्नान्नलोपः" इत्यवधिर्निर्णीतः ।

---

निमित्तानुल्लेखादित्यत आह—अधिकारश्चायमिति । समानाश्रयेति । अत्रपदेन यत्रानुवृत्तिस्तत्सूत्रस्थसप्तम्यन्तोल्लिखितो निमित्तसमुदायः परामृश्यते । सप्तमी च वैषयिकी । इदमेवाभिप्रेत्य निमित्तत्वं यथा कथंचिन्न तु कार्यिभिन्नत्वेनैव, सप्तम्यन्तोल्लिखितत्वेनैवेत्याग्रह इति तु प्राञ्चः । तेन लुको हिस्थानिकत्वेऽपि जहीत्यादावसिद्धत्वसिद्धिः । विषयेति । असिद्धवद्भवतीति श्रुत्यासिद्धत्वं तस्य चेत्यर्थः । अवधिलाभस्तु "अङ्गस्य" इत्यादाविव व्याख्यानत एव भविष्यतीति भावः ।

अर्थाधिकार इति । शब्दाधिकारे शब्दार्थयोरुभयोः कल्पना; अर्थाधिकारे तु शब्दमात्रस्येति लाघवादिति भावः । इहपदार्थमाह—"श्नान्नलोप" इति ।

---

समुदायान्यूनानतिरिक्ताश्रयकत्वम् । निष्कृष्टार्थस्तु–यत्किञ्चिदाभीयशास्त्रविशिष्टत्वम् । वैशिष्ट्यं च–स्वविशिष्टत्वं स्वीयोद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणो यावान् शब्दसमुदायः तत्समभिव्याहृतो यः तद्घटितशब्दसमुदायाश्रयकत्वमेतदन्यतरसम्बन्धेन । प्रथमसम्बन्ध वै० च । स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नोद्देश्यताकत्व, स्वीयविधेयतावच्छेदकत्वावच्छिन्नविधेयताकत्वोभयसम्बन्धेन । प्रथमसम्बन्धानुपादाने चिणो लुग् दृष्ट्या चिणो लुकोऽसिद्धत्वं न स्यात् । द्वितीयसम्बन्धे शब्दसमुदायः इतिविशेषणाऽनुपादाने जहीत्यादौ "अतो हेः" इति शास्त्रदृष्ट्या "हन्तेर्जः" इत्यस्यासिद्धत्वं न स्यात् । तयोरर्थे न्यूनाधिकभावस्य सत्वात् । एतेन यथाश्रुतकल्पनाभावे प्रथमलक्षणस्वीकारे जहीत्यादौ "हन्तेर्जः" इत्यस्यासिद्धत्वं न स्यात् । चिणो लुग्दृष्ट्या चिणो लुकोऽसिद्धत्वानापत्तिश्चेति परास्तम् । प्रथमलक्षणोक्तान्यूना-

स एव प्रतिसूत्रमुपतिष्ठते । तदेतत्सकलमभिप्रेत्याह—इत

अत्रापि शास्त्रासिद्धत्वमेवाकरे स्थितम् । तेन एधि शाध

झलन्तत्वबुद्धेरनिवर्तितत्वात्तन्निमित्तं धित्वं सिद्ध्यति ॥

यत्तु प्राचा कार्यासिद्धत्वमुक्तं, तत्प्रामादिकम् । समाना

म् ! पपुषः । चिच्युषः । लुलुवुषः । इह वसोः सम्प्रस

णि उवङि च कर्त्तव्ये नासिद्धम् । आलोपादीनि हि कसौ, सं

भक्ताविति व्याश्रयत्वात् । वुकः--वुक्शास्त्रस्य । एवमग्रेऽ

"वुग्युटौ" इति । युट उदाहरणन्तु-दिदीये ।

बभूवेति । अत्र प्राचा--"इन्धिभवतिभ्याञ्च" इति

लिटः कित्त्वार्थं व्याख्याय "अचोऽञ्णिति" इति वृ

च" इति निषेध इत्युक्तं, तदुपेक्षितम् । इग्लक्षणयोरेव गु

इति सिद्धान्तात् । न च कित्त्वसामर्थ्यादनिग्लक्षणाया

---

इत्यत्रेत्यर्थः । अवधिरिति । यं यं प्रत्यसिद्धत्वं तद्रूप आभा

र्णीत इत्यर्थः । स एवेति । तावान् सर्व इत्यर्थः ।

तत्प्रामादिकमिति । तदा हि देवदत्तहन्तृहतन्यायेन धित्व

भावः । न च "जनसन" इति सूत्रभाष्योक्तरीत्या परत्व

शाभाव इति वाच्यम् ? धिभावविषयपरिहारेण शाभावस्

परत्वाप्रवृत्तेः । आलोपादीनि हीति । अयं भावः—"वसोः"

सिद्धवत्"सूत्रानुवृत्त्या सम्प्रसारणस्यासिद्धत्वं वाच्यम् ।

पस्थितसम्प्रसारणसूत्रगृहीताश्रयाश्रितं प्रत्येव, तादृशं

सम्प्रसारणनिमित्तभूतविभक्त्यनिमित्तत्वात् । आसिद्धपरिभ

स्या "ऊठ्" सूत्रे निष्पन्नत्वेन बहिरङ्गान्तरङ्गयोरुभयोरप्यसि

प्राप्तेः । व्याश्रयत्वादिति । समानाश्रयत्वं च तत्प्रयोगप्राप्तासिद्धत्व

शब्दरूपनिमित्तरूपसमुदायापेक्षयाऽन्यूनानतिरिक्ताश्रयत्वम्

त्यादौ न्यूनः । 'चास्नायिता' इत्यादावाधिकः । तत्र यङ्निमित्

इत्यात्वं तज्जनिमित्ते "यस्य हलः" इति लोपे नासिद्धम् । अ

निषेध इति वाच्यम् ? थलि उत्तमे णलि च गुणनिषेधेन कित्त्वस्य चरितार्थत्वात् । सूत्रन्तु प्रत्याख्यातमाकरे । तथा च वार्तिकम्—"इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्" इति ।

**बभूवि**(१)**वेति** । "श्र्युकः किति" इति निषेधे प्राप्ते क्रादिनियमादिट् । **अनेकव्यवेति** । सार्व(२)धातुकादिकमिको विशेषणं न वार्त्तिकमिति । एतेन ङिदित्यप्यनुवर्त्यातिदेशद्वयसामर्थ्यादनिग्लक्षणाया

---

( १ ) **बभूवेति** । यद्यपीह शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्ति, तथापि कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यता स्वीक्रियते इति पक्षोऽपि "इन्धिभवत्योश्छन्दोविषयत्वात्" इति वार्तिकादेवावगम्यते ॥ तेन रन्धेर्णिचि परामप्युपधावृद्धिं बाधित्वा नित्यत्वात् "रधिजभोरचि" इति नुमि रन्धयतीति सिद्धम् ।

नन्वेवमपि संयोगात्परस्य लिटः कित्वार्थं इन्धेश्चेत्यंशोऽपेक्षित एव । अन्यथा 'समीधस्यु हन्तमम्', इत्यत्र नलोपो न स्यादितिचेन्मैवम् "छन्दस्युभयथा" इति सूत्रेण सार्वधातुकार्धधातुकोभयसंज्ञायां "सार्वधातुकमपित्" इति ङित्वेन लोपे चोक्तरूपसिद्धेः ।

अत्र नवीनाः—बभूवेत्यत्र "द्विर्वचनेऽचि" इत्यादिना अनादेशनिषेधात् गुणवृद्धिभ्यां प्रागेव वुकः प्राप्त्या "भुवो वुको नित्यत्वात्" इति वार्तिके नित्यत्वादिति हेतूपन्यासो निष्प्रयोजनः । शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्तीत्याशङ्क्य कृताकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यत्वं स्वीक्रियते इत्यादिसमाधानमपि व्यर्थमेवेत्याक्षिप्य स्वयमेव समादधुः । षाष्ठद्वित्वप्रकरणान्ते हि वार्तिककृता पूर्वविप्रतिषेधः पठ्यते—"द्विर्वचनयणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः", तथा च—"द्विर्वचनेऽचि" इति सूत्रं नारम्भणीयमिति नित्यत्वादिति हेतुरुपन्यस्तः । "द्विर्वचनेऽचि" इतिसूत्रेण अनादेशस्य स्थानिवद्भावो विधीयत इति पक्षे तु द्वित्वात्प्रागेव वृच्छत्वाद्यादेशस्य स्वीकृतत्वादादेशान्तरमपि वुकः प्रवृत्तिरस्ति इति भुवो वुको नित्यत्वादिति ग्रन्थः सम्यगेव ।

न चैवमपि नामधातौ त्वापयति मापयति इत्यत्र मपर्यन्तस्य त्वमौ पररूपात्पूर्वं नित्यत्वाट्टिलोपः इत्यादिग्रन्थः कथं सङ्गच्छत इति वाच्यम् । "प्रकृत्यैकाच्" इति सूत्रं विनैव सर्वेष्टसिद्धेरित्यभिप्रायेणैतद्ग्रन्थसत्त्वात् ।

वस्तुतस्तु स्वापयतीत्यादिसिध्यर्थं "प्रकृत्यैकाच्" इत्यारब्धव्यामिति त्वादयति मादयतीत्येव न्याय्यमिति दिक् ।

स्वङ्गस्येति भावः ॥

"रि च"। अङ्गाक्षिप्तस्य प्रत्ययस्य रेफेण विशेषणात् "य
इति तदादिविधिः, तदिदमाह-रादाविति । प्राग्वदिति
इत्यर्थः । अस्ति तु नेह सम्बद्ध्यते, ततो रादेः प्रत्ययस्या

"लृट् शेषे च" ॥ "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्"
ततोऽन्यः शेषः, इत्याह-असत्यामिति । चार्थमाह-स

अत्र हरदत्तः-अस्वरितत्वादेव क्रियार्थायामित्यादि ना
'शेषे च'इति सुत्यजमित्याह । तच्चिन्त्यम् , शयिष्यत इति

---

अपि निषेध इति परास्तम् । भुवो वुको नित्यत्वेनैव
विरोधाच्च । न च "द्विर्वचनेऽचि" इत्यस्य प्रवृत्त्या द्वित्व
योरभावे वुको निर्विघ्नत्वान्नित्यत्वादिति हेतुर्वार्त्तिकोक्त
वाक्यम् । तत्र द्वित्वे कर्तव्ये इति वाक्यशेषेण वुकि कर्त्तव्ये
भावेन परत्वात्तयोः प्राप्तौ तस्यानिर्विघ्नत्वादिति दिक् ॥

असम्भवादिति । न च व्यतिसे इत्यत्रास्तेः कर्मव्यतिहारे
स्येरेचि इत्यो रे आदेशे सम्भवो ऽस्तीति वृत्तौ स्पष्ट
छन्दसि तथाप्रयोगा(२)नुपलम्भात् । अस्त्यर्थस्य व्यतीह
ति भावः।

---

ध्याहारः । तथा च 'येन नाव्यवधानम्'इत्यस्य यत्कर्तृकावश्यकव्यवधा
स्य प्रकृतार्थदार्ढ्यबोधकत्वात् । यद्वर्णव्यवधानराहित्यं न सम्भवति, तद्व
म्भवतीत्यर्थः ।

एवं च सूत्रसार्थक्यायैकवर्णव्यवधानं सह्यते इति भेत्तेत्यादौ गुण
त्यादौ च न भवतीति "दीधीवेवीटाम्" इत्यत्रेड्ग्रहणमत्र ज्ञापकम्
धार्थं कृतमिड्ग्रहणमन्यथैव निषेधे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । भाष्ये तु-
न्तः लघ्वी चासौ उपधा लघूपधा, पुगन्तश्च लघूपधा च अनयोः सम
मिति तस्येति समाहारद्वन्द्व इत्याश्रितम् । सार्वधातुकादिकं चाङ्गविशेष
क्षत्वात् । एवं च सार्वधातुकार्धधातुनिमित्तकाङ्गसंज्ञाकस्यावयवभूतो

तुमुना लटो बाधापत्तेः । क्तल्युडादिषु वासरूपविधेरभावात् । अत्र च ज्ञापकं वक्ष्यते । इदमपि ज्ञापकमित्यन्यदेतत् ।

यत्तु प्राचा भविष्यतीति प्रत्युदाहृतम् । तन्न, तत्र तुमुनोऽप्राप्तेः । भावे हि सः । समानकर्तृकेष्वेवेति वक्ष्यते ॥

"**आशिषि लिङ्लोटौ**" । ननु विध्यादिसूत्रे एव सम्प्रश्नप्रार्थनाशीःष्वित्युच्यतां, किमनेन सूत्रेणेति चेत् ? मैवम्, इह हि "क्तिच्क्तौ च" इत्युत्तरसूत्रार्थमाशिषीति तावदावश्यकम् । लिङ्लोटावपीहैव विधेयौ । विध्यादिसूत्रे आशीर्ग्रहणे हि "स्मे लोट्" इत्यादिना स्वविषये परत्वाद् बाधः स्यात् । सिद्धान्ते तु परत्वादेष विधिः "स्मे लोट्" इत्यादेर्बाधक इति महान् विशेषः ।

"**लोटो लङ्वत्**" । षष्ठ्यन्ताद्वतिः । लोट इत्युपमेये षष्ठीदर्शनात्, तदाह–**तेनेति** । अडाटौ तु नातिदिश्येते । न हि तौ लङः क्रियेते, किं तु लङि अङ्गस्येति भावः । स्यादेतत् । यान्तु वान्तु इत्यत्र "लङः शाकटायनस्य" इति जुस्स्यात् । जुहतु विदन्तु "सिजभ्यस्त"इति जुस्स्यात् ।

अत्राहुः–"विदो लटो वा" इति वाग्रहणमनुवर्त्य व्यवस्थि(१)तविभाषाश्रयणान्न जुस् ।

---

लटो बाधापत्तेरिति । तुमुन्विधावपि "भविष्यति गम्यादय" इत्यतो भविष्यतीत्यनुवृत्तेः । शयिष्यतइत्यत्र भावे भविष्यति लः । एवं हरिष्यामीति व्रजतीत्यादौ ण्वुला बाधापत्तिरपि बोध्या ॥ "शेषे च" इति सत्वे हि चकाराल्लृडपि तत्र विशेषविहित इति न दोष इति भावः । ननु तदभावेऽपि वासरूपविधिना न दोषोऽत आह–ल्युडादिष्विति । क्तल्युट्तुमुन्खलर्थेष्वित्यर्थः । अत्र तुमुन् ण्वुलोऽप्युपलक्षणम् । वक्ष्यत इति । कृदन्त इति शेषः । इदमपीति । शेषे चेति ग्रहणमपीत्यर्थः ।

वक्ष्यत इति । नन्वेवमपि ण्वुल् प्राप्नोतीति चेन्न । ण्वुलोऽपि शब्दश·

यद्वा "लङः शाकटायनस्य" इति सूत्रे ङित इत्यनुवृत्त्यैव सिद्धे लङ्ग्रहणमतिरिच्यते। तद्विभज्यते। नियमश्चायम्—अत्र लङेव यो लङ् तस्यैव झेर्जुस् न तु लङ्वद्भावेन यो लङ् तस्येत्यतो नोक्तदोषः।

**सकारान्तस्येति**। प्राचा तु ङिल्लकारोत्तमसकारस्येति व्याख्यातम्। तन्न, भूयासमित्यादावतिप्रसङ्गादिति भावः॥

**"इतश्च"**॥ परस्मैपदेष्वित्यनुवृत्तं षष्ठ्येकवचनान्ततया विपरिणमय्य इत इत्यनेन विशेष्यते, तदाह—**परस्मैपदमिकारान्तं यत्तस्येति**।

यत्तु प्राचा परस्मैपदेष्विकारस्य लोप इत्युक्तं; तन्न, भवेदित्यादावति-

---

"स्मे लोट्"इत्यत्र विध्यादयो नानुवर्त्तन्ते, किं तु प्रैषादय एवेति कथमाशिषि प्राप्तिरिति वाच्यम्? प्रैषाशीरर्थयोर्युगपद्विवक्षायां परत्वादनेन लिङो बाधापत्तेः। किं च तस्यां लिङ्लोड्भ्यां परत्वात् कृत्यबाधार्थमपीदमावश्यकम्। न ह्यत्र न युगपद्विवक्षेत्यत्र मानमस्तीति भावः॥

ङित इत्यनुवृत्त्येति। "नित्यं ङितः" इत्यतः "सिजभ्यस्त" इत्यत्रावश्यमनुवर्त्तमानस्येति भावः। स्पष्टं चेदम् "आत" इत्यत्र भाष्ये। नन्वत्र "ङित" इत्यस्यानुवृत्तौ अधुरस्थुरित्यत्र लुङ्यपि परत्वाद्विकल्पापत्तिः। न च "आत" इति सूत्रेण नित्यतया जुस्विधानान्निस्तारः। एवम् "आत" इत्यस्य विद्ध्यर्थत्वे ऽभूवमित्यादौ जुस्भावापत्तेरिति चेन्न। भाष्यप्रामाण्येन पूर्वविप्रतिषेधकल्पनेन दोषाभावात्। लङ इति पदोच्चारणापेक्षयेष्टवाचिपरशब्दाश्रयणे गौरवाभावादिति दिक्। तस्यैवेति। योगविभागसामर्थ्याच्च जुस्मात्रस्य नियम इति बोद्ध्यम्। "अड् गार्ग्यगालवयोः" इति "अदः सर्वेषाम्" इति च लङ एव विधीयमानावप्यडीडागमौ नातिदिश्येते, अपृक्तसार्वधातुकाभावात्।

अतिप्रसङ्गादिति। वैयधिकरण्यापत्तेश्चेत्यपि बोध्यम्॥

परस्मैपदेष्विकारस्येत्यत्र किं परस्मैपदेषु परेष्वित्यर्थः, उत तेषु विद्यमानस्येति? नाद्यः, अभवदित्यादावव्याप्तेः। नान्त्य इत्याह—भवेदित्यादाविति। अत्रेय इकारेऽन्तरङ्गत्वाद् गुणं बाधित्वा लोपापत्तिरिति। अन्त्यस्याप्यङ्गाहारे

---

म्। ङ्लोट्विधानेनैव सिद्धे "लोटो लङ्वत्" इति सूत्रकरणेन लङ्सम्बन्धिकार्य्यस्य आतिदेशकत्वेन अनित्यत्वज्ञापकमित्यदोषात्। तदुक्तम्भाष्ये 'वतिपदघटितमनित्यम्'

व्याप्तेः, ननु ईय् दीर्घादिरस्तु । एवं च नोक्तातिव्याप्तिः, इतश्चेति तपरकरणात् । अत एवाबोभवीदित्यादावपि न दोष इति चेत् ? मैवम्, रुदेर्लङि अरुदितामित्यादौ दोषध्रौव्यात् ॥

"विधिनिम" ॥ चोत्येषु वाच्येषु वेति । पक्षद्वयस्यापि भाष्यादौ स्वीकृतत्वादिति भावः । तत्राद्ये उपपत्तिं ब्रूमः । विध्यादीनां प्रत्ययार्थत्वं नोचितम् । तथा हि सति कर्त्रादीनामर्थानां लकारान्तरे चरितार्थानां विध्यादयोऽर्था बाधकाः स्युः । तथा च लिङा कर्त्रादीनामभिधानं न स्यात् ।

---

तु तदपेक्षया षष्ठ्या विपरिणाम एव न्याय्य इति भावः । न च "अतो य" इत्येव सूत्रं कार्यम् । "लिङः सलोप" इत्यतो लोपपदानुवृत्त्या अतः परस्य या इत्यस्यान्त्यस्य लोप इत्यर्थस्तेनाकारलोपेन सिद्धे इकारोच्चारणसामर्थ्याल्लोपाभावः । "आतो ङितः" इति सूत्रे एव वा कार्य इति वाच्यम् । "नानर्थक" इतिनिषेधेन सर्वलोपापत्तेः । मैवमिति । तदपेक्षया विभक्तिविपरिणामस्यैव न्याय्यत्वात् । "इतश्च लोपः" इतिसूत्रेऽपि परस्मैपदेषु इत्यस्य षष्ठ्यर्थत्वाच्चेति भावः । दोषान्तरमप्याह–रुदेरिति । न च "आर्धधातुकस्येड्" इत्यत्र- ङित्यनुवर्त्तमाने पुनरिड्ग्रहणादिडिडेवेति नियमस्य "दीधीवेवीटाम्" इत्यत्र भाष्ये उक्तत्वेन न दोष इति वाच्यम् । प्रत्यासत्त्या ऽऽङ्गमेव तेन वार्यत इति स्पष्टं तत्र कैयटोक्ते । अन्यथा ऽलावीदित्यत्र दीर्घानापत्तिः । 'सिज्लोपएकादेशे सिद्ध' इति वार्त्तिकेन प्रत्यासत्त्याश्रयणमेव तत्र ज्ञाप्यत इत्युचितम् ।

वस्तु(१)तस्तु "आर्द्धधातुकस्येड्' इति सूत्रस्थेड्ग्रहणप्रत्याख्यानपरेण "नेड् वशि" इति सूत्रस्थभाष्यविरोधेन "दीधीवेवी" इति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वात् । तत्र सूत्रे इड्ग्रहणप्रत्याख्यानाय तदुक्तम् । तत्र इड्- ग्रहणं कृत्वा गुरुतरयत्नमाश्रित्यात्रत्येड्ग्रहणप्रत्याख्यानस्यानौचि(२)त्यात् ।

ततश्च द्विवचनबहुवचने न स्याताम्, शबादयश्च न स्युः, पुरुषव्यवस्था च न स्यात्, अभिहितत्वप्रयुक्तस्तृतीयादिविरहश्च न सिध्येदिति। द्वितीये-स्वित्थमुपपत्तिः। विध्यादिभिः कर्त्रादयो न बाध्यन्ते। विरोधाभावात्। "लः कर्मणि" इत्यत्र सर्वलकारसङ्ग्रहार्थं ल इति बहुवचननिर्देशाच्च।

किं च कर्त्रादयोऽपि निरवकाशाः। न च लडादयोऽवकाशः। न्या-यसाम्येन विध्यादिवद्वर्त्तमानत्वादेरपि तत्तल्लकारवाच्यत्वात्। न चैवं धात्वर्थं प्रति वर्त्तमानत्वादेः प्रत्ययार्थतया विशेष्यत्वं स्यादिति वाच्यम्। कर्त्रादा-वपि तुल्यत्वात्।

ननु प्रत्ययार्थप्राधान्यमौत्सर्गिकमप्याख्याते त्यज्यते(१) इति चेत्तर्हि तत एव नोक्तदोषावकाश इति दिक्।

---

लकारान्तरे इति। लङादिष्वित्यर्थः। कालस्तु द्योत्य एवेति भावः। शबादय-श्चेति। कर्त्रर्थसार्वधातुके परे तद्विधानादिति भावः। पुरुषेति। युष्मदादेस्तिङ्वाच्यकारकवाचित्वरूपसामानाधिकरण्याभावादिति भावः। विरहश्चेति। चैत्रः पचेदित्यादौ द्योत्यत्वे त्वेषां विषयभावेनोपपादनात्कर्त्रादीनां च लादेशवाच्यत्वान्न बाधप्रसक्तिरिति भावः।

ननु सत्यपि सम्भवे बाधनं भवतीति न्यायेन विरोधाभावेऽपि बाधक-त्वं स्यादत आह—बहुवचननिर्देशाच्चेति। "लः कर्मणि" इत्यस्य सर्वान्ते करणेन सर्वलकारोद्देशेन तदर्थबोधनान्नैतैस्तेषां बाध इत्यपि बोध्यम्। एते-नोच्चारणार्थाकारेण ल इत्येकवचनमिति भाष्यकैयटोक्तपक्षे दोष इत्यपा-स्तम्। न चात्र पक्षे निमन्त्रयेयमद्य भवन्तमिति न स्यान्निमन्त्रणाया उक्त-त्वादिति वाच्यम्। प्रयोजकनिष्ठयोर्निमन्त्रणामन्त्रणयोरन्ययोरेवावश्यकर्त्त-व्यत्वादिलक्षणयोः प्रत्ययार्थत्वस्वीकारात्। यद्वा "अर्हे कृत्यतृचश्च" इत्यनेनेदृशाविषये लिङ्लोटाविति बोध्यम्।

दिगिति। दिगर्थस्तु कालावाचकेषु माङि लुङादिषु सावकाशता धात्व-र्थभावनायाः कालाकाङ्क्षत्वेऽपि शास्त्रेण तेषां तद्वाचकत्वाबोधनेन तत्र चारितार्थ्यसम्भवात्। अतो द्योतकतैव युक्ता। किं च पचेत्यादौ प्रत्ययं विनापि प्रवर्त्तना प्रतीताऽपि चतुर्भिर्हलैः कृषतीत्यादौ प्रवर्त्तनाया अपि

प्रवर्त्तनात्वामिति । प्रवर्त्तनात्वस्य विध्यादिचतुष्टयेऽनुस्यूतत्वा- भावः । एवं धातूपात्तव्यापारस्य विषयविषयिभावेन द्वेधाऽन्वय ... का लिङादय इति पर्य्यवसानात् द्योतकतापक्ष एव ज्यायान् ।

---

र्त्तनात्वस्येति । प्रवर्त्तना(१) च प्रवृत्त्यनुकूलो व्यापारः, स च ...ङादिघटितशब्दप्रयोगरूपः। वेदे लिङादिसमभिव्याहाररूपः शब्द- ... यमेव शाब्दीभावनेत्युच्यते, । शब्दरूपत्वात् , प्रेरणात्वेन च तस्य ...वाच्यता, तेन रूपेण तस्य शब्दनिष्ठत्वाच्छब्दनिष्ठ इति चोच्यते । ...न सविषयपदार्थश्चायम् । इष्टसाधनत्वन्तु न प्रवर्त्तनेत्यन्यत्र ...म् । चतुष्टये इति । याच्ञा त्विच्छाविशेष इति न तदनुस्यूतं ...त्वम् । अनुस्यूतत्वादिति । तदतिरिक्तांशस्य प्रकरणादिरूपप्रमाणा- ...त्वान्न शक्यत्वम् । न चैवं प्रैषादिग्रहणं व्यर्थं, निमन्त्रणादौ कृत्या- ...स्यावश्यकत्वाल्लिङ्विधानं तु प्राप्तकालार्थमिति भावः । तत्र ...पक्षे प्रयोजकव्यापारोऽपि पचेदित्यादौ धात्वर्थः, तस्यापि ...कूलत्वात् । तत्र फलानुकूलत्वेनोपस्थितव्यापाराणां मध्ये प्रयोज- ...स्य विषयितया विशेषणत्वेनान्वयः । इतरेषां तु विषयतया विशे- । एवञ्चैकाश्रयिका प्रवर्त्तनाविषयीभूता पाकानुकूला क्रियेत्यादिक- ...दित्यादौ बोधः; तदाह–एवं धात्विति । ज्यायानिति । वाच्यत्वे हि णि-

---

(१) प्रवर्तनाचेति । प्रवर्तनात्वं प्रवृत्त्यनुकूलव्यापारवत्त्वं, तच्च चतुर्ष्वपि विध्या- इति प्रवर्तनात्वं सुवचं, तदुक्तं हरिणा—

...स्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि, तत्रैव लिङ् विधातव्यः किमेतस्य विवक्षया ।

...व्युत्पादनार्थम्वा प्रपञ्चार्थमथापि वा, विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥

प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वरूपप्रवर्तनात्वन्निष्पन्नं, तच्चेष्टसाधनत्वस्यास्तीति ...त्वं विध्यर्थ इति फलितम् ।

...हुः—"स्वर्गकामो" यजेत इत्यादौ स्वर्गमुद्दिश्य यागो विधीयते, यजेत इत्यांशद्वयं ... प्रत्ययश्च, तत्र प्रत्यये ऽप्यंशद्वयम्, आख्यातत्वं लिङ्त्वञ्च । आख्यातत्वं दशसु ...वेद्यते लिङ्त्वं पुनः लिङ्येव, तत्राख्यातत्वलिङ्त्वाभ्याम्भाविनोच्यते । भावनात्र ...नानुकूलो भावयितुर्व्यापारविशेषः । भावना च द्विविधा शाब्दी भावना आर्थी भा- पुरुषप्रवृत्त्यनुकूलावश्यकव्यापारविशेषः शाब्दीभावना । सा च लिङ्त्वांशेनोच्यते ।

एवं णिच्यपीति तत्त्वम् । प्रार्थनं याच्ञा ।

क्व(१) चिदिति । ज्ञापकफलन्तु वक्ष्यमाणेत्यादौ टिदुगि णङीबभाव इत्यवोचाम ॥

"लुट्(२)लिथोः" ॥ तकारादिकार उच्चारणार्थः ॥

---

च्चैव तस्या धात्वर्थं प्रति विशेष्यत्वापत्तौ देवदत्तस्य प्रधानभूतध नाश्रयत्वेनाकर्तृत्वे तत्र कर्त्तरि लिङाद्यनापत्तिः । न च प्रत्ययार्थप्र स्याख्यातेत्यागेन निर्वाहः । द्योतकत्वस्यैवौचित्यात् । एवं णिच्यपीति त अत्र वदन्ति एवं हि लिङीव प्रवर्त्तनाया विशेषणतापत्तिः । व विशेषणताया एव न्याय्यत्वात् ।

किं चैवन्तदर्थस्याप्राधान्ये तदाश्रयस्य कर्त्तृत्वानापत्तौ प्रय र्त्तरि ण्यन्ताल्लुकारानापत्तिः । किं च गमितो ग्रामं देवदत्तो नेत्यादौ प्राधान्येन गत्यर्थत्वात्कर्तरि क्तस्यापत्तिः । ण्यर्थस्य वि तु पाचयति देवदत्तो यज्ञदत्तेनेत्यादौ प्रधानीभूतव्यापाराश्रयत्वे ज्यस्य कर्त्तृत्वानापत्तिः । मम तु धातुभेदान्न दोष इति स्पष्टं " च" इत्यत्र भाष्ये इत्यन्यत्र विस्तरः ।

अवोचामेति । "टिड्ढा" इति सूत्रे इति शेषः ॥

---

न्दभावनाकर्मत्वेनान्वयो नतु प्रकृत्यर्थयोगादेस्तस्य दुरोपस्थितत्वादित्यलम् ।

(१) क्वचिदिति । ननु लिङो ङित्वात्तत्स्थानिकादेशे च स्थानिवत्त्वेन ङि यवेऽन्चरितार्थो विधिः समुदायोपकारक' इति न्यायेन समुदाये तत्त्वादिष्टसिद्धौ ङित्वविधानं विफलमिति चेत्समाधत्ते-क्वचिदनुबन्धकार्ये इत्यादिना । अत्राय ङित्वविधानसामर्थ्यात्" न ल्यपि" इति ज्ञापकसाधितस्य क्वचिदनुबन्धकार्येऽनल्विध धाप्रवृत्तिरूपस्य क्वाचित्कत्वबोधनेन टित्वोगित्वयोरनतिदेशेन वक्ष्यमाणेत्यत्र "टिड्ढाणञ्" इति च ङीबभावासिद्धिः । ननु 'ङिच्च पिन्न, पिच्च ङिन्न' इति भा नासम्भवात्तत्रत्यदोषस्तदवस्थ एवेति चेत्तत्राह—श्नः शानचः शित्वमपीति च त्वस्य फलम् , पुषाणेत्यादौ "क्ङिति च" इति गुणाभावः । वस्तुतः शानचः शि प्रत्याख्यानमिति दिक् ।

(२) लुट्लिथोरिति । अत्रेकारस्योच्चारणार्थत्वेन लथोः परयोरिति तद

"लिङः स" ॥ सेति लुप्तषष्ठीकम् अनन्त्यस्येत्यनेन विशिष्यते तदाह—**अनन्त्यस्य सस्येति । सकारद्वयस्यापीति** । अवयवावयवस्य समुदायं प्रत्यवयवतया सुटोऽपि लिङ्भक्तत्वादिति भावः । **आशीर्लिङीति** । भूयास्तामित्यादाविति भावः ।

ननु "अनचि च" इति सकारद्वित्वेनापीदं सिद्धम् । न च सकारत्रित्वं फलम् । उच्चारणे विशेषस्य दुर्लक्षत्वात् । किं च सुटि कृते "स्कोः" इति यासुटः सकारो लुप्यते झलि परे यः संयोगस्तदादित्वात् । अत आह—**स्फुटतरन्त्विति** । एधिषीष्टेत्यादाविति भावः ।

**"अतो येयः"** । (१)सार्वधातुकेति किम् ? चिकीर्ष्यात् ।

---

लिङ्भक्तत्वादिति । **लक्ष्य(२)भेदाच्च शास्त्रस्य पुनः प्रवृत्तिरिति भावः** दुर्लक्षत्वादिति । **न व्यञ्जनपरस्यैकस्यानेकस्योच्चारणे विशेषाभाव इति भाष्योक्तेः । सुटि कृते झलपरसंयोगादित्वेन यासुटः सस्य लोपाच्चेत्यपि बोध्यम ।**

---

तत्पूर्वं वा तद्दानस्य चारितार्थ्यसम्भवे तक्रकौण्डिन्यन्यायप्रदर्शनस्य वैयर्थ्यं स्यात् । अत एव तिसृणामित्यत्राचिरादेशेन नुटो बाधः कुतो नेत्याशङ्क्य "न तिसृ" इति ज्ञापकेन समाहितं भाष्ये । तथा च—पूर्वप्रदर्शितदोषः स्यादेवेति वाच्यम् । "यासुट् परस्मैपदेषु" इति विषयसप्तमी, तथा च परस्मैपदविषयतायामेव यासुट् तदानीं सुटोऽप्राप्त्या बाध्यबाधकभावाभावात् । अत एव परममूले लिङो यासुट् तकारथकारयोः सुडित्युक्तम् ।

वस्तुतस्तु—"यासुट् विषये सीयुटः प्रतिषेधो वक्तव्यः" इति वार्तिकेन प्रकृते बाध्यबाधकभावाभावकल्पनमिति दिक् ।

**( १ ) सार्वधातुके किमिति** । ननु "अतो येयः" इत्यत्र "रुदादिभ्यः" इति सूत्रादनुवृत्तसार्वधातुकग्रहणाभावे चिकीर्ष्यादित्यत्रार्धधातुकेऽपीयादेशापत्तिः । न च "अतो लोप" इत्यनेनाकारलोपे ऽतः परत्वाभावादेव इय् न स्यादिति वाच्यम् । मध्ये ऽपवादन्यायेन पूर्वविधेः "अतो लोप" इत्यस्य बाधात्तत्रोक्तापत्तेर्दुर्वारत्वादित्याह—सार्वधातुके किम् ? चिकीर्ष्यात् । अयम्भावः—चिकीर्ष्यादित्यत्रेय् विधानेन चारितार्थ्यस्य "अतो येय" इत्यस्य "अतो दीर्घो यञि" इत्यनेन बाधाद्दीर्घस्यैव दुर्वारतया ...

सार्वधातुकाननुवृत्तौ हि मध्येऽपवादन्यायेन "अतो लोप" ए
भवेदित्यादौ तु परत्वाद्दीर्घः स्यात् ।

**अन्तरङ्गत्वादिति** । प्रत्ययमात्रापेक्षत्वादिति भावः
**यमिति** । एतच्च विप्रतिषेधसूत्रे भाष्ये स्पष्टम् ।

**आर्द्धधातुकेति** । अत्रापि एवकारो बोध्यः ॥

**"किदाशिषि"** । ङित्त्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे
ज्यादित्यादौ सम्प्रसारणार्थं, जागर्यादित्यत्र गुणार्थं च । जागर्ते
पर्युदस्यते । ङित्त्वञ्चेह विशेषविहितेन कित्त्वेन बाध्यते । सत
(१)झल्परसंयोगादित्वेन यासुटः सस्य लोपः, सुटस्तु पदान्त
नेति भावः ।

---

बाध्येतेति । एवञ्चात्रैव स्यादिति भावः । विषयभेदेऽप्या
तानां विपरीतं बलाबलमिति दीर्घादेर्बाधः । बाधकत्वसामा
त्वव्यवहार इति बोध्यम् ।

प्रत्ययमात्रेति । **इयादेशस्तु आङ्गत्वात्प्रकृतिप्रत्ययोभयापेक्ष**
**इति भावः ।**

**नन्वनेनार्धधातुकत्वेऽप्येकसंज्ञाधिकारादन्यत्र संज्ञास**
**सार्वधातुकसञ्ज्ञाऽपि स्यादत आह**—एवकार इति । **"लङः शा**
**इति सूत्रादनुवृत्तेरिति भावः ॥**

बाध्यत इति । **अत एव ङ्या(२)सुडिति नासूत्रि । तथाहि**
**देशिकेनानेन कित्वेनौपदेशिकङित्त्वस्य बाधानापत्तिरिति भ**
ति । **इदं भूयास्तामित्यादौ** । सुटस्त्विति । **सुटश्चेत्यर्थः । चार्थेन**
**सस्य सङ्ग्रहः । इदं भूयादित्येतद्विषयम्** । पदान्तेति । **द्वयोर**

---

**( १ ) झल्परसंयोगादित्वेऽपीति** ।चिन्त्यमिदम् । तथापि अत्रायं
स्तां भूयास्तं भूयास्तेत्यत्र झल्परसंयोगादित्वेन यासुटः सस्य लोपः, भूयाद्
यासुटोऽपि सस्य लोपः पदान्तसंयोगादित्वेनैव । अन्यथा झल्परसंयोगादि
संयोगान्तलोप एव स्यादिति । भृष्ट इत्यादौ सावकाशस्य संयोगादिलोपस्य
बाधकत्वादिति दिक् । न चैवं "णिलोपादेः" स्थानिवत्वं न स्यात् अचत्वा

इग्लक्षणे इति । इक इत्येवं विहिते इत्यर्थः । इग्लक्षणे किम् ? लैगवायनः । लिगोर्नडादित्वात्फक् । इहादिवृद्धेः ओर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वेऽपि न निषेधः । भूयादिति । इह "स्कोः" इति लोपस्यासिद्धत्वात्तकारस्य संयोगान्तलोपः प्राप्तः पदान्तसंयोगादिलोपेनानवकाशेन बाध्यते ।

नन्वेवमपि संयोगादिलोपस्य "पूर्वत्रासिद्धम्" इत्यसिद्धत्वाद्धल्ङ्यादिलोपः स्यादिति चेन्नैवम् । सुड्यासुटोः सतोस्ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनापृक्तत्वाभावात् । हलन्तायाः परत्वाभावाच्चेति दिक् ।

"च्लि लुङि" । इकार उच्चारणार्थः । शबाद्यपवाद इति । आदिशब्दात्तत्तद्गणप्रयुक्तानां श्यन्नादीनाम् ।

इच्चाविति । तत्रेदित्त्वे प्रयोजनममंस्तेत्यत्र "अनिदिताम्" इत्युपधालोपाभावः ।

---

प्रथमं सुटः पश्चाद्यासुट इति बोध्यम् । त्रयाणां संयोगत्वे प्रथमं यासुटः पश्चात् द्वयोः संयोगमाश्रित्य सुट इति बोध्यमिति भावः । झलो लोपस्तु नात्र "उदस्थात्" इति ज्ञापकेन सिच एव तेन लोपात् ।

इत्येवमिति । चशब्दस्येत्यर्थकत्वादेतल्लाभः । सुड्यासुटोरिति । सुट्लोपस्याप्यसिद्धत्वादागमसत्त्वे तद्वहितस्य प्रत्ययत्वाभावादिति भावः । हलन्तायाः प्रकृतेरित्यभ्युच्चयहेतुः ॥

उच्चारणार्थ इति । न त्वित्संज्ञयाऽपीदित्कार्यार्थस्तस्यासम्भवादिति भावः । स चासम्भवः प्रकृतसूत्रभाष्ये एव निरूपित इत्यन्यत्र विस्तरः ।

उपधालोपाभाव इति । नुम्तु न, "गोः पादान्त" इत्यतोऽन्त इत्यनुवर्त्यान्तेदित इति व्याख्यानादिति भावः । सिच्तासावनिदितौ वक्तुं शक्यौ । "हनः सिच्" इति कित्त्वविधानाच्च नामंस्तेत्यादौ लोप इति "इदितो नुम्" इत्यत्र भाष्ये । चित्त्वं तु मा हि लावीत्यत्रेटः प्राप्तमागमानुदात्तत्वं बाधितुं बोध्यम् । च्लिसिचोरन्यतरस्य चित्त्वं शक्यमकर्त्तुम् ।

---

मपि न कर्तव्यम् । अत्र सूत्रे लिङा धातोराक्षेपे शपि कृते यास निरवकाशः, तेन शपबा-

**गापाविति** । गातीति श्तिपा विकरणशून्यस्य नि
करणादेशो गृह्यते । 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्
इतिपरिभाषया पिबतिर्गृह्यते, न तु पातिरित्यर्थः ॥

"**भूसुवोः**" ॥षूङ् प्राणिगर्भविमोचने । सुवतिसूयत्योस्तु
तिङो विकरणेन व्यवधानात् ॥

"**अस्तिसिचो**" ॥ अत्र प्राञ्चः–अस्तेः सिचश्च परस्
स्युः, तच्चिन्त्यम् । "अस्तेर्भूः" इति भूभावस्य स्थानिवद्भा
(१)तत्रातिप्रसङ्गात् । "गातिस्था"इति सिचो लुक्यपि स्थानिवद्भा
अस्थात्, अभूदित्यादौ सर्वत्रातिप्रसङ्गाच्च । तदेतद् ध्वनयन्ना
**अस् चेति** । एवञ्च समासान्तप्रसङ्गो नास्तीत्यपरमनुकूलम्
सिचेति प्राचां व्याख्याने तु "द्वन्द्वाच्चुदशहान्ताद्" इति टच्
चश्चाल्पाच्तरत्वेन पूर्वनिपातः स्यादिति भावः । **विद्यमाना**
लुप्तात्सिचः कृतभूभावादस्तेश्च नेति भावः ।

भाष्यकारास्त्वाहुः–"अस्तिसिचोऽपृक्ते" इति द्विसकारको
अत्र माधवः—अस् स् इति समुदायस्याधातुतया श्तिप्प्रत्
दिति । तद्भ्रमसोक्तिमात्रम् । इत्थं हि भाष्याशयः सिच इ

---

विकरणशून्यस्येति । **इदमपि वृद्धव्याख्यानमूलकम्, न्यायेन वि**
"**गामादाग्रहणेषु**" **इति तु न प्रवर्तते, अनित्यत्वात्तस्य केवल**
**षयत्वाच्च । स्थासाहचर्येण स्वाभाविकाकारान्तस्य ग्रहणमिति**

व्यवधानादिति । **यङ्लुक्तु छान्दस इति भावः । तस्मात् सा**
**घान्तस्य षूङोऽदादेर्ग्रहणम् ।**

प्राचां व्याख्याने त्विति । **अस्तिश्च सिच्चेति अस्तिसिजिति द्व**

---

(१) **तत्रातिप्रसङ्गादिति** । अत्र हीट्प्रसङ्ग इति भावः । वेदाङ्गप्र
त्यमाहुः–"आहिभुवोरीट्प्रतिषेधः" इति वार्तिकेनात्रेट् न स्यादिति तद्भाष्यवि
द्धं हि स्थानिवद्भावदूषणप्रकरणेऽस्य वार्तिकस्य पाठाददादिके ऽस्त्यादेशभूध
वद्भावेनास्तित्वात् प्राप्तस्येटो वारणायैव तद्वार्तिकपाठात् । सिज्निमित्तकवार
तु अगात् अपात् इत्यादावीटो दुर्वारत्वापत्तेर्भाष्योक्तस्य विद्यमानादित्यर्थक
सिचोर्विशेषणस्यैवाङ्गीकारः कर्तव्यः । आत्थ इत्यत्र दीक्षितोक्तेरेव स्वयमे
अभूदित्यत्र दीक्षितोपन्यस्त भाष्योक्तप्रत्याख्यानरीत्यनङ्गीकारः । आत्थ इत्यत्र

सकारः प्रश्लिष्यते न तु श्तपः प्राक्। अत एव ।सिचोऽपृक्तइति द्विसकारको निर्देश इत्युक्तं भाष्ये। अन्यथा अस्तीति निर्देश इत्येव ब्रूयात्। एवञ्च सान्तादस्तेः सान्तात्सिच इति चार्थो निर्बाध एव। द्वितीयश्च सकारो लुप्यते। संयोगान्तस्य पदान्तस्येति व्याख्यानात्। न च तस्यासिद्धत्वाद्रोरुत्वं दुर्लभमिति वाच्यम्। 'संयोगान्तलोपो रोरुत्वे' इति वार्त्तिकेनासिद्धत्वनिषेधात्। संयोगान्तं यत्पदमिति व्याख्याने तु नेह संयोगान्तलोपः। किं तु सकारद्वयस्यापि रुत्वे कृते "अतो रोः" इत्यनेन एक एव उकारो भविष्यति। विधेयविशेषणस्यैकत्वस्य पश्वेकत्ववद्विवक्षितत्वाद्रोरिति जातिपरनिर्देशेनातः परत्वस्य पूर्वत्वस्य च सम्भवात्। न च परत्वात् "हशि च" इति प्रथमस्यैव रोरुः स्यादिति वाच्यम्। रुत्वस्यासिद्धतया हश्परत्वाभावात्। न चाश्रयात्सिद्धत्वमिति वाच्यम्। स्थान्यंशे तथात्वे ऽपि निमित्तीभूतहशंशे

---

व्या(१)ख्यानम्। अनेनास्तीत्यस्य लुप्तषष्ठ्यन्तपृथक्पदत्वे नैतौ दोषौ, किन्तु प्रागुक्तावेवेति सूचयति।

सकार इति। लुप्तपञ्चम्यन्त इति शेषः। अस्तीति निर्देश इति। अस्तीति द्विसकारको निर्देश इति ब्रूयादित्यर्थः।

इति व्याख्याने त्विति। संयोगान्तस्य पदान्तस्येति व्याख्याने तु "श्वसो रेद्धा" इति सूत्रे द्विशकारको निर्देश इति भाष्यासङ्गतिः। तव मते संयोगान्तलोपस्य दुर्वारत्वेन शकारद्वयाभावात्तदसंगतिः स्पष्टैवेति भावः। रुत्वे कृते इति। रुद्वये कृते इत्यर्थः, नत्वेको रुद्वयोः स्थाने लभ्यते। स इत्यस्य भिन्नत्वेन स्त्वजात्यन्तपदत्वाभावेन रुत्वाप्राप्तेः। जातिपरनिर्देशेनेति। तदाश्रयादेव तज्जात्याश्रयस्य सर्वस्य सिद्धत्वं सुलभमिति भावः। एतेन जातिनिर्देशेऽपि व्यक्तिद्वारा स्थानित्वं वाच्यम्। तत्रैकव्यक्तिमात्रस्य सिद्धत्वज्ञापने शिवोऽर्थ इत्यादौ चारितार्थ्येन व्यक्त्यन्तरे तज्ज्ञापने न मानमिति परास्तम्। हशंशे इति। आश्रयात् "पूर्वत्रासिद्धम्" इति सूत्रस्थपूर्वग्रहणेन रोरिति पदाग्रहणेऽपि हश्पदं प्रत्यसिद्धत्वस्य दुर्वारत्वादिति भावः।

ननु (२)'वर्णग्रहणे जातिग्रहणं' यत्तेन साधयताऽन्यत्र जातिग्रहणं दुर्लभमिति सूचितमिति जातिग्रहणमत्र दुर्लभमिति चेन्न "अनुकरणं

तदसम्भवादिति संक्षेपः । विस्तरस्तु शब्दकौस्तुभे बोद्धव्यः ।

च" इति सूत्रे भाष्येऽनुकरणाकृतिर्निर्दिश्यते । यथा "
इत्यादौ गत्याकृतिरित्युक्त्वा तद्भाष्यप्रामाण्येनान्यत्र जाति
ष्यप्रामाण्येनात्रापि जातिग्रहणस्य सुलभत्वमित्याशयात् ।

यदि तु रोरुच्चारणप्रसङ्गे उः प्रयोक्तव्य इत्यर्थात् जा
प्रसङ्गाभावेनदृशे विषये जात्याश्रयणमशक्यम् । ध्वनितं चेदं
झलचः" इति सूत्रभाष्ये, तदाऽस्तु सौत्रः सलोपः । द्विसकार
पर्यालोचनकालापेक्षया । इदं चोक्तव्याख्यानेऽप्यावश्यकम्
सहृदयस्य तत्पक्षेऽप्यभावात् । तदाह—विस्तरास्त्विति ॥

---

यथा ऊकालोऽजित्यत्राच्त्वजात्यवच्छिन्नस्य ग्रहणसत्त्वेनाच्त्वजात्यवच्छिन्नस
समुदाये ऽच्त्वजातेरतिदेशेन तस्य दीर्घसंज्ञायां तितउच्छत्रम् इत्यत्र "पद
त्पापत्तिराशङ्किता भाष्यादौ । ज्ञापकसिद्धत्वेनास्या असार्वत्रिकत्वेन समाध
स्या अस्वीकारेऽपि न दोषः । नच धिप्सतीत्यत्र "दम्भ इच्च" इत्यनेन
इति कित्वं न स्यात् । इक्समीपाद्धलः परस्य सनो द्वितीयेन हला व्यव
"इको झल्" "हलन्ताच्च" इत्यनयोः स्थाने इग्वतो झल् इति न्यासेनाद
क्षते इत्यादौ सनः कित्वं स्यादिति वाच्यम् । "वचि स्वपि" इत्यत्र भाष्ये
कितीत्युक्तत्वेन सत्यपि कित्वे क्षत्यभावात् । पूर्वोत्तरसाहचर्येणौपदेशिक
"लिङ्सिचावात्मनेपदेषु" इत्यत्र "उश्च" इति ज्ञापकात् नेगन्तस्य
इत्यादौ न दोषः । न च "नपुंसकस्य झलचः" इत्यादौ भाष्ये
वारणाय अच् इत्यावर्त्य अचः परो यो झल् तदन्तस्येत्यर्थः कृतः ।
अभावे तक्षा इत्यादौ नुम् न स्यात् , अचः परो यो झल् तदन्ताङ्गस्य
नपुंसकस्य न यमः इति न्यासेनादोषात् । नच श्रायसौ इत्यादौ उगित
त्परिभाषाभावे वृद्ध्यादेशे अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्न
स्थानिताकत्वस्याभावेन "अचः परस्मिन्" इति स्थानिवत्वाप्रवृत्तिरिति व
त्यनुयोगितावच्छेदधर्मावच्छिन्नानुयोगिताकस्थानितावच्छेदकादेशः स
परस्मिन्" इत्यस्यार्थेनादोषात् । प्रकृते च स्थानितावच्छेदकं यत् पूर्व
नुयोगितावच्छेदकीभूतं पूर्वपराणुवृत्ति तद्व्यक्तिकत्वम् तदेवाच्त्वपर्याप्तिक
भम् । "किदाशिषि" इत्यस्यानन्तरम् लिङ्याशिषि धातुकमिति कर्तव्यम् ।
त्याशिषि लिङि परे यासु आर्धधातुकसंज्ञः इति । आर्धधातुकसंज्ञा
धात्वधिकारोक्तत्वाभावेऽपि आर्धधातुकसंज्ञा भवतीति "भवतेरः" इति
भावे ऽपि क्वचित्शप् भवतीति ज्ञापकान्निरर्थकं यासुपरेऽपि शप्सि
इत्यादावपि विशेषविहितेन कित्वेनातिदेशिकस्य "सार्वधातुक
बाधः । अतो ङिङ्गुणप्रतिषेधावपङ्क्त्वाद्गुणः सिद्धः । समाधानमा

हल इति । यत्तु प्राचोक्तम्—अपृक्तस्य सार्वधातुकस्येति । तन्न, रोदिषि इत्यादावतिव्याप्तेः सार्वधातुकग्रहणव्यावर्त्याभावाच्च ॥

"आतः" ॥ सिज्ग्रहणमनुवर्त्तते । सिच आकाराच्च परस्य झेरिति । तत्र प्रत्ययलक्षणेन सिचः परत्वम् । आकारात्तु श्रुत्या । एवं स्थिते फलितमाह—सिज्लुकीति । पूर्वसूत्रेण सिद्धे नियमोऽयमित्याह—आदन्तादेवेति ।

प्रागेवेति । न परतो नापि व्यवहिता इति भावः । अत एव "छन्दसि परेऽपि" "व्यवहिताश्च" इति सूत्रितम् ॥

"आनि लोट्" ॥ नि लोडित्येव सिद्धे आनिग्रहणमागमशास्त्रस्यानित्यतां ज्ञापयितुम् । तेन 'सागरं तर्त्तुकामस्य' इत्यादि सिद्धम् । लोड्ग्रहणं स्पष्टार्थम् । प्रकृष्टा वपा येषान्तानि प्रवपानि मांसानीत्यत्र तूपसर्गग्रहणादर्थवद्ग्रहणाच्च न भविष्यति ।

"दुरः षत्व" इति । यत्तु प्राचोक्तं दुरः परस्य णत्वं नेति केचिदिति । तन्न, एवं हि सिद्धान्ते णत्वं स्यात्तच्चाकरविरुद्धमिति भावः । यदपि

---

निलोडित्येवेति । आङ्विशिष्टस्य तु "यदागमा" इति न्यायेन सिद्धिः । उपसर्गनेस्तु न ग्रहणं, "नेर्गद" इत्युत्तरसूत्रे पुनर्निग्रहणाद्, युधातोः क्तिनि निष्ठावद्भावेन नत्वे प्रयूनिरित्यत्र तु न दोषः । लोट्त्वाभावाल्लाक्षणिकत्वाच्च । अनित्यतां ज्ञापयितुमिति । इदं भाष्ये क्वापि न दृश्यते ऽतस्तर्तुकामस्येत्यादेरसाधुत्वमेवोचितम् । किं च ज्ञापिते चारितार्थ्यमपि दुरुपपादम् । आडागमशून्यप्रयोगाप्रसिद्धेः । आग्रहणन्तु लोड्ग्रहणवदिति तत्त्वम् । उपसर्गग्रहणादिति । वपाशब्दस्य क्रियावाचकत्वाभावेन तं प्रति प्रशब्दस्योपसर्गत्वाभावादिति भावः । प्रभवाणीत्यादौ आनिं प्रत्यनुपसर्गत्वेन तदर्थं प्रत्युपसर्गत्वाच्च क्षतिः । 'निरासमेतां नयति तत्कुलं निरानि' इत्यादौ लोड्ग्रहणाभावे उपसर्गार्थवत्त्वयोः सत्त्वेऽपि न णत्वं "प्रत्ययाप्रत्यययोः" इति परिभाषया प्रत्ययस्यैव ग्रहणादिति बोध्यम् । ध्वनितं चेदमत्र भाष्ये ।

आकरविरुद्धमिति । "गतिश्च" इति सूत्र(१)स्थभाष्यविरुद्धमिति भावः ।

भवत्येव णत्वमिति व्याचख्युः । तदपि रभसमात्रम् ।

"**अन्तःशब्दस्य**"**इति** । अत्‌शब्दस्याङ्‌विधाविल

तत्तु प्रकृतानुपयोगादुपेक्षितम् । भिदादिपाठेन "प्रज्ञाश्रद्धा"

वा गतार्थत्वाच्च ॥

"**शेषे विभाषा**" ॥ "नेर्गदनद" सूत्रापेक्षया शे

**दनदादेरिति** । उपदेशे किम् ? प्रनिचकार प्रनिचखाद

यथा स्यात् । अषान्ते किम् ? प्रतिपिनष्टि । उपदेशग्रहणा

निषेधः । **उपलक्षणमिति** । "कुर्द खुर्द क्रीडायामेव"

च ज्ञापकः । **धात्वादिति** । "भूवादि" सूत्रे "धान्यानां

चाकरे स्पष्टमिदम् ॥

"**टित आत्मने**" ॥ प्रकृतैस्तिबादिभिरात्मनेपदानां

पचमानो यजमानः । एवं तु टितस्तङां टेरित्येव वक्तुमुचि

---

रभसेति । **तद्विरोधादेवेति भावः** ॥

प्रनिचखादेति । **प्रनिपेक्ष्यतीत्यादेरप्युपलक्षणमिदम्** । प्रनि

**हि आदेशोपदेशे खादिः स्यान्युपदेशे षान्तश्चेति भावः** । 

**अर्थसहितधातुपाठः पाणिनीय इति पक्षस्येत्सञ्ज्ञाप्रकरण**

**तत्वादिति भावः । (१)उपलक्षणत्वेऽप्यर्थसहितपाठः क्रिय**

**इति बोध्यम् । अर्थरहितोऽपि पाठः पाणिनीय इति**

**भाष्ये ।**

तिबादिभिरिति । **अतद्गुणसंविज्ञानबहुव्रीहिणा तादिभिरि**

---

इत्येतन्न वक्तव्यं भवति । नैतदस्ति प्रयोजनम्–क्रियते एतन्न्यास एव ।

र्नीतम् । अत्र "उपसर्गात्" इति षत्वं मा भूदिति भाष्यविरुद्धमिति भाव

(१) **उपलक्षणत्वेऽपीति** । एवञ्च उपसर्गं विनापि उत्पत्त्य

युज्यमानोऽप्युपसर्गो द्योतक एव; न तु वाचक इति। 'उपसर्गाद्योतका ए

"**आमः**" ॥ लक्षणप्रतिपदोक्तपरिभाषया नेह—अम गत्यादिषु । आम, आमतुः । तिबाद्यपवादत्वाल्लावस्थायामेवायं लुक् । तेनामन्तस्यातिङन्तत्वान्न निघातः । ततः परस्य निघातश्च । लिटः कृत्त्वात्प्रत्ययलक्षणेन कृदन्ततया प्रातिपदिकत्वमामन्तस्याऽव्ययत्वात्सुपो लुक् ॥

---

लक्षणेति । **सानुबन्धकपरिभाषया प्रत्ययग्रहणपरिभाषया चेत्यपि बोध्यम्** । अपवादत्वादिति । **'अन्तरङ्गानपि' इति न्यायाच्चेत्यपि बोध्यम्** । अव्ययत्वादिति । **(१)आम इत्यनेनैव लुक् । तत्र हि लेरिति नानुवर्त्तते । अत एव "विदां कुर्वन्तु" इत्यादौ लोटो लुक्सिद्धिरित्यन्ये ।**

सुपो लुगिति । **तेन तस्य पदत्वात्कार्याञ्चकारेत्यादौ पदात्परत्वनिबन्ध-**

---

इति धात्वर्थे बलादित्यत्र अबलादितिच्छेदः । बलाभावान्निर्बलत्वादिति अस्वतन्त्रत्वादिति निष्कर्षः, नतु बलादिति । तथा सति तेषां द्योतकत्वं व्याहन्येत । अथ वाचकत्वमेव स्यादिति केचित् ।

अन्ये तु—उपसर्गेण नीयते इतिपाठे नयनकर्तृत्वमुपसर्गे एवाङ्गीक्रियते । तथाच—बलाभावेऽस्वतन्त्रे च कर्तृत्वं नैव संगच्छते । नयनकर्मण एव स्वतन्त्रत्वस्य सर्वत्राङ्गीकारात् । धातौ अस्वतन्त्रत्वम् उपसर्गेषु स्वतन्त्रत्वमिति विपरीतमेव स्यात् । तस्मादुपसर्गेण धात्वर्थो बलादन्यः प्रतीयते इत्येव पाठः स युक्तो भवेत् ।

उपसर्गेण उपसर्गसंसर्गेण बलात् शब्दशक्तिस्वभावादन्य एव धात्वर्थः प्रतीयत इति तदर्थः ।

अन्यत्र नीयते इति पाठे उपसर्गेण कर्त्रा बलात्कारेण धात्वर्थोऽन्यत्र केवलस्य प्रसिद्धार्थात् भिन्नेऽर्थे नीयते । अर्थात् विलक्षणोऽर्थो प्रत्याय्यते, न स्वार्थ इति । एतेन उपसर्गाणां द्योतकत्वं स्पष्टम् । अधिकरणत्वविवक्षया कर्मत्वन्नेति बोध्यमित्याहुः । अत एव अमरोक्तिः—

स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः । अनुलापो मुहुर्भाषा विलापः परिदेवनम् ।
विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः । सुप्रलापः सुवचनम् अपलापस्तु निह्नवः ॥
इति दिक् ।

(१) आम इत्यनेनैवेति । ननु आमो मकारस्येत्वं कुतो नेति चेन्न । आस्कासोराम्—
[illegible]

"कृश्वानु" ॥ कथं तर्हि 'तं पातयां प्रथममास
'संयोजयां विधिवदास समेतबन्धुः' 'प्रभ्रंशयां यो नहुषञ्च
प्रमाद एवायम् ।

न च विपरीतप्रयोगानिवृत्तिमात्रे सूत्रस्य तात्पर्यमस्त्विति
पर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्च' इति वार्त्तिकविरोधात्
इति । एवञ्चाम्प्रकृत्यर्थगतकारकसंख्यादिविशेषाभिव्यक्ति
लम् । अत एवानुप्रयुज्यमानयोर्भ्वस्त्योरामन्तवशेन सकर्मक
र्मणि लिट् ।

तथा च माघः—'तस्यातपत्रं बिभरां बभूवे' इति ।

श्रीहर्षश्च—'तपर्त्तुपूर्त्तावपि मेदसां भरा विभावरीभि
रे' इति ।

अस्तेस्तु भावकर्मणोस्तङि एशि इटि च रूपे विप्रति
उभयत्रापि "ह एति" इति हादेशे कृते एधामाहे ईक्षामा

---

नश्चकारेत्यस्य निघात इति भावः ॥

कथं तर्हीति । अनुप्रशब्दाभ्यां विपरीतव्यवहितप्रयो
भावः ।

सकर्मकत्वादिति । फलव्यधिकरण(१)वाचित्वादिति
र्मकसमभिव्याहारे कृञोऽप्यकर्मकत्वं बोध्यम् । अन्यत्र
व्याहारे फलव्यापारयोर्व्यस्यासेऽपि आम्समभिहारे न व्य

---

भाष्यकारैस्त्वित्थमभ्यधायि । "अथापि कथंचिदित्कार्यं स्यात्,
क्रियते एतन्न्यास एव "आम मन्त्रे" इति । यद्येवमामन्त्रे इति प्र
न्धुन्यायेन निर्देशः। तदेतद् 'आस्कासोराम्विधानं ज्ञापकमेव, न चायम
इतिभाष्यग्रन्थेन आमो मित्वेन प्रत्ययपरत्वबाध इव आमो मित्वेन न
कल्पनयापि सामञ्जस्ये 'कासाञ्चक्रे' इति निरनुस्वारप्रयोगं को वारयेत् ।

अचामन्त्यात्परशब्दस्य तत्साधकमकारेत्संज्ञापरत्वे तु लक्षणैव गौ
त्संज्ञावारणे तु प्रक्रियाज्ञानलाघवमिति । आम इति तु "अचः" "अ

तासिसाहचर्याट्येव ह्रस्वमित्यन्ये ।

साहचर्यादेव सार्वधातुक एव एति ह्रस्वं, न तूक्तद्वयेऽपि । तेन एधामासे ईक्षामासे इत्येव रूपमित्यपरे ।

**वाक्यभेदेनेति** । अत्र च "आम्प्रत्ययवत्" इति वचनमेव प्रमाणम् । अन्यथा पूर्ववदित्यनुवृत्त्यैव सिद्धे किन्तेन ?

**"द्विर्वचनेऽचि" ॥ द्वित्वनिमित्तेऽचीति** । द्विर्वचनशब्दस्य तन्निमित्ते लक्षणा, तां विना अचा सामानाधिकरण्यायोगादिति भावः ।

यद्वा द्विरुच्यते ऽस्मिन्निति द्विर्वचनम् । अथवा द्विर्वचनमस्त्यस्मिन्नित्यर्शआद्यच् । इह तन्त्रावृत्त्याद्याश्रयणेन कालावधारणमपि क्रियते इत्याह— **द्वित्वे कर्त्तव्ये इति** । कृते तु द्वित्वे यथायथमादेशः स्यादेवेत्यर्थः । द्वित्वनिमित्ते किम् ? दुद्यूषति । न ह्यूठ् द्वित्वनिमित्तम् ।

नन्वेवं चक्रतुरित्यत्र यण् स्यादेव । अतुसो द्वित्वनिमित्तत्वेऽप्यकारस्यातथात्वात् । सूत्रन्तु चक्रे इत्यादौ सावकाशमिति चेत् ? सत्यम्, इह निमित्तशब्देन साक्षाद्वा समुदायघटकतया वा द्वित्वप्रयोजकं सर्वं गृह्यते, लक्ष्यानुरोधात् । एतच्च "ठस्येक" इति सूत्रे कैयटग्रन्थे स्पष्टम् । अत एव ऊर्णोतेः सनि, "सनीवन्त" इतीट्पक्षे "विभाषोर्णोः" इति ङित्वविरहे ऊर्णुनविषतीति सिद्धम् । सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकत्वेन त-

---

र्थस्यापि व्यत्यासो वेति नाभेदान्वयानुपपत्तिरिति वदन्ति ।

सार्वधातुक एवेति । तासिसाहचर्यादस्तेरपि सार्वधातुक एव एति ह्रस्वमित्यर्थः । एतत्सर्वं स्त्यभिधाने बोध्यम् । सिद्धे इति । एधांचकारेत्येतद्व्यावृत्तौ सिद्धायामित्यर्थः । एतेनैधाञ्चक्र इत्यादौ परगामिनि क्रियाफलेऽप्राप्तस्य विधानेऽपि इन्दाञ्चकारेत्यादौ कर्तृगामिनि क्रियाफले प्राप्तस्य निवारणमशक्यमित्यपा(१)स्तम् ॥

लक्षणाया जघन्यत्वादाह—यद्वेति । अधिकरणे ल्युडिति भावः । इदमेव युक्तम् । अन्त्येऽपि वृत्तिद्वयकल्पनागौरवात् । सर्वमिति । एवञ्च द्वित्वेजादिप्रत्ययस्य निमित्तत्वे अचोऽपि तत्त्वं यणयचो निमित्तत्वे तदादिप्रत्य-

---

स्मिन् प्राप्तयोर्गुणादेशयोर्द्वित्वे कर्त्तव्ये निषेधात् । तद्भा
मात्रेणेह निमित्तत्वमिति ।

नन्वेवमरिरिषतीति न सिद्ध्येत् । ऋधातोस्सनि
सनि" इति इटि कृते इस्शब्दनिमित्तकस्य गुणस्य निषेध
स्य" इति इसो द्वित्वप्रसङ्गात् । इष्यते तु रिस्शब्दस्य द्वि
नेह इस्शब्दो द्वित्वनिमित्तम् , कार्यित्वात् । न हि
ऽऽश्रीयते "स्थण्डिलाच्छयितरि व्रते" इति ज्ञापकात् ।

अन्यथा शीङो ङित्त्वेन "क्ङिति च(१)" इति गु
चैवं सन्नन्तस्य कार्यित्वाद् ऊर्णुनविषतीत्यपि न स्यादिति
र्थ्येन इनिना कार्यमनुभवत एव कार्यित्वलाभात् । उण

---

**यस्यापीति भावः** । तद्भावेति । **तस्मात्सति च तद्भवतीत्य**
**न तु तत्प्रयोजकत्वेनेतीति भावः । यद्यत्र स्थानिवत्त्वं न**
**स्य द्वित्वमिति काल्पनिकं च गृह्यत इत्यपि बोध्यमिति**
**भाष्ये स्पष्टम्** । इनिनेति । **ज्ञापकस्य सजातीयापेक्षत्वे**
कार्यित्वलाभादिति । **तथा च तस्यैव निमित्ततयाऽनाश्रय**

---

(१) **"क्ङिति च" इति गुणनिषेधापत्तेरिति** । "क्ङिति च"
ग्रहणं कर्त्तव्यम्' इति वार्तिकं पठितम् । तत्र निमित्तपदं कारणमा
रणमात्रपरं प्रमाणाभावादित्याशयः ।

ननु "क्ङिति च" इति परसप्तम्याश्रयणेन न दोषः । 'रोरवीति'
षेधदृष्ट्या बहिरङ्गगुणस्यासिद्धत्वेन बाधायोगात्तन्निमित्तग्रहणं न कर्तव्
त्राद्याचारक्विब्निमित्तकगुणनिषेधो न स्यादित्यध्येता इत्यादौ
प्राप्तिरेव न । न च परसप्तम्याश्रयणे भिन्नमित्यत्र दकारेण व्यवधानात्
दिति वाच्यम् । एकवर्णव्यवधानेऽपि निषेधप्रवृत्तेः क्नोः कित्वेन ज्ञापन

न च भवतः इत्यादावकारव्यवधानेऽपि गुणनिषेधः स्यात् । बहिर
धस्य न वाच्यम् । "निषेधाश्च बलीयांस" इति न्यायेन बाधादिति वा

एव द्वित्वरूपं कार्यमनुभवति, न तु सन् । अरिरिषतीत्यत्र तु रिस्शब्दः कार्यभागिति वैषम्यात् । अचीति किम् ? जेघ्रीयते । देध्मीयते । शाशय्यते । इह "ई घ्राध्मोः" इतीकारः "अयङ्यि क्ङिति" इतीयङादेशश्च निषिध्येतेति प्राञ्चः ।

वस्तुतस्तु अचीति व्यर्थम् । घ्रीय ध्मीय शय्य इति द्वितीयाज-

---

द्वितीयाजवधिकस्येति । नष्टभार्यावद् व्यञ्जनानीति तदवधिकस्य द्वित्वमिति षाष्ठ• कार्यित्वेऽपि कार्यानुभवकर्तृत्वाभावान्निषेधविषयत्वे सुवचमिति भावः । एतेनात्रिङ्सुअचो द्वित्वनिमित्तत्वाभावेन गुणस्य तन्निमित्तत्वाभावेन च सूत्राप्राप्तेरिदमयुक्तमित्यपास्तम् । "कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते" इत्यस्यार्थस्तु साक्षात् अवयवद्वारा वा कार्यानुभवकर्तृत्ववानित्यर्थः । अत्र प्रमाणमाह—अचि किमिति । जेघ्रीयते इति । तथाहि—मूले उक्तम्—अचि किम् जेघ्रीयते देध्मीयते इत्यादि ।

अत्र केचित्–अच्ग्रहणाभावेऽपि 'नष्टभार्यावद्व्यञ्जनानि भवन्ति' इति न्यायेन घ्राय इत्येकाचो द्वित्वे यकारस्य कार्यानुभवकर्तृतया द्वित्वनिमित्ततायाः अनया परिभाषया अभावात् "द्विर्वचने" इत्यस्याप्राप्त्या दोषाभावेन भाष्यासङ्गत्या भाष्यविरुद्धेयमिति वदन्ति ।

अन्ये तु—"स्वरान्तरे व्यञ्जनान्युत्तरस्य" इतिन्यायमङ्गीकृत्य घ्रा इत्यस्यैव द्वित्वे केवलं कार्यी निमित्ततया नाश्रीयते इत्यस्यैवाङ्गीकारे यङन्तस्य कार्यितया यकारस्य निमित्तत्वेनानाश्रयणे ऽज्ग्रहणाभावेऽपि इत्वाप्राप्तेरक्षततया भाष्यासङ्गत्या कार्यमनुभवन्नित्यंशध्वननात् । यस्य तथात्वाभावात् अज्ग्रहणाभावे द्वित्वनिमित्ते ये ईत्वाभावः स्यादिति तस्मात्कार्यमनुभवन्नित्यंशविशिष्टापरिभाषा भाष्ये ध्वनितेत्याहुः ।

परे तु—"द्विर्वचनेऽचि" इत्यत्र "तस्मिन्" इति परिभाषाबलेन अव्यवहितपूर्वत्वोपस्थितौ तु जग्मतुरित्यत्र गम्धातोरचो निरुक्ताजव्यवहितपूर्वत्वाभावान्निषेधानापत्तिः । *'येन नाव्यवधान' इत्यस्य तु नायमवसरः । चक्रे इत्यत्राव्यवहिते सूत्रस्य चारितार्थ्यात् ।*

तथाचाचीति निमित्तसप्तम्याश्रयणेन द्वित्वनिमित्तघटकाच्पर्याप्तनिमित्तताकाजादेशो नेति सूत्रार्थकरणेन "द्विर्वचनेऽचि" इत्यत्र ग्रहणसत्वे ऽसत्वे वा घ्राशब्दाकारमादाय निषेधप्रवृत्तेर्निवारयितुमशक्यतया ऋते विशिष्टपरिभाषास्वीकाराद्भाष्यासङ्गतिः । परिभाषास्वीकारे तु घ्राशब्दाकारस्य कार्यानुभवकर्तृत्वात् कार्यित्वाच्च निमित्तत्वाभावेन तन्निमित्तकनिषेधाप्राप्त्या केवलयङ्निमित्तकनिषेधवारणायाच्ग्रहणं सार्थकम् । भाष्यप्रामाण्याच्च नष्टभार्यावद्व्य-

वधिकस्यैकाचः कार्यितया यङो द्वित्वनिमित्तत्वाभावात्।

भाष्योक्तेरिति भावः। द्वित्वनिमित्तत्वाभावादिति। न च यङि प
तन्निमित्तस्य यङो विशिष्टस्य द्वित्वनिमित्तत्वमस्त्येव। अ
र्यित्वेऽपि न तस्यत्वं प्रति निमित्तत्वं, न हि कार्यी निमित्त
थाकथञ्चिन्निमित्तत्वं कार्यित्वञ्च गृह्यत इत्यत्र मानमास्ति।
प्रत्युदाहरणत्वपरभाष्यप्रामाण्येन तत्र निमित्तकार्यिपदयो
वाङ्गीकारादिति वाच्यम्। अरिरिषतीत्यस्याप्यसिद्धेः। न
मित्तस्यार्द्धधातुकसञ्ज्ञस्येसशब्दस्याकारविशिष्टस्य द्वित्वं
शयितरी(१)त्यत्रापि इकारस्यैव कार्यित्वेन ज्ञापनस्य शि
यदि तत्रगन्ताङ्गस्येत्यर्थात्सर्वस्य कार्यित्वन्तर्ह्यत्रापि य
मित्यर्थात्तुल्यम्। तस्मान्नहि कार्यीत्यत्रापि यथाकथञ्चि
ह्यत इति युक्तम्। अचीति व्यर्थमित्यस्य जघ्रीयत इत्याद्यर्थ

द्वित्वनिमित्तघटकाचमूठमादाय "द्विर्वचने" इति यणो निषेधे अभ्यासे उ
मम तु यद्यत्राजादेशो यण् स्यात् तर्हि द्युशब्दस्य द्वित्वेन ऊढः का
निषेधः। अत एवात्रादेशनिषेधस्थानिरूपातिदेशपक्षयोः फलैक्यसिद्धिः।
निमित्ताचं चङमादाय द्वित्वात्पूर्वं गाङादेशनिषेधात् अध्यजीगपत् इति
च्यम्। निमित्ततायाः अव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता
न्धावच्छिन्नावच्छेदकताभिन्नायाः विवक्षया ग्रहणेन चङ्निष्ठानिमित्तताया अ
नच कशब्दादाचारक्किबन्तात् अतुसि चकतुरित्यत्रातो लोपस्याच्पय
नोक्तनिषेधाप्रवृत्या पूर्वमतो लोपे एकाचो ऽभावेन द्वित्वानापत्योक्तरूपासि
एकाच्भ्योऽचारक्किपो ऽभावात् प्रत्ययान्तत्वेन नव्यमते अ
ष्ट्यिष्टापत्तेः। द्वित्वनिमित्तघटको योऽच् तदादिपर्य्याप्तनिमित्तताक आ
रेणादोषाच्च। नच भवनीयतेः सनि द्वित्वात्पूर्वमननिमित्तकगुणादेर्निषेधे
भ्यासे उकारश्रवणापत्तिः। नच "ओःपुयणि" इतीत्वं स्यादिति वाच्यम्
नम्' इति न्यायेनाभ्यासोत्तरखण्डव्यवधाने एव तत्प्रवृत्तेरिति वाच्यम्।
मीति प्रकृतसूत्रभाष्येण द्वित्वनिमित्ततापर्य्याप्त्यधिकरणप्रत्ययघटकाच

असुषुपत । इह "स्वापेश्चङि" इति सम्प्रसारणे निषिद्धे ऽभ्यासे उवर्णो न श्रूयेत । न च द्वित्वे कृते पुनः सम्प्रसारणम् । "न सम्प्रसारण" इति निषेधात् । यद्यपीहाजादेशः स्थानिवत्स्यादिति रूपातिदेशपरतया सूत्रे व्याख्यानं काशिकादौ प्रसिद्धं, फलं च तुल्यमेव, तथाऽपि स्थानिवद्ग्रहणं निवर्त्य नञ्श्चानुवर्त्य निषेधपरतया व्याख्यानमपि भाष्यारूढं लघु चेति तदेवाश्रितम् ।

एवं हि सति स्थानिवदिति शब्दाधिकारप्रयुक्तक्लेशो नास्ति । न पदान्तेति निषेधानन्तरं पाठश्चानुगृहीतो भवतीति दिक् ।

उभयान्वयीति । मध्ये पाठात्पूर्वोत्तराभ्यां सम्बध्यत इत्यर्थः । तत्रोत्तरान्वयफलं कर्तुञ्जन्तुमित्यादाविण्निषेधः, निस्स्वरेण सम्प्रत्युदात्तत्वात् । पूर्वान्वयफलन्तु—बिभित्सति, पिपक्षतीत्यादौ निषेधः । द्वित्वे कृते ऽनेकाच्त्वात् । स्यादेतत् । विशेष्यदलमेव तर्हि

---

अधिजगे इति तु प्रयोजनं "गाङ् लिटि" इत्यत्र द्विलकारकानिर्देशाश्रयणात्तस्य लावस्थायां प्रवृत्तेः ।

न च तस्य विषयसप्तमीत्वाङ्गीकारेणानैमित्तिकत्वं, तद्भावभावितामात्रेणेव तद्बुद्धिभावभावितामात्रेणापि निमित्तत्वस्य युक्तत्वात् । अतस्तत्रोपात्तलिड्बुद्धिभाव एव निमित्तमित्यजनिमित्तत्वाभावः । सर्वत्रैव वाऽत्र शास्त्रे बुद्धिकृतमेव निमित्तत्वमिति स्पष्टं "द्विगोर्लुक्" इति सूत्रे मनोरमायाम् । अत एवाङ्गाधिकारे आर्धधातुकइत्यादीनां विषयसप्तमीत्वेऽपि परदेशस्थविषयकबुद्धिभावेन जायमानतया परनिमित्तत्वेन तद्विषये "अचः परस्मिन्" इति स्थानिवत्त्वप्रवृत्तिः । इदमेवाचीति ईदृशनिमित्तत्वाश्रयणे लिङ्गम् । ध्वनितञ्चेदं प्रकृतसूत्रे "अचो यत्" इति सूत्रे च भाष्ये इत्यन्यत्र विस्तरः । निषिद्धे इति । "द्विर्वचनेऽचि" इत्यनेनेति भावः । पुनः सम्प्रसारणमिति । "ष्युतिस्वाप्योः" इत्यनेनेति भावः । निषेधादिति । अस्य च व्यवहितेऽपि प्रवृत्तिरिति स्पष्टमेवाकरविदाम् ।

इदमपि प्राचामनुरोधेन । सम्प्रसारणग्रहणसामर्थ्यादेकवर्णव्यवधाने थून इत्यादावस्तु प्रवृत्तिः । प्रकृते प्रवृत्तौ तु न मानमिति वक्तुं शक्यत्वात् ।

मा ऽस्त्विति शङ्कते-**एकाच इति किमिति**। ननु बि
स्याद्यङ्लुक्यपि स्यादेव तत्राह-**स्मरन्ति हीति**। "श्ति
'**इत्यादि**। श्तिपा यथा—"स्यतिहन्तियातिवातिद्राति
दि। शपा—"सनीवन्त" इति सूत्रे भरति। अनुबन्धेन
स्व(२)रूपेण, इत्संज्ञकत्वेन च। आद्यो यथा-"शीङः स
"दीङो युट्" इति। द्वितीयस्तु "अनुदात्तङित" इत्य
"नाग्लोपिशास्वृदिताम्" इति सूत्रे शासेर्यङ्लुकि न प्रवर्तते
न्धनिर्देशात्। सूत्रे शासिग्रहणं प्रत्याख्याय ऋशासु इति ऋ
मते तु इत्सञ्ज्ञकत्वेनानुबन्धनिर्देशात्। ये तु यङ्लुक्यपी
सेरुकारो न पठ्यते। **गणेन यथा**-बेभिदीति। चेच्छिदीति
इनम्"। एकाज्ग्रहणं प्रकृतसूत्रे। तेन बेभेदिता। चे
ण्निषेधो न।

**एतच्चेति**। ननु श्तिपाशपेत्याद्यंशे कथमिदं ज्ञा

ङिति पक्षे अकार्षीदित्यादौ दोषः। ङिलसिचोरपि स्य
यामेव प्रवृत्त्याऽङ्गसञ्ज्ञानिरपेक्षत्वेनान्तरङ्गत्वाद्द्विकरणे
त्तेः। स्पष्टं चेदम् "एकाचो द्वे" इत्यत्र भाष्ये। तर्हि माऽ
नुदात्तस्यैकाच्त्वाव्यभिचारादिति भावः। न च वधिव्य
तत्सामर्थ्येन उपदेशमात्रे एकाचो ग्रहणादिति वाच्यम्।
तेनेन सिद्धेरित्यभिमानात्। स्वरूपेणेति। शासु इति पाठात
पि" इति सूत्रे। इत्सञ्ज्ञकत्वेनेति। ऋदित्पदेन तद्ग्रहणादिति
इति। पाठेऽप्यनित्यत्वेन वारणम्। अन्यथा यङ्लुगन्ते

(१) **श्तिपा शपेत्यादि**। "इत्थं भूतलक्षणे" तृतीया
शिष्टमनुबन्धविशिष्टं गणविशिष्टं एकाजिति बोधकं च पदं यत्र शास्त्रे
पद्यापि यङ्लुकि न प्रवर्तन्ते इति परिभाषार्थः।

(२) **स्वरूपेणेति**। दीङ् इत्येवमनुबन्धघटितत्वेनेत्यर्थः।

एकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषाया ज्ञापनस्य गतिकारकोपपदाना- मित्यादौ दृष्टत्वात् । अनन्यार्थैः श्तिपादिनिर्देशैर्ज्ञापनसम्भवाच्च ।

तद्वत इति । न च मत्वर्थलक्षणायां मानाभावः । वसत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात् । वधेरिति । यस्तु तद्व्यावृत्तये ऽनिट्कारिकास्वदन्तपर्युदास उक्तो व्याघ्रभूतिना स एव च प्राचाऽनुसृतः स इहोपेक्षितः । सूत्राननुगुणत्वात् । तथा हि—कर्त्ता हर्त्तेत्यादौ, 'सर्वे सर्वपदादेशा' इति न्यायेन कारित्यादिरादेशः । तस्य यथा स्थान्युपदेशं गृहीत्वा निषेधः प्रवर्त्तते, एवं वधादेशेऽपि प्रवर्त्तमानः केन वार्यताम् । अदन्तपर्युदाससामर्थ्येनेति चेत् ? न, सूत्रका-

---

"सनाद्यन्ता" इति धातुत्वं न स्यात् , गणनिर्दिष्टत्वात् । अनित्य(१)त्वे मानञ्च "यङो वा" "गुणो यङ्लुकोः" इत्यादि । अत एव यङ्लुकि द्वित्वभष्भावादि सिद्ध्यति । एतन्मूल एव यत्रैकाज्ग्रहणं किञ्चिदिति पाठः "इवीदित" इति सूत्रे कैयट इत्यन्ये । अनुदात्तपाठस्यैवेति । न चानुदात्तमन्तोदात्तत्वबाधनार्थं, मत्वर्थलक्षणयैवोपपत्तौ शास्त्रबाधे मानाभावात् । सूत्रका-

---

( १ ) अनित्यत्वे मानञ्चेति । अत एव चोस्कुन्दीति इत्यादौ "इदितो नुम् धातोः" इति नुम् बोभुवीति इत्यादावुवङि "ङिच्च" इति अन्तादेश इति बोध्यम् ।

वस्तुतस्तु—इयं परिभाषा नास्त्येव । अन्यथा एकाज्ग्रहणं किमर्थम्? इति प्रश्नस्योत्तरत्र जागर्त्यर्थम् इह वध्यर्थम् इत्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तेः ।

केचित्तु—वध्यर्थमित्यत्र वधिग्रहणम् , यङ् लुकोऽप्युपलक्षणमिति वदन्ति ।

परे तु—"एकाच्" इति सूत्रे अज्वत इत्युक्तौ अच्युपदेशे अनुदात्तस्यानन्वयोऽप्रसिद्धेः सामर्थ्यात्तस्योपदेशावच्छेदेनैकाच इत्यर्थादुपदेशावच्छेदेनानुदात्तादित्यर्थाद्वा वधिव्यावृत्तिसिद्धावेकपदघटितमेकाजितिपदं व्यर्थं सदुक्तपरिभाषायां ज्ञापकम् । किंच यङ्लोपे बेभिदीतित्यादिभाष्ये यङ्लोपे दोषवारणाय स्थानिवत्वस्येव यङ्लुक्युपायान्तरस्याप्रदर्शनेनेडागमस्य तत्रेष्टत्वावगत्या उक्तपरिभाषाया भाष्याभिमतत्वमेव । इड्विषये यङ्लुको लोकेऽनभिधानकल्पने न मानम् । किंच तस्य छान्दसत्वेऽपि छान्दसरूपसाधकानि अप्रमाणप्रणयनवत् एतत्परिभाषारूपप्रमाणाभ्युपगमे बाधकाभावः ।

किंच यङ्लोप इति भाष्ये यङ्लुक्युपायाप्रदर्शनरूपन्यूनतापत्तिपरिहाराय यङ्लुगन्तेड्-

रेणाऽपर्युदस्तत्वादिति भावः ।

"**इणः(१) षीध्वम्**" ॥ "इण्कोः" इत्यधिकारेऽपि पुनरिण्ग्रहणं कवर्गनिवृत्त्यर्थम् । तेनेह न । पक्षीध्वम् । **अङ्गात्परेषामिति** । विहितानामिति तु नोक्तम् अलीढमित्यादावव्याप्तेः । लिह्‌दुहनहां ढत्वघत्वधत्वेषु लिक्षीध्वं, घुक्षीध्वं नत्सीध्वमित्यत्रातिव्याप्तेश्च । (२)अङ्गात्किम् ? वेविषीध्वम् । अर्थवद्ग्रहणादेव सिद्धे क्वचिदर्थवद्ग्रहणपरिभाषा न प्रवर्त्तत इति ज्ञापनार्थमिदम् । तेनानिनस्मन्नित्यादि सिद्धम् ।

---

रेणेति । **भाष्यवार्त्तिककृतोरप्युपलक्षणमेतत् । एतेन वधादेशे आद्युदात्तत्वनिपातनमूलकः स उदात्तान्तानामिवादन्तानामप्युदात्तोपदेशत्वाभावबोधनात् । तच्च कथादिषु स्वतो वधादेशे उदात्तनिपातनसामर्थ्यादित्यपास्तम् ।**

**यत्तु "हनो वध" इत्यत्रास्य व्यञ्जनान्तत्वे इड्विधिर्वाच्यः । अदन्तत्वे तु न दोष इति भाष्ये उक्तम्, तन्नु उपदेशेऽनेकाच्त्वात्प्रतिषेधाभावादिट्सिद्धिरित्येवम्परतया कैयटेन व्याख्यातम् ।**

विहितानामिति । **एवञ्चाङ्गादिति न कर्त्तव्यमिति लाघवमिति भावः ।** नत्सीध्वमिति । **इणन्ताद्विहितानां षीध्वमादीनामित्यर्थे षीध्वमः साक्षाद्विधानासम्भवः । सीयुटः षत्वस्य च विधानोत्तरकालत्वात् । तस्माद्यस्य विहितस्य षत्वसीयुड्योग्यता तस्येति वाच्यम् । सा च यदि घत्वं न स्यात्**

---

( १ ) "**इणः षीध्वम्**"**इति** । ननु सीध्वमित्येवास्तु मूर्धन्योच्चारणं किमर्थम् ? इति चेन्न । ब्रुवीध्वमित्यादौ एकदेशविकृतन्यायेन सीध्वः सत्वेन प्राप्तढत्ववारणाय तदुच्चारणमिति स्वीकुरु ।

( २ ) **अङ्गात्किम् वेविषीध्वमिति** । विष् धातोर्जौहोत्यादिकाद्विधिलिङि सीयुटि सलोपे द्वित्वादौ चेदं रूपमिति बोध्यम् । नन्वस्धातोर्विधिलिङि कर्मव्यतिहारे आत्मनेपदे व्यतिषीध्वम् इत्यत्रार्थवतः षीध्वमः सम्भवात् अत्र ढत्वव्यावृत्तये ऽङ्गादित्वस्य चारितार्थ्यात् कथं ज्ञापकत्वमिति चेन्न । "उपसर्गप्रादुर्भ्याम्" इति षत्वस्यासिद्धत्वेन षीध्वमोऽभावात् तदप्राप्त्याङ्गादित्यस्य चारितार्थ्याभावात् ज्ञापकत्वसम्भवादिति । न च सूत्रवैयर्थ्यं शङ्क्यम् ।

**एधिषीध्वमिति**। "इणः षीध्वम्" इति ढत्वं तु न भवति। षीध्वमक्तस्येडागमस्य तद्ग्रहणेन ग्रहणादिणन्तादङ्गात्परत्वाभावात्।

"विभाषेटः" इतीटो विशिष्य ग्रहात् गोबलीवर्दन्यायेनेङ्व्यतिरिक्त एवेणिह ग्राह्य इति केचित्; तदाह—**इङ्भिन्न इति**।

**ऊदृदन्तैरिति**। अकारस्तूपेक्षितः। तद्बीजन्तूक्तमेव। ऊदन्ता भूप्रभृतयः। ॠदन्ताः कॄप्रभृतयः। यु, मिश्रणामिश्रणयोः। रु, शब्दे। रुङ्, गतौ। रेषणे चेत्यपि केचित्। क्ष्णु, तेजने। शीङ्, स्वप्ने। स्नु, प्रस्रवणे। णु, स्तुतौ। टुक्षु, शब्दे। टुओश्वि, गतिवृद्ध्योः। डीङ्, विहायसा गतौ। श्रिञ् सेवायाम्। वृङ्, सम्भक्तौ। वृञ्, वरणे। निहताः—अनुदात्ताः।

इदानीं हलन्तान् कान्तादिक्रमेणाह—**शक्लृ, शक्तौ**। कान्त एकः। खगघङान्ता न सन्त्येव। चान्ता अपि पकारात्प्राचीना ये वर्णास्तदादयो न सन्तीत्याशयेनाह—**पच्** इति। डुपचष्, पाके। पच, व्यक्तीकरणे। द्वावपि। फबभादयो न सन्तीत्याशयेनाह—**मुचीति**। एवमग्रेऽपि बोध्यम्। मुच्लृ, मोक्षणे। रिचिर्, विरेचने। रिच, वियोजनसम्पर्चनयोरिति यौजादिकश्च। वच, परिभाषणे। ब्रुवो वचिरपि। वचिर्यौजादिकोऽपि। भ्वादावपीत्येके। विचिर्, पृथग्भावे। षिच, क्षरणे। चान्ताः षट्।

---

स्यादेव षत्वमिति प्रकृतेऽप्यस्त्येवेत्यभिमानेनेदम्। वेविषीध्वमिति। यान्तमिहाङ्गं नेणन्तम्। इणन्तादङ्गादिति। स्वरूपकथनमिदम्।

इति केचिदिति। अत्रारुचिबीजन्तु भाष्येऽस्यादर्शनं सूत्रान्तरस्थेन गोबलीवर्दन्यायग्रहणे च न दृढतरं मानमिति।

रेषणे चेत्यपि केचिदिति। अत्रारुचिबीजन्तु निरनुबन्धकत्वेन साहचर्येण च यु, मिश्रण इति लुग्विकरणस्यैव ग्रहणमुचितम्। परिभाषाद्वयेन लुग्विकरणपरिभाषाबाधात्। अत एव 'संनत्स्याम्यथ योद्धुं किं न रोष्ये सत्त्वहीनवत्' इति भट्टिः सङ्गच्छते।

द्वावपीति। इदं दुर्गवर्धमानादिरीत्या। अन्यैस्तस्योदित्वस्वीकारेण भाष्येऽनिदित्पाठेन तद्ग्रहासम्भवात्। अत एव पचि, विस्तारवचन इति चुरादे·

प्रच्छ, ज्ञीप्सायाम् । छान्त एकः ।

त्यज, हानौ । णिजिर्, शौचपोषणयोः । भज, सेवायाम् । भञ्जो, आमर्द्दने । भुज, पालनाभ्यवहारयोः । भुजो, कौटिल्य इति च । भ्रस्ज, पाके । टुमस्जो, शुद्धौ । यज, देवपूजादौ । युजिर्, योगे । रुजो, भङ्गे । विजिर्, पृथग्भावे । षञ्ज, सङ्गे । सृज, विसर्गे । जान्ताः पञ्चदश ।

अद, भक्षणे । क्षुदिर्, सम्पेषणे । खिद, दैन्ये । खिद्यति । खिन्दति । खिनत्तिश्च । छिदिर्, द्वैधीकरणे । तुद, व्यथने । नुद, प्रेरणे । पद, गतौ । भिदिर्, विदारणे । विद, सत्तायाम् । विद, विचारणे । शद्लृ, शातने । षद्लृ, विशरणादिषु । ञिष्विदा, गात्रप्रक्षरणे । स्कन्दिर्, गतिशोषणयोः । हद, पुरीषोत्सर्गे । दान्ताः पञ्चदश ।

क्रुध, कोपे । क्षुध, बुभुक्षायाम् । बुध, अवगमने । बन्ध, बन्धने । युध, सम्प्रहारे । रुधिर्, आवरणे । अनो रुध, कामे इति दिवादिश्च । राध, संसिद्धौ । व्यध, ताडने । शुध, शौचे । साध, संसिद्धौ । षिधू, संराद्धौ । धान्ता एकादश ।

मन, ज्ञाने दिवादिः । हन, हिंसागत्योः । नान्तौ द्वौ ।

आप्लृ, व्याप्तौ । क्षिप, प्रेरणे । दिवादिस्तुदादिश्च । छुप, स्पर्शे । तप, सन्तापे । तप, ऐश्वर्ये दिवादिः । तप, दाहे इत्यपि णिजभावपक्षे । तिपृ, क्षरणे । तृप, प्रीणने । दृप, हर्षविमोचनयोः । इमौ रधादी वेट्कौ । इह पाठस्तु "अनुदात्तेतश्च" इत्येतदर्थः । लिप, उपदेहे । लुप, छेदने । डुवप्, बीजसन्ताने । शप, उपालम्भे । ञिष्वप्, शये । सृप्लृ, गतौ । पान्तास्त्रयोदश ।

यभ, मैथुने । रभ, राभस्ये । डुलभष्, प्राप्तौ । भान्तास्त्रयः ।

गम्लृ, गतौ । णम, प्रह्वत्वे शब्दे च । यम उपरमे । रम, क्रीडायाम् । मान्ताश्चत्वारः ।

क्रुश, आक्रोशे । दंश, दंशने । दिश, अतिसर्जने । दृशिर्, प्रेक्षणे । मृश, आमर्शने । रिश, रुश, हिंसायाम् । लिश, अल्पीभावे । लिश, गतौ च । विश, प्रवेशने । स्पृश, संस्पर्शने । शान्ता दश ।

कृष, विलेखने । भौवादिकतौदादिकौ । त्विष, दीप्तौ । तुष, तुष्टौ । द्विष, अप्रीतौ । दुष, वैकृत्ये । पुष, पुष्टौ । पिष्लृ, संचूर्णने । विष्लृ, व्याप्तौ । शिष्लृ, विशेषणे । इह जिषु, विषु, मिषु, इति कष, खष, शिष,इति च दण्डकद्वये पठितौ भ्वादी अपि विषि, शिषी, ग्राह्याविति माधवादयः । नेति वोपदेवादयः । शुष, शोषणे । श्लिष, आलिङ्गने । षान्ता एकादश ।

घस्लृ अदने । शविकरणः प्रकृत्यन्तरम् । अदेरादेशस्य तु स्थान्युपदेशे ऽनुदात्तेनापि सिद्धम् । वस, निवासे । सान्तौ द्वौ ।

दह, भस्मीकरणे । दिह, उपचये । दुह, प्रपूरणे । दुहिर्, इति भ्वादिस्तु नेह गृह्यत इति सम्प्रदायः । णह, बन्धने । मिह, सेचने । रुह, जन्मनि प्रादुर्भावे च । लिह, आस्वादने । वह, प्रापणे । हान्ता अष्टौ ॥

कचच्छजा दधनपा भमशाः षसहाः क्रमात् ।

कचकाण णटाः खण्डा गघञाष्टखजाः स्मृताः ॥

इति संग्रहः ॥

तुष्यतिहृष्यतीत्यत्र श्यना निर्देशस्य फलमाह—**तुदादाविति** । **अन्यनिवृत्तये इति** । निवर्त्तनीयास्तु । ञिष्विदा, स्नेहनमोचनयोः । पद, स्थैर्ये । सेधतिबोधती चेति भौवादिकाः । मनु, अवबोधने तानादिकः । पुष, पुष्टौ । पोषतिः पुष्णातिश्च । श्लिष, दाहे भौवादिकः । वस, आच्छादने आदादिकः । एते सेटः । युज्, बन्धने तु क्र्यादिः अनिट् । तथा । अन्यानिवृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः । तथा हि णिजि,

शुद्धावित्यदादिः । ओविजी, भयसञ्चलनयोरिति तुदादिः । शक्यतिश्च सेडे-व । यद्यपि माधवादयः शक्यतेरप्यनिट्त्वमिच्छन्ति, तथापि चन्द्रगोमिप्रभृ-तीनां मतेन बोद्ध्यम् । अत एव वोपदेवो धातुद्वयेन रूपद्वयं फलतीत्या-शयेन शक्नोतिशक्यत्योर्द्वयोरपि ऌकारमनुबन्धमासजत् ।

**विन्दतिरिति** । लाभार्थः । **इष्ट इति** । अनिट्त्वेनेष्ट इत्यर्थः । तथा च चान्द्रसूत्रम्—"विदेरलुक" इति ।

**भाष्यानुक्ता इति** । अनुक्ता न तु प्रत्याख्याताः । भाष्यम-प्युपलक्षणतया नेयम् । "तेन रक्तं रागात्" शुष्क, धृष्टौ "क्तेन नञ्विशि-ष्टेनानञ्" इत्यादिसौत्रव्यवहारात्तन्त्रान्तरसंवादाच्च, अत्तुं प्रतिपत्तुमित्या-दिसार्वलौकिकव्यवहाराच्चेति भावः ।

"**शर्पूर्वा**"**इति** । अतद्गुणसंविज्ञानो बहुव्रीहिः । तेन शरो न शेषः, किं तु खयामेवेति बोद्ध्यम् ॥

**गाधृ** । आस्पदं स्थापना अवस्थानं वा प्रतिष्ठा । एकत्र स्थापनं सन्दर्भो वा ग्रन्थः । **नाथृ, नाधृ** । उपतापो रोगः । उपघात इत्यन्ये ।

**आशिष्येवेति** । अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्त्तिकमित्यर्थः ॥

"**अत एक हल्**" । तन्त्रावृत्त्यादिना लिटीत्यादेशविशेषणमेत्वस्य निमित्तं चेत्याह—**लिण्निमित्तेति, किति लिटीति च** ।

यत्तु प्राचा लिट्कृताभ्यासादेशहीनस्येति व्याख्यातम् । तन्न, अभ्या-सग्रहणस्याधिक्यात् आदिग्रहणत्यागेन न्यूनत्वाच्च । पेचतुरित्यादौ हला-दिः शेषेणाभ्यासस्यानादेर्हलो लुप्ततया ऽसम्भवाच्च । अभ्यासैकदेशस्यादेशः

---

ओविजीति । न चास्य ईदित्त्वसामर्थ्यादेव सेट्त्वावधारणे विजिरिति सानुबन्धपाठो व्यर्थ इति वाच्यम् । तत एवैवं पाठात् ।

स, न तु कृत्स्नस्याभ्यासस्येति चेत्तर्हि व्यावर्त्याप्रसिद्धिः । चकणतुरित्यादा-वप्येकदेशस्यैव चुत्वादिप्र(१)वृत्तेः ।

भदि । कल्याणं-मङ्गलम् । सुखमात्मगुणः । मदि-स्तुति । मोदो हर्षः । मदो गर्वः । स्वप्नमालस्यम् । मदी, हर्षे दिवादौ । हर्षक्लेशनयो-र्घटादौ । मद, तृप्तियोगे चुरादौ ॥

**"न शसदद"** । शसु, हिंसायाम् । दन्त्यान्तः । यत्तु प्राचा शशेति तालव्यान्तं पठित्वा शश, प्लुतगताविति धाताविदं सूत्रं सञ्चारितं; तदाकर-विरोधादुपेक्ष्यम् । **गुणशब्देन भावितस्येति** । अवयवावयविभावः षष्ठ्यर्थः । भावितत्वञ्च प्रयोज्यत्वं साक्षात्परंपरासाधारणम् ।

तथा हि-शशरतुः, पपरतुः, इत्यादौ गुणशब्देन अर् क्रियते तदवयवो ऽकारः । लुलविथेत्यादौ तु गुणशब्देन ओकारः, तस्यावादेशस्त-दवयवो ऽकारः ।

**सकर्मक इति** । यथा-स्वदस्व हव्यानि । अनुभवेत्यर्थः । **अक-र्मक इति** । यथा—

'अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा । इति ।
न स्वदते न रोचतइत्यर्थः ॥

**"धात्वा(२)देः षः"** । यदि तु धातव एव दन्त्यादयः पठ्येरँस्तदा

---

घटादाविति । अपूर्वो घटादौ पठ्यत इति मतेनेदम् । यद्वाऽस्य दिवादिप-ठित एवानूद्यत इति शेषः, तेन स नाधिक इति भावः ॥

गुणशब्देनारिति । "उरण् रपरः" इति सूत्रेणैकवाक्यतया ऋकारान्ताङ्गा-वयवस्य ऋकारस्यार्गुणो भवतीति विधानादिति भावः । तदवयवोऽकार इति । शसददवादिऋणामित्येव सिद्धे गुणग्रहणसामर्थ्याद् गुणशब्देन भावित-स्थानिकावमादाय लुलविथेत्यादावपि प्रवृत्तिरिति भावः ॥

ण्यन्ताच्चाङि असिष्वदत् । सिषेधेत्यादौ "आदेशप्रत्यययो
स्यात् । अतः षोपदेशान् पठित्वा सादेशः क्रियते । येषा
दन्त्यादय एव पठ्यन्ते । सृ, गताविति यथा । एवं स्थिते
तालव्यादिव्यवस्थावत् षोपदेशव्यवस्था ऽप्युचिता । तथा
सादिपाठस्यैव दृश्यमानतया पाठस्य सङ्कीर्णत्वाल्लक्षणमुखेन
वस्थापयति--

**सात्पदाद्यो**: । दन्त्यश्च अच्च दन्त्याचौ, तौ
तपरौ यस्य स दन्त्याजन्तः, सः सकार आदिर्येषान्ते प
बोध्याः । तथा च ष्ठा, गतिनिवृत्तौ । षिघ, गत्यामित्यादौ प
शुद्ध एव । साधादौ तु सांप्रतमपठ्यमानोऽपि षकारः प्र
नुमेयमिति भावः । दन्त्येत्यादि किम् ? चुस्कुन्दे । एकाचः
ते । सोसूत्र्यते । सूचिसूत्री चुरादावदन्तौ । अतिव
**सागित्यादि** । सेक्ृ, गतौ । सृप्लृ, गतौ । सृ, गतौ ।
दने । सृज, विसर्गे । स्तृञ्. आच्छादने । स्त्यै, शब्दस
ऽन्यो उक्तलक्षणेनासङ्गृहीतान् षड्धातून् शृङ्ग्ग्राहिकया
**ष्किरत्यादि** । ष्वष्क, गतौ । ञिष्विदा, गात्रप्रक्षरणे
दने । ष्वञ्ज, परिष्वङ्गे । ञिष्वप्, शये । ष्मिङ्, ईषद्ध
देशा इत्यन्वयः ।

प्राचा तु एकाच इति नोक्तम् । तत्र सूचिसूत्र्यादावा
यत्तु व्याख्यातार आहुः--येषां स्वत एव षकारादित्वं
नां तेषां टवर्गद्वितीयत्वपक्षेऽपि षोपदेशत्वं न निवर्तते । न
शा नान्य इति नियम्यते । तथा हि सति ष्ठिवेर्द्वितीयष्ठकार
निषेधोऽनर्थकः स्यात् । नाप्येते षोपदेशा एवेत्ययोगोऽपि

---

अव्यवहितपराविति । पर्युदासस्य सदृशग्राहित्वादव्यव
शब्दे इति । स्त्यै ष्ट्यै इति द्विः पाठः पर्युदासे मूलम् । सेक
पाठस्त्वनार्षः ।

सेवतिर्दन्त्यादिरप्यस्तीति मैत्रेयन्यासकारादिभिरुक्तत्वात्सम्भवमात्राभिधानमेतदिति ।

अत्रेदं वक्तव्यम्—यद्ययोगान्ययोगौ न व्यवच्छेद्यौ तर्हि व्यर्थमेवेदम् । अविवेकस्य तदवस्थत्वात् । किं च विवेचनाय षोपदेशत्वं लक्षणेन बोधयतीति स्वोक्तावतारिकाऽप्यसङ्गता । अपि च धातुपाठे येषामादौ षकारो न पठ्यते साद्ध्यतिस्थलत्यादीनां, तेषामनेन षोपदेशत्वमावेद्यते इति स्वोक्तिरपि व्याहतैव ।

यत्त्वन्ययोगव्यवच्छेदे ष्ठिवेः सत्त्वनिषेधानर्थक्यं स्यादित्युक्तम् । तन्न । सत्वनिषेधप्रत्याख्यानार्थमेवाकरे द्वितीयष्ठकार इतिपक्षस्य प्रक्रान्तत्वेनेष्टापत्तेः । यदप्ययोगव्यवच्छेदे सेवतिर्दन्त्यादिरपीति मैत्रेयादिमतविरोधोद्भावनम् । तदपि न । सेवृ, षेवृ, इति धातुद्वयपाठवादिनान्द्वितीयधातुपाठसामर्थ्येन धातुत्वोपपत्तेः तादृशयत्नविशेषविरहेऽयोगव्यवच्छेदस्य निर्दोषत्वादिति दिक् ।

ह्लादी । ईदित्त्वं "श्वीदितो निष्ठायाम्" इतीडभावार्थम् । ह्लादो निष्ठायामित्युपधाह्रस्वः । आह्लन्नः । आह्लन्नवान् । स्वद्, आस्वादने । अषोपदेशत्वाद्-असिस्वदत् ।

गकाररहितोऽप्ययमिति । तथा च प्रयुज्यते 'मधुश्चुतद्घृतमिव सुपूतम्' इति ।

---

प्यसङ्गतेति । तथा सति स्यादिति शेषः । लक्षणस्यायोगान्ययोगव्यवच्छेदकत्वस्वभावत्वात् । अन्यथा लक्षणत्वमेव हीयेतेति भावः । व्याहतैवेति । अयोगो न व्यवच्छिद्यत इति स्वोक्त्येत्यर्थः । षोपदेशत्वमावेद्यते इत्यस्य तदयोगो व्यवच्छिद्यतइत्यर्थादिति भावः ।

प्रत्याख्यानार्थमेवेति । एवं हि तत्र भाष्यं, ष्ठिवेरपि द्वितीयष्ठकार इति सत्वे कृते ष्टुत्वेन सिद्धं, तेष्ठीव्यतइति तर्हि न सिद्ध्यति । द्वितीयथकारकोऽपि

**मन्थ,** विलोडने। हिंसासंक्लेशनयोरपीत्येके। अयंक्रयादौ च इह चाग्रे निरनुषङ्ग एदित्।

**षिध** गत्याम्। अयमुदिदिति काश्यपादयः। तद् वृत्तिविरोधादयुक्तमिति माधवः। तथा हि—अनिट्कारिकासु सिध्यतिबुध्यत्योः श्यना निर्देशात्सिधितं बुधितमिति वृत्तावुदाहृतम्। उदित्त्वे तु "उदितो वा" इति क्त्वाया-मिड्विकल्पात् निष्ठायामिड् न स्यात् "यस्य विभाषा" इति निषेधात्। अत एव न्यासपदमञ्जर्यामपि सिधेरुदित्त्वमनार्षमित्युक्तम्॥

**"उपसर्गात्सुनोति"**॥ सुनोत्यादीनां पञ्चानां श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थस्तेनाभिसोषवीतीत्यादौ षत्वं नेत्याकरः। स्थादिष्वेवाभ्यासस्य षत्वं न तु सुनोत्यादिष्विति नियमेनापि गतार्थमेतत्। सेनयेति ण्यन्तः। सेनया अभियाति अभिषेणयति। शपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। न चानेकाच्त्वेन यङसम्भवः। क्वौ णिलोपे तत आचारे यङः सम्भवादित्याहुः। सेधेति शपा निर्देशो यङ्लुङ्निवृत्त्यर्थो दैवादिकनिवृत्त्यर्थश्चेति हरदत्तः। तेन प्रतिसेषिधीतीत्यत्राभ्यासे षत्वं न। अत्र माधवेन मतान्तरमुपन्यस्तम्—सिध्यतिनिवृत्त्यर्थ एवायं शपा निर्देशः। श्तिपा शपा इति निषेधस्तु नेह प्रवर्त्तते। "सेधतेर्गतौ" इति निषेधसूत्रे श्तिपा निर्देशाज्ज्ञापकात्। स हि यङ्लुकि षत्वपरित्राणेनार्थवान्नत्वन्यथेति। "इण्कोः" इत्यधिकृतं तत्रोपसर्गे कवर्गस्यासम्भवादिणेव सम्भ-

---

आकर इति। अत्रारुचिबीजन्तु स्तौतिस्तोभत्योः "शर्पूर्वाः" इति खयः शेषेण तयोः फलाभावेन पञ्चानामित्यसङ्गतमिति। तद्बीजान्तरमप्याह—स्थादिष्वेवेति। न च गणनिर्देशात्स्थादिष्वित्यस्य यङ्लुक्यप्राप्तिः। गणपाठप्रसिद्धगणनिर्देशस्यैवात्र ग्रहात्। अत्र तु "उपसर्गात्सुनोति" इतिसूत्रस्थस्थादीनां ग्रहणम्। न चाभ्यासेन स्वनिमित्ताक्षेपात्तत्र परे नियमो न चेत-

ध्यते । तात्स्थ्यात्ताच्छब्द्यमित्याह—**उपसर्गस्थादिति** । इणन्तादुपसर्गादिति तु न व्याख्यातम् । निःषुणोति, निःषेधतीत्यादावव्याप्तेः । सिद्धान्ते तु "नुम्विसर्जनीयशर्व्यवायेऽपि" इति षत्वं भवत्येव ।

यत्तु दुष्षुणोति दुःषेधतीत्यादि प्राञ्च उदाजह्रुस्तच्चिन्त्यम् । दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधात् । यत्क्रियायुक्तास्तं (१)प्रत्येवोपसर्गा इत्युक्तम् । तेनेह न । निर्गतः सावकोऽस्मान्निःसावकः । ण्यन्ते तु प्रादीनां प्रकृत्यर्थविशेषणत्वेऽभिषावयति । ण्यर्थविशेषणत्वे तु सुनोतिं प्रत्युपसर्गत्वाभावान्न षत्वम्—अभिसावयति । एवं सनादिष्वप्यूह्यम् ।

"स्थादिष्वभ्यासेन" "प्राक्सितात्" इति च वक्ष्यते । तत्र सौत्रक्रमज्ञानस्योपजीव्यत्वात्सौत्रक्रमेणैव षत्वप्रकरणं व्याचष्टे—"**सदिरप्रतेः**" ॥ षष्ठ्यर्थे प्रथमेत्याह—**सदेरिति** ॥

"**स्तन्भेः**" ॥ **सौत्रस्यैवेति** । "स्तम्भुस्तुम्भु" इति सूत्रे निर्दिष्टस्य रोधनार्थस्य, न तु ष्टभिस्कभि प्रतिबन्धइति पठिष्यमाणस्येति भावः । एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते । षत्वविधौ हि नकारविशिष्टरूप-

---

रुचिबीजन्तु गत्यर्थे षत्वप्रवृत्त्या तस्य चारितार्थ्येन गतिभिन्नार्थेऽपि "इतपाशप" इति निषेधबाधे मानाभाव इति । भवत्येवेति । तच्च तु विरोधात्तत्सम्भव एव न स्यादिति भावः । दुर इति । षत्वणत्वयो रुत्वस्य सिद्धत्वेन तद्विषयोपसर्गत्वप्रतिषेधपरे "दुरः षत्व" इति वार्तिके कृतरेफसान्तस्यापि ग्रहणेन सान्तयोरपि तन्निषेधात् । (२)अत एव सुषामादिषु दुष्ठुपाठश्चरितार्थः । स हि "अपदुःसुषु स्थः कुः" इति दुष्पूर्वकस्थाधातोः कुप्रत्यये साधुः । अन्यथा दुस्पूर्वकादेव कुप्रत्ययमङ्गीकृत्योपसर्गादित्येव षत्वे सिद्धे तद्वैयर्थ्यं (३)स्पष्टमेव । न चास्य रूढत्वेनावयवार्थाभावादुपसर्गत्वाभावः । अत्यन्तरूढेषु निष्ठादिषु षत्वानापत्तेः । अर्थवत्त्वारोपेणेति चेत्प्रकृतेऽपि तुल्यम् । दुसः पाठस्तु

---

(१) तं प्रत्येवोपसर्गत्वादिति । अन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्रादन्यतमत्वमुपसर्गत्वमिति स्वीकारात् ।

मुपात्तं, तच्च सौत्रस्य प्रत्यक्षम् । इदितस्तु लाक्षणिकम् । तेन विस्तम्भते इत्यादौ षत्वं न ।

नन्वेवमुत्तम्भते इत्यादौ "उदः स्थास्तम्भोः पूर्वस्य" इति न प्रवर्त्तेत इति चेत् । न । तत्र हि स्थास्तम्भोरिति मकाराविशिष्टं रूपमुपात्तन्तच्चोभयोरपि लाक्षणिकमित्यविशेषादुभयग्रहणात् । एतच्च सर्वं माधवग्रन्थे स्पष्टम् ।

ननु 'सदिस्तम्भ्वोः' इत्येव कुतो न सूत्रितं तत्राह—**योगेति** । "अवाच्च" इति सूत्रे सदेः सम्बन्धो मा भूदिति भावः । **नानुवर्त्तत इति** । "स्तन्भेः" इत्यत्रेत्यर्थः । तथा चैतदर्थोऽपि योगविभाग इति भावः ।

"**अवाच्चा**" ॥ आलम्बनमाश्रयणम् । यथा यष्टिमवष्टभ्यास्ते । अविदूरस्य भाव आविदूर्यम् । "न नञ्पूर्वात्तत्पुरुषात्" इति निषेधे प्राप्ते अत एव निपातनाद्भावप्रत्ययः ॥

"**वेश्च**" ॥ विष्वणति मांसम् । सशब्दं भुङ्क्ते इत्यर्थः । भोजने किम् ? विस्वनति वीणा ॥

"**परिनिविभ्यः**" ॥ षेवृ, सेवने । षिञ्,बन्धने । क्तान्तः अजन्तश्च—विषितः, विषयः । प्रत्ययविशिष्टग्रहणं किम् ? विसिनोति ।

यत्तु केचित्—विषिण्वन्तीति विषया इति प्रयुञ्जते, तत्र विग्रहे षत्वणत्वे ग्रामादिके ।

षिवु, तन्तुसन्ताने । षह, मर्षणे । सुट् आगमः । परिष्करोतीति यथा । स्तुस्वञ्ज्योः "उपसर्गात्सुनोति" इत्येव सिद्धे पर्यादिपूर्वयोरेतयोः 'सिवादीनां वाऽड्व्यवायेऽपि" इति विकल्पार्थं पुनर्वचनम् ॥

"**स्थादिषु**" ॥ द्वे (१)वाक्ये । यद्यपि निषिषेधेत्यादावभ्यासस्य

---

दुरयत इत्यादौ रुत्वस्य सिद्धत्वेन लत्वाभावार्थन्दुरस्तु दुलयत इति रूपं, यत्र तु रुत्वमसिद्धं, "निरः कुषः" इत्यादौ तत्र रान्तग्रहणेऽपि सान्तग्रहणमिति भावः ॥

"उपसर्गात्सुनोति" इत्यनेन सिद्धमभ्यासात्परस्य तु "आदेशप्रत्यययोः" इति; तथापि आद्यं वाक्यं फलत्रयार्थम्। तथाहि--अषोपदेशार्थम्-सेनया अभियातुमिच्छति अभिषिषेणयिषति। अवर्णान्ताभ्यासार्थञ्च--'अधीसन-क्षोत्रभिदोऽधितष्ठौ'। षणि प्रतिषिद्धार्थम्-अभिषिषिक्षति। षिच, क्षरणे। "स्तौतिण्योरेव" इति नियमान्निवर्त्तितषत्वं तदप्युपसर्गमाश्रित्य भवति। अभ्यासस्येति द्वितीयवाक्यन्तु नियमार्थम्। स्थादिष्वेवाभ्यासस्य षत्वं न सुनोत्यादिष्विति। तत्फलन्तु षू, प्रेरणे। अभिसुसूषति। अत्रोक्तनियमादभ्यासस्य सकारस्य षत्वं न। द्वितीयस्य तु "स्तौतिण्योरेव" इति नियमान्न। षो, ऽन्तकर्मणि। अभिसिषासति। इह षणोऽभावादभ्यासात्परस्य षत्वं, पूर्वस्य तु न, उक्तनियमात्।

षिधू, शास्त्रे। शास्त्रं शासनमिति।

अन्ये तु शास्त्रविषयकज्ञानमित्याहुः। माङ्गल्यं मङ्गलक्रिया। स्वार्थे ष्यञ्।

"झलो झलि"॥ सस्य लोपः स्यादिति। पदस्येति वर्त्तते

---

मिपराविदुरशब्देनाव्ययीभावेऽर्थासङ्गतेः। धर्मपरे तस्मिंस्तु ष्यञो वैकल्पिकत्वापत्तिरिति भावः॥

आद्यं वाक्यमिति। "स्थादिष्वभ्यासेन च" इत्येतदित्यर्थः। अत्र 'अव्यवायेऽपि' इत्यनुवर्त्तते। अपिनाऽव्यवायेऽपि। सेनयेति। अत्र सेनाशब्दस्याव्युत्पन्नत्वेनादेशसकाराभाव इति भावः। अवर्णान्तेति। तत्रेणः परत्वाभावादिति भावः। न च पूर्वत्रासिद्धत्वस्य द्वित्वे निषेधात् 'पूर्वं धातुरुपसर्गेण' इति पक्षेऽन्तरङ्गत्वात्पूर्वं षत्वे कृतषत्वानामेव द्वित्वेऽधितष्ठावित्यस्य सिद्धिरेतद्वचनं विनाऽपीति वाच्यम्। पूर्वं धातुः साधनेनेति पक्षस्य मुख्यत्वादिति बोध्यम्।

---

अभिसुसूषति। अत्रोक्तनियमान्नाभ्यासस्य षत्वम्। द्वितीयसकारस्य "स्तौतिण्योः" एवेति नियमान्न भवति। अभिसिषासति इत्यत्र तु षणोऽभावत् अभ्यासात्परस्य षत्वं, पूर्वस्य तु

तत्र प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टानां त्रयाणामेकपदसम्बन्धित्वे विधिरयं न तु सोमसुत्स्थातेत्यादौ ।

**णोपदेशास्त्विति**। नर्द, शब्दे । नट, अवस्यन्दने चुरादिः । यस्तु नट, नृत्ताविति घटादिः स नेह गृह्यते, नाटीति दीर्घनिर्देशात् । नाथृ, नाधृ, याच्ञादौ । टुनदि, समृद्धौ । नक्ष, नाशने । नॄ, नये । नृती गात्रविक्षेपे । एभ्यो भिन्ना इत्यर्थः ।

**दन्दशूकक्रियायामिति**। दन्दशूककर्तृकायाङ्क्रियायामित्यर्थः । क्रुदि, परिदेवने । अस्यानुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः । स्वरितेत्सु तु पाठो न कृतः । क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदं यथा स्यात् । शुन्ध, शुद्धौ । अयं शौचकर्मणि युजादौ । शुध, शौचइति दिवादावनिट् । प्रथमं माङ्गलिक एधतिरुक्तस्तदनुरोधेनैव तवर्गीयान्तान् पठित्वा मातृकापाठक्रमेणाह—**अथेति** ।

**सुब्धात्विति**। सुब्धातूदाहरणं षोडयति षण्डयतीत्यादि । एतच्च वार्तिकं भाष्ये प्रत्याख्यातम् । तथा हि—"धात्वादेः" इति सूत्रे उपदेशइति वर्त्तते । न च सुब्धातूनामुपदेशोऽस्ति । ष्ठिवुष्वष्कती तु यकारादी । "लोपो व्योः" इति यलोपः ।

यत्तु प्राचा सुब्धातुष्ठीवष्केत्युक्तम् । ष्ठायतीत्युदाहृतञ्च । तदनाक-

---

एकपदेति । पदस्येत्येकत्वाविवक्षणात् खण्डैकपदेत्यर्थः । तेन सोमसुत्स्थितिरित्यादौ समासेऽपि नेति बोध्यम् । "उदःस्था" इति ज्ञापकाज्झलादौ प्रत्यये एवायं लोप इत्यन्ये । घटादिरिति । भ्वाद्यनुवादरूप इत्यर्थः । न च घटादौ चुरादेरेवानुवाद इति वाच्यम् । "नान्ये मितो ऽहेतौ" इति ज्ञपादिपञ्चकव्यतिरिक्तस्य स्वार्थणिजन्तस्य मित्त्वनिषेधात् । एवञ्च यस्य नाटीत्येव रूपं तस्यात्र पर्युदासः,भौवादिकस्य नटयति नाटयतीति रूपद्वयसत्त्वेन प्रनाटयतीत्यादौ नाटिरूपेऽपि णत्वं भवत्येव । वाक्यार्थाभिनय-

रम् । भाष्यवार्त्तिकयोः ष्ट्यै इत्यस्य सत्वनिषेधाभावात् । "स्त्यः प्रपूर्वस्य" "प्रस्त्योऽन्यतरस्याम्" इत्यादौ स्त्यारूपाद् द्वयोर्ग्रहणमिति वृत्त्यादिमहाग्रन्थविरोधाच्च । एवञ्चोभयोरपि स्त्यायति, प्रस्तीतः, प्रस्तीम इत्यादिरूपाणि तुल्यान्येव ।

यत्तु वदन्ति धातुपाठे स्त्यै ष्ट्यै इति पृथक्पाठसामर्थ्यात्सत्वं नेत्याशय इति । तन्न । तिष्ट्यासति अतिष्ट्यपदित्यादौ षत्वप्रवृत्त्या चरितार्थत्वस्य माधवादिग्रन्थेषु स्पष्टत्वात् ।

**दाघृ, धाघृ** । अत्र द्राघृ आयामे इत्यपि पठ्यते । आयामो दैर्घ्यमिति कौशिकः । कदर्थनमिति स्वामी ।

**उख, उखि** ।(१)**सकृत्प्रवृत्तत्वादिति** । यत्तु माधवेनोक्तमभ्यासमात्राश्रयत्वेनान्तरङ्गे ह्रस्वे कर्त्तव्ये पूर्वपराश्रयस्य बहिरङ्गस्य सवर्णदीर्घस्यासिद्धत्वाद् ह्रस्वो नेति । तच्चिन्त्यम् । ह्रस्वस्याङ्गत्वेन बहिरङ्गत्वात् ।

---

भावाद्वार्त्तिकारम्भे स्यात्, प्रत्याख्याने तु नेति फलभेदः स्यादिति भावः । द्वयोरिति । आङ्गत्वेनोभयोरपि लाक्षणिकतया "लक्षणप्रतिपदोक्त" परिभाषानवसर इति भावः ।

षत्वप्रवृत्त्येति । ष्ट्यै इत्यस्य तिष्ट्यासतीत्यादौ इति भावः ।

तच्चिन्त्यमिति । द्विमात्रवृत्त्यभावेऽपि पर्जन्यन्यायेन ह्रस्वो दुर्वार इति भावः । दूषणान्तरमाह—ह्रस्वस्येति । पूर्वप्रवृत्तिस्तु "वार्णादाङ्ग" न्यायेनेति

---

(१) सकृत्प्रवृत्तत्वादिति । ननु ऊखतुरित्यत्र पूर्वं कृते सवर्णदीर्घे तस्य "अन्तादिवच्च" इतिपूर्वान्तवत्त्वेनाभ्यासत्वमानीय "ह्रस्व" इत्यनेन कुतो न पुनर्ह्रस्व इत्यत आहमूले- *इह सवर्णदीर्घस्याभ्यासग्रहणेन* इति । अयम्भावो बोध्यः—"वार्णादाङ्गं बलीयः" इति न्यायेन सवर्णदीर्घमन्तरङ्गमपि बाधित्वा पूर्वं कृते ह्रस्वे ततो दीर्घे लक्ष्ये लक्षणन्यायेन नपुनर्ह्रस्वः नच पिष्टं पिनष्टि इतिवत् ह्रस्वस्य ह्रस्वविधानं व्यर्थम् । तथाच 'तच्छकोत्थापनं निर्दलमिति वाच्यम् । 'कृतकारि खल्वपि शास्त्रं पर्जन्यवत्' इति भाष्यकारीयसिद्धान्तेन फलाभावेऽप्यङ्गावयवाभ्यासरूपस्थानिनि विधीयमानह्रस्वप्रवृत्तेर्दुर्निवार्यत्वात् । न च "स्योनः" इति भाष्योदाहरणादुक्तपरिभाषाया अनित्यत्वाप्रवृत्त्या द्वित्वनिमित्तको योऽभ्यासः; तन्निमित्तको यो बहिरङ्गह्रस्व स्तदपेक्षया अन्तरङ्गसवर्णदीर्घस्यैव प्रवृत्त्या पुनरपि दोषस्य दुरुद्धरत्वमितिवाच्यम् ।

आसप्तमसमाप्तेरङ्गाधिकार इति सिद्धान्तात्। "प्रागभ्यासविकारेभ्य
वव्रश्चेत्याद्यसिद्धापत्त्या दूषितत्वात्। अत एव 'नाभ्यासादीनां ह
वार्तिककृता ऽन्तवद्भावप्रतिषेध आरब्धः।

किञ्च—यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्यन्तत्र 'नाजा
निषेधस्य सत्त्वादसिद्धत्वन्दुर्वचमिति। इह उख उखीति दण्डक
गि-कम्पने इति पठ्यते, तद्वृतौ प्राक् पठितस्य गतिविशेषेऽपि
यितुम्। अत एव अनतिप्रयोजनत्वादुपेक्ष्यम्। षच्च सेचने
यद्यपि सेचन इत्येव प्रायेण पठ्यते, तथा ऽपि सेवनार्थोऽपि
'यं पूरवो वृत्रहणं सचन्ते' इत्यादौ भट्टभास्करादिभिस्तथैव व्य
भावः। अयं समवाये स्वरितेदिष्यते।

लोचृ—दर्शने। ऋदित्। अलुलोचत्। पाचि—व्यक्तीक
त्। अनिदिदिति दुर्गवर्धमानप्रभृतयः। न्यासकारस्त्वनिदितं प
मन्यते।

तथाच—"तिङ्श्च गोत्रादीनि" इतिसूत्रे पचतिगोत्रमित्युपादा
क्तीकरणे इति व्याख्यत्। एतान्येवैकदेशिमतानि गृहीत्वा अ
व्याख्यायामस्यापि ग्रहणमित्यवोचाम।

सम्मतकारादयोऽपि अनिट्प्रसङ्गे द्वयोर्ग्रहणमूचुः। पचि
इति चुरादौ। ऋज–गति। अर्जनं प्राधान्येन। उपार्जनं तु
अयं पाठो मैत्रेयस्य। क्षीरस्वामिप्रभृतयस्तु–अर्जनेष्विति पेठुः।

नुड्विधाविति। तत्रहि द्विहल्ग्रहणं गौणस्येदृशस्य
हार्थम्। अन्यथा "तस्मान्नुड्" इत्येव ब्रूयात्। नचाटतुरित्याद
"अश्नोतेश्च" इत्यनेनैकहलो यदि भवति, तर्हि अश्नोतेरेवेति
नचास्य अश्नातिमात्रनिवृत्यर्थत्वं शङ्क्यम्। तथात्वे हि नाश्न इ

यद्वा द्विहल्ग्रहणं प्रत्याख्यायते । अवर्णोपधस्य यदि भवति, अश्नोतेरेवेति नियमात् सर्वं सिद्धमिति भाष्यकैयटयोः स्पष्टम् ।

भ्राजि, भृजी । द्वितीय ईदित् "श्वीदितो निष्ठायाम्" इति नेट्—भृक्तः । भृक्तवान् । भ्रस्ज, पाक इति तौदादिकस्य—भृष्टवान् । ऋजिभ्रज्ञौ इति । सम्मततराक्षिण्योस्तु आनृजे इत्युदाहृतं तत् प्रामादिकमिति भावः ।

एजृ भ्रेजृ भ्राजृ । अत्र न्यासकारः—अवश्यपठितव्येन फणादिकेन भ्रेजते इत्यादिसिद्धेरिह पाठोऽनार्ष इत्याह । तन्न । भ्रश्नोतिषत्वाविरहार्थमिह पाठात् । तत्र हि राजिसाहचर्यात् फणादेरेव ग्रहणमिति स्थितम् ।

यद्वा न्यासेऽपि इहशब्देनायमर्थः सूच्यते । इह भ्राजेर्ऋदित्त्वमनुदात्तत्वमात्रफलम् । "भ्राजभास" इत्यादिना चङ्परे णावुपधाह्रस्वस्य विकल्पितत्वात् । अबिभ्रजत् , अबभ्राजत् । अत्र रेजिरपि क्वचित्पठ्यते, तदनार्षम् । 'रेजतेऽग्ने पृथिवी मखेभ्यः' इत्यत्र राजतेच्छान्दसमेत्वमिति भट्टभास्करोक्तेः ।

कुच—शब्दे । अयं गताविति स्वामी । ज्वलादौ तुदादौ णार्थो युजादौ । ग्लुञ्चु, षस्ज, गतौ । आत्मनेपद्यपीति । "हेतुमति" सूत्र 'यदभिप्रायेषु सज्जत' इति भाष्यप्रयोगादिति भावः ।

गुजि, अव्यक्ते शब्दे । अयमादिदपीति शाकटायनादयः । गुज—शब्दे इति तुदादौ । अर्च, पूजायाम् । अयं युजादौ स्वरितेत् । इह पाठस्तु कर्तृगे फलेऽपि परस्मैपदार्थः । शाकटायनस्त्वयमात्मनेपदीत्याह । प्रयोजनं त्वकर्तृगेऽपि फले लङ् । एतच्च सर्वमिहैव माधवेनोक्तम् । युजादौ तु तेनैवात्यस्वग्रन्थविपरीतमुक्तम् , तत्र परिनिष्ठितरूपे विवादाभावेऽपि वदतव्याघातो दुर्वार एवेति ज्ञेयम् ।

युच्छ—प्रमादे । युच्छतीति । अन्तरङ्गत्वात्तुकि अलघूपधत्वान्न गुणः । नच "वर्णादाङ्गम्बलीयः" इति वाच्यम् । यत्राङ्गवार्णयोर्युगपत्प्राप्तिः स-

(१)मानाश्रयत्वञ्च, तत्रैव तथेति कैयटादिभिः सिद्धान्तित
वैपरीत्यात् ।

उञ्छे इति । "उञ्छति" इति सूत्रे उञ्छिनोतीत्य
बदराण्युञ्छति बादरिकः, श्यामाकान्युञ्छति श्यामा
रतो वृत्तिकारस्यापि व्यापित्वेनोच्चयनार्थत्वमेवाभिप्रेतम् ।

**ध्रज, ध्राजि** । षडप्येते तवर्गचतुर्थादयः । त
आद्यौ दन्त्योष्ठ्यादी इत्याहुः ।

**तर्ज, भर्त्सने** । अयं चुरादावपि ।

**"अजेर्व्यौ"** ॥ दीर्घान्त आदेशः । ह्रस्वान्तपाठे तु
तिरित्यादि न सिद्ध्येत् । **आर्धधातुकविषये इति** ।
तेः प्रागेव वीभावे हलादित्वाद्यङि वेवीयते इत्यादि सिद्ध्य
यङ् न स्यात् । यङ्लुक् त्वस्मान्न भवति । यतो लुका यङ
विषयत्वापहारान्नार्धधातुकाभिव्यक्तिरिति वीभावस्य नैव प्रस

---

समानाश्रयत्वञ्चेति । समानकार्यित्वमित्यर्थः । इदं स्व
समाननिमित्तकत्वमित्यर्थः । विभिन्ननिमित्तकेऽपि 'श्याय
प्रवृत्तिदर्शनादिति बोध्यम् ।

सम्वीतिरिति । असंज्ञायां क्तिनन्तम् । संज्ञायां स्त्रीलिङ्गे
इति क्यपा भाव्यमिति बोध्यम् ।

यङ् न स्यादिति । हलादित्वाभावात् । धात्वन्तरस्य त्वेत
धातुके प्रयोग एव नास्तीति भावः । इदञ्च "आर्धधातुक"
स्पष्टम् । विषयत्वापहारादिति । ज्ञानविषयत्वापहारादित्यर्थस्त
भिव्यक्तिरिति । प्रत्ययलक्षणं तु न । "न लुमता" इति निषेध

---

(१)समानाश्रयत्वञ्चेति । आङ्गीयत्किञ्चित् पदप्रयोज्यविषय
पर्याप्तसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताप्रयोजकपदघटितत्वं तत
"अचोऽञ्णिति" इत्येतद्घटकाच्पदप्रयोज्यविषयापर्याप्त्यधिकरणेत्तरेक
सप्तम्यन्ताच्पदप्रयोज्यविषयतापर्याप्तेः सत्वाव्याप्तिः । 'स्योनः' इत्य
[illegible]

लुमता" इति सूत्रे कैयटे स्पष्टम् ।

"कृसृभृ-" ॥ 'डुकृञ् करणे, 'कृञ्, हिंसायाम् । द्वयोरपि ग्रहणम् , एवं भृ इति भरतिबिभर्त्योः, वृ इति वृङ्वृञोः । इह कृसृभृ एषाम् "एकाच उपदेश" इति प्रकृत्याश्रये निषेधे प्राप्ते, वृङ्वृञोस्तु "श्र्युकः किति" इति प्रत्ययाश्रये प्राप्ते नियमोऽयमित्याह–क्रादीनाञ्चतुर्णामिति । निषेध इति । "नेड्वशि" इति प्रक्रमात् नञ्प्रापितस्यैवाभावस्यायं नियमो, न तु विभाषाबललभ्यस्यापि । तेन सिषेधिथ, सिषेद्ध; सिषिधिव सिषेध्वेत्यानुभयं भवति ।

के(१) चित्तु यावान् कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा सर्वो बाध्यत इति मन्वानाः सिषेधिथेत्यादि एकमेव रूपं, न त्वनिट्कमपीत्याहुः ।

---

द्वयोरपीति । (२)व्याख्यानादिति भावः । नियमोऽयमिति । अष्टानामपि नियमार्थत्वन्तु न । तुष्टोथेत्यादौ भारद्वाजनियमेनेडापत्तेः । स च नेष्ट इति "नेड्वशि"इत्यत्र भाष्ये स्पष्टं नियमाद्विधेर्बलवत्वाच्च । "कृसृभृवृ" इति च लुप्तषष्ठीकं पृथक्पदं क्रादिषु चतुर्षु विनिगमनाविरहेण सर्वेषामेव नियमा(३)र्थत्वम् । नञ्प्रापितस्यैवेति । क्रादिषु तस्यैव प्राप्तेरिति भावः ।

एकमेवेति । अत एव "उपदेशेऽत्वत" इति सूत्रे नित्यानिट इत्यस्याजिव्यावर्त्यत्वेन भाष्ये उक्तः । अन्यथा तदभावे "ऋतो भारद्वाजस्य" इति

---

(१)केचित्त्विति । अत्रायं भावः–"अनन्तरस्य विधिर्वा प्रतिषेधो वा"इति न्यायेन प्रक्रमाद्वा नञ्प्रापितस्यैवायं नियमः । तेन सिधू शास्त्रे इति धातोरुभयं रूपमित्याहुस्तन्न । "उपदेशेऽत्वतः" इति सूत्रे "नित्यानिट" इत्यस्याजिव्यावर्त्य भूत्यर्थपरभाष्यासंगतिः । यदि च वा प्राप्तनियमो न स्यात्, तदा तत्राप्यूदित्वपरविकल्पस्य सद्भावात्तदसंगतिः । मम तु क्रादिनियमेन तत्र नित्यमिडिति दिक् ।

(२)व्याख्यानादिति । 'उत्सृष्टानुबन्धग्रहणे सामान्यग्रहणम्' इति न्यायमूलकाद्व्याख्यानादित्यर्थः ।

ननु विपरीत एव नियमोऽस्तु क्रादिभ्यश्चेदिण्न तर्हि लिट्येवेति। मैवम्। 'कृते ग्रन्थे' 'तमधीष्टो भृतः' 'परिवृतो रथः' 'स्तुतस्तोमयोः' इत्यादिनिर्देशविरोधापत्तेः। स्यादेतत्। अस्तु प्रकृत्याश्रयस्य नियमः, प्रत्ययाश्रयस्य तु न सम्भवति। वृग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वात्। न ह्यत्र प्रकृत्याश्रयः प्राप्नोति, वृञ उदात्तत्वात्। नापि प्रत्ययाश्रयः, थलोऽकित्त्वात्। एवञ्च बभूविवेत्यादौ "इग्यूकः किति" इति निषेधो दुर्वार इति चेत्? मैवम्। "बभूथाततन्थजगृम्भववर्थेति निगमे" इति सूत्रेण छन्दसि ववर्थेति निपातनात्। भाषायां वृञस्थल इटः स्वीकर्त्तव्यतया वृग्रहणस्य थल्विषयत्वायोगात्। वमादीनाञ्च कित्त्वेन नियमस्य सुस्थत्वात्॥

"अचस्तास्वत्" ॥ उपदेश इति। एतच्चोत्तरसूत्रादिहापकृष्यते। नित्यग्रहणमनिटो विशेषणम्। क नित्यमनिडित्यपेक्षायां तासः सन्निधानात्तत्रैवेति विज्ञायते; "तासि च क्लृप" इति सन्निहितं वाऽनुवर्त्तत इत्याह—तासौ नित्यानिडिति। तास्वदिति सप्तम्यन्ताद्वतिः। यथा तासौ न भवति एवं थल्यपीत्यर्थः। नित्यमनिटः किम्? दुधविथ, नाय-

---

विकल्पतत्सत्त्वेऽप्यूदित्त्वप्रयुक्तविकल्पस्यैव सत्त्वेन तदसङ्गतिः स्पष्टैव। अस्तु तु क्रादिनियमेन तत्सत्त्वे नित्य इडिति विशेषोऽस्त्येवेति इदमेव मतं युक्तमिति भावः।

विपरीत इति। अष्टानामपीति शेषः। अत एव 'स्तुत' इति निर्देशप्रकर्षोऽमग्रे। न च "ऋतो भारद्वाजस्य" इति नियमप्रापितस्येटो निषेधाय क्रादिग्रहणं विध्यर्थमिति वाच्यम्? तथाहि सति स्तुद्रुस्रुश्रुऋतो भारद्वाजस्येत्येव पठेदिति भावः। विरोधापत्तेरिति। किं च कृञादीनामनुदात्तपाठवैयर्थ्यापत्तिरित्यपि बोध्यम्। न सम्भवतीति। वृङमादाय तत्सम्भवेऽपि वृञमादाय विधेः सम्भव इति भावः।

न्तासौ नित्यमनिट्, "स्वरति" आदिना विकल्पितेट्त्वात् । अस्य थलि नित्यमिडिति काशिका । एतच्च विकल्पनिबन्धनस्यापीडभावस्य क्रादिनियमेन निवृत्तिरिति पक्षे बोध्यम् । निषेधनिबन्धनस्यैवेति पक्षे तु नित्यग्रहणाभावे स्वरतेस्थलीड्विकल्पो न स्यादिति बोध्यम् ।

किं च उत्तरार्थमपि नित्यग्रहणम् । तेन क्रमेरपि चक्रमिथेति । भवति हि क्रमिस्तासौ नित्यानिट् । "स्नुक्रमोरनात्मनेपदनिमित्ते" इति वचनात्परस्मैपदे सेट्कत्वात् । उपदेश इत्यपकर्षस्य फलन्तु भारद्वाजसूत्रे स्फुटीभविष्यति ॥

"**उपदेशेऽत्वतः**" ॥ उपदेशे किम् ? कर्ष्टा । चकर्षिथ । अत्वतः किम् ? भेत्ता, बिभेदिथ । तपरकरणं किम् ? राद्धा, रराधिथ । तासौ किम् ? जिघृक्षति, जग्रहिथ । नित्यानिटः किम् ? अङ्क्ता, अञ्जिता, आनञ्जिथ, चक्रमिथ ॥

"**ऋतो भारद्वाजस्य**" ॥ दीर्घान्तेषु तावन्नायं निषेधः । ऋत इति तपरकरणात् । ह्रस्वान्तेषु "अचस्तास्वत्" इत्येव सिद्धेः । वृङ्वृञौ यद्यपि सेटौ तथाऽपि वृङस्थल् नास्ति । आत्मनेपदित्वात् । वृञस्तु छन्दसि ववर्थ इति निपातनाद्भाषायामिटा भाव्यम् । न च हृञादिषु परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृतेऽनजन्तत्वात् "अचस्तास्वत्" इत्यस्याप्रवृत्तिरिति वाच्यम् ? तत्रोपदेशग्रहणस्यापकर्षणात् । तस्मान्नियमोऽयमित्याह—**ऋदन्तादेवेति** । स्यादेतत् । स्तुद्रुस्रुश्रुवामपि थलि भारद्वाजनियमादिट् स्यात् । न च क्रादिसूत्रे स्त्वादीनाञ्चतुर्णां ग्रहणेनास्य बाध उचितः । 'येन नाप्राप्ति'

---

त्यर्थेनैव सिद्धे "तास्वत्" इत्यनेन यस्य तासाविडभावो दृष्टस्तस्यैव थल्यति देशान्न दोषः । स्थानिवद्भावेन तु न तासौ नित्यानिट्त्वातिदेशोऽशास्त्रीयत्वादिति भावः । थलि नित्यमिडिति । नित्यग्रहणाभावे भारद्वाजनियमेन विकल्पः स्यादिति भावः । इति पक्षे स्थिति । तन्न वृत्तिविरोधादयं पक्षोऽयुक्त

न्यायेन वमादौ क्रादिनियमप्रापितस्यैव बाधौचित्यादित्याशङ्क्याह—न चेति। नन्वेवम् "उपदेशेऽत्वत" इत्यस्यैव बाधः स्यात्। ऋदन्तेषु तस्य प्रसङ्ग एव नास्तीति यदि, तर्हि "अचस्तास्वत्" इत्यस्यैव स्यात्तत्कथं योगद्वयप्रापितस्येत्युक्तम्।

अत्राहुः—द्वयोरनन्तरमस्यारम्भाद्यावांस्तासौ नित्यानिटस्थलीण्निषेधः; स भारद्वाजस्य मते ऋकारान्तस्यैवेति व्याख्यानात्सर्वेष्टसिद्धिरिति। एवञ्चेह तास्वत्थल्यनिटो नित्यम्। तासीत्यनुवर्तत इति फलितोऽर्थः।

यद्वा क्रादिसूत्रे स्तुप्रभृतीनां ग्रहणमेव इड्द्वयस्यापि बाधकमस्तु, पुरस्तात्प्रतिषेधकाण्डकरणसामर्थ्यात्। अनाश्रितविधानविशेषामिण्मात्रमनारभ्याधी-

---

षेधस्यैवाङ्गीकारेण स्मृत्यन्तरानुसन्धानद्वारा विकल्पस्य वक्तुमशक्यत्वादिति भावः।

तस्येति। "उपदेशेऽत्वत" इत्यस्येत्यर्थः। इहेति। "ऋत" इति सूत्रे। एवञ्चेतत्पदसम्बन्धवान् य इण्निषेध इत्यर्थादुक्तार्थलाभ इति भावः। इदमत्रैव सूत्रे भाष्ये (१)ध्वनितम्।

इड्द्वयस्यापीति। क्रादिनियमभारद्वाजनियमप्रापितस्यापीत्यर्थः। अनाश्रितेति। न आश्रितो विधानविशेषो येन नाप्राप्तिरूपो यस्य तादित्यर्थः। इण्मात्रमिति। अनन्तरमनन्तरञ्चेत्यर्थः। अनारभ्याधीतेनेति। विधिमनारभ्याधीते-

---

(१)भाष्ये ध्वनितम्। "ऋतो भारद्वाजस्य" इति सूत्रप्रयोजनं किमास्ति इति "अचस्तास्वत्थल्यनिटो नित्यम्" इत्येव सिद्धम्, इत्युक्तास्य नियमार्थत्वमभिधाय—पपिवाविथेति फलं दत्वा "ऋतो भारद्वाजस्य" इति नियमानुपपत्तिप्राप्तत्वात्प्रतिषेधस्येति पठितम्। गुणे कृते रपरत्वे च जहर्थेत्यादौ अनजन्तत्वात् प्रतिषेधो न प्राप्नोति। नाप्नु-

तेन प्रतिषेधेन यथा बाध्येतेत्येतदर्थं हि तत् । पक्षद्वयमपीदमाकरे स्थितमिति मूलेऽप्युपनिबद्धम् ।

'खज, मन्थे' । अत्र केचित्कज, मद इति पठन्ति । एजृ, कम्पने । दाशौ त्वात्मनेपदी गतः । 'टुओस्फूर्जा' । "ट्वितोऽथुच्" स्फूर्जथुः । ओकारो निष्ठानत्वार्थः । स्फूर्णः, स्फूर्णवान् । "आदितश्च"इत्यनिट्त्वम् । स्फूर्णम् , स्फूर्जितं वाऽनेन । "विभाषा भावादिकर्मणोः" इति वेट् । अस्य दीर्घनिर्देशेन "उपधायाश्च" इति दीर्घस्यानित्यत्वज्ञापनान्मुर्छति हुर्छति, इत्यपि भवतीति केचित् । 'क्षि, क्षये,' । अस्याजन्तेषु पाठ उचितः । क्षि, निवासगत्योरिति तुदादौ । क्षीष् , हिंसायामिति क्र्यादौ । क्षिणु, हिंसायामिति तनादौ । वोपदेवस्तु क्षि, क्षयैश्वर्ययोरिति भ्वादिम्, क्षीष् , हिंसायामिति स्वादिं वैदिकं चाह ।

**लज, लजि** । लज्यात् । लञ्ज्यात् । ओलजी, ओलस्जी, व्रीडने इति तुदादौ । लज, प्रकाशनइति क्र्यादौ । लज्जीति पटपुटादिदण्डके भाषार्थः । 'तुजि, पालने' । भाषार्थोऽयं युजादौ । 'गज' 'गजि' । गज, मदने च । अयञ्चुरादावपि शब्दार्थः । गर्ज, शब्द इत्यग्रे । **वज, व्रज** । ववजतुः । वव्रजतुः ।

**अट्ट । दोपध इति** । तथा च "नन्द्राः" इति द्विस्वनिषेधाद्दकारं विहाय टिशब्दस्य द्वित्वे दकारस्य ष्टुत्वे चर्त्वे च—अट्टिटिषते, आट्टिटदित्यादि सिध्यति । न च परत्वात्प्रागेव ष्टुत्वम् । असिद्धत्वात् ।

यदाहुः—'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति । न चान्तरङ्गत्वात् ष्टुत्वं स्यादेवेति वाच्यम् । सत्यपि तस्मिन् शास्त्रासिद्धतया दकार एवायमिति बुद्ध्या द्विस्वनिषेधात् । न च 'पूर्वत्रासिद्धीयमद्वित्वे' इति निषेधः शङ्क्यः । द्वित्वे हि सः, न तु द्वित्वनिषेधेऽपीति भावः ।

---

नेत्यर्थः । इदं "वस्वेकाजाद्घसाम्" इत्यत्र भाष्ये स्पष्टम् । तदाह—पक्षद्वयमपीति । मूलेऽपीति । तत्रान्त्यः क्रादिसूत्रे, आद्योऽत्रेति बोध्यम् ।

मदने चेति । मदनीअन्त्तविकारविशेषः । 'गजा न मदिरागृहम्' । इत्यग्रइति ।

**तोपध इति**। तथा च 'पूर्वत्रासिद्धीयमद्विर्वचन'इति ष्टु
कारद्वयसहितस्य द्वित्वे हलादिःशेषे अटिट्टिषते आटिट्टदित्यादि
वः । अयम् अनादरे चुरादिः । **घट्ट, चलने,** । अ
'**स्फुट्ट**'। अयं कुटादावपि । विशरणार्थोऽग्रे परस्मैपदिषु । मे
'**वाठि**' एकचर्यायाम् । एकचर्या असहायगमनम् । वण्ट
"**इदश्च**" इति सूत्रे भाष्यम् । अयमनिदित्स्थौल्यार्थः परस्मै
**कठि**' शोके । मठ, मदनिवासयोः कठ, कृच्छ्रजीवने
पदिष्वानिदितौ । कठ, शोकइति चुरादौ । **हेठ**, विबाध
परस्मैपदिष्वपि पठन्ति । विबाधनं शाठ्यम् । **कुडि**, दाहे
परस्मैपदिषु पठिष्यते । वाख्यार्थः कुटादौ । रक्षणार्थश्चुरादौ ।
भाजने' । **भडि**, च । अत्र द्वितीयो वेष्टनेऽपि। अत एव
मडि, भूषायामित्यग्रे परस्मैपदिषु, णौ हर्षे च । '**भडि**, प
ल्याणार्थश्चुरादौ । '**पिडि**' । अयं चुरादावपि । '**मुडि**,-
स्मैपदिषु । '**तुडि**' । अयमनिदित् परस्मैपदिषु । '**हुडि**' ।
कारः । स्फुडि विकसनइत्येके पठन्ति । युक्तं चैतत् । हुण्
वैयर्थ्यात् । वरणसङ्घातयोरिति पाठस्यैवौचित्यात् । '**चडि**,
चुरादावपि । '**शडि**' । तालव्योष्मादिः । शण्डोऽसुरपुरोहि
गतौ' । नाशार्थश्चुरादौ । '**कडि**, मदे' । भेदने चुरादिः
हैव । तुदादौ च परस्मैपदी । '**खडि**, मन्थे' । खुडि इ
भेदने इति चुरादौ । '**हेड्ट, होड्ट**' । हेड, वेष्टन इति घट
गतावित्यग्रे परस्मैपदी । '**बाड्ट** । **बशादिरिति** । पवर्गी
तो व्यवहारो न तु दन्तोष्ठ्येन । तथा सति व्यावर्त्यालाभात्

र्थथा स्यात् । "शाडृ" । डलयोरैक्याच्छालते इति काश्यपः । अत एव मैत्रेयेण शाली शालेत्युदाहृतम् ।

'शौडृ, गर्वे' । अस्योणादिषु ईरन् वक्ष्यते । तदेतदतिशौटीर्यमौडुलोमेर्न मृष्यतीति कल्पतरुः । 'यौडृ बन्धे' । यणादिः । 'कटे' । अयमनिदिदग्रे 'किट खिट त्रासे । त्रासो भयोत्पादनम् । किटिर्गतौ पठिष्यते । इह पाठस्त्वर्थभेदात् । के चित्त्विह न पठन्ति । चटे इत्येके । 'जट, झट, । जेटतुः । 'णट, नृत्तौ । णोपदेशोऽयम् । तत्पर्युदासे नाटीति सवृद्धिकनिर्देशेनावश्यदानार्थस्य चौरादिकस्यैव ग्रहणात् । 'हट, दीप्तौ' हाटकम् । "सञ्ज्ञायाञ्च" इति ण्वुल् । बाहुलकादस्त्रियामपि । 'षट' सटा । अजन्ताट्टाप् । 'लुठ, विलोडने' । अयन्दिवादावपि । भाषार्थश्चुरादौ, प्रतिघाते द्युतादौ, स्तेयार्थः परस्मैपदिषु । डान्तोऽयमित्येक इति । यद्यपीतः प्रभृति पठत्यन्ताष्टवर्गतृतीयान्ता इति कौशिककाश्यपादयो वदन्ति, ते चास्मादनन्तरं पिडहडीति पठन्ति, तथापि पिटकहाटकचेटीविटप्रभृतिषु टवर्गप्रथमस्यैव प्रसिद्धत्वादेशान्तरे तन्मतमुपेक्षितम् । 'चिट' । इन् । चेटिः । "कृदिकारात्" इति ङीष् चेटी । 'विट' । इगुपधलक्षणः कः । विटः ।

प्रश्लिष्येति । उदाहरन्तीति वक्ष्यमाणेन सम्बध्यते । इयतुरिति । द्वित्वे कृते "एरनेकाच" इति यणं बाधित्वाऽन्तरङ्गत्वात्सवर्णदीर्घः । तत इयङ् ।

---

शेषः । सवृद्धिकेति । नित्यं वृद्धियुतस्येत्यर्थः । एतदुपपादितम् । पठत्यन्ता इति । (१)अतद्गुणसंविज्ञानो बहुव्रीहिः । तत इयङिति । "अचि श्नुधातु" इत्यनेन ।

---

अ(६)तद्गुणसंविज्ञानो बहुव्रीहिरिति । पठतिः अन्ते येषामिति विग्रहः । बहुव्रीहिः द्विविधः । तद्गुणोऽतद्गुणश्चेति । तत्र तस्यान्यपदार्थस्य गुण उपसर्जनानि वृत्तिघटकपदार्था इति यावत्, संविज्ञायन्ते यत्र स बहुव्रीहिस्तद्गुणसंविज्ञानः । क्रियान्वयित्वेनेति शेषः । तथा च—एकक्रियान्वयित्वेन वृत्तिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तद्गु-

केचि(१)त्तु "वार्णादाङ्गम्बलीय" इति दीर्घं बाधित्वा यण् । न चेह समानाश्रयत्वं नास्तीति वाच्यम् ? अभ्यासोत्तरस्य इकारस्य सवर्णदीर्घयणौ प्रति स्थानितया तयोः समानाश्रयत्वात् । अत एव "दीर्घ इणः किति" इति दीर्घो विधीयते ।

---

"अभ्यासस्य" इति तु न । तस्य प्रत्या(२)सत्त्योत्तरखण्डावयवाकारस्त्रैव प्रवृत्तेरिति भावः ।

स्थानितयेति । समान(३)कार्यित्वमेव समानाश्रयत्वम्, न तु समाननिमित्तकत्वम् । इयायेत्याद्यसिद्धेरिति भावः । अत एवेति । अनेन पूर्वमतस्यायु·

---

(१)केचित्त्विति । इदमेव युक्तमिति बोध्यम् । वस्तुतस्तु—इकारप्रश्लेषस्य प्रामाणिकत्वेऽपि अस्येदित्वसम्भावनाकर्तुं शक्या तत्रैव मानाभावात् ।

(२)प्रत्यासत्त्येति । द्वित्वशास्त्रीयविधेयताश्रयाधिकपूर्वस्याभ्यासत्वेनासवर्णाच्परे· नापि तादृशविधेयताश्रयघटकस्याच एव ग्रहणौचित्यादिति भावः ।

(३)नन्वेतादृशप्रत्यासत्त्याश्रयणेन सूत्रवैयर्थ्योपपादनमयुक्तमिति चेन्न । शास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यौचित्यादित्याह—समानकार्यित्वमित्यादिना ।

ननु समाननिमित्तकत्वरूपसमानाश्रयत्वस्य ग्रहणं कस्मान्नेति चेन्न । ज्ञापितेऽपीयायेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तादवस्थ्याच्च ।

अत्र केचित्–वार्णशास्त्रीयेण सप्तम्यन्तेन पञ्चम्यन्तेन वा या व्यक्तिर्गृह्यते साङ्गशास्त्रीयेन केनचित्पदेन स्वप्रयोज्योपस्थितीयमुख्यविशेष्यतया गृह्यते, तदा "वार्णादाङ्गम्" इति न्यायविषयः ।

इयायेत्यत्र दीर्घरूपवार्णशास्त्रीयेणाचीतिसप्तम्यन्तपदेनानभ्यासइकाररूपव्यक्तिर्गृह्यते सैव "अचेश्णिति"इतिनिर्दिश्योपस्थितीयमुख्यविशेष्यतया गृह्यत इति तयोः समाननिमित्तकत्वम् । स्योन इत्यत्र "वार्णशास्त्रीय "इको यणचि"इतिसप्तम्यन्तपदेन ऊन इति गृह्यते । तत्राङ्गशास्त्रस्थेन केनापि पदेन न गृह्यत इति न तत्र तत्त्वम् ॥ एवमुञ्छतीत्यत्रापि बोध्यम् । इत्थंच वार्णशास्त्रीयसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्याविषयतापयर्य्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकप्रतियोगिभूतोपस्थितीयमुख्यविशेष्यताप्रयोजकपदघटितत्वम् । वार्णसमाननिमित्तकत्वं आङ्गशास्त्रस्य परिष्कर्तं द्रष्टव्यम् । या स स्याते इत्यत्र "अकः सवर्णे"

ननु णल्थलोः अभ्यासस्येयङ् दुर्लभः । तस्मिन् कर्तव्ये "अचः परस्मिन्" इति वृद्धिगुणयोः स्थानिवद्भावेनासवर्णे इति प्रतिषेधा-

क्तत्वं ध्वनयति । असवर्णेति । तद्घटितसूत्रारम्भसामर्थ्यादित्यर्थः । तेन ह्यभ्यासस्य कार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं(१) स्थानिवत्त्वं नेति ज्ञाप्यतेऽत एवारियूयादित्यत्र स्थानिवत्त्वेनयङ् भवत्येव । त-

---

समानकार्यित्वस्थानिकत्व एवैषा प्रवर्तते, न तु समानोद्देश्यत्वे समाननिमित्तकत्वे वेत्यर्थः । समानोद्देश्यत्वे एतत्प्रवृत्तिस्वीकारे तु चछावित्यत्र छा छा अ इति स्थिते अन्तरङ्गत्वात्तुकि ह्रस्वो न प्राप्नोतीत्याशङ्क्य अभ्यासविकारे वैयधिकरण्यान्वयेन समाधानपरभाष्यासङ्गतिः । तव मते तुग्ह्रस्वत्वयोः समानोद्देश्यत्वेन वार्णपरिभाषया पूर्वमेव ह्रस्वे वैयधिकरण्येन ह्रस्वविधानं भाष्योक्तमसंगतं स्यात् । उच्छधातोर्लटि तिपि शपि उच्छ अति इति स्थिते तुग्गुणयोः समानोद्देश्यत्वेन पूर्वं गुणे उच्छतीति रूपानापत्तिः । एवं गा अ आन इति स्थिते मुग्दीर्घयोः समानोद्देश्यत्वेन वार्णपरिभाषया पूर्वं मुकि गामान इति गाधातोरदादित्वे तु गान इति रूपयोर्वैलक्षण्येन गाधातुरादादिकः फले तु न भेद इतिमूलासंगतिश्चेति दिक् ।

(१)तत्कार्यप्रतिबन्धकीभूतमिति । चिन्त्यमेतत् । फलाभावात्—आरियूयादित्यत्र तु अन्तरङ्गत्वादिङादेशात्प्रागेव इयङादेशप्रवृत्तेः । इधातोर्लिटि ईयतुरित्यत्र यणः स्थानिवत्त्वेनाभ्यासेकारस्य "इको यणचि" इति यणापत्तेः । इयायेत्यत्रापि अयादेशस्यस्थानिवत्त्वेन लघूपधत्वात् अभ्यासेकारस्य गुणापत्तेश्च ।

किञ्चारियूयादित्यत्र पूर्वं रिङादेशे यलोपापत्तिः । पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाभावः । "नाजानन्तर्ये" इति निषेधात् । नापि रिङो बहिरङ्गासिद्धत्वम् । "अभ्यासकार्ये" इति वचनफलं तु अचीकमतेति । अन्यथोपधाह्रस्वस्य स्थानिवत्त्वे काशब्दाकारस्य लघुत्वाभावेन सन्वद्भावाप्रवृत्त्यापत्तिरिति बोध्यम् । न च "दीर्घो लघोः" इति सूत्रारम्भसामर्थ्येन न स्थानिवत्त्वमिति वाच्यम् । पतशब्दादाचारक्विबन्तात कर्त्तरि क्विपि अल्लोपे ततः प्रातिपदिकात् णिचि चङि अपीपतत् इत्यत्र तच्चारितार्थ्यात् । अत्राल्लोपस्य स्थानिवत्त्वान्नोपधाकार्यम् । दीर्घे त्वल्लोपस्य स्थानिवत्त्वे ऽप्यभ्यासस्य लघुपरत्वाक्षते दीर्घविधौ स्थानिवत्त्वनिषेधाच्च "दीर्घो लघोः" इत्यस्य चारितार्थ्यसम्भवात् । णिनिमित्तकाल्लोपाभावात् । अनग्लोप इत्यस्य विषयाभावादिति बोध्यम् ।

नन्वेवं विव्यतुरित्यत्रानेन निषेधात् स्थानिवद्भावाप्राप्त्या "उपधायां च" इति

दिति चेत्, मैवम्। असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वस्याप्रवृत्तेः। ननु नास्ति सामर्थ्यम्; इयर्ति इयृत इत्यादौ सावकाशत्वात्, इति चेत्, मैवम्। न ह्येकमुदाहरणं योगारम्भं प्रयोजयति। अन्यथा हि अभ्यासस्यार्त्ताविति ब्रूयात्। "अकृत्सार्व" इति दीर्घः। ईयात्।

'मडि, भूषायाम्'। मण्डते इति विभागे गतम्। 'कुडि'। टवर्गतृतीयान्तः। प्रथमान्त इत्येके। 'मुठ'। डान्त इत्येके। पकारादिडान्तश्चेत्यन्ये। क्षीरस्वामी तु द्वावपि इदितौ पपाठ। 'चुडि'। चुदेति दुर्गः। तुड, तोडने। तोडनं दारणं हिंसनञ्च। 'गडि' वदनैकदेशे। टवर्गीयप्रकरणादिहार्थं न्याय्य एव। अन्तस्थादिषु पञ्चैते न लिङ्विषया इति केषां चिन्मतं व्युत्पादयितुं वृत्तिकृद्भिरुपन्यस्तः।

"लिङ्सिचावात्मनेपदेषु"॥ अत्रात्मनेपदग्रहणं सिचो विशेषणं, न तु लिङो ऽसम्भवात्। तदाह-आत्मनेपदपरः सिचेति।

'तेपृ, कम्पने च। अस्य पूर्वत्र पाठस्त्यक्तुं शक्यः।

केचित्तु पूर्वत्र दिपृ, देपृ, इति पठन्ति। केपृ गतौ चेति। पृथक्पाठ

स्याभ्यासकार्यप्रतिबन्धकत्वाभावादिति भावः। अभ्यासस्यार्त्ताविति। यङ्लुकि तु "श्तिपा शपा" इति निषेधानित्यत्वान्न दोषः। (१)वस्तुत (२)उरित्येव वक्तव्यं, (३)य्वोरित्यनुवर्तते। इणो (४)यणिति साहचर्याद् (५)व्याख्यानाच्च ऋधातोरेव(६) ग्रहणम्। अर्त्तेरिवर्ण(७)स्येयङित्यर्थ इत्युचितम्। (८)विस्तरस्त्वन्यत्र द्रष्टव्यः॥

असम्भवादिति। तस्यात्मनेपदपरत्वासम्भवादित्यर्थः।

कैयटहरदत्तायुक्तिं खण्डयितुमाह—(१)वस्तुतस्तु। उरित्ये(२)वेति। ऋवर्णस्येयङित्यर्थः। नन्वेवमारेत्यत्रापि स्यादत आह—य्वोरित्य(३)नुवर्तते। नन्वेतावतापि ऋवर्णान्तं यदङ्गं तदवयवस्येवर्णस्येत्यर्थोपत्तौ ऋ अकरोदित्यत्र य्व्यान्तेरोष्ठादेशे दोषापत्तिरित्याह—इणो य(४)णिति। सूत्रान्तरसाहचर्यं न व्यवस्थापकमित्याह—व्याख्या(५)नाच्चेति। धातावेवैतत्सूत्रप्रवृत्तिसम्पादकशिष्टकृतादिव्याख्यानादित्यर्थः। धातोरे(६)-

सामर्थ्यादिदं लभ्यत इति स्वामी । 'मेपृ रेपृ, लेपृ, गतौ'इति । अयं पाठः स्वामिनः । मैत्रेयस्तु मेपृ, लेपृ, सेचने, रेपृ, प्लवगताविल्याह । हेपृ, घेपृ, इत्यपि केचित् ।

'रबि, लबि अबि' । अम्बा शब्दः, तिस्रः शब्दा अकारोकारमकाराः प्रतिपादका अस्येति त्र्यम्बक इति भट्टभास्करः । **आम्भिरम्भी इति** । असुन् अम्भः, तस्यापत्यम् आम्भिर्भिमः । "अम्भसो लोपश्च"इति बाह्वादिपाठादिञि सलोपः ।

**तद्वीजन्त्विति** । पूर्वसवर्णषत्वप्रवृत्त्यप्रवृत्तिबीजमित्यर्थः । '**जभीजृभि**' । आद्य ईदित् । जभ्यम् । जृभिर्विनाशार्थे चुरादौ । भावार्थे परस्मैपदिष्वपि केचित् ॥

"**सनाद्यन्ताः**" ॥

सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब् णिज्यङौ तथा ॥

यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥

"भूवादय" इत्यस्यानन्तरं "सनाद्यन्ता" इति न सूत्रितम् । सनादीनामियत्ताया अलाभापत्तेः । "सनाद्यन्ता" इत्यस्यानन्तरं "भूवादयश्च" इति पठितुमुचितम् ॥

"**कास्प्रत्ययात्**" ॥ अच्छन्दसीत्येव नोक्तम्, ब्राह्मणे ऽप्याम इष्टत्वात् । 'अथह शुनश्शेप ईक्षाञ्चक्रे' । 'पुत्रानामन्त्रयामास' इत्यादि ॥

"**अतो लोपः**" ॥ **आर्धधातुकेस्यादि** । एतच्च "अनुदात्तोपदेश" इत्यादिसूत्रादुपदेशग्रहणानुवृत्त्या लभ्यते । तत्फलन्तु—अय, पय, गतौ आभ्यां क्विपि "लोपो व्योः" इति लोपे अल्लोपाभावः—अत्, पत् । नन्वेवं वध्यादित्यादावतो लोपो न स्यात् । 'आर्धधातुक' इत्यस्य विषयसप्तमीत्वे-

---

भट्टभास्कर इति । अन्ये तु त्रीण्यम्बकानि नेत्राणि यस्येति तद्व्युत्प-

ऽपि लिङि लुङीत्यादीनां परसप्तमीत्वस्य वार्त्तिककृता स्वीकारात्, वधादेशस्यादन्तत्वाच्चेति चेत्, सत्यम्। अत एवापरितोषाद्भाष्यकृता लिङीत्यादीनामपि विषयसप्तमीत्वं स्वीकृतम्। एतच्च भावकर्मप्रक्रियायां स्फुटीकरिष्यते। विस्तरः शब्दकौस्तुभे बोद्धव्यः।

जयादित्यादिमतमाह—**स्तुतावेवायप्रत्यय इति**। भट्टिस्तु व्यवहारेऽप्यमुं प्रयुङ्क्ते-'न चोपलेभे वणिजां पणायाम्' इति॥

"**अयामन्ता**"॥ नेति वाच्ये अयादेशवचनं "ल्यपि लघुपूर्वात्" इत्येवमर्थम्। प्रस्तनय्य। न ह्यत्र गुणायौ लभ्येते। आम्—कारयामास। अन्तः-गण्डयन्तो मण्डयन्तः। औणादिको झच्, "झो ऽन्तः"। आलुच्—स्पृहयालुः। "स्पृहिगृहि" इत्यादिना आलुच्। आय्येत्नू उणादिषु वक्ष्येते। स्पृहयाय्यः, स्तनयित्नुः। इष्णुः—पारयिष्णवः। "णेश्छन्दसि" इति इष्णुच्। णेरिति णिङ्णिचोः सामान्यग्रहणम्। एवमग्रे ऽपि।

वार्त्तिकस्योक्तिसम्भवमाह-**णिलोपस्येति**। **क्तिजन्तमिति**। तत्र "तितुत्र" इतीण्निषेधादिति भावः। **आर्द्धधातुकमात्रमिति**। मात्रशब्दः कार्त्स्न्ये। क्तिजिभन्नमपीति(१) भावः॥

---

न सम्बध्यते इति बोध्यम्। वार्त्तिककृतेति। "स्यसिच्" सूत्रे "वधभावात्सीयुटि चिण्वत्त्वं विप्रतिषेधेन" इति वदतेत्यर्थः। अन्यथा आदेशानामन्तरङ्गत्वेन विप्रतिषेधासङ्गतिः स्यादिति भावः। लिङीत्यादिविशेषनिर्देशे तद्विशेषणार्द्धधातुकइत्यस्यापि परसप्तमीत्वमेव। विशेषनिर्देशाभावे एव तु "अस्तेर्भूः" इत्यादौ विषयसप्तमीत्वमार्द्धधातुके इत्यस्येति "स्यसिच्" सूत्रे कैयटे एव स्पष्टम्। भाष्यकृतेति। "एकाच उपदेश" इति सूत्रे इति शेषः। तत्र हि एवमुक्तम् "वध इट्प्रतिषेधः प्राप्नोति वधिषीष्ट। नैष दोषः। आद्युदात्तनिपातनं करिष्यते, सनिपातनस्वरः प्रकृतितः प्राप्तस्वरस्य बाधको भविष्यति। एवमप्युपदेशिवद्भावो वक्तव्यः। यथैव स निपातनस्वरः प्रकृतिस्वरं

**"णौ चङि"** ॥ उपधायाः किम् ? अचकाङ्क्षत् ॥

**"सन्यतः"** ॥ तपरकरणङ्किम् ? पापच्यतेः सन् पापचिषते ।

यत्तु वदन्ति—सनि यो ऽभ्यासः सन्निमित्त इति विज्ञानादत्राप्रसङ्ग इति, तन्न । अधीषिषति प्रतीषिषतीत्यादावव्याप्तेः । न हि कार्यी(१) निमित्तत्वेनाश्रियते, अरिरिषतीत्याद्यसिद्ध्यापत्तेः । नन्वेवाम्पिपक्षतीत्यादाव-व्याप्तिः । अभ्यासस्य सन्परत्वाभावात् ।

न च 'येन नाव्यवधान' न्यायेन सन्प्रकृत्या व्यवहिते ऽपि प्रवृत्तिरिति वाच्यम् । प्रतीषिषतीत्यत्रैवाव्यवधानसम्भवादिति चेत्, मैवम् । सना धातुमाक्षिप्य सनि यो धातुस्सनन्तस्तदीयाभ्यासस्येति व्याख्यानात् । न चोक्तव्याख्याने

---

अचकाङ्क्षदिति । **प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तदन्वयस्यैवौचित्यात् "चङ्परे णौ" इति नाचो विशेषणमिति भावः ॥**

सनि य इति । **सनि सति य इत्यर्थः । इदञ्च "स्तौतिण्योः" इत्यत्र कैयटे स्पष्टम् ।** तन्नेति । **"गुणानाञ्च परार्थत्वात्" इति न्यायेन सनीत्यस्य साक्षादनुवादे ऽन्वये सम्भवति अश्रुते तद्विशेषणे ऽन्वयायोगादिति भावः । दूषणान्तरमाह—** अधीषिषतीत्यादि ।

अभ्यासस्येति । **अभ्यासाकारस्येत्यर्थः ।** अव्यवधानसम्भवादिति । **एवञ्च पा-**

---

नुवृत्या आर्धधातुके परतो वर्तमानो णिलोप इयङ्यणादिभिर्बाधितः सन् परिशेषात् क्ङिच्येव स्यात्, इत्यनिटीत्यस्य वैयर्थ्यं सुस्पष्टमेव । तथाचानिडाद्यार्धधातुकं सर्वमप्यस्य न तु क्ङिजन्तमेवेति । क्ङित्प्रत्ययस्त्वत्र न भवति । "अप्रत्ययात्" इति निषेधादिति दिक् ।

( १ ) **नहि कार्यी निमित्तत्वेनाश्रीयत इति ।** वस्तुतस्तु चिन्त्यमेतत्, द्वित्वनिमित्ततापर्याप्त्यधिकरणो यः प्रत्ययः तद्घटकाच्पर्याप्तनिमित्तताकाजादेशो नेति **"द्विर्वचनेऽचि"** इति सूत्रार्थकरणेन अरिरिषति दुद्यूषति सुस्यूषति इत्यादौ कुत्रापि न दोषः । ऊङ्ऋकारयोः द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययाघटकत्वात् । अत एव विभवनीयिषति इत्यादौ 'उपसञ्जनिष्यमाणन्यायेनावादेशनिषेधो न । अध्येता शयिता इत्यादौ परसप्तम्याश्रयणादेव न दोषः । क्नोः कित्वकरणेन च यं प्रत्ययं निमित्तीकृत्य गुणो वा वृद्धिर्वा भवति; तत्प्रत्ययाव्यवहितपूर्वो

प्रमाणाभावः। तपरकरणस्यैव तत्र प्रमाणत्वात्। किञ्च अकारग्रहण तत्र मानम्। अन्यथा सन इत्येव ब्रूयात्। एवं स्थिते जगद्धानदद्ाना शब्देभ्य आचारक्विबन्तेभ्यः सनि कृते इत्वं भवत्येव। पापच्यतेः सनी प्राप्तिं स्वीकृत्य तपरकरणबलेनेत्वं वारयद्भिर्हरदत्तादिभिस्तत्स्वीकारात्सूत्र रसाच्च। 'यथालक्षणमप्रयुक्त' इति भाष्योक्तेश्चेत्यास्तान्तावत् ॥

**"दीर्घो लघोः"॥ लघोरभ्यासस्येति।** व्यधिकरणे षष्ठ्यौ, अ सावयवस्य लघोरित्यर्थः, न तु समानाधिकरणे; असम्भवात्। न ह्यज्झ दायस्य लघुसञ्ज्ञाऽस्ति, "ह्रस्वं लघु" इति सूत्रितत्वात्। 'लघुनि च

पच्चिपतइत्यादावपि न प्राप्तिरिति भावः। सन इत्येवेति। "अलोन्त्यस्य त्यनेनान्त्यस्येति भावः। भाष्योक्तेश्चेति। नन्वेवं व्याख्याने ऽपि प्रत्य सन्नन्तत्वप्रयुक्ताभ्यासस्येत्यर्थान्न यङन्तात्सनि दोषः। किञ्च तप भावे ऽस्येत्युक्तौ न लाघवम्। किञ्च "यथालक्षणमप्रयुक्ते" इत्यस्य लक्षणाभावस्यैव योग्यता न तु लक्षणस्येत्यर्थ इति बहुशः (१)कै व्याख्यानादस्यैवार्थस्य युक्तत्वाच्च। जगदादिभ्य आचाक्विबन्तेभ्यः ऽनाभिधानमेवोचितम्। अपि च सन्परो यो ऽभ्यासाकारस्तस्येति ख्याने ऽपि यङो ऽल्लोपस्य स्थानिवत्त्वाद् यङन्तात्सनि दोषः। अ सन्निमित्ताभ्यासस्येत्यर्थे ऽपि "स्तौतिण्योः" इति सूत्रे ऽधीषि प्रयोगादत्र सूत्रे न हि कार्यीत्वस्य न प्रवृत्तिरत आह—आस्तान्तावदिति परत्वप्रयोजनविचार इति शेषः॥

सूत्रितत्वादिति। एवञ्च निर्दिष्टस्थानिकत्वात् "अचश्च" इति, लि

(१) कैयटेन व्याख्यानादिति। 'यथालक्षणम्' इति प्रतीकमुपादाय यस्य ष्टः प्रयोगो न स्मर्यते; नापि प्रयोगनिषेधस्मृतिः; तद् यथालक्षणमनुगन्तव्यम्, इ र्थमुक्त्वा नैव वा लक्षणमप्रयुक्ते प्रवर्तते, प्रयुक्तानामेव लक्षणेनान्वाख्यानादिति नान्तरमुक्तम्। तत्रान्त्यव्याख्यानमेव ज्यायः। अप्रयुक्ते लक्षणाभावस्यैव योग्यता न णप्रवृत्तेरित्यर्थसङ्गतेः। आद्यव्याख्यायाम्—'अप्रयुक्ते' इति वाक्यशेषासङ्गतिः। प्रयुक्ते कालातिक्रमात्। प्रयुक्तानामिदमन्वाख्यानमित्यन्यत्र भाष्योक्तेश्च।

ऽनग्लोपे' इति सर्वमिहानुवर्त्तते, तच्च प्राग्वदेव द्वेधा व्याख्ययेम्। तदाह-**सन्वद्भावाविषय इति**। एतेन हलादेरिति प्राचोक्तं निर्मूलत्वादुपेक्ष्यमित्यपि ध्वनयति। न हि मुनित्रयोक्तिं विना हलादेरिति पूरयितुमुचितम्। न वा वृत्तिकारादिभिरप्युक्तम्।

यत्तु तत्पौत्रेण व्याख्यातं हलादेरित्यर्वाचीनमतेनोक्तमिति। यच्च तेनैव हेतुमण्णौ औन्दिदत्, आड्डिडत्, इत्यादिव्याख्यावसरे उक्तं हलादेरित्युक्तेरर्वाचीनमते दीर्घो न। स्वमते तु दीर्घो भवत्येवेति। तत्तुच्छम्। औन्दिददित्यादावङ्गलघ्वोरुभयोरपि णिचम्प्रति विशेष्यत्वे दीर्घस्याप्राप्तेः। चङ्परे हि यदङ्गम् उन्द इति न तदीयो ऽभ्यासः। न वा चङ्परणिच्प यल्लघु तत्परः। एवञ्च स्वमते दीर्घो भवत्येवेत्युक्तिरसङ्गतैव। आटिटदित्यादिभाष्यादिसकलग्रन्थविरुद्धञ्च।

एतेन भाष्योदाहरणमेव हलादेरित्यस्य पूरणे प्रमाणमिति केषाञ्चिदुत्प्रेक्षापि प्रत्युक्ता। दीर्घाप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात्।

यदपि वदन्ति—हलादेरिति सामर्थ्याल्लभ्यते। तथा हि—चङ्परे णौ यदङ्गन्तस्य यो ऽभ्यासस्तस्य दीर्घो विधीयते। अजादेस्तु "अजादेर्द्वितीयस्य" इति वचनादङ्गावयवस्याभ्यासो न त्वङ्गस्य। न च 'अवयवावयवः समुदायस्यावयव' इति निर्वाहः। तस्यासार्वत्रिकत्वादिति।

अत्रेदं वक्तव्यम्—'षाष्ठं द्वित्वन्तावद् द्विःप्रयोग एव' इति स्थितमाकरे। अस्तु वा स्थानेद्विर्वचनम्। उभयथाऽपि अङ्गावयव एव किलाभ्यासः। स च नाङ्गावयव इति व्याहतमेव। एवञ्च 'अवयवावयव' इत्याद्यपि रभसोक्तिमात्रम्। अवयव एव ह्ययं न तु तस्यागमः। येन तदीयमसार्वत्रिकत्वं प्रकृते उपन्यासार्हं स्यात्।

---

वात् "अलोन्त्यस्य" इति च न प्रवर्तते।

परे तु लघ्वन्ताभ्यासस्येत्यर्थे अलोन्त्यपरिभाषया चेष्टसिद्धिरित्याहुः। चङ्परणिच्परमिति। **इदमेव व्याख्यानं प्रकृतसूत्रस्थभाष्यकैयट "णाश्रि"** इति सन्वद्भावसूत्रकैयटादिग्रन्थैः पर्यालोचितम्। इत्यादिभाष्यादीति। इत्युदाहर

यदपि स्वोक्ते ऽर्थे माधवसम्वादकथनन्तदपि रभसमात्र
रमेव माधवमतविवेचने स्फुटीभविष्यति । लघोः किम् ?
**सञ्ज्ञाया इत्यादि ।**

अयं(१)भावः–"सन्वल्लघुनि" "दीर्घो लघोः" इति स
नुवर्त्तते ; अभ्यासस्येति च। तत्राभ्याससञ्ज्ञा कार्यकाला । तेनै
पूर्वस्येति फलितम् । द्वे इत्यत्र च उच्चारणे इति विशेष्यस
तच्च कृदन्तम् । तद्योगादङ्गस्येति कर्मणि षष्ठी । तेनाङ्गं यत्र
पूर्वस्य दीर्घसन्वद्भावौ विधीयमानावेकाक्ष्वेव फलितौ । किञ्च
इत्यङ्गविशेषणं शब्दतो ऽपि सुलभम् । "एकाचो द्वे प्रथ
कारात् । तदिदं माधवमतं श्लोकद्वयेनोपनिबद्धम् ।

---

त्वमप्यासिद्धम् ।

फलितमिति । तत्र हि पक्षे "पूर्वोऽभ्यास" इत्यत्र कार्यवि
भ्यासपदोत्तरा विभक्तिः पूर्वशब्दोत्तरं कल्प्या "पूर्वो ऽभ्या
साधुत्वार्था । एकाचो धातोरिति चाङ्गेन समानाधिकर
कर्मणि षष्ठीति । कारकविभक्तेर्न्याय्यत्वादिति भावः । अङ्ग
समीपे गमने ऽत्राप्यङ्गसन्निधानात् । माधवमतमिति । अत्रा
कृतसूत्रस्थभाष्यविरोधः । तत्र हि–"इह कस्मान्न भवति अ
नि चङ्पर इत्युच्यते, व्यवहितं चात्र लघु चङ्पर" इत्युक्त
यल्लघु तदभ्यासस्य व्यवहितमिति तदर्थः । तद्गीत्याङ्गस्य

---

( १ ) अयं भाव इति । शास्त्रेऽस्मिन् "कार्यकालं संज्ञापरिभाष
परिभाषम्" इति पक्षद्वयमस्ति जातिव्यक्तिपक्षवत् । तत्र "पूर्वोऽभ्यास

तथा च ऊर्णुधातौ माधवेनोक्तम् । और्णुनवत् । "दीर्घो लघोः" इत्यभ्यासस्य दीर्घो न भवति । चङ्परे णौ यदङ्गन्तस्य यो ऽभ्यास इति सूत्रार्थात् । अत्र त्वङ्गावयवस्याभ्यासो न त्वङ्गस्येति । युक्तञ्चैतत् । अङ्गस्येति षष्ठ्याः कारकत्वसम्भवे तदुपेक्ष्य शेषषष्ठीत्वकल्पनाया अन्याय्यत्वात् ।

स्यादेतत् । उक्तरीत्या ह्रस्वहलादिःशेषचुत्वादीन्यप्यनेकाक्षु न स्युः । न चेष्टापत्तिः। दिदरिद्रासति, जिगणयिषतीत्यादिलक्ष्यस्य सर्वसम्मतत्वात् । तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयत इति चेत, तर्हीहापि स एवोचितः। अर्थाविकारपक्षस्यैवाभ्यर्हितत्वात् वृत्त्यादिषु स्वीकृतत्वाच्चेत्यभिप्रेत्याह—**वस्तुत इति**।

**ऊर्णौ दीर्घ इति** । स्यादित्यनुषज्यते । सन्वद्भावास्त्विह नोपयुज्यते । णौ कृतस्य स्थानिवद्भावेन नुशब्दद्वित्वे सत्यभ्यासे ऽवर्णाभावादिति भावः । **अर्थापयताविति** । अर्थमाचष्ट इत्यर्थे णिचि आपुगागमे चेत्यर्थः । अर्थ उपयाच्ञायामित्यर्थ तु यद्यपि वोपदेवेनार्थापयतइति स्वीकृतम् । प्राचा तद्व्याख्यातृभिश्च तदेव पुरस्कृतम् । तथापि तत्सर्वञ्चुरादिगणे भाष्यादिविरोधोद्भावनेन दूषयिष्यते ।

**व्यवस्थयेति** । "चङ्परे णौ यल्लघु" इति व्याख्याने हि 'येन नाव्यवधान' न्यायेनैकवर्णव्यवाये 'अपीपचत्' इत्यादावेव भाव्यम्, न त्वनेकव्यवाये। न चैवम् 'अचिक्षणत्' इत्यादौ "सन्वत्"इतीत्वं न स्यात् । न्यायसाम्येन लघौ यो ऽभ्यास इत्यत्राप्येकेनैव व्यवायस्य स्वीकार्यत्वादिति वाच्यम् । "अत्स्मृदृत्वर" इतीत्वापवादेनाद्वचनेन तुल्यजातीयापेक्षेण संयोगव्यवधाने ऽपीत्वस्य ज्ञापितत्वात् । अत एव "दीर्घो लघोः" इति सार्थकम् । एतच्च वृत्त्यादिषु स्पष्टम् । माधवोऽपि जागृधाताविस्थमेवाह—एवञ्च वदन् यथो-

---

शङ्काया एवानुत्थित्या तदसङ्गतिः स्पष्टैव । शेषषष्ठीत्वेति । अवयवषष्ठीत्वेत्यर्थः ।

श्लेशपक्षमेवाशिश्रियत् । तथा चोर्णोतौ यत्नेनोक्तम् , तत्र तस्यापि नि
स्तीति गम्यते । अत एव चकास्तौ–अचाचकासदित्युदाजहार । तथा
भेदाभिप्रायेण पूर्वापरस्वग्रन्थविरोधः समाधेयः ।

यत्तु कातन्त्रे ह्रस्वदीर्घयोरजीजागरदित्युदाहृतं, तन्मतद्वये ऽप्य
दुपेक्ष्यम् । माधवो ऽप्येवं जागर्त्तावाह । व्यवस्थामेव विवृणोति–
त्तीति । **सन्निहितमिति** हेतुगर्भविशेषणम् । **अङ्गमेव वेति**
प्रत्ययांश उत्थिताकाङ्क्षत्वादिति हेतुः स्पष्ट एवेति भावः । **कैय**
तथा च एकं हरदत्तमतमपरन्तु कैयटमतमिति विषयविभागः कै
मातीवादर्त्तव्य इति भावः । 'चङ्पर'इत्यावश्यं अग्लोपविशेषणतया
जितं, तस्य फलमाह–**णोरिति** । **अगितामिति** । पचिकमिशकिप्र
मित्यर्थः । न हीत्सञ्ज्ञकानां लोपो णिचम्प्रतीक्षत इति भावः ।

**'ओणृ'** । इतः पैण्यन्ताः पञ्च ऋदितः ॥

**"ष्ठिवुक्लमुचमां शिति"** ॥ वृत्तिकृत्तु वार्तिकस्थमाङ्प्र
प्राचिक्षेप ।

**जिमिङ्क्चिदिति** । तथा च जेमनमिति भोजने प्रयुञ्जते

**"वा भ्राश"** ॥ भ्राशृ, भ्लाशृ, दीप्तौ फणादिसप्तके ता
पाठितौ । श्यन्विधायके प्रकृतसूत्रे ऽपि तथैव पठिष्यते । वोपदेवस्तु द

---

णिपरलघुपरत्वाभावादप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव । मतभेदेति । ऊ
स्वरुचिग्रस्तमेवेति तत्त्वम् । स्पष्ट एवेति । अयं पक्षो भाष्यानारूढः
न्विददित्यत्र दीर्घापत्तिरप्यत्र पक्षे चङ्परे णौ यदङ्गमौन्दिद इति
भ्यासस्य चङमादाय णिलोपस्य स्थानिवत्त्वेन णिमादाय वा लघुप
नातीवेति । पक्षद्वयस्योभयोरपि सम्मतत्वादिति भावः । तथा च "सन्व
कैयटः–अङ्गान्यत्वाद्धाऽमीमपादिति सिद्धमिति भाष्यमुपादाय "मीम
ज्ञानां "सनि मीमा"इत्यादिना ऽभ्यासलोपो विहितो ऽयन्त्वभ्यासो

वाह । प्राचा ऽपि स एवानुसृतः । भ्रमु, चलने । भ्वादिर्ज्वलादिः फणादिः । भ्रमु, अनवस्थाने । दिवादिः पुषादिः, शमादिः । तत्र भ्वादेर्भ्रम्यति, भ्रमति । शमादेस्तु दीर्घे भ्राम्यतीति त्रैरूप्यम् । क्रमु, पादविक्षेपे । क्लमु, ग्लानौ । त्रसी, उद्वेगे । त्रुट, छेदने । लष, कान्तौ । श्यन्वेति । उभयत्र विभाषेयम्, अनवस्थानार्थो भ्रमिः क्लमित्रसी च दिवादयस्तेभ्यो नित्यं प्राप्ते त्रुटेस्तौदादिकत्वादितरेषाञ्च भौवादिकत्वादप्राप्ते विधानात् ।

यत्तु प्राचा "ष्ठिवुक्लमु" इति सूत्रे दैवादिकस्य क्लमो ग्रहणमित्युक्तम् । यच्च दिवादिगणे भौवादिकस्य तु क्लमतीत्युक्तं तत्प्रामादिकम्, भ्वादिषु क्लमेरपाठादिति बोध्यम् ॥

"क्रमः (१)परस्मैपदेषु" ॥ "ष्ठिवुक्लमुचमां शिति" इति पूर्वसूत्रात् शितीत्यनुवर्त्तत इत्याह—शितीति ।

यत्तु प्राचा शपीति व्याख्याय क्रम्यतीति श्यनि दीर्घरहितमुदाहृतम्, तत्प्रामादिकमिति भावः ।

यत्तु परिष्कुर्वन्ति "इषुगमियमां छः" इत्यत्रानुदित्पाठपक्षे इष्यतेरिष्णातेश्च व्यावृत्त्यर्थं "कसस्याचि" इत्यतो ऽचीत्यनुवर्त्य शित्यचीति काशिकायां व्याख्यातम् । एवञ्च सन्दंशपठिते "क्रमः परस्मैपदेषु" इत्यत्राप्याचि शितीति सम्बन्धाच्छप्येव भवितुं युक्तमिति, तन्न । अचीति हि पक्षे ऽनुवर्त्यमानमपि छत्वविधावेव मण्डूकप्लुत्या सम्बध्यते; न तु ततः प्रागिति ।

इति भावः । फणादिरिति । यद्यप्ययं फणादिषु नास्ति । अत एव "वा जॄ" इत्यत्र भ्रमुग्रहणं, तथापि फणादिष्वेव भ्रमुं त्रसिञ्च पठित्वा 'फणाञ्च नवानाम्" इति सूत्रं कार्यं, "वा जॄ"इति सूत्रे भ्रमुत्रसिग्रहणञ्च न कार्यम्। नच दिवाद्योरेत्वाभ्यासलोपानापत्तिः । बभ्रमुरित्यादेरिष्टत्वेनेष्टापत्तेरिति तात्पर्यम् ॥

अनुदित्पाठ इति । तुदादिगणे "इषुगमि" इति सूत्रे चेत्यर्थः । पक्षे । अनु·

---

( १ ) "क्रमः परस्मैपदेषु" । ननु सूत्रे परस्मैपदेषु इत्युपादानाद्यत्र क्रामतु इत्यादौ

"लुग्वा दुह" इत्यत्र सम्बन्धे दन्त्य इवाजादावपि तङि क्सस्य

किञ्च अचीत्यस्यानुवृत्तिर्वृत्तिकृतोक्तेति किमपूर्वम् ; भाष्य

किं तु न तावता भवदभिमतासिद्धिः । अनुवृत्तेः पाक्षिकत्वस्य

पक्षद्वये फलैकरूप्यार्थं मध्ये ऽसम्बन्धस्यैव वक्तव्यत्वात् , वृ

श्यनि दीर्घस्योदाहृततया तद्विरुद्धतदाशयकल्पनाया असम्भव

यदपि वदन्ति–"ष्ठिवुक्लमु" इति सिद्धे क्लमः शमादे

षामेवाष्टानां दीर्घ इति नियमार्थः । तेन क्रमः श्यनि न भ

न । सिद्धे सत्यारम्भो हि नियमार्थः । न चैषां सर्वेषां श्यनि

ऽस्ति येन श्यन्येषामेवेति नियमः स्यात् । अथोच्येत श्यनि

नियम इति । तदपि न । क्लमेः साक्षादपाठात्, अष्टानामित्यु

---

दित्वपक्षे । लुक्प्रसङ्गादिति । अत्यन्तलोपस्तु धात्वन्तरे चरित

भाष्यकृतैवेति । 'इषेश्छत्वमहलि' इति वार्त्तिकप्रत्याख्या(

वः । एवञ्च धातुपाठे सूत्रे चोदित्पाठो ऽनार्ष इति सूचितम्

वृत्तावेवोक्ततयेत्यर्थः । अनुदित्पाठपाक्षिकत्वस्येति पाठे इ

पाक्षिकत्वस्येति पाठे भाष्ये एवेत्यर्थः । वार्त्तिकारम्भे ऽनु

भावः । मध्ये ऽसम्बन्धस्येति । मण्डूकप्लुत्येति भावः । अत एव

"क्रमः परस्मैपदेषु" इत्यत्रैव "अहलि" इति वार्तिकोपन्यासे

ने चाचीति अनुवृत्त्या कर्त्तव्ये "इष" इति सूत्रे तत्करणं भ

ननु "वृन्नथ" इतिवत् "शमाम्" इति बहुवचनेनाद्यर्थल

ऽष्टानामित्युक्तिः प्रत्येकव्यापारार्थेति उक्तनियमः सुलभोऽन्येष

त्यत आह–अष्टानामित्युक्तेरिति । मदिसङ्ग्रहार्थतयेति । मद्यन्तमात्रसङ्ग्र

---

( १ ) वार्तिकप्रत्याख्यानायेति । "इषेच्छत्वमहलीति वक्तव्य

इह मा भूत् । इष्णाति इष्यतीति । तत्तर्हि वक्तव्यम् न वक्तव्यम् , अचीत्य

तीत्यत्रापि प्राप्नोति । अत्र कैयटः–इष आभीक्ष्ण्ये इत्यस्मात् "हलः श्न

शानच् । स चाजादिरिति छत्वप्रसङ्गः । अथाहलीत्युच्यमाने कस्मादेवात्र

हार्थतयोपक्षीणत्वात् । शमादिषु क्लमेः पाठस्य घिनुणर्थतयोपक्षयाच्च ; नन्वेवं क्लमिं मदेरनन्तरमुत्कृष्य 'शमां सप्तानाम्' इत्येव ब्रूयादिति चेत् ? न, एवमप्यक्षरसन्निवेशे लाघवाभावात् , प्रत्युत अर्द्धमात्राधिक्यात् , मकारान्तसन्दर्भसौष्ठवार्थं मदेः पूर्वं क्लमेः पाठसम्भवाच्च ।

यत्तु क्रमेः शमादिषु पाठश्चिन्त्यप्रयोजन इति हरदत्तेनोक्तम् , तदपि नातिप्रयोजनताभिप्रायमिति दिक् ।

**भाष्यविरुद्धमिति** । यदि हि द्वौ धातू सम्मतौ स्याताम् ; तर्हि षोपदेशलक्षणे स्त्यायतिरिवायमपि पर्युदस्येतेति भावः ।

**प्लुतगतिरिति** । यत्तु केचित् प्लवेत्ति धात्वन्तरमित्याहुः , तन्न । तथाहि सति तस्माद् घञा आप्लावशब्दे सिद्धे तदर्थं "विभाषाऽऽङि रुप्लुवोः" इति प्लुवः पक्षे घञ्विधानमनर्थकं स्यात् । तथा "स्रवतिश्रृणोति" इत्यादि सूत्रेण प्लवतेरुकारस्येत्वविधानं व्यर्थं स्यात्; तद्धि पक्षे अपिप्लवदिति रूपसिद्ध्यर्थं क्रियते । सति चास्मिन्ननेनैवाभिमतरूपसिद्धौ किन्तेनेति दिक् ।

**'मव्य, बन्धने'** । **ममव्येति** । "यस्य हलः" इति लोपस्तु न भवति, यस्येति सङ्घातग्रहणमिति सिद्धान्तात् । अत एव तत्रार्थवत्परिभाषापि प्रवर्त्तते । तेन पुत्रकाम्येत्यादौ लोपो नेति दिक् । आशिषि मव्यात् । "हलो यमाम्" इति वा यलोपः। **सूक्ष्र्येत्यादि** । णल्–सुषूक्ष्र्य । ईक्ष्र्याञ्चकार । ईर्ष्याञ्चकार । एभ्यः क्विपि वलि लोपे "स्कोः" इति कलोपे जश्त्वचर्त्वयोः सूर्ट् सूर्ट् । "रात्सस्य" इति नियमान्न संयोगान्तलोपः । ऊष्मान्त आदर्रे वक्ष्यते । तस्याप्येतदेव रूपम् । अपदान्ते तु भेदः—सूक्ष्र्यावित्यादि । एवमीक्ष्र्यतेरीर्ष्यतेश्च—ईर्ट्, ईक्ष्र्यौ ईर्ष्यावित्यादि । **'हय, गतौ'** । भक्तिशब्दयोरपीति

---

**अन्यथा तदुत्तरेषामपि ग्रहणापत्तिः । मद्युत्तरं वृत्करणे तु गौरवमिति भावः । नन्वेवं शमादिषु क्रमेः पाठसामर्थ्यात्तथा नियमोऽत आह–शमादिषु क्रमेरिति । मकारान्तेति । इदमुपलक्षणमवर्णोत्सन्दर्भेत्यपि बोध्यम् ।**

केचित् । **शिथिलीकरणमिति** । सोममभिषुणोतीत्य
**सुराया इति** । तत्प्रकरणे "सन्धानं स्यादभिषव" इ
**नमिति** । 'वारांस्त्रीनभिषुण्वते' इत्यादौ दर्शनात्स्नान
ख्यातत्वाच्च ॥

**"अतो ल्रान्तस्य"** । यद्यवयववचनेनान्तशब्दे
न्यपदार्थस्तर्ह्यन्तग्रहणमनर्थकम् । विशेषणेनैव तदन्तविधेः
समीपवाचिना ऽन्तशब्देन षष्ठीसमासः; रेफलकारयोः स
रिति, तर्हि लपिरणिश्वल्लिप्रभृतिष्वपि स्यात् । अथ ल्रश्च
धारयस्तर्हि अन्तशब्दस्य विशेषणत्वात्पूर्वनिपातः स्यादत
**कमिति । अतो वृद्धिः स्यादिति** । एतेन अत
दिकं प्रदर्शितम् । अतः किम् ? अखोरीत् । तदन्तस्याङ्ग
आशुगमने । अत्राद्यो लकारो ऽकारसमीपभूतः, न त्वङ्ग
तु नाकारः समीपः । **नेटीत्यादि** । स्वविषये प्राप्तं सर्वं
सामान्यचिन्तायां पुरस्तादपवादन्यायस्याप्रवृत्तेः । विशेषि
इत्येव बाध्येत ; न तु विकल्पोऽपीति भावः ।

---

सिद्धत्वादिति । **अन्तशब्दस्य पूर्वनिपातापत्तेश्चेत्यपि बो**
**ति । "ओदकान्ताद्वावनान्तात्प्रियं प्रोथमनुव्रजेत्"इत्याद**
**पान्थः । श्वल्लीति । इदञ्च—अन्तशब्दः समीपमात्रवाची**
**पूर्वभूतसमीपेऽपि दर्शनादित्याशयेन । अत्र परगत**
**राग्रहे तु लपिरण्यादावेव दोष इति बोद्धयम् ।** तन्त्रेति
**शाब्दाकाङ्क्षासत्त्वेन तन्निवृत्तये शाब्दान्वयौचित्येनावृत्ति**
**अतः समीपभूतरेफलकारान्तस्याङ्गस्यातो वृद्धिरिति**

यत्तु प्राचा "नेटि" इत्यस्यापवाद इत्युक्तं तद्विकल्पस्याप्युपलक्षणमिति व्याख्यातुमुचितम् ।

यत्तु व्याचख्युः—विकल्पस्यैवापवाद इति, तच्चिन्त्यम् । बाध्यसामान्यचिन्तायामवधारणायोगात् । विशेषचिन्तायान्तु पुरस्तादपवादन्यायेन वैपरीत्यापत्तेः । न च येन नाप्राप्तिन्यायेन विकल्पस्य बाध इति वाच्यम् । 'मा भवानालीत्' इत्यत्राहलादित्वेन विकल्पस्याप्राप्तेरिति दिक् ।

**तॄफलेत्येत्वमिति**। यद्यपि "अभ्यासे चर्च" इत्यस्यासिद्धत्वात् "अत" इत्येव फलभज्योरेत्वाभ्यासलोपौ सिद्धौ ; तथापि तयोर्ग्रहणमेत्वविधिं प्रति सिद्धत्वज्ञापनार्थम् । तेन बभणतुः बभणुरित्यादि सिद्धम् । ननु 'फल, निष्पत्तौ' इत्यस्यैव तत्र ग्रहणमुचितं निरनुबन्धकत्वादिति चेत् ? मैवम् । निरनुबन्धकपरिभाषायाः प्रत्ययग्रहणविषयकत्वात् । सा हि "वामदेवाड्ड्यड्ड्यौ" इति ड्यप्रत्ययस्य डित्त्वेन ज्ञाप्यते । ज्ञापकञ्च सजातीयापेक्षम् ।

केचित्तु परिभाषायाः सार्वत्रिकतां मन्वानाः "तॄफल" इति सूत्रे

---

विकल्पस्याप्राप्तेरिति । अश्ववल्लीदित्यादावङ्गस्येति विशेषणान्न वृद्धिरिति भाष्यविरोधाच्चेत्यपि बोध्यम् ।

सार्वत्रिकतामिति । "दिव औत्" इत्यादिसूत्रस्थभाष्य(१)प्रामाण्येनाप्रत्ययविषयेऽपि तत्प्रवृत्तिः । न हि सर्वत्र सजातीयापेक्षतैव ज्ञापकस्यास्तीति

---

(१) भाष्यप्रामाण्येनेति । इत्थं हि तत्र भाष्यम्—"अन्तग्रहणं किमर्थम्? अवयववाचिनोऽन्तशब्दस्य तदन्तपरतया व्याख्यानेन तदर्थलाभ इति प्रश्नः । "अतो लृ" इत्येवो-

चशब्देन सानुबन्धकममुं समुच्चिन्वन्ति । तत्र "ह्रश्च व्रीहिकालयोः" इत्यत्र सामान्यग्रहणनिर्वाहार्थं क्रियमाणञ्जहातेः कित्त्वं परिभाषायाः सार्वत्रिकत्वे मूलमिति ध्येयम् ।

**मीलश्मीलेत्यादि** । २९ सर्वे दीर्घोपधाः । 'मिल, श्लेषणे' इति ह्रस्वोपधस्तुदादौ । **'नील, वर्णे'** । 'णिल, गतौ' इति ह्रस्वोपधस्तुदादौ । **'शील, समाधौ'** । उपधारण इति चुरादौ । 'शिल, उञ्छ' इति ह्रस्वोपधस्तुदादौ । **तिल, गतौ** । ५४० । स्नेहन इति चुरादौ । **खोलृ॑, खोर्ऋ॑, धोर्ऋ॑** ५६ त्रयाणामपि ऋदित्त्वान्नोपधाह्रस्वः । अचुखोलत् । अचुखोरत् । अदुधोरत् । धोरितकमश्वानाङ्गतिविशेषः । निष्ठान्तात्सञ्ज्ञायां कन् ।

---

भावः । समुच्चिन्वन्तीति । **'ज्ञापकसिद्धं न सर्वत्र' इत्यनेनाप्रवृत्तिरिति तत्त्वम् ।** जहातेः कित्त्वमिति । **अन्यथैकानुबन्धपरिभा(१)षयाऽस्यैव ग्रहणं स्यादिति** भावः । परिभाषाया इति । **सामान्यतो "वामदेवाड्ड्यड्(२)ड्यौ" इति सूत्रस्थडित्त्वज्ञापितपरिभाषामात्रस्येत्यर्थः । एतच्च "दीर्घोऽकित" इति सूत्रस्थकैयटानुरोधेनोक्तम् । वस्तुतो "ह्रश्च" इत्यत्रानुबन्धानुच्चारणेन तदनुबन्धकग्रहणाभावात्परिभाषाया अप्राप्तिरेवेति तत्त्वम् ।**

अश्वानाङ्गतीति । **धातुपाठे गतिचातुर्यमश्वनिष्ठमेव विवक्षितमिति भा-**

---

**( १ ) एकानुबन्धकपरिभाषयोरिति** । "एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ग्रहणम्" इत्यनयेति भावः ।

**( २ ) वामदेवाड्ड्यड्ड्यौविति** । तद्धि डित्वं टिलोपार्थम्, तच्च "यस्येति" लोपेनैव सिद्धमितिव्यर्थं सज्ज्ञापकमिति भावः । तद्धि "ययतोश्चातदर्थे" इत्यत्र तयोरग्रहणार्थम् । नञः परस्य यपदन्तस्योत्तरपदस्यान्त उदात्त इत्यर्थः । एवञ्चावामदेव्ये पूर्वपदप्रकृतिस्वर एव भवति । तच्च "निरनुबन्धकग्रहणे न सानुबन्धकस्य" "तदनुबन्धकग्रहणे नातदनुबन्धकस्य" इति परिभाषाद्वयं विनानुपपन्नमिति भावः । तथाचावामदेव्ये "तत्पुरुषे तुल्यार्थ" इति सूत्रेण पूर्वपदप्रकृतिस्वर एव भवति । परे तु—उक्तपरिभाषाद्वयस्थाने स्वाघटकानुबन्धाघटितस्य ग्रहणे स्वाघटकानुबन्धघटितस्य ग्रहणान्नेत्येकैव परिभाषा स्वीकार्या । स्वपदेन

'ष्ठिवु, निरसने' । ५६ । ष्ठीवनम् । ल्युट् । पृषोदरादित्वात्पक्षे दीर्घः । तथा च चान्द्रसूत्रम्–"ष्ठिवुसिवोर्दीर्घश्च" इति । अयं दिवादावपि ॥

"सन्लिटोः" ॥ सन्लिण्निमित्त इति । यदि तु सनि लिटि च पर इति प्राचो व्याख्यानमाद्रियेत ; तदा यङ्लुगन्तात्सनि कुत्वं स्यात् । न चेष्टापत्तिः । माधवादिग्रन्थविरोधापत्तेरिति भावः ।

हिविदिवि । ५९० प्राचा तु धिन्विकृण्वी स्वादिगणे पठितौ, तदयुक्तम् । तथा हि–पाणिनीयमते तावदिमौ भ्वादी एव न तु स्वादी । किञ्च स्वादित्वाभ्युपगमे तत्सामर्थ्यात्पक्षे श्नुः स्यात् । तथा च वस्य ऊठि अनिष्टं स्पष्टमेव । वोपदेवेन तु विकरणलोभात्तनादित्वं स्वीकृतम् तथा च प्राचो ग्रन्थो निरालम्बन एवेत्यास्तान्तावत् ।

अतो लोप इति । न चोपदेशे ऽकारान्तत्वं नास्तीति वाच्यम् । आर्धधातुकोपदेश इति व्याख्यातत्वात् । इह च "धिन्विकृण्व्योर च"इति श्रुतत्वादकारादेशे कृते चानुकृष्टस्य प्रत्ययस्य पश्चाद्विधानादिति भावः ॥

"लोपश्च" ॥ असंयोगपूर्वो य इति । प्रत्ययस्य विशेषणन्तु न कृतम् । अश्नुवहे इत्यादावतिव्याप्तेः ।

"उतश्च" ॥ इहापि प्रत्ययस्य विशेष्यत्वे आश्नुहीत्यादावतिव्याप्ति-

---

वः । दीर्घ इति । तदाऽलघूपधत्वाद् गुणाभावः । दीर्घोपधोऽप्ययं ल्युड्विषय इत्यन्ये ॥

इति भाव इति । न च त्वद्व्याख्याने, "न हि कार्यि"इति न्यायेन सन्नन्तजयतौ कुत्वानापत्तिः । सन्ग्रहणसामर्थ्येन तस्य न्यायस्येहाप्रवृत्तेः । यदि तु जेर्यङ्लुक्त्वे तदन्ताच्च सन्सत्त्वे न दृढतरं मानमित्युच्यते ; तदा परत्वेन व्याख्याने ऽपि न दोषः । एतच्च माधवादिग्रन्थविरोधापत्तेरित्यनेन सूचितम् ।

पक्षे इति । "धिन्विकृण्व्योर च" इत्युप्रत्ययविधानादिति भावः । न च

रत आह—**प्रत्ययोकार इति** ।

**कृवि १६०। अयमिति** । कृणोतिरित्यर्थः । न तु कृण्विरिति भ्रमितव्यम् । स्वादौ हि 'कृञ्, हिंसायाम्' इति पठ्यते । तस्य च शविषये परस्मैपदे कृण्विना तुल्यानि रूपाणि । आत्मनेपदे तु कृणुते इत्यादि । लिडादौ तु करोतिवत् । एवं स्थिते ऽयं स्वादाविति यथाश्रुतो धातुवृत्तिग्रन्थ एव प्राचो भ्रमे मूलमिति बोध्यम् । **'अव, रक्षणे'** । ६०२ । हिंसादानेत्यत्र हिंसा च आदानञ्चेति विग्रहः । एकोनविंशतिरर्थाः । तथा च वोपदेवः—

अव् रक्षणे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ ।
प्राप्तौ श्लेषे ऽर्थने वेशे भागे वृद्धौ ग्रहे वधे ॥
स्वाम्यर्थे ऽवगमे कामे कृताविति ।

**भिक्ष भिक्षायामिति** । याच्ञायामित्यर्थः । त्रयो ऽर्थाः । **क्लेश** । अत्र स्वामी क्लेशे अव्यक्तायां वाचि चेति पठित्वा इमावपि पूर्वधातोरर्थाविति मन्यते, धात्वन्तरमिति तु बहवः। 'क्लिश, उपतापे' इति दिवादौ । 'क्लिशू, बाधने' इति क्र्यादौ । **'ईष, गतिहिंसादर्शनेषु'** । दानेष्विति पाठान्तरं देवादीनां सम्मतम् । ईषा । मनस ईषा मनीषा । शकन्ध्वादिः, पृषोदरादिर्वा । मनीषामभिनिविष्टं मनीषितम् । "प्रातिपदिकाद्धात्वर्थे बहुलम्" इति णिजन्तात् क्तः।'मनीषितं द्यौरपि येन दुग्धा' इति रघुकाव्ये । अयमर्थः परस्मैपदिषु । द्वावपि दीर्घादी । ह्रस्वादयस्तु त्रयः–गत्यर्थो दिवादौ, इच्छार्थस्तुदादौ, आभीक्ष्ण्यार्थः क्र्यादौ । **'वर्ष स्नेहने'** । 'वृषु, सेचने' इत्यग्रे परस्मैपदी । शक्त्यर्थश्चुरादौ । **वृक्षशब्दे इत्यादि** । यदाह केशवस्वामी—

कौक्षे कर्दति पर्दतिर्गुदरवे रेषेत वार्के हसे ।
बुक्केच्च श्वरवे भषेच्च हयजे ह्रेषेत हेषेत वा ॥ इति ।

स्वन्तत्मात्रफलकं भ्राजतिवत्। "भ्राजभास" इत्यादिना उपधाह्रस्वस्य विकल्पात्। उभयोरप्यनुबन्धान्तराकरणन्तु प्रकरणानुरोधात्। **'आङः शासि'**। "शंस, स्तुतौ'इत्यग्रे परस्मैपदिषु। **'ग्रसु ग्लसु'**। ग्रसित्वा, ग्रस्त्वा। ग्रस्तः। ग्रसिष्णुरिति हेलाराजीये लिङ्गनिर्देशे प्रयुक्तं "भुवश्च" इति चकारस्य अनुक्तसमुच्चयार्थताया: वृत्तिकृतोक्तत्वात्समर्थनीयम्। एतेन भ्राजिष्णुक्षयिष्णू व्याख्यातौ। **'वहिमाहि'**। ६४० मह, पूजायामित्यग्रे परस्मैपदिषु, महीङिति कण्ड्वादिषु। **बर्ह बल्ह, प्राधान्ये**। इमौ भाषार्थौ चुरादौ। आद्यो हिंसायामपि तत्रैव। बृह, बृहि, वृद्धाविति इहैव परस्मैपदिषु। **केचित्त्विति**। मैत्रेयादयः। अत्रापरितोषबीजं वैदिकप्रयोगविरोधः। तथा च बह्वृचब्राह्मणम्——"प्रवह्लिकाः शंसन्ति प्रवह्लिकाभिर्वै देवा असुरान्प्रवह्ल्याथैनानत्यायन्"। व्याकृतश्चेदं भगवद्गोविन्दस्वामिना—प्रवह्लय अनृतं भाषित्वेति।

यत्तु ओष्ठ्यादेर्बर्हशब्दस्य आच्छादयत्यनेनेत्यर्थानुगमो द्विलीयपर्यायपठितयोरोष्ठ्यादित्वे प्रमाणमिति, तन्न। बर्हशब्दस्य सर्वेष्ववयवेषु प्रधानं भवतीति व्युत्पादनात्। एतेन स्तीर्णं बर्हिरित्यपि व्याख्यातम्। एवञ्च मणिप्रबर्हा इत्यत्रापि प्राधान्यार्थत्वादोष्ठ्यादित्वं न्याय्यमिति बोद्धव्यम्।

**वेहृ, जेहृ, बाहृ। आद्य इति**। "उक्षाणं वा वेहतं वा क्षदन्ते" इति हि बह्वृचब्राह्मणम्। वेहच्छब्दश्च वेहतेरतिप्रत्यये निपातित इति भावः। **अन्त्य इति**। बाहुशब्दस्य भुजपर्यायस्य "क्षुब्धस्वान्त"इति निपातितस्य बाढशब्दस्य च निर्विवादत्वादिति भावः। **गत्यर्थोऽपीति**। "अरेणुभिर्जेहमानं पतत्री"इत्यत्र सर्वैर्वेदभाष्यकारैस्तथा व्याख्यातत्वादिति भावः। **'काशृ'** ६५० आकारोपधप्रकरणादयमिह पठितः। **'ऊहृ'** ६५० 'अनुक्तमप्यूहति पण्डितो जनः' इति प्रयोगस्तु "अनुदात्तेत्त्वलक्षणमात्मनेपदम-

लोपः । सिज्लोपात्पूर्वं भष्भावस्तु न । असिद्धत्वात् । ननु कृते लोपे प्रत्ययलक्षणेन सादिप्रत्ययपरत्वाद्भष्भावो ऽस्त्वित्याशङ्क्य सिज्लोपस्य प्रत्ययलक्षणेन पूर्वत्रासिद्धत्वादिति माधवः ।

अत्रेदं वक्तव्यम्-शङ्का तावदसङ्गता वर्णाश्रये प्रत्ययलक्षणाभावात् । ननु यत्र वर्णमात्रमाश्रीयते तत्र माभूत् । यथा गवे हितं गोहितमित्यत्रावादेशो न । यत्र तु वर्णविशिष्टः प्रत्यय आश्रीयते तत्र स्यादेव । यथा अतृणेडितिमागम इति चेत्, न । भष्भावेऽपि वर्णस्यैवाश्रयणात् । प्रत्ययस्याप्रकृतत्वात् । किं च स्थानिवत्सूत्रेण सिद्धे प्रत्ययलक्षणसूत्रं नियमार्थमिति भाष्ये स्थितम् । स्थानिवद्भावश्च विशेषणत्वेनाप्यलाश्रयणे निषिद्धः । अन्यथा प्रपठ्येत्यत्रेडागमापत्तेः । अत एव "तृणह इम्" इत्यत्राचि नेत्यनुवर्त्तते, न तु हलीति कैयटादौ स्पष्टम् । तस्मादिह शङ्का मन्दैव । असिद्धत्वेन समाधानमपि मन्दमेव । स्थानिवत्सूत्रं प्रत्यासिद्धत्वं नास्तीति प्रागेव प्रपञ्चितत्वात् । अन्यथा राम इत्यत्र विसर्गो न सिद्ध्येदिति दिक् ।

**'णिक्ष, चुम्बने'** । **प्रणिक्षतीति** । "उपसर्गादसमासेऽपि" इति नित्यं णत्वम् । "वा निंसनिक्षनिन्दाम्" इति विकल्पस्तु कृत्येव । धातुत्रयेऽपि तिङन्ते तदुदाहरणं प्राचः प्रामादिकमेव । आकरविरोधादिति भावः । **अवज्ञेत्यादि** । सूर्क्षणमादरस्ततोऽन्यदसूर्क्षणमित्यमरग्रन्थार्थः । कल्पसूत्रे च दृश्यते-"सोमेन यक्ष्यमाणो नर्त्तून्सूर्क्षेन्न नक्षत्रम्" इति । तैत्तिरीयब्राह्मणे च "तत्तन्न सूर्क्ष्यम्" ।

---

ति । 'अनु(१)दात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' इति तु भाष्यानुक्तत्वा-

**'ध्राक्षि, ध्राक्षि, ध्वाक्षि'** । ६७८ । एभ्यो "गुरोश्च हल" इत्यप्रत्यये द्राक्षा ध्राक्षा ध्वाङ्क्षा । आद्ययोरनुनासिकलोपो यवादिगणे निपातनात् । मतोर्वत्वन्तु त्रिभ्योऽपि न । अयवादिभ्य इत्युक्तेः । द्राक्षामान् । ध्राक्षामान् । ध्वाङ्क्षामान् ।

**'मूष, स्तेये'** । ६८२ । संज्ञायां क्वुन् । मूषकः । अयं ह्रस्वोपधः कथादौ । **जूष चेति** । ६८६ । 'जुषी, प्रीतिसेवने' इति तुदादौ 'जुष, परितर्कणे' इति युजादौ ह्रस्वोपधः । **'भूष, अलङ्कारे'** । अयञ्चुरादावपि । **कष खष शिष इत्यादि** । एषु तृतीयोऽनिट्कः । 'शिषिं पिषिं शुष्यतिपुष्यती त्विषिम्" इति व्याघ्रभूतिवचनात् । न च तत्र कषादेरेव ग्रहणम् । सङ्कोचे प्रमाणाभावादिति मैत्रेयपुरुषकारमाधवादयः । तदनुरोधेनोदाहरति—**शेष्टेत्यादि** । वोपदेवादयस्त्वमुं सेट्कमाहुः । तन्मते शेषितेत्यादि बोध्यम् ।

**जिषुविषुमिषु** । ७०५ । इह द्वितीयोऽनिट्कः । "श्लिषिं विषिन्तुष्यतिदुष्यतिद्विषिम्" इति वचनात् । वोपदेवस्त्वमुं सेट्कमाह ।

**कैयटादय इति** । आदिशब्दान्न्यासकारहरदत्तवर्द्धमानस्वामिसम्मताकाराः । **'घस्लृ, अदने'** । ७२१ । **आशि(१)षीति** । आशीर्लिङी(२)त्यर्थः । एतच्च कर्त्तरि प्रयोगमभिप्रेत्योक्तम् । कर्मणि तु यग्विषये प्रयोगो नेति बोद्धव्यम् ।

---

कर्त्तरीति । कर्मणि घत्सीष्टेत्यादौ वलाद्यार्द्धधातुकसत्त्वादस्त्येव प्रयोगः । एवङ्कर्मव्यतिहारे कर्त्तर्यप्यस्त्येव प्रयोग इति भावः । यग्विषय इति ।

"पुषादिद्युताद्ि" ॥ पुषधातुर्गणचतुष्टये पठ्यते । भ्वादौ दिवादौ क्र्यादौ चुरादौ च । तत्र नेह भ्वादिर्गृह्यते, द्युतादीनां पृथक्करणाज्ज्ञापकात् । ते हि तत्र पुषेरुपरि पठ्यन्ते । नापि क्र्यादिः । तत्र हि पुषेरुपरि चत्वार एव धातवः । यदि च त एव जिघृक्षिताः स्युस्तर्हि लृदित एव क्रियेरन् । न चानेकानुबन्धासङ्गगौरवम् । त्रयाणां निरनुबन्धकत्वात् । ग्रहेः स्वरितत्वेऽपि लृकारेणैव तन्निर्वाहात् ।

यत्तु हरदत्तादिभिरुक्तम्—स्वरितत्वादेरपि तेनैव सिद्धत्वादिति । तत्रादिशब्दग्राह्यं किमिति त एव प्रष्टव्याः । न चाऽेव तथा । अपिशब्दसमुच्चयस्य दुर्वचत्वादित्यास्तान्तावत् ।

नापि चुरादिः । णिचा व्यवधानेन ततोऽनन्तरस्य च्लेरसम्भवात् । अतः परिशेषाद्दिवादय एव गृह्यन्ते; तदाह—**श्यन्विकरणपुषादेरिति** । "नन्दिग्रहिपचादिभ्य" इतिवत् , पुषद्युतादीत्येक एवादिशब्दः सूत्रे पठितुं युक्तः ।

ननु पुषादयो द्युतादयश्च लृदित एव कुतो न कृता इति चेत्, मैवम् । प्रत्येकं लृकारपाठे विपरीतगौरवापत्तेः । न चानुबन्धान्तरेण लृकारो निर्मातुं शक्यः । तत्तत्कार्यानिर्वाहप्रसङ्गात् । आदितामीदितामुदितामूदिताञ्च तत्र सत्त्वात् । तद्यथा—पुषादिषु ञिष्विदा मदी षिधु शमु । द्युतादिष्वपि श्विता ञिमिदा ञिक्ष्विदा स्रंसु ध्वंसु स्यन्दू कृपू इति पठ्यन्ते ।

यत्तु पुषादिषु षिधू संराद्धावित्यूदित्पठ्यते इति; तत्प्रामादिकम् । ऊदित्त्वे तस्यानिट्सु पाठवैयर्थ्यापत्तेः । तस्माद् ह्रस्व एव सिद्ध्यतेरनुबन्धो बोध्यः ।

**'जर्ज झर्झ चर्च'** । एषाञ्चवर्गीयान्तेषु पाठ उचितः । न त्विहोष्मान्तेषु । **'शश, प्लुतगतौ'** । **शशातुरिति** । इह शशशतुरिति प्राचो ग्रन्थः प्रामादिक इत्युक्तम् । **चह** । **अचहीदिति** । हान्तत्वान्न वृद्धिः । **'रह, त्यागे'** । अयं कथादौ मित्प्रकरणे च चुरादौ ।

---

इत्यास्तामिति । आदिनोच्चारणार्थत्वमिति कश्चित् ।

**अनिदकारिकास्विति** । अत्र च व्याख्यानमेव शरणम् ।

अथ भ्वादेरन्तर्गणानाह—द्युत, **दीप्तौ** । **ञिमिदा** ।

"**मिदेर्गुणः**" । शितीत्यनुवर्त्तते । सा च कर्मधारयात्सप्तमी । अङ्गाक्षिप्तश्च प्रत्ययो विशेष्यः । तेन "यस्मिन् विधिस्तदादौ" इति प्रवर्त्तते । तदेतदाह—**इत्सञ्ज्ञकशकारादाविति** । इत्थं व्याख्यायाः फलमाह—**एश इति** । शितीति बहुव्रीहौ तु मिमिदे इत्यत्र गुणः स्यादिति भावः । पपे तस्थे इत्यादौ पिबादयोऽपि स्युरिति बोध्यम् । अयं दिवादिश्चुरादिश्च। **ञिष्विदा** । क्ष्वेदतीत्यव्यक्ते शब्दे भविष्यति । स्विद्यतीति स्नेहनमोचनयोर्दिवादौ स्विद्यतीति गात्रप्रक्षरणे। '**घुट, परिवर्त्तने**' । ७५२ । अयन्तुदादावपि । **रुट लुट लुठ** । ७५५ । आद्यौ प्रथमान्तौ, तृतीयो द्वितीयान्तः । द्वावेव धातू द्वितीयान्तौ चेत्येके। **क्षुभ, सञ्चलने** । ७५७ । सञ्चलनं प्रकृतिविपर्यासो मन्थ(१)नञ्च । अयं दिवादिः क्र्यादिश्च ॥

"**न वृद्भ्यश्चतुर्भ्यः**" । चतुर्ग्रहणं कृपेर्व्यावृत्त्यर्थमिति व्याचख्युः । तन्न । तत्रापि निषेधस्येष्टत्वात् । चतुर्ग्रहणफलन्तु स्यन्दतौ स्फुटीभविष्यति । स्यन्देरूदित्त्वाद्विकल्पे प्राप्ते इतरेषां नित्यमिटि प्राप्ते निषेधोऽयम् । अत्र "गमेरिट्" इत्यतः परस्मैपदेष्वित्यनुवर्त्तते, तच्च तस्मिन्सूत्रे तङानयोरभावं

---

व्याख्यानमिति । सानुबन्धकत्वन्तूभयोरपीति भावः ।

गुणः स्यादिति । गौरवञ्च स्यादित्यपि बोद्धव्यम् । सूत्रान्तरेष्वेवमेव व्याख्या इत्याशयेन तत्र फलमाह—पपे इत्यादि । एकीयमतागतं क्ष्विदं समाप्य प्रकृतं स्विदमेव निगमयति—स्विद्यतीत्यादि ।

निषेधस्येष्टत्वादिति । "तासि च क्लृप" इति सूत्रस्थचेनेति भावः । तङानयोरभावमिति । वर्त्तिषीष्टेत्यत्र स्यादेरार्द्धधातुकस्यैव तङानरूपत्वात्तदभावाभावेन न दोषः । न च विवर्त्तिषत इत्यत्र लडाद्युत्पत्तेः पूर्वं निषेधापत्तिः । तङानयोरभावशब्देन तङाननिरूपितनिमित्तत्वाभावोपलक्षणेनादोषात् ।

लक्षयति । इहापि तथैवार्थाधिकारात् । तेनासत्यपि परस्मैपदे कृते हेर्लुकि च निषेधः सिद्ध्यति । विवृत्सिता विवृत्स त्वमिति ; तदेतदाह—तङानयो-रिति । अत्र भाष्यवार्त्तिकयोर्वृतादीनामात्मनेपदेन समानपदस्थस्येड्वच-नादन्यत्र निषेध इति स्थितम् । तेन विवृत्सिषीयत इत्यत्रात्मनेपदोत्पत्तेः पू-र्वन्तरसमानपदस्थत्वाभावादन्तरङ्गो निषेधः प्रवर्त्तते, स च कृतेऽपि तङि न निवर्त्तते ।

**चतुर्ग्रहणसामर्थ्यादिति** । वस्तुतस्तु 'पञ्चभ्य' इति वक्तुमुचि-तम् । एवं हि तासि चेत्येवास्तु । क्लृप इति व्यर्थम् । न च वृतादिष्वति-व्याप्तिः । परस्मैपदाभावात्तङानयोः सत्त्वाच्च ॥

---

(१)पाहितं निवेश्यम् । तेन विवृत्सितेत्यत्र तृजन्ते न दोषः । हेर्लुकि चेति । परस्मैपदे परे इत्यर्थे तु न सिद्ध्येत् । न च प्रत्ययलक्षणेन तत्परत्वम्, "न लुमता" इति निषेधात् । न च "आर्द्धधातुकस्येड्"इत्यत्रेवाङ्गनिमित्तस्य सादेरार्द्धधातुकस्येत्यर्थात् हिनिरूपिताङ्गलक्षकस्यात्रोद्देश्यकोटौ न प्रवेश इति "न लुमता"इत्यस्याप्राप्तिः । अत एव भाष्ये "वृतादिप्रतिषेधे परस्मै-पदेषु चेत्कृत्युपसङ्ख्यानम्"इत्येवोक्तम्, न तु "हेर्लुकि"इत्यपीति वाच्यम् । लक्षणापक्षे दोषशङ्कैव नेत्यभिप्रायेणास्य प्रयोजनत्वोक्तेरदोषात् । स्पष्टा चेयं रीतिः "स्नुक्रमोः" इति सूत्रे भाष्ये ।

अत्र भाष्येति । एवं हि अत्र भाष्यम्—"अविशेषेण वृतादिभ्य इट्प्रतिषे-धमुक्त्वा वृतादीनामात्मनेपदेन समानपदस्थस्येड् भवतीति वक्तव्यम्"इति वृतादिसम्बन्धिनः सा(२)देरार्द्धधातुकस्यात्मनेपदेन समानपदस्थस्येडिति तदर्थः । न निवर्त्तते इति । वार्त्तिके आत्मनेपदेनैव समानपदस्थस्येत्यर्थात् । अयं च क्यङुत्पत्तेः प्राक् सुबन्तेनापि समानपदस्थ इति न दोष इत्याशयः ।

---

(१) फलोपहितमिति—तत्त्वञ्च—कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकर-णवृत्तित्वे सति कार्यसमानाधिकरणात्यन्ताभावाप्रतियोगितानवच्छेदकत्वरूपम् । स्वरूपयोग्यता-रूपानिमित्तता त्वन्या । कार्यासमानाधिकरणात्यन्ताभावीयप्रतियोगितावच्छेदकत्वं [illegible]
मिति बोध्यम् । [illegible]

**"अनुविपर्यभिनिभ्यः"** ॥ **प्राणिषु नेत्युक्ताविति** । न चैतदेव सूत्रेऽभिप्रेतमिति वाच्यम् ? प्रसज्यप्रतिषेधेऽसमर्थसमासापत्तेर्वाक्यभेदापत्तेश्चेति भावः ।

कृपेरित्यर्वाचीनानां पाठमुपेक्ष्य भाष्यारूढं पाठमाह—**कृपो रो ल इति** । **रेफसदृश इति** । 'वर्णैकदेशानां वर्णग्रहणेनाग्रहणम्' इति सिद्धान्तात्पूर्ववाक्येनाप्राप्तमावृत्तिसिद्धेन द्वितीयवाक्येन सामर्थ्याद्विधीयते । "लुटि च क्लृप" इत्यादिसौत्रनिर्देशो भाष्यकारव्याख्यानं च इह प्रमाणमिति भावः ।

**क्लृप्सीष्टेति** । "लिङ्सिचावात्मनेपदेषु" इति कित्त्वान्न गुणः । **वृदिति** । 'वृतु, वर्त्तने'इत्यस्मात्क्विप् ।

**घट, चेष्टायाम्** । ये धातवोऽन्यत्राधीता इह पठ्यन्ते तेषामर्थनियमः, ये त्विहैव पठ्यन्ते तेषामुपसर्गादिनाऽर्थान्तरपरत्वेऽपि मित्त्वमस्त्येवेति न्यासधातुवृत्त्यादिषु स्थितम्, तदेतद् ध्वनयन्नुदाहरति—**विघटयतीति** ॥

**"व्यथो लिटि"** ॥ **हलादिःशेषापवाद इति** । अभ्यासान्तर्गतयकारस्य निवृत्तेरपवाद इत्यर्थः । अत एवाह—**थस्येति** ।

**ञित्वरा** । ७८१ । आदित्त्वमात्मनेपदमात्रफलकम् "रुष्यमत्वर" इति निष्ठायामिटो विकल्पितत्वादिति मैत्रेयहरदत्तादयः ।

**'दॄ, भये'** । ८११ । आभरणकारमतमाह—**के चिदिति** । **माध-**

---

बोध्यम् । एवञ्च "क्नुक्रमोः" इतिसूत्रस्थवार्त्तिकसमानाकारवार्त्तिककरणेन तत्प्रत्याख्यानरीत्यैतत्प्रत्याख्यानमपि भाष्ये ध्वनितमित्यनेन सूचितम् ।

अर्थनियम इति । अन्यथा शविकरणानां घटादिपाठादेव सिद्धौ 'ध्वन-

व इति । तस्यायम्भावः—सूत्रे दीर्घान्तपाठस्तावदविगीतः
रोऽपि दॄ विदारणे इति व्याचख्युः । उक्तं चैतत् । ह्रस्वा
"श्रदृप्रां ह्रस्वो वा" इति दृणातेर्विकल्पेन ह्रस्वविधानमनर्थकं
द्वयेन दद्रतुर्ददरतुरिति रूपद्वयसिद्धेः । न चार्थभेदः ।
त्वादिति ।

**लुग्विकरणेति** । "स्वरतिसूति" इति सूत्रे सूङिति
सूयत्योः पृथग्ग्रहणमस्याः परिभाषाया (१)ज्ञापकम् ।

**परिभाषाभ्यामिति** । उक्तपरिभाषयोः परस्परवि
योरप्यप्रवृत्तिः । अथवा अवधारणांशपरित्यागेनाविरोधेन समुच्च

**"मारणतोषण"। माधव इति** । 'शम' लक्ष; आलो
निशामन इति रूपम् । आलोचनञ्चक्षुर्जन्यं ज्ञानमेव । "पश्या

---

इत्यर्थन्तत् । आत्मनेपदन्तु अकारेणापि लभ्यते ।

ज्ञापकमिति । न च सुङ इत्युक्तेऽपि साहचर्यादलुग्विक
भविष्यतीति वाच्यम् । तस्य बहुशो व्यभिचारात् । लु
नोक्तम् लक्ष्यानुरोधेन तथैव कल्पनात् । (२)ध्वनिता चेयं प
विभाषा" इत्यत्र भाष्ये ।

---

( १ ) **ज्ञापकमिति** । अलुग्विकरणस्येति सावधारणं कैयटः ।
इत्यत्र ककारः षू प्रेरण इत्येतद्ध्यावृत्त्यर्थः । ननु ज्ञापकत्वं कैयटोक्तमयुक्तम् , पू
विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य ज्ञापकत्वासम्भवादिति चेत्परिभाष

( २ ) **ध्वनितेत्यादिना** । विदित इति वेत्तेरिदं रूपम् । दिवा
त्तानां तु अनुदात्तत्वादेव निषेधो भवतीति भावः । यदुपधेरिति पञ्चम्य
पाधिपदं विशेषणपरं य उपाधिर्यस्य तस्मादित्यर्थः । अयंभावः—यदि
पकं स्यात् , तदा हनिसाहचार्य्यविशिसाहचर्य्याभ्यामुभयोर्ग्रहणं स्यादि
तु साहचर्यमात्रं न हेतुः, किन्तु एतत्परिभाषापीत्यलुग्विकरणस्य ग्रहणमि
त्यर्थः । अवधारित इति प्रयोगप्रदर्शकः । भाष्येण ध्वनितैव परिभाषा

इत्यादौ वृत्तिकारादिभिस्तथैव व्याख्यातत्वादिति भावः । **ज्ञापनमात्रमिति** । "श्लाघह्नुङ्स्था" इति सूत्रे ज्ञीप्स्यमान इति प्रयोगादिति भावः । **एष्वर्थेष्विति** । पशुं सञ्ज्ञपयति–मारयतीत्यर्थः । विष्णुं विज्ञपयति–सन्तोषयतीत्यर्थः । सञ्ज्ञपयति रूपम्–दर्शयतीत्यर्थः । मतान्तरे तु बोधयतीत्यर्थः । प्रज्ञपयति शरम्–तीक्ष्णीकरोतीत्यर्थः । स्यादेतत् । माधवमते ज्ञीप्स्यमानो बोधयितुमभिप्रेत इति वृत्तिग्रन्थस्य का गतिस्तत्राह—**ज्ञप मिच्चेति** । **ज्ञापनमिति** । तथा च बोधने धातुभेदेन रूपद्वयं फलितमिति भावः । यदाह देवः–जानातीति ज्ञिन सिद्ध्येत् ज्ञपयति तु पुनर्मारणादौ । घटादेर्णौ मित्त्वेऽपीदमेव । ज्ञप मिदिति पदं ज्ञापने मारणादौ । तेनार्थाज्ज्ञापने ऽर्थे ज्ञपयतिपदवज्ज्ञापयेदित्यपि स्यादिति ।

**कम्पने-चलिः** । धातुनिर्देशे इक् । एवं **छदिरूर्जने**, जिह्वोन्मथने **लडिरित्यत्रापि** बोद्धव्यम् ।

"**घटादयो मितः**" ॥ माधवादीनां व्याख्यामाह—**मित्सञ्ज्ञा इति** । मकारानुबन्धा इत्यन्ये ।

"**ज्वल ह्वल**" ॥ **एषां मित्त्वमिति** । मित इत्यनुवृत्तं क्लेशेन व्याख्येयमिति भावः । "ज्वलह्वलह्मलनमोऽनुपसर्गा वा" इति पाठान्तरम् । तत्र न कश्चित् क्लेशः । **प्राप्तविभाषेति** । ज्वलादीनां पूर्वत्र पाठात्समेत्त्वमन्तत्वादिति भावः । **कथं संक्रामयतीति** । यत्तु सुधाकरेणोक्तम्–इहापि घञन्ताण्णिजिति , तन्न । "नोदात्तोपदेशस्य" इति वृद्धिनिषेधादिति भावः ।

**वृत्तिन्यासादीति** । तथा हि—"न पादमि" इति सूत्रे आया-

---

तत्र-हि विदिन इत्यत्र निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधः । "विभाषा गमहनविदविशाम्" इति सूत्रे शविकरणस्य ग्रहणं, लुग्विकरण-

मयति इत्युदाहृत्य 'यमोऽपरिवेषणे' इति मित्त्वं प्रतिषिद्ध
क्तम्। तत्र न्यासे "न कम्यमिचमाम्" इत्यतो नेत्यनुवर्त्तत
मैत्रेयादयोऽपि नेत्यनुवर्त्य व्याचख्युः। एवं हि निषेधान
ते। अन्यथा "न कमि" इत्यतः प्रागेव त्रिसूत्री पठ्येतेति

**सामर्थ्यादिति**। तपरकरणलभ्यन्तत्कालावधारणं
र्थम्। दीर्घवत्सु बाधात्त्यज्यत इति भावः।

८४९। **टुवम**। केचिदमुदितं पठन्ति। वान्त्व
हरन्ति च। तदनाकरम्। तथा हि-काशिकायाम् "आदि
रस्यानुक्तसमुच्चयार्थत्वमाश्रित्य वान्त इत्यत्रेडभावः साधि
"यस्य विभाषा" इत्येव सिद्धेस्तदसङ्गतं स्यात्। **एवञ्च क**
त्येव साधु।

**सुधाकर इति**। अन्ये तूद्वरण इति सगुणमेव प
**भागवृत्तौ त्विति**। अत्रेयमुपपत्तिः—"न श
आदिग्रहणं व्यर्थम्। वेत्यकारान्तसङ्घातग्रहणेनेष्टसिद्धेः। प
देशिकत्वप्रतिपत्त्यर्थम्। (१)अनुबन्धाश्चैकान्ताः।

यद्वा वमेरादौ यकारो लुप्तनिर्दिष्टः। तथा चोपदेशे
धो न। 'वेमुश्च केचिद्रुधिरम्' इत्यादिप्रयोगाश्चेहानुकूला
**रम, क्रीडायाम्**। अयमुदिदिति मत्वा वोपदेवादय
दाजहरुस्तन्महान्तो न सहन्त इति माधवः॥

---

ह्रस्ववीस्स्वति। फणस्यमुस्वनेष्विरयर्थः। त्यज्यत इति।

**"पाघ्राध्मा"** ॥ पा, पाने । पा, रक्षणे इति तु न गृह्यते; लुग्विकरणत्वात् । दृशीति सौत्रो निर्देशः । दृश्यर्तीति पाठस्तूचित एव । **इत्सञ्ज्ञकशकारादाविति** । तेन पपे इत्यादौ न, शितीति कर्मधारयस्योक्तत्वात् । बहुव्रीहौ तु स्यादेव दोषः । अत एवार्तिसर्त्योर्जौहोत्यादिकयोर्नेह ग्रहणम् । शपः श्लुना ऽपहारात् । चानशः सम्भवे ऽपि शकारादित्वाभावात् ।

यत्त्वाहुः-शित्यचीति व्याख्यानाच्चानशि नेति, तन्न । उक्तरीत्या कर्मधारयस्यैवावश्यकत्वे ऽचीत्यस्य वैयर्थ्यात् ॥

**"सदेः परस्य"** ॥ सदिस्वञ्ज्योरिति पाठस्तु वृत्त्यारूढोऽपि भाष्याननुगुणत्वादुपेक्ष्यः । **शद्लृ**, शातने । **विशीर्णतायामिति** । तथा च तैत्तिरीये श्रूयते—'पदश्च शीयते' इति । **शातनन्त्विति** । शदेरेव हि णिचि "शदेरगतौ" इति तत्वे ल्युटि च शातनमिति रूपम् । तथा चास्यैव धातोरिदं रूपं प्रसिद्धश्चेति तन्निर्देशः । 'गम्लृ, गतौ' 'डुपचष्, पाके'इत्यादिवदिति भावः ।

**कुच, सम्पर्चनेत्यादि** । ८९४ । 'कुच, शब्दे तारे, इति पठितस्येह

---

लुग्विकरणत्वादिति । पै इत्यस्य तु शिति पारूपाभावान्न ग्रहणमिति बोध्यम् । सौत्र इति । अन्यथा शब्दपरत्वेनामागमो न स्याद् गुणश्च स्यादिति भावः । विकरणस्तु कर्त्रर्थकत्वाभावान्नेत्यपि वक्तुं शक्यम् । अत एव प्रकृते 'अर्तिसर्ति' इति प्रयोगः सङ्गच्छते । शकारादित्वाभावादिति । न च शबाक्षिप्ते सार्वधातुके श्लुलुकाविति परनिमित्ततया स्थानिवत्त्वेन शपमादाय दोष इति वाच्यम् । आक्षेपे आक्षिप्तस्य वा शाब्दे ऽन्वये मानाभावात् । अत एव जुहुत इत्यादौ न गुणः, श्तिपि तु नादेशस्तयोः "सर्तिशास्त्यर्तिभ्यश्च" इति निर्देशादिति भावः । यद्यपि शतुस्तयोः शकारादेः सम्भवो ऽस्त्येव 'तिष्ठन्मूत्रयत' इत्यादाविव; तथापि दृशिशदिसाहचर्यान्न तयोर्ग्रहणमिति

पुनः पाठः संपर्चनादावेव ज्वलादित्वप्रयुक्तो णो यथा स्य

**'मेधृ, सङ्गमे च'** । ८६२ । 'प्रजायै गृहमेधिनाम्

गृहैर्मेधन्ते सङ्गच्छन्ते इति विग्रहः । **'बुधिर्, बोधने**

दैवादिकैर्नित्यात्मनेपदिभिश्च साहचर्यात्तथाभूतस्य तस्यैव ग्र

यत्तु माधवेनोक्तम्-अकर्मकैः साहचर्यादिति, तदुपे

दावपि चिण्दर्शनात् । तथा च माघः—'क्रमादमुं नार

श्रीहर्षोऽपि—"अबोधि तज्जागरदुःखसाक्षिणी" इति ।

**उबुन्दिर्** । बुन्दित्वा, बुन्त्वा । निष्ठायाम्-बुन्न

क्षुषज्ञानम् । **वेणृ** । ८७० वादित्रस्य-वाद्यभाण्डस्य-वादन

ग्रहणम् । **नान्तोऽपीति** । 'उत माता महिषमन्ववेनत्'

स्तथोक्तत्वादिति भावः ।

**व्यय, गतौ** । ८७४ । वित्तत्यागे तु नित्यमात्मनेपद

श्चुरादावदन्तः । **स्पश**, बाधनस्पर्शनयोः । ८८० अपस

दृत्वरप्रथ" इत्यादिना अभ्यासस्यात्वं सन्वदित्वापवादः

इत्येके इत्याह । अत्र पाठे-'यतो व्रतानि पस्पशे' इत्यादय

लाः । पस्पशा । यङन्तादाचि टाप् । सञ्ज्ञापूर्वकस्य वि

सदीर्घ इति माधवः । पसेति दन्त्यान्तः सौत्रो धातुः ।

लुकोस्तु "जपजभ" इत्यादिना ऽभ्यासस्य नुक् । पम्पस

'पम्पस इति कण्ड्वादिः'-पम्पस्यति ।

**हृञ्** । ८९२ । भारं हरति-ग्रामं प्रापयतीत्यर्थः

स्वीकरोति । स्वर्णं हरति—चोरयति । पापं हरति नाशय

**"आदेच उप"**॥ "लिटि धातोः" इत्यतो धातो

---

चकैरपि तदनुकूलव्यापारार्थकस्यार्थनिर्देशस्तथा प्रकृते

रणार्थकस्य शातनपदेनार्थनिर्देश इति भावः ।

आत्मनेपदी गत इति । यद्यपि पूर्वं न पठितस्तथाऽपि

श्यते। तदाह–उपदेशे एजन्तस्येति। धातोः किम्? गोभ्याम्। नौभ्याम्। अस्ति ह्यत्रापि गमेर्डोस्। ग्लानुदिभ्यां डौरित्युपदेशे एच्। उपदेशे किम्? चेता। स्तोता। लाक्षणिकत्वादेवात्र न भविष्यतीति चेत्? एवन्तर्हि वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इतिज्ञापनार्थमिदम्।

---

त्पन्नः सर्वैतरतन्त्रसिद्धान्तबाधकविचारार्थः पस्पशाशब्द इत्यन्ये। उभयतः स्पाशेत्यप्यस्यैव।

धातोः किमिति। डौकितेत्यादावेजुपदेशसामर्थ्यात्समुदायोपदेशाथावयवानां नान्तरीयकतयोच्चारणेनैवोपदेशाभावाच्च न दोष इति प्रश्नः।

उपदेशे एजिति। डो इत्याद्योकारोच्चारणन्तु सर्वनामस्थानविषये "गोतो णित्" इत्यस्य तन्निमित्तकवृद्धेश्च परत्वात्प्रवृत्तौ चरितार्थम्। न चोपदेश इत्येजन्तविशेषणम्। धातोरित्यस्याभावे तदलाभादिति भावः।

अत्र वदन्ति–उणादीनामव्युत्पन्नत्वे नेदं फलम्। किं च 'धातोः' इत्यनुवृत्तौ "उदीचां माङ" इत्यादावात्वानापत्तिरनुबन्धलोपोत्तरन्ताद्भिनिर्मुक्तस्यैव धातुताया "न धातुलोप" इति सूत्रे भाष्यकैयटयोः स्पष्टत्वात्। किं च तत्सत्त्वे तस्य धातुसञ्ज्ञायां ङान्तस्य धातुत्वे एजन्तस्य धातुत्वाभावः। न च तत्सत्त्वेऽपि तत्प्राग्भागस्यैव धातुत्वमिति न दोषः। एवं हि ङकारसत्त्वेऽपि धातोरुपदेशे एजन्तत्वानपायेनात्वे बाधकाभावादस्य निर्देशस्य "नानुबन्धकृतमनेजन्तत्वम्" इत्यर्थज्ञापकता भाष्योक्ता ऽसङ्गता स्यात्। तस्मादुपदेश इति षष्ठ्यर्थे सप्तमी तस्य चेच्च इति विशेषणमेजन्तस्योपदिश्यमानस्येत्यर्थ इति भाष्योक्तमेव साधु। गोभ्यामित्येवोपदेशपदफलम्। "नौद्व्यच" इत्यादिस्त्वनुवादो नोपदेश इति स्पष्टं व्यङ्विधायके भाष्ये। उणादीनामव्युत्पन्नत्वाड्डो इत्यादीनामुपदिश्यमानैजन्तत्वमस्तीति न वाच्यम्, एवञ्चोपदेशग्रहणस्य वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्तिज्ञापकतापि (१)चिन्त्या। अत एव भाष्ये गोभ्यामित्येतद्व्यावृत्तये धातुग्रहणानु-

---

(१) चिन्त्येति। अदोऽभवदित्यत्र "ओत्" इति प्रगृह्यत्वमाशङ्क्य "आतोऽशिवप्रतिषेधः" इति वार्तिकप्रत्याख्यानाय एषा तत्रोपन्यस्तेति बोध्यम्।

केचित्तु—एषा वर्णग्रहणे फलाभावान्न प्रवर्तते अदोऽभवदित्यादौ गौणमुख्यन्यायेन प्रगृ-

तेन क्रापयतीत्यादौ कृतात्वानां पुक् सिद्ध्यति। अशितीति पर्युदासे
दोषाः। तथा हि—सुग्लः। सुग्ला। सुग्लानः। आकारान्तलक्षणाः क
चो न स्युः। प्रत्ययनिमित्तं ह्यात्वम्। आदन्ताच्च प्रत्यय इत्यन्योन्याश्र

किञ्च जग्ले इत्यत्राभ्यासे इकारः श्रूयेत "द्विर्वचनेऽचि" इति
नात्। तस्मात्प्रसज्य प्रतिषेध एवायम्। विषयसप्तम्यान्तु पर्युदासेऽपि
तिः। अत्र च "ह्वावामश्च" इति सूत्रेण कबाधनार्थं पुनरण्विधानं ज्ञाप
तदाहुः,—अनैमित्तिकमात्वं शिति तु प्रतिषेध इति; तदेतदाह—
शितीति। इत्सञ्ज्ञकशकारादौ प्रत्यये परे नेत्यर्थः। धातुग्रहणा

---

वृत्तिमुक्त्वा ऽथापि निवृत्तन्तादित्याद्युक्तम्। मेङादौ परङकारसत्त्वे
पदिश्यमानैजन्तत्वाभावेन तस्य "नानुबन्धकृतमनेजन्तत्वम्" इति
सुस्था। अनुबन्धलोपे तु एजन्तत्वाभावे ऽपि धातुसञ्ज्ञादिकार्या
वतो ऽप्युपदेशे तात्पर्याच्चोपादिश्यमानस्यैजन्तत्वसत्त्वेन भवत्येवात
पुग्विधौ (१) गामादाग्रहणेष्वव "अध्याप्य गत" इत्यादिभाष्यप्र
लाक्षणिकाकारान्तस्यापि ग्रहणमिति क्रापयतीत्यादौ न दोषः। अ
"ओत्" सूत्रादौ वर्णग्रहणे ऽपि लक्षणप्रतिपदोक्तपरिभाषा भाष्ये स
खेनेत्याद्यप्यस्य व्यावर्त्यमित्यन्यदिति। (२) अन्योन्याश्रयादिति। पू
प्रत्यये कृते आत्वे तु परदेशस्याविष्टस्वत्वादेषामप्राप्तावनिष्टं रूपमव
न क्षतिरिति। 'सुग्ल' इत्यादिलक्ष्ये न क्षतिरित्यर्थः। विषयसप्त

---

(१) गामादाग्रहणेष्ववेति। न च घेटो धाशब्दलाक्षणिकत्वेन घुत्वा
न च गामादानां ग्रहणं यस्मिन् शास्त्रे इति बहुव्रीहिणा दाघटित"दाधाघु"इति शा
प्रवृत्तिस्वीकारेण—दोष इति वाच्यम्। "घुमास्था" इति सूत्रे पै धातोरपि ग्रहणापत्ते
स्यम्। गामादिग्रहणस्य घेटोप्युपलक्षणत्वेनादोषात्।

केचित्तु—"दोदद्घोः" इति सूत्रे घेटो व्यावृत्तये कृतेन दाग्रहणेन घाग्रहणेष्ववि
परिभाषान्तरं ज्ञाप्यते। अन्यथा धाञो ह्यादेशेन बाधे तदप्रवृत्तौ घेटोऽपि लाक्षणिक

प्रत्ययस्याशितीति कर्मधारयेण विशेषणात्। यदि तु शितीति बहुव्रीहिः स्यात्तर्हि जग्ले इत्यादि न सिद्ध्येत्। एशः शित्वात्॥

**"आतो लोप इटि च"**॥ अजाद्योः किम्? ग्लायते। यक्। जाग्लायते। यङ्। दासीय। इट्। आर्धधातुकयोः किम्? यान्ति। व्यत्यरे। कर्मव्यतिहारे तङ्। लङ उत्तमैकवचनमिट्।

**दैप्, न्यक्करणे**। द्यायति। दद्यौ। **घुमास्थेत्यत्रेति**। व्याख्यानात्; तन्त्रान्तरे स्यतिजहातीति श्यना निर्देशाच्चेति भावः। **विभाषा घ्रेति**। श्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः। एवं "शाच्छासा" इति पुग्विधावपि बोध्यम्। तेनास्य "अर्त्तिह्री" इति पुगेव। साययति॥

**"ऋतश्च संयोगादेर्गुणः"**॥ "ऋच्छत्यृताम्"॥ **इह सूत्रद्वये**ऽपि प्राचा अवृद्धिनिमित्ते लिटीति व्याख्यातम्। तत्सूत्राननुगुणम्। "दयतेर्दिगि लिटि" इति प्रकान्तं, तत्रावृद्धिनिमित्ते इति कुतस्त्यम्। ननु स्वविषये वृद्धिर्बाधिकेति चेत्? न, परत्वेन गुणस्यैव न्याय्यत्वात्।

यत्तु पूर्वविप्रतिषेधेन वृद्धिरिति। तन्निर्मूलं निष्फलञ्च। तदेतदाह—

**गुणः स्याल्लिटीति च**॥

**"गुणोर्त्ति"**॥ अर्तीति श्त्यादिह्वाद्योश्छान्दसेन लुका निर्देशः। ऋ-

---

परनिमित्तत्वसत्वाज्जग्ले इत्यस्य त्वसिद्धिरिति बोध्यम्। प्रसज्यप्रतिषेधेऽपि शितीति विषयसप्तमीति बोध्यम्।

कर्मव्यतिहारे इति। **राधातोरिति शेषः।**

पूर्वविप्रतिषेधेनेति। **गुणे वृद्धौ प्रक्रियागौरवं स्यादिती(१)ष्टवाचिपरशब्दाश्रयेण पूर्वं वृद्धिस्वीकार एवोचित इति तदाशयः।**

तन्निर्मूलमिति। **ननु ऋधातोर्लिटि "गुणाद्वृद्धिः पूर्वविप्रतिषेधेन" इति वार्त्तिकं मूलमत आह**—निष्फलमिति। **न च पूर्वविप्रतिषेधाभावे परत्वाद् गुणे "सकृद्गतौ" इति न्यायाद् वृद्धिर्दुर्लभेति वाच्यम्। गुणप्रवृत्तेः पूर्वम् "अत उपधायाः" इत्यस्याप्राप्त्योक्तन्यायस्योक्तिसम्भवाभावात्। स्पष्टं चेदं कैयटे। प्रक्रियागौरवन्तु न वचनापेक्षयाधिकं दुष्टमिति तदाशयः।**

लुकेति। **न्यायप्राप्तया तदनुत्पत्त्यर्थः।**

---

(१) **इष्टवाचीति**। तत्र हि—"विप्रतिषेधे परं कार्य्यम्" इति सूत्रे परमित्यस्य यदिष्टमित्यर्थात्। परशब्दो हीष्टवाची। तेन 'सर्वे पूर्वविप्रतिषेधाः सङ्गृहीताः' इति पूर्वविप्रति-

ग्रहणमेव तु सुकरमिति हरदत्तः । तन्न । यङ्लुग्व्यावृत्त्यर्थत्वात् श्तिब्निर्देशस्य । अकारे विधेये गुणग्रहणं चिन्त्यप्रयोजनम् । "अयङ् यि क्ङिति" इति सूत्राद् यीत्यनुवर्त्तते; तच्च लिङो विशेषणम् । तदाह—**यादीति** । तेनेह न—संस्कृषीष्ट ॥

**"सार्त्तिशास्त्यर्त्तिभ्यश्च"॥ श्वाधोरङ् नेति** । तथा च प्राचा श्वादौ यदुदाहृतं तदाकरविरुद्धमिति भावः ।

**प्रसवोऽभ्यनुज्ञानमिति** । "सवितुः प्रसवे" इत्यादौ तथा दर्शनात् ।

**"हुश्नुवोः सार्वधातुके"** ॥ हुश्नुवोः किम् ? योयुवति । नोनुवति । असंयोगपूर्वेति किम् ? अक्ष्णुवन्ति । असंयोगपूर्वग्रहणमोर्विशेषणं, न तु श्नु प्रत्ययस्य । तेनाप्नुवन्तीत्यत्रापि यण् नेति भावः । स्यादेतत् । हुश्नुग्रहणं व्यर्थम् । योयुवतीति यङ्लुगन्तस्य प्रकारान्तरेणैव वारणात् । तथा हि छान्दसो यङ्लुक् । तत्र प्रत्ययस्यार्द्धधातुकत्वादेव यणन भविष्यतीति

व्यर्थमिति । न चायुवन्नित्यादौ दोषः । तत्राडागमस्याभीयासिद्धत्वादेव यणभावसिद्धेः । लावस्थायामडागमे ऽपि तत्स्थान्याश्रयमपि तत्समानाश्रयमित्यसिद्धत्वं बोध्यम् । "असिद्धवत्" सूत्रप्रत्याख्याने तु "एरनेकाच" इत्यत्र 'अनेकाच' इति योगं विभज्य 'इणो यण्' इत्यनुवर्त्य योगविभागस्ये(१)ष्टसिद्ध्यर्थतया व्याख्यानेन चाडादिसहिताऽनेकाचश्चेद्यण् तदा इवर्णान्तस्येण एवेति नियमान्न दोषः । द्वितीयन्त्वेरसंयोगपूर्वस्येत्येतद् अनेकाच इत्यनुवृत्त्या विध्यर्थं बोध्यम् । न चाचार्त्कापि भानवतीत्यादौ दोषः । परेण गुणेन बाधात् । अयञ्च (२)मद्ध्येऽपवादन्याये(३)नोवङ एवापवाद इति भावः । "आरभ्यमाणेऽप्यस्मिन्सूत्रे" इति भाष्यात् । एतदर्थम् "असिद्धवत्" सूत्रारम्भ एव (४)श्रेयानिति परे ।

(१) इष्टसिद्ध्यर्थतयेति । सूत्राणां विश्वतो मुखत्वात् योगविभागे ऽप्याचार्यतात्पर्यात् । तेनेष्टसिद्धिरेव न त्वनिष्टापादनमित्यर्थः । अत एव "आतो धातोः" इति सूत्रे "आत" इति योगविभागेन 'रक्' इत्याद्येव लोपो न तु हाहा इत्यादाविति भावः । तदुक्तमभियुक्तैः—

अल्पाक्षरमसन्दिग्धं सारवत् विश्वतो मुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥

चेत्, सत्यम्। हुश्नुग्रहणादेव(१) ज्ञापकाद् भाषायामपि क्वचिद्यङ्लुग्भवतीति भाष्यकाराः ।

चान्द्रास्तु यङ्लुको भाषाविषयत्वं निःसङ्कोचमेवेच्छन्ति । ज्ञापकतामेव ध्वनयितुमिहानेकाच इत्यस्यानुवृत्तिः प्रदर्शिता । तेन युवन्ति नुवन्तीत्यादेर्व्यावृत्तौ सत्यां हि हुश्नुग्रहणस्य ज्ञापकता निर्वहति । अन्यथा सार्वधातुकपरयोर्हुश्नुवोरनेकाच्त्वाव्यभिचारात्किन्तदनुवृत्त्येति दिक् ।

**इङादेशस्यैवेति** । न चास्यापि ग्रहणमस्त्विति वाच्यम् । गाते इत्यादौ तङ्ं प्रवर्त्य ङकारस्य चरितार्थत्वात् । आदेशङकारस्तु न चरितार्थः । स्थानिवद्भावेन ङित्त्वादेव तङः सिद्धत्वादिति भावः ।

**जुकुवे इति** । "कुहोश्चुः" इति कस्य चः । ९५० । **च्युङ् इति** । अस्मात्पचाद्यचि विच्यवः । बवयोरभेदात् विच्यव इति माधवः । **रुङ् ९५१** । **रेषणं हिंसेति** । रिषेर्हिंसायां पठितत्वात् । वोपदेवोऽप्याह—रुङ् वधे गत्यामिति । प्राचा तु भाषणे चेति पठितम् । व्याख्यातृभिश्च रोषणे चेति पाठान्तरमुपन्यस्य रोषणं कोपोत्पादनमिति व्याख्यातं तत्सर्वं माधवादिविसंवादादुपेक्षितम् ।

**प्रणिमयते इति** । नन्विह "नेर्गद" इति कथं स्यात् । शिद्धिषये

---

चान्द्रास्त्विति । अत्रारुचिबीजन्तु पाणिनिसूत्रभाष्यविरोधः ।
इति भाव इति । व्याख्यानादिति तत्त्वम् ।

---

"हुश्नुवो"रिति । हुश्नुग्रहणमनर्थकम्, अन्यस्याभावात् । न हि अन्यत्सार्वधातुकेऽस्ति यस्य यणादेशः स्यात् । ननु चायमस्ति यातिवातीतिङ्क्तीत्यनुवर्तते । इदं तर्हि यातः वातः इति अचीति वर्तते । इदं तर्हि यान्ति वान्ति योरिति वर्तते । एवमपि धियाञ्चल धियन्ति

आत्वाभावेन मारूपाभावात् । किञ्च—अशिद्विषये कृता
न्दुर्लभम् । प्रतिपदोक्तस्यैव माधातोर्ग्रहणौचित्यात् । "गा
इति चेत्, मीनातिमिनोत्योरपि कृतात्वयोरतिप्रसङ्ग इत्यत
इष्टत्वादिति । अयं भावः-"दाधाघु" इति सूत्रे प्र
स्यत्र णत्वसिद्धये भाष्यकारैरित्थं सिद्धान्तितम् । णत्वविधे
स्थाने घुप्रकृतिमाङिति पठनीयम् । घुश्च प्रकृतिश्च माङ्
तिश्च कस्येत्याकाङ्क्षायां सन्निधानात्पूर्वोत्तरयोरेव । अतो
नापि मा मान इत्यत्र मीनातिमिनोत्योश्चातिव्याप्तिः । मा
वोपात्तत्वादिति ।

दिग्यादेशेनेति । दयतेर्लिटि द्वित्वं प्राप्तं
विशेषविहितेन दिग्यादेशेन द्वित्वशास्त्रस्य बाधः । पीव्य
ध्यते, विषयसप्तमीमाश्रित्य लिङुत्पत्तेः प्रागेव तयोः प्र
शविधौ तु परसप्तम्येव न तु विषयसप्तमी, लक्ष्या(१)
चयति—इष्यत इति ॥

"स्थाघ्वोरिच्च" ॥ इह 'आत्मनेपदेषु' इति
स्मैपदेषु "गातिस्था" इति लुकः(२) प्रवृत्तेः ।

---

विशेषविहितेनेति । 'सत्यपि सम्भवे बाधनं भवति' इति
यासुड्विषये सीयुड् नेति भावः । पीव्याभ्यामिति ।
कः क्याप्" । इदम् "अस्तेर्भूः" इत्यादीनामप्युपलक्षण
लुकः प्रवृत्तेरिति । न च धेटो ऽधासीदित्यादौ दो
घोरपि परस्मैपदे ऽप्रवृत्तेरिति भावः । एतदपेक्षया ऽनु

---

(१) लक्ष्यानुरोधादिति । दयतेर्लिटि द्वित्वे प्राप्ते तद्बाधि

डीङ्—**विहायसा**—आकाशेन। 'वा तु पुंस्याकाशविहायसी' इत्यमरः। विहायसामित्यनाकरः पाठः।

**"मान्बध"**॥ अभ्यासस्य विकार आभ्यासः स चेत्त्वमेव। तथा हि–दीर्घश्रुत्या ऽच इत्युपस्थितम्। न च मानादीनामभ्यासविकारभूतो ऽच् इकारादन्यः सम्भवति। यदि तु ह्रस्व इत्येव गृह्येत, तर्हि तद्धितनिर्देशो व्यर्थः स्यात्। स हि अभ्यासे ईकारश्रवणार्थङ्क्रियते। अन्यथा ऽजन्तस्याभ्यासस्य विधीयमानो दीर्घः हलादिःशेषमात्रं प्रतीक्षताम्, न तु सन्वदित्त्वमपि। तदेतदाह—**इकारस्येति**।

अत्र न्यासकारः–"धातोः कर्मण" इति सूत्रे वाग्रहणं विभज्य त्रिसूत्रीविशेष्यतया सम्बध्यते। सा च व्यवस्थितविभाषा। तेनेह सूत्रद्वये ऽर्थविशेषोपाहितेभ्य एव सन्निति। स च विशेषो मुनित्रयेण साक्षादनुक्तोऽपि वृत्तिकारादिभिरुपनिबद्धः। तद्दर्शयति–**गुपेर्निन्दायामित्यादिना**॥

**"सन्यङोः"**॥ **सन्नन्तस्येत्यादि**। यत्तु प्राचा "सन्यङोः" इति सप्तमीमाश्रित्य सनि यङि च परे इति व्याख्यातम्; तन्न। प्रतीषिषति अटाट्यते इत्यादौ सन्यङोः प्रकृतिभागस्यैव द्वित्वापत्तेः। आट आटतुरित्यादौ लिट्प्रकृतेर्यथा। न हि निमित्तत्वाविशेषे लिटो न द्वित्वं, सन्यङोस्तु तदिति सम्भवति।

यत्त्वत्र प्राचोक्तं शपोऽकारेण सिद्धे सन्यङोरकारोच्चारणम् "अजादेः" इति द्वित्वार्थम्। तेन यसनोर्द्वित्वमिति, तन्न। निमित्तस्य कार्यित्वायोगात्। न चाकारोच्चारणस्य सामर्थ्यमिति युक्तम्, अकारफलानां बहूनां सत्त्वात्।

तथा हि–पापचक इत्यादावल्लोपस्य स्थानिवत्त्वात् "अत उपधायाः" इति वृद्धिर्न प्रवर्तते। किञ्च दित्साधित्सलिप्सादिभ्य एकाच्त्वाभावादिड् न।

---

तस्य स्वरितत्वप्रतिज्ञा तु "उञ्छ" "विभाषोपयमने" इत्याद्यर्थमावश्यकी-

अपि च दित्स्यन्धित्स्यमित्यत्राचो यति कृते "यतोऽना
सिद्ध्यति । तथा च प्राचाप्युक्तम्—'अजन्तभूतपूर्वादपि
त्स्यम् इति ।

किञ्च— पिपठिषि ब्राह्मणकुलानीत्यत्राल्लोपस्य स्थ
क्षणो नुम्न ।

अपि च—"यस्य हल" इत्यत्र यस्येति सङ्घातग्र
यलोपस्याावृत्त्यर्थमिति सिद्धान्तः । तथा चापापचिष्टेत्यादौ
फलम् ।

अपि च—पापच्यतेः "अचो यत्" पापच्यः ।
कथंचिद्यलोपे णित्युपधावृद्धौ "चजोः" इति कुत्वे पापाक
अपि चापापाचि फलं स्वयमेव,अपापचिष्ट वेति यङन्तस्या
कर्मकर्त्तरि" इति च्लेश्चिण्विकल्पः सिद्ध्यति । तस्मात्
षष्ठ्येव युक्ता । अत एव युङ्लुकि प्रत्ययलक्षणेन यङन्तत्वा
ति । परसप्तम्यान्त्वङ्गकार्यत्वात् "न लुमता" इति निषेधः

**दानशानौ चेति ।** आर्जवनिशानार्थाविति भाव
**ह्यिति ।** गोपनादौ धातुपाठोपात्ते इत्यर्थः । **चुरादय**
नुपूर्वीमात्रसाम्येऽपि भ्वादयो भिन्ना एवेत्यर्थः । भेदाभ्युपग

---

आद्युदात्तः सिद्ध्यतीति । यति अतो लोपे यदन्तस्य द्व्यच
इति तु च्छान्दसमिति भावः । यदुत्पत्तिवेलायान्द्व्यच्कमि
ह—अजन्तभूतेति । "अतो लोप" इत्यादावार्द्धधातुक इति
पूर्वं लोपे कृते भौतपूर्विकाजन्तत्वमादाय यदिति "यतो
भाष्ये स्पष्टम् । एवञ्च यदुत्पत्तिवेलायामपि द्व्यच्कत्वमि
सप्तम्यामपि तद्धितार्थविषये जातस्य द्विगोर्निमित्तत्वात्
"द्विगोर्लुगनपत्ये" इत्यत्रोक्तं ; तथा लोपस्यापि परनि
गणयतीत्यादौ अल्लोपस्य स्थानिवत्त्वात् ...

**अनुबन्धस्येत्यादिना** । अभेदे तु सनन्तादिवाकर्तृगफलाण्ण्यन्तादपि तङ् स्यादिति भावः । **इङ्गुणाविति** । यद्यपि "हलन्ताच्च" इति सनः किरवेनापि गुणः सुपरिहरस्तथापीडभावायोक्तहेतुरनुसर्त्तव्यः । एवञ्च गुण-प्रसङ्गस्यैवाभावात्किङ्कित्त्वान्वेषणेनेति भावः ।

**मीमांसत इति** । यत्तूत्तरतन्त्रे वाचस्पत्यादौ मीमांसाशब्दो माङ् मान इत्यस्मादुत्पन्न इत्युक्तम् । तद्यदि समर्थनीयमित्याग्रहस्तर्हीत्थमाशयः कल्प्यः । इह सन्प्रकृतिस्तावदात्मनेपदार्हा चुरादिकाद्भिन्नैवेति स्थितम् । मान, पूजायामित्यादिवृत्तिकारग्रन्थोऽपि भङ्क्त्वा व्याख्येय एव । न हि तस्मादयं सन् । एवं स्थिते सन्प्रकृतिरनुदात्तेदेवेति मानाभावान्ङिदेवास्तु । नुक् च सूत्रे निपात्यताम् "मुण्डमिश्र" आदिसूत्रे हलकलयोरदन्तत्ववत् । न च वैयाकरणानामुपायेष्वाग्रहः ।

"उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः" ।

इत्युक्तेः । न चैवं "सनि मीमा" इतीत्प्रसङ्गः । भ्वादिसाहचर्येणेच्छा-सन्येव तद्विधानादिति ।

**रभ**–राभस्ये । राभस्यमुपक्रमः ।

**"वेः स्कन्देरनिष्ठायाम्"** ॥ अषोपदेशत्वादप्राप्ते विभाषेयम् । यत्तु "सात्पदाद्योः" इति निषेधे प्राप्ते इति, तन्न, निषेधस्य प्राप्तिपूर्वकत्वात् ।

---

इति भावः ।

परे त्वेवं सति भ्वादावनुदात्तेषु 'गुप गोपन' इत्यादिः पाठोऽनर्थकः । तस्माच्छब्विकरणा अप्येते । अत एव "दाधर्ति" इति सूत्रे तिजेर्यङ्लुगन्तादात्मनेपदमिति भाष्यं सङ्गच्छते ।

अन्यथा णिजन्ताद्यङ्णिलोपयोरपि निपात्यता वक्तव्या स्यात् । गुपादिष्वनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदमित्यस्य भाष्यस्य सन्प्रकृतिष्वर्थविशेषविशिष्टेषु तत्करणसामर्थ्यादित्यर्थः । मूलद्वयमपि वृत्य-न्तरोधेनेत्याहुः ।

**कृत्येवेदामिति** । एतच्च माधवादिग्रन्थे स्पष्टम् ।

प्राचा तु विष्कन्दतीत्युदाहृतम् , तन्नेति भावः ।

**न सम्बद्ध्यत इति** । तथा च पर्युदासाविषय

न्तेऽपि षत्वं भवत्येवेति भावः । अत एवाह—**पारिष्क**

**णम**–प्रह्वत्वे । अस्य क्वचिदुदित्पाठः प्रामादिकः

**अस्रूपदिति** । लृदित्त्वादङ् । प्राचा त्वस्राप्सीत्

प्युदाहृतस्तत्प्रामादिकम् । "कृषमृष" इति वार्त्तिकमद्ध

प्रामादिक एवेत्यवधेयम् ।

**थम**—उपरमे । केचिदमुमिदितं पठन्ति ।

**कित**–निवासे । **चिकित्सतीति** । रोगमपनयत

कित्सति-निगृह्णाति । क्षेत्रे तृणश्चिकित्सति—अपनयति

स्वाश्रयं कश्चिकित्सत्विति खण्डनम् । तद्व्याख्यावसरे

युक्तमिति वर्द्धमानः । तत्र वर्द्धमानस्य प्रमाद इति शब्द

तदेतद् ध्वनयति-**कश्चिदिति** ।

**भज**-सेवायाम् । ९८९ । **भक्ष्यति** । भ

"हिरण्यदा अमृतत्वं भजन्ते" इति मन्त्रे भजिष्यन्त इत्य

क्वाचिद् दृश्यते, तल्लेखकप्रमादात् ।

**डुवप्** । "ड्वितः वित्रः" । उप्त्रिमम् । टुवबि

प्रामादिकः ॥

**"वेञो वयिः"** ॥ **इकार इति** । न त्वित्स

---

ति । अत एव प्रनिमीमांसत इत्यत्र "नेगद" इति णत्व

च्छासनन्त एव माङ्यपि तत्प्रवृत्तेः । "अनुदात्तेतश्च

त्वश्माञ्च । परेण "सनाशंस" इत्युप्रत्ययेन बाधात् ।

क्षमिता क्षमी" इत्यमरो "बीभत्सुरित्यर्जुननाम" इति च

-भ्राव: ।

**वयेस्तासावभावादिति** । न हि तासौ विद्यमानत्वं स्थानिवद्भा-वेन लभ्यम् , अशास्त्रीयत्वात् । न च "अचस्तास्वत्" इति निषेधस्य शा-स्त्रीयत्वादतिदेशोऽस्त्विति वाच्यम् । अच इत्युक्तेरल्विधित्वात् ।

**वद्**–व्यक्तायां वाचि । **उवादिथेति** । "कूले यदूदिथ वचस्तपना-त्मजाया" इति पल्लवस्य प्रमाद एव ॥

**"इवयतेरः"** ॥ **पररूपमिति** । अतो लोपस्तु न भवति । आर्द्ध-धातुकोपदेशकाले यदकारान्तमिति व्याख्यातत्वात् । **अश्वयीदिति** ।

---

नामपीत्सञ्ज्ञकत्वमिति भाष्यमते भाविधातुत्वमादायेका निर्देशोऽयमिति न नुमिति बोध्यम् ।

अल्विधित्वादिति । यद्यप्युपदेश इत्यस्य तत्रापकर्षणेन स्थान्युपदेशे एज-न्तत्वमस्त्येवेति न तदर्थं स्थानिवत्वापेक्षा ; "उपदेशेऽत्वत" इत्यस्य प्राप्तेश्च, तथाऽप्युपलक्षणमिदम् । प्रत्यासत्त्या यन्निमित्तवैकल्य(१)प्रयुक्तोपदेशा-प्रवृत्तावतिदेशप्रवृत्तिर्मृग्यते तस्य धर्मस्य शास्त्रीयस्यैव ग्रहणान्न दोष इति बोध्यम् ।

---

(१) **यन्निमित्तेति** । यन्निमित्ताभावप्रयोज्यप्रधानशास्त्राप्रवृत्तिरित्यर्थः । न च यड्-भ्याम् इत्यत्र णिलोपे स्वादित्वाजादित्वोभयाभावप्रयोज्य "यचि भम्" इत्युपदेशाप्रवृत्ति-रिति तदतिरिक्तनिमित्तकत्वेनेष्ठवद्भावे वर्णाश्रयत्वाभावाद्भसंज्ञा स्यादेवेति कथं जश्त्वमिति वाच्यम् । यन्निमित्तवैकल्येत्यत्र निमित्तपदेन साहश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्य ग्रहणेनादोषात् ।

तथाहि–णिः इष्ठवद्भवति इत्यतिदेशीयसादृश्यप्रतियोगितावच्छेदकीभूतो य इष्ठत्वरूपो धर्मः तद्व्यापकीभूतो धर्मः स्वादित्वरूपो धर्म। नत्वजादित्वरूपः, भूयिष्ठ इत्यादौ व्यभिचारा-दिति न दोषः ।

नचैवमपि "यचि भम्" इत्यत्र यचीतिद्वन्द्वनिर्देशेन भसंज्ञायां यकारादित्वाजादित्वैतद-न्यतरत्वेन निमित्तभावदन्यतरत्वे साहश्यप्रतियोगितावच्छेदकइष्ठत्वव्यापकत्वमस्त्येवेति पुनरपि

नन्विहान्तरङ्गत्वाद् गुणायादेशयोः कृतयोर्यान्तत्वादेव वृद्धि
णिश्विग्रहणेनेति चेत्, सत्यम् । न (१)सिच्यन्तरङ्गमस्तीति
ग्रहणम् । तेन चिरिणोतिजिरिणोत्योर्यङ्लुगन्तानाञ्चिनीप्र
अचिरायीत् । अजिरायीत् । अचेचायीदित्यादि सिद्धयति । चु
लुम्पतीत्यर्थः । उक्तं हि कविकल्पद्रुमे–चुलुम्प लोपे इति । "
चुलुम्पाद्यर्थम्" इति वार्त्तिके व्यवहृतोऽयम् ॥

इति भ्वादयः ॥

---

"ऋतेरीयङ्" ॥ ऋतिः सौत्र इति । तान्त
निर्दिष्टः । वश्चिलुञ्च्यृतश्चेत्यनुवादात् ।

यत्तु वदन्ति–ईयङो दीर्घोच्चारणात्तान्तोऽयम् । इदन्तत्वे
र्घेणैव सिद्धेरियङमेव कुर्यादिति, तन्न, "एरनेकाच" इति
दीर्घस्य दुर्लभत्वात् । न च यङेवास्तु "अकृत्सार्व" इति दीर्घो

---

गुणायादेशयोरिति । गुणे इगन्तत्वाभावाद् वृद्ध्यप्राप्त्याया
न सिचीति । सिचि वृद्धेर्येन नाप्राप्तिन्यायेनान्तरङ्गबाधकत्व
ज्ञापनार्थमिति । न्यायसिद्धस्यैव बोधनार्थमित्यर्थः । न त्वपूर्व
भ्रमितव्यन्तत्वासम्भवादित्यन्यत्र विस्तरः ॥

इति भ्वादयः ॥

---

अनुवादादिति । ऋदन्तधातोस्तु न तत्र ग्रहणम्, व्याख्यान
इति साहचर्याच्च हलन्तस्यैव ग्रहणं बोध्यम् । यणापत्ताविति
णिङन्यन्यायेन धात्ववयवभिन्नस्येकारभिन्नस्यैव वाऽचो
वाच्यम् । ईदृशे स्थले तन्न्यायाविषयस्यान्यत्रोपपादितत्वा
णिचि गुणाद्यनापत्तेश्चेति भावः । इत्युत्प्रेक्षेति । तेन सिद्धे ई

चिता। "सन्यङोः" इति द्वित्वा(१)पत्तेः।

**कृपायाञ्चेत्येके इति**। ऋतीयत इति। कृपापर्यायेषु–'ऋतीयते स्यात् घृणयोः' इति नानार्थवर्गे च भट्टमल्लेनाभिधानात्। "अर्त्तनञ्च ऋतीया च हृणीया च घृणार्थकाः" इति जुगुप्साकरुणोभयवाचिना घृणाशब्देनार्त्तनादेरर्थनिर्देशं कुर्व्वन्नमरोऽपि ऋतीयतेद्व्यर्थतायां प्रमाणमिति धातुचन्द्रोदये उक्तत्वाच्चेति भावः।

**शेषादिति**। यत्तु प्रसादकृता ईयङभावे आर्त्तिष्टेत्यादावात्मनेपदमुदाहृतम्, तत्प्रामादिकमिति भावः॥

**"हुझल्भ्यो"**॥ "घसिभसोर्हलि" इत्यतो हलीत्यनुवृत्तेरिडादेर्न। रुदिहि। स्वपिहि। **अत्तादिति**। धित्वात्परत्वात्तातङ्। स्थानिवद्भावेन पुनर्धित्वन्तु न। 'सकृद्गतौ' इति न्यायात्।

यद्वा "हेर्धिः" इति स्थान्यादेशयोर्द्वयोरपीकार उच्चारणार्थः। हकारस्य धकार आदेशः। तेन हलीत्यपि नानुवर्त्त्यम्। नापि तातङः प्रसङ्गः॥

**"अनुदात्तो"**॥ **वनतीतरेषामिति**। वनतेरव्यभिचारान्न विशेषणमिति भावः।

---

न्तत्वे प्रमाणमित्युत्प्रेक्षे(२)त्यर्थः। ङ्यप्रत्ययेन सिद्धे ईयङ्करणन्तान्तत्वज्ञापनार्थमित्यन्यत्र।

अनुवृत्तेरिति। अर्थान्तरासम्भवाच्च हला(३)देर्हेरित्यर्थ इति भावः। उच्चारणार्थ इति। यत्राङ्गेन प्रत्ययाक्षेपस्तत्र हकाररूपप्रत्ययस्य हान्तस्य चासम्भवात्प्रत्ययावयवहस्येत्यर्थः। तेन वागृहारित्यादौ न दोषः। "हुझल्भ्य" इति विशेषणन्तु श्रुतत्वाद्धस्यैव। एवञ्च हस्येटा व्यवहितत्वाद्रुदिहीत्यादौ न दोषः। अत्तादित्यत्र तु न धिः। हत्वस्याल्विधित्वेन स्थानि-

---

अथादादिप्रकरणम्।

(१) द्वित्वापत्तेरिति। यङ्प्रत्यये "अकृत्सार्व" इतिदीर्घेण सिद्धे ईयङ्करणात्तान्तो-

यत्तु प्राचा एषामनुनासिकस्य लोप इत्युक्तम् , तन्न , नमिमन्योर्मि नहमुचमस्जादीनामनन्त्यस्यापि लोपप्रसङ्गात् । **अनुदात्तोपदेशा इति** अनुनासिकान्ता इति भावः । **तनोत्यादय इति** । अत्रापि प्राग्वत् ।

---

**धर्मत्वाभावेन च स्थानिवत्त्वाभावात् । स्पष्टञ्चेदं प्रकृत(१)सूत्रे भाष्ये अत एव पुष्णीतात् जहितात् शिष्टात् स्तादित्यादौ शानज्झौ, आ च । शा हौ, ध्वसोरेद्धाविति न । तत्रापि हादावित्यर्थात् । पूर्वव्याख्याने तु प त्वाच्चाताङि 'सकृद्गतौ' इति न्यायेनैतानि न । इदञ्च स्थानिवत्सूत्रे(२) भा स्पष्टम् । न चासम्भवरूपविरोधाभावात्कथं परत्वेन व्यवस्थेति वाच्यम् युग(३)पत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्याभावरूपासम्भवसत्त्वात् । ताद(४) शासम्भव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी, (५)स्थानिवद्भावस्तु का**

---

( १ ) **प्रकृतसूत्रे भाष्ये इति** । इत्थं हि—तत्र भाष्यम्–''इटःप्रतिषेधो वक्तव्यः रुदिहि स्वापिहि "हल" इति धित्वं प्राप्नोति । हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः । अनर्थं प्रतिषेधः अप्रतिषेधः धित्वं कस्मान्न भवति । 'हल' इत्यनुवर्तते कस्मात् ''घसिभसोर्हलि इति वचनात् । तद्वै सप्तमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । तद्वै तत्र प्रत्याख्यायते । प्रत्याख्य सप्तम्या विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निर्दिष्टमिहानुवर्तते । अथवा 'हुझल्भ्य इत्येषा पञ्चमी "हलि" इति सप्तम्याः षष्ठी प्रकल्पयिष्यति तस्मादित्युत्तरस्य इति ।

अत्रायं भावः—यद्यपि सप्तमी अचरितार्था तथापि "हुझल्भ्यः" इति पञ्चम्या अची तार्थया हेरित्येतदनुगुणा षष्ठीप्रकल्प्यते । ननु षष्ठी प्रकृत्यौ तदादिविधेरसम्भवः । "यस्मि विधिस्तदादावल्ग्रहणे" इत्युच्यते । नैष दोषः । हल्ग्रहणानुवृत्तिसामर्थ्यात् हलन त्वासम्भवाच्च तदादिविधिर्विज्ञास्यते । "अथवा निर्दिश्यमानस्यादेशा भवन्ति" इत्येवं भविष्यति यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति इटा व्यवहितत्वात्" इति ।

(२) **स्थानिवत्सूत्रे भाष्ये इति** । अत्रेदमाक्षेपवार्तिकम्–"लोडादेशे शाभावजभा धित्वहिलोपैत्वं प्रतिषेधः" एषां लोडादेशे प्रतिषेधो वक्तव्यः । शिष्टात् हतात् भिन्तात् कुर तात् स्तात् । लोडादेशे कृते शाभावो जभावो धित्वं हिलोप एत्वमेते विधयः प्राप्नुवन्ति तन्निराकरणभाष्यम्–"नैष दोषः; इदमिह संप्रधार्यम् लोडादेशः क्रियताम् एते विधय इ किमत्र कर्तव्यम् परत्वाल्लोडादेशः । अथेदानीं लोडादेशे कृते पुनः प्रसङ्गविज्ञानात् कस्मादे विषयो न भवन्ति "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" इति [illegible]

**वधादेशोऽदन्त इति** । तेनावधीदित्यत्र "अतो हलादेः" इति वृद्धिर्नेति भावः ।

**चक्षिङ् । अयं दर्शनेऽपीति** । 'विश्वारूपामिचष्टे शचीभिः' इत्यादौ तथा व्याख्यातत्वादिति भावः । **अन्तोदात्त इति** । नुम्विधौ "गोः पादान्ते" इति सूत्रादन्तग्रहणानुवृत्तेरिति भावः । एवञ्च चक्षिङ इकारस्थाने अकार एव वक्तुमुचितः । **ख्शादिरिति** । तत्फलन्तु प्रागेव प्रपञ्चितम् ।

**"अस्यातिवाक्ति" इति** । ख्यातीत्यत्र विधिसामर्थ्याद्यत्वं नासिद्धम् । स्वतन्त्रस्य ख्यातेः सार्वधातुकमात्रविषयताया वक्ष्यमाणत्वात् ॥

---

**प्रवृत्त्युत्तरं न (१)प्रवृत्तिकाल इति युगपदसम्भवः स्पष्ट एवेति दिक् । ध्वनितञ्चेदं स्थानिवत्सूत्रे भाष्ये ।**

वृद्धिर्नेति । **अकारस्य सिच्परत्वेन विशेषणात् । अन्त्यस्य तु न वृद्धिः 'यवल्लोपौ' इति पूर्वविप्रतिषेधेनाल्लोपेन बाधादिति भावः । वध हिंसायामिति स्वतन्त्रस्य त्वदन्तत्वप्रतिपादकभाष्यप्रामाण्येन तस्येदृशे विषये प्रयोगाभावानुमानादिति बोध्यम् ।** तत्फलमिति । **पुंख्यानमित्यादौ रुत्वाभावादिरूपम् ।** विधिसामर्थ्यादिति । **न चात्रापि ख्शादेरेवानुकरणं लक्षणवशात्सम्पन्नञ्च यत्वमिति न सिद्धत्वोपयोग इति वाच्यम् । लौकिके प्रयोगे ख्शेत्यस्य क्वाप्यसत्त्वेन तदनुकरणस्य वक्तुमशक्यत्वात्कृतयत्वप्रयोगस्थख्यानामेवानुकरणादिति भावः । स्पष्टा चेयं रीतिः "दाधा घु" इति सूत्रे भाष्ये ।**

---

**(१) न प्रवृत्तिकाल इति ।** आदेशप्रवृत्तिकाले निमित्तानन्तर्याभावेऽपि तदुत्तरं स्थानिवत्त्वादिना तत्सत्त्वेनासम्भवोपपादनस्यैवासम्भवात् । किञ्च "यदागमा" इति न्याय-

"ईशः (१)से" ॥ "ईडजनोर्ध्वे च" ॥ अत्र 'सेध्वे इत्येतदन्तयोरनुकरणम्, अविभक्तिकश्च निर्देश' इत्याकरः। यत्तु प्राचा स्ववादौ "ईडजनोः" इतीट् जजनिषीत्युक्तम्, यच्च लिङि ईडिध्वमित्युक्तन्तदाकरविरोधादुपेक्ष्यम्, यद्यपि जनेः श्यना भाव्यन्तथापि छान्दसत्वात् श्यनो लुकि उपधालोपाभावे च जनिषे जनिध्वे इति बोद्धव्यम्।

**णिसि चुम्बने।** बभ्रामेति। 'उदग्रे तव' इति मन्त्रे 'निंसानं जुह्वा मुख' इति दन्त्यान्तस्यैव प्रयोगादिति भावः। किं च "नुम्विसर्जनीयशर्व्यवायेऽपि" इति सूत्रे वृत्तिन्यासपदमञ्जर्यादयः सर्वे ग्रन्था अस्य तालव्यान्तत्वे ऽसङ्गताः स्युः। तत्र हि नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते। तेन निंस्स्वेत्यत्र नेत्युक्तम्। अस्य तालव्यान्तत्वे तु "व्रश्चादि" षत्वे "षढोः" इति कत्वे कवर्गात्परत्वेन षत्वं दुर्वारमिति कथं प्रत्युदाह्रियेत।

**णिजि शुद्धौ।** सेट्, व्याघ्रभूतिना 'णिजं सिंचिम्' इति निरनुषङ्ग-

---

अविभक्तिकश्चेति। तेन ऐड्ध्वमिति सिद्ध्यति। वृत्तिन्यासेति। भाष्येऽपीत्यपि बोद्ध्यम्। तत्रापि "निंसेः प्रतिषेधो वाच्यः। निंस्से निंध्वे" इत्युक्तेः। षत्वन्दुर्वारमिति। तथा च निंक्षे इति स्यादिति भावः। तालव्यान्तस्याप्यङ्गीकारेण बाधकमित्यन्ये। निरनुषङ्गस्येति। निरनुस्वारस्येत्यर्थः।

---

(१) "ईशः से" "इड्जनोर्ध्वे च"। किमर्थो योगविभागः। न इ शीड्जनां ध्वे इत्युच्येत। ईशो ध्वे मा भूत्। ईष्यते ईशिध्वे इति। ईडजनोस्तर्हि से मा भूत्। इष्यते ईडिषे जनिषे ईशो स्तर्हि स्वे मा भूत्। इष्यते ईशिष्व इति। पूर्वयोगात् ईशेरनुवर्तनार्थं चकारः क्रियते। अन्यथा ईशिध्वेन सिद्ध्येत्। कथम्—"ईड्जनोर्ध्वे च" इति सूत्रपाठे योगविभागेनेड्जनोः से शब्दे परे इट् शक्यते निवर्तयितुम्। इत्युच्यते। चकारेण सेरनुकर्षणात् सकारादौ से शब्दे इटि सिद्धे ईशः से इति नियमार्थम्—"ईशेरेव से शब्दे इण् न तु "ईड्जनोः" इति ईड्जनोर्ध्वे चेति सर्वसकारादेरिटि "विहिते ईशः से" इत्यनेन नियमः क्रियते से शब्द एव सकारादौ तेनेशिषे इत्यत्र भवति ईशिष्व इत्यत्रापि स्थानिवद्भावात्। यत्तु लोट एव स्थाने स्वशब्दो नासौ से शब्द इति व्यावर्त्यते। लोड्धर्माणौ हि स्वौ लोटौ भवत इत्यु-

स्य पठितत्वेन जौहोत्यादिकस्येरित एव तत्र ग्रहणात् ।

**शिजि अव्यक्ते** । तालव्यादिः । 'योषेव शिङ्क्ते विततापि धन्वन्' इति दर्शनात् । क्तप्रत्यये शिञ्जितम् । आवश्यकणिन्यन्तान्ङीपि शिञ्जिनी । "भूषणानान्तु शिञ्जितम्" इत्यमरः । "मौर्वी ज्या शिञ्जिनी गुणः" इति च । 'तालैः शिञ्जद्वलयसुभगैः' इत्यत्रानुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् शता बोद्धव्यः ।

**षूङ्-सुषुविष इति** । स्वरतावुक्तेन न्यायेनेह नित्यमिट् । **सोता; सवितेति** । "स्वरतिसूति" इति वेट् ।

**"तुरुस्तुशम्यमः"** ॥ **अपिदर्थमिति** । यत्तु प्राचा एभ्यः परस्य पितः सार्वधातुकस्येति व्याख्यातम् , तत्प्रामादिकमिति भावः । **स्मरन्तीति** । न्यासकारवर्द्धमानादयः । यत्तु पदमञ्जर्याम्—'उतवीति' इत्यत्र "बहुलं छन्दसि" इति शपो लुगिति दृश्यते; तच्छम्यमोर्वक्ष्यमाणं लेखकप्रमादात्पूर्वं पतितमिति माधवः । आपिशलास्तु 'तुरुस्तुशम्यमः सार्वधातुके छन्दसि' इति पठन्ति ।

**इण-गतौ** । **भौवादिकस्येति** । आशीर्लिङीति भावः । विध्यादौ तु समीयादिति न भवत्येव ।

केचित्तु 'वी-गति' इत्यत्र दीर्घमीकारं प्रश्लिष्टमाहुरित्यनुपदं वक्ष्यते, तन्मते विध्यादावपि भवत्येवेत्यवधेयम् ।

वार्त्तिकमतेनाह—**लावस्थायामिति** । भाष्यमतेनाह—**विवक्षित इति** । उभयथापि "द्विर्वचनेऽचि" इति सूत्रं नेह प्रवर्तते, आद्येऽज्निमित्तत्वाभावात् , द्वितीये त्वनैमित्तिकत्वादिति भावः ।

**वी-गति** । एकदेशिमतमाह—**अत्रेकारोऽपीति** । तथा च दीर्घोपक्रमे कविकल्पद्रुमः—"ई ङ कान्तिगतिव्याप्तिक्षेपप्रजनखादने" इति । ङ इत्यदादेः सञ्ज्ञा । प्रयुञ्जते च—"न हि तरणिरुदीते दिक्पराधीनवृत्तिः"

---

वार्त्तिकमतेनेति । **परसप्तमीति तद्व्याख्यात्रेकदेशीयमतेनेत्यर्थः** । भाष्येति । **विषयसप्तमीति सिद्धान्तिमतेत्यर्थः । आद्यम्—"द्विर्वचनेऽचि" इत्यत्र भाष्ये** स्पष्टं द्वितीयं तु भाष्ये स्पष्टम् । अनैमित्तिकत्वादिति । आद्यमप्यत्र

इति । कर्मव्यतिहारे तङ् । न च "न गतिहिंसार्थेभ्य" इति निषेधः शङ्क्यः, उत्पूर्वस्याविर्भावार्थकत्वात् ।

**ख्या(१) प्रकथने । स नेति ।** "शर्परे विसर्जनीय" इत्युक्तेः । यद्यस्मादप्यार्द्धधातुकं स्यात्तर्हि सस्थानो दुर्वार इति भावः ।

**मा माने । नास्येति ।** ङित एव तत्र ग्रहणमिति मेङ्धातौ निरूपितत्वादिति भावः ॥

**"विदाङ्कुर्वन्तु" ॥ लोटो लुगिति ।** "आम" इति सूत्रे लेरित्यनुवर्तयतां मतेनेदमुक्तम् । निष्कर्षे तु तेनैव लुगित्यवधेयम् ॥

**"उपसर्गप्रादुर्भ्याम्" ॥ प्रादुसश्चेति ।** प्रादुस् इति सान्तमव्ययम् । प्रादुष इति प्राचां ग्रन्थेषु मूर्द्धन्यपाठः प्रामादिकः ।

**मृजू-शुद्धौ ।** केचिदमुं षितं पठन्ति; तदनाकरम् । भिदादिपाठानर्थक्यापत्तेः । **क्ङिन्त्यजादाविति ।** एतच्च "इको गुणवृद्धी" इति सूत्रे भाष्यकारैरर्थत उक्तम् ।

**रुदिर् । धित्वं नेति ।** सकृद्गतिइति न्यायात् । प्रागुक्तरीत्याऽपि द्वेधा समाधानं स्मर्तव्यम् ।

---

**इत्यर्थः । उदयतीति शेषो भवतीति वेत्यन्ये ।** आविर्भावार्थकत्वादिति । **न च व्यतीहारस्यानेकनिष्ठत्वात्कथमत्र स इति वाच्यम् । कालान्तरस्थतरणौ भेदमारोप्य तदुपपत्तेरित्याहुः ।**

सकृद्गतीति । **अत्र यथा परत्वप्रवृत्तिस्तथोक्तम् ।** द्वेधेति । **तदेव मुख्यं**

---

( १ ) **'ख्या प्रकथने'** । आर्धधातुकेषु नास्य प्रयोगः, किन्तु चक्षिङादेशस्यैव । तेन सौ प्रख्ये भव इत्यत्र वुन् आख्यातशब्दे निष्ठानत्वम् । पुंख्यानम् इत्यत्र रुत्वम्, पर्याख्यानम् इत्यत्र णत्वम्, 'नमः ख्यात्रे' इत्यत्र जिह्वामूलीयश्च न भवति ।

परे तु—"न ख्याख्या" इति सूत्रे ख्याग्रहणवैयर्थ्यापत्त्या आर्धधातुकेष्वपि प्रयोगाङ्गीकारावश्यकत्वे तु स्वतन्त्रधातौ "नख्याख्या" इति निषेधेन आदेशे यण्वत्त्वाभावेन नत्वाप्राप्त्या

'जक्ष' भक्ष । **बभ्रामेति** । 'जक्षन् रममाण' इत्यादौ जक्षादित्वस्य निर्विवादत्वात् । सकलधातुवृत्तिकारैस्तथा स्वीकाराच्चेति भावः ।

**"जुसि च"** ॥ **अजादाविति** । "क्सस्याचि" इत्यतोऽचीत्यनुवर्त्तत इति भावः ।

यत्तु प्राचा शृणुयुरित्यादौ यासुटो ङित्त्वान्न गुण इत्युक्तम्, तन्न । जुसि गुणस्य निषेधापवादत्वात् । भङ्क्त्वा व्याख्यानन्तु क्लिष्टत्वादुपेक्षितम् । भाष्यारूढस्य स्पष्टसमाधानस्यैव लाभात् ।

**दरिद्रा** । प्राचोक्तमनुवदति—**धरिवाति** । **निर्मूलमेवेति** । यत्तु व्याख्यातृभिरुक्तम्—आतो लोपे कृते "आत औ णल" इत्यौत्वं नेत्यादि; तद् व्याहतम् । तथा हि—"आत औ णल" इत्यत्र प्राथम्यादोकारे कर्त्तव्ये औकारवचनं दरिद्रातेरालोपेऽपि श्रवणार्थं सदामभावे लिङ्गमिति पारायणिकहरदत्तमाधवादिभिरुक्तं स्वयमप्युपन्यस्तञ्च । तत्कथमौत्वस्याप्रवृत्तिः ?

यदपि ददरिद्रेत्यस्य समर्थनार्थमुक्तम्—उच्चारणविशेषाभावादौकारविधानमिति, तदपि रभसात् । तस्मिन् पक्षे आमो दुर्वारत्वात् ।

**विवक्षित इति** । तेन दरिद्र इत्यत्र "श्याद्व्यधा" इत्यादन्तलक्षणो णो न, किन्तु पचाद्यजेवेति भावः ।

**अदरिद्रुरिति** । "सिजभ्यस्त" इति झेर्जुस् । "लङः शाकटायनस्यैव" इत्यादन्तलक्षणो विकल्पस्तु न भवति । परत्वात् "श्नाभ्यस्तयोः" इत्यालोपे आकारान्तस्यैवाभावादिति माधवः । न च दरिद्रा झि इति स्थिते आलोपात्परत्वादपवादत्वाच्च "ई हल्यघोः" इतीत्वं स्यादिति वाच्यम् ।

---

निषेधापवादत्वादिति । श्नोर्ङित्त्वेऽपि 'न हि कार्यी' इति तन्निमित्तनिषेधाप्रवृत्तेः । अत एव शृणोतीत्यादौ गुण इति भावः । भङ्क्त्वेति । अयुजुसीति यकाराप्रश्लेषेण अयकारादौ जुसीत्येवंरूपमित्यर्थः । भङ्क्त्वेत्यस्य सूत्रं

इति षत्वम् । **न्यषेवीदिति** । "सिवादीनां वाड्व्यवायेऽपि" इति विकल्पः ।

**'व्युष दाहे'** । दन्त्योष्ठ्यादिर्मूर्द्धन्यान्तः । तथा च वैद्यके—त्रिकटुकपर्यायो व्योषशब्दः पठ्यते ।

**नृती** । ईदित्करणं "यस्य विभाषा" इत्यस्यानित्यत्वज्ञापनार्थम् । तेन 'धावितमिभराजधिया' इत्यादि सिद्ध्यति ।

**'पुष्प, विकसने'** । ओष्ठ्यान्तः ; अकर्मकः । 'तया नभः पुष्प्यतु कोरकेण' इति श्रीहर्षः । "कालात्साधुपुष्प्यत्पच्यमानेषु" इति सूत्रम् । अच्–पुष्पम् । सञ्ज्ञायाङ्कन्–पुष्पकम् । **तिम ष्टिम ष्टीम** । अत्र केचित्तीमित्यपि पठन्ति । **व्रीड** । घञ्–"व्रीडमावहति मे स संप्रति" इति कालिदासः, "व्रीडादिवाभ्याशगतैर्विलिल्ये" इति माघः । "गुरोश्च" इत्यकारः–'मन्दाक्षं ह्रीस्त्रपा व्रीडा' इत्यमरः । **षह षुह** । अत्र सहेः पाठो हरदत्तादीनामनभिमत इति माधवः । तदापाततः । "शकिसहोश्च" इति सूत्रे षह मर्षण इति वृत्तिमुपादाय ननु 'षह षुह, चक्यर्थे' इत्यस्यैव परस्मैपदिनोऽनुबन्धकस्य ग्रहणं प्राप्तमित्याशङ्क्यानुबन्धपरिभाषायाः प्रत्ययविषयत्वा(१)दुभयोरपीह ग्रहणमिति हरदत्तोक्तेः ।

अत्रात्रेयः—"परिनिविभ्य" इति षत्वम्—परिषह्य इति । "तीषसह" इतीड्विकल्पस्तु नास्य भवति । सहेति शबन्तनिर्देशादित्याह ।

अत्रेदं वक्तव्यम्-षत्वविधावपि शबन्तनिर्देशस्तुल्यः । तथा च षत्वमपि मा

---

अनित्यत्वज्ञापनार्थमिति । अन्यथा "से सिचि" इति विकल्पितेट्त्वात् "यस्य विभाषा" इत्येव सिद्धौ "श्वीदित" इत्येतत्प्रवृत्तिर्व्यर्थैवेतिभावः ।

प्रत्ययविषयत्वादिति । यद्यपीदं "भूवादयो" "दिव उत्" सूत्रस्थभाष्यविरुद्धम्, तथापि तत्र सहेः पाठो हरदत्तसम्मत इति विवक्षितेऽर्थे न दोष इति भावः । उभयोर्ग्रहणे इष्टे व्याख्यानमेव शरणम् ।

भूत् तत्राकार उच्चारणार्थ इति चेदिड्विकल्पोऽपि तथास्तु। तस्मादुभयमस्तु मास्तु वा न त्वर्द्धजरतीयं युक्तम्। आकरग्रन्थास्तु सर्वेऽप्यत्रोदासीनाः। तदिह तत्त्वं महद्भिर्निर्णेयमिति। "नपुंसके भावे क्तः" सुहितं—तृप्तिः। जेरतुरिति। "ऋच्छत्यॄताम्" इति गुणे कृते "वा जॄभ्रमुत्रसाम्" इत्येत्वविकल्पः। षूङ्। नित्यमिडिति। एवञ्च प्राँचो ग्रन्थं व्याचक्षाणैर्यदुक्तं सुषुवहे इत्यादि; तत्प्रामादिकमिति भावः। दीङ्। दिदीये इति। परमपि यणं बाधित्वा नित्यत्वादादौ युट्॥

"मीनाति"॥ एज्निमित्ते(१) इति विषयसप्तमी। तेन 'उपदायः' इत्यत्र घञ् सिध्यति। अन्यथा एरच् स्यात्। अदास्तेति। "स्थाघ्वोरिच्च" इत्येतत्तु न भवति। दीङो ऽनुकरणे दारूपासम्भवेनाघुत्वात्। अत एव प्रनिदातेत्यादौ "नेर्गद" इति णत्वमपि न भवति।

डीङ्। डीनः, डीनवान्। श्वीदितु पाठसामर्थ्यान्निष्ठायामिण्न। इटि हि सति व्यवधानात् "ओदितश्च" इति नत्वस्याप्रसङ्गः। डयितशब्दस्तु औणादिकस्य। "निष्ठा शीङ्" इत्यत्र 'निष्ठा' इति योगविभागादकित्त्वमिति

---

महद्भिरिति। "तीष" इति सूत्रे "इषेः श्यन्प्रत्ययात्तकारे प्रतिषेधः" इति वार्त्तिकात्सहेः श्यन्विकरणस्येड्विधौ ग्रहणं भवत्येव। इषत्सुभादेरिव सहेरप्यकार उच्चारणार्थ एव। षत्वविधावप्युच्चारणार्थतैवोचितेत्यन्ये।

दीङोऽनुकरण इति। ये घुसञ्ज्ञासूत्रे दोदेङ्धेटामनुकरणानि व्यवस्थाप्य 'प्रकृतिवत्' इत्यतिदेशादनैमित्तिके आत्वे चतुर्णां दारूपाणां द्वयोर्धारूपयोरेकशेषङ्कृत्वा द्वन्द्व इति वदन्ति तन्मतेनेदम्। परन्त्विदमसङ्गतं प्रकृतिग्रहणं शिदर्थं कर्त्तव्यं प्रणिधयतीत्यादौ "नेर्गद" इति णत्वं यथा स्यादिति वार्त्तिकोत्थानानापत्तेः, "दीङः प्रतिषेधः स्थाघ्वोरित्वे" इति वार्त्ति-

---

(१) एज्निमित्ते इति विषयसप्तमीति। "इदं विप्रतिषिद्धम्। एच उपदेशे इति, यद्येचो नोपदेश इति अथोपदेशो नैचः। एचश्चोपदेशे चेति विप्रतिषिद्धम्"।

अत्रायं भावः— नहि मिनोत्यादीनामुपदेशे एजस्ति, एचः प्रत्ययनिमित्तत्वात्। तेनेयं

सीरदेवादयः । **मीङ् । हिंसात्रेति** । अत एवाकर्मकत्वमिति भावः । मीञिति क्र्यादौ । डुमिञिति ह्रस्वान्तः स्वादौ । मी गताविति चुरादौ । **रीङ्** । रेता, रेष्यते । **लीङ् । यकेति** । सार्वधातुके यगिति विहितेन । **व्रीङ्** । दन्त्योष्ठ्यादिः । 'व्री वरण'इति क्र्यादौ । **प्रीङ् प्रीतौ** । प्रेता, प्रेष्यते । प्रीञ् तर्पणे क्र्यादौ युजादौ च ।

**षोऽन्तकर्मणि । अभिष्यतीति** । "उपसर्गात्सुनोति" इति षत्वम् । **अभिससाविति** । स्थादिष्वेवाभ्यासस्य षत्वमितिनियमादभ्यासस्य न षत्वम् । नापि द्वितीयस्य, "स्थादिषु" इति सूत्रेण स्थादिष्वेव तद्विधानात् । **घूरी गूरी** । गूर उद्यमन इत्याकुस्मीयः । गुर इति लघूपधस्तुदादौ । **पाठान्तरमिति** । द्रविडाचार्यनिरुक्तकारादिबहुसंमतमेतत् । अत्र मन्त्रप्रयोगमुदाहरति- **दूयुतद्यामेति** । "हिरण्यपाणिः सविता" इति वर्गस्य प्रथमचरममन्त्रयोरपि पठ्यमानशब्दो ऽत्रोदाहर्तव्यः ।

**ननद्धेति** । "नहो ध" इति धत्वम् ।

(१)**उदाहरणमाहेति** । अकर्मकत्वप्रयोजकस्य कस्यचिद-

---

कानुत्थानप्रसङ्गश्च । तस्मात्कृतात्वदाधामेवानुकरणं सूत्रे ऋषितात्पर्यस्य ऋषिवाक्यैरेव निर्णेयत्वात् । तस्मादत्र "स्थाघ्वोः" इति सान्निपातपरिभाषया वारणीयमिति "कृन्मेजन्त" सूत्रे भाष्ये स्पष्टम् । एवञ्च प्रणिदातेत्यादौ "नेर्गद" इति णत्वं भवत्येवेत्यन्ये ।

सीरदेवादय इति । अत्रारुचिर्भाष्यानुक्तत्वम् । इति विहितेनेति । अर्थाभावेऽपि सौत्रत्वात्प्रकृते साधुनेत्यर्थः । तत्र क्र्यादिराधृषीयश्च निरनुबन्धो लीधातुः परस्मैपदी, अयमात्मनेपदीति बोध्यम् ।

स्थादिष्वेवेति । अणिणः परस्य सस्येत्यर्थः । तुदादाविति । चुरादौ त्वत्र ह्रस्वोपध इति वक्ष्यति ।

र्थस्येति भावः । **शुष शोषणे** ।शोष्टा, शोक्ष्यतीत्यादि । (१)**श्लिष, आलिङ्गने** । अनिट्कोऽयम् । न तु दाहार्थकभ्वादिकवत्सेट्क इति दर्शयति—**श्लेष्टेति** । "शल इगुपधात्" इति सूत्रानन्तरं "श्लिष आलिङ्गने" इति सूत्रितं तच्चैकयोगत्वेनैव प्राचा व्याख्यातम् । तथा च सतीदं सूत्रमङो बाधनार्थं स्यात् । अङ् त्वर्थान्तरे सावकाशः । एवञ्च कर्तरि परस्मैपदे सिद्धमिष्टम् । कर्मणि तु तङ्शब्दे 'समाश्लेषि कन्या देवदत्तेन' इति चिणिष्यते । सोऽपि परत्वात्सिद्धः । तथा च समाश्लिक्षातां कन्ये इत्यादौ क्सः । किं तु कर्मण्यातांप्रभृतिष्वनालिङ्गने "शल इगुपधा" इति क्सः प्राप्नोति । इष्यते च सिच् । 'समश्लिक्षत जतूनि काष्ठैः' इति । तमिमन्दोषमुद्धर्तुं योगविभागेन व्याचष्टे–**श्लिष इति** । अनिटः किम् ? श्लिषु, दाहे इति सेटो मा भूत् ।

**सामर्थ्यादिति** । यदि हि श्लिष इति प्राप्त एव नियम्येत तर्ह्येकवाक्यतया विधिरेवास्तु । फलस्य तुल्यत्वादिति भावः । **शल इगुपधादिव्यस्येति** । तेनात्मनेपदे ऽनालिङ्गने चिण्विषयादन्यत्र सिजेव न तु क्स

---

अर्थस्येतीति । **अर्थक्योक्त्येनेत्यर्थः** । अङो बाधनार्थमिति । **तदर्थमपूर्वविधिरेव स्यान्न नियम इत्यर्थः** । क्स इति । **सिद्धो यद्यपीति शेषः** । किं तु इति । **तथा ऽपीत्यर्थः** । कर्मणीति । **कर्मव्यतिहारे कर्तरि चेत्यपि बोध्यम्** । इष्यते च सिजिति । **अन्यथा समश्लिक्षतेत्यत्र 'अनत' इति प्रतिषेधाद्दादेशो न स्यादिति भावः** । सेट इति । **भ्वादेरिति शेषः** ।

---

( १ ) **'श्लिष, आलिङ्गने' इति** । किं पुषादिपाठादङि सिद्धे तद्बाधनाय विध्यर्थम् । उत पूर्वेण क्से सिद्धे नियमार्थोऽयम् इति विकल्पे नियमार्थोऽयमारम्भः । ननु नियमानुपपत्तिर्विधेयभावादिति वार्तिकस्येदं वाच्यम् । 'श्लिष, आलिङ्गने' इति नियमस्यानुपपत्तिः । कारणञ्चात्र विधेयाभावात् । कैमर्थक्यान्नियमो भवति । विधेयं नास्तीति कृत्वा । इह चास्तिविधेयम् । किम्-पुषादिपाठादङ्प्राप्तः तद्बाधनार्थोऽयम् क्सो विधेयस्तत्रापूर्वो विधिरस्तु; नियमो मेति । अपूर्वविधिरेव स्यान्नतु नियमः । किञ्च स्याद्यद्ययं नियमो न स्यात् । आत्मनेपदेऽन्यालिङ्गने अनालिङ्गने च क्सः प्रसज्येत यथैव क्सोऽङम्बाधते । एवं चिणमपि बाधेत । उपाश्लेषि कन्या देवदत्तेनेति । नैष दोषः योगविभागात्सिद्धम् । योगविभागं करिष्यते 'श्लिषः' इति

इति भावः । **प्रत्यासत्ताविति** । आलिङ्गनं ह्युपगूहनं परिष्वङ्गापरपर्यायं प्राणिकर्तृकमेवेति भावः । योगविभागफलं दर्शयति–**कर्मणीत्यादिना** । अश्लिक्षातामित्यादौ क्ससिचोर्विशेषाभावात् अश्लिक्षत, अश्लिष्टाः इत्युदाहृतम् ।

**उभयपदीत्यर्थ इति** । तन्त्रान्तरे विभाषितशब्दस्योभयपदिषु प्रसिद्धेरिति भावः । **एक इति** । चन्द्रगोमिप्रभृतय इत्यर्थः ।

**क्षुध** । 'तस्यालमेषा क्षुधितस्य तृप्त्यै' इत्यादिप्रयोगाणाङ्गतिं पृच्छति–**कथमिति** ।

**षिधु** । संराद्धिर्निष्पत्तिः । सिधित्वा । सेधित्वा । सिद्ध्वा । "उदितो वा" इति वेट् । इट्पक्षे "रलो व्युपधात्" इति कित्त्वविकल्पः । दीर्घानुबन्धपाठं दूषयति–**ऊदित्पाठ इति** । अनुदात्तेषु पाठस्य वैयर्थ्यापत्तेरिति भावः । **'रध–हिंसायाम्'** । **रध्यतीति** । पचतीत्यर्थः । **अरधदिति** । प्राचो ग्रन्थे अरन्धदिति नुमनुषक्तं पठ्यते तत्प्रामादिकम् । नलोपस्यावश्यकत्वादिति भावः । **णश** । **अनंष्टेति** । प्राचा 'अनङ्ध'इत्युदाहृतं तदपाणिनीयमित्युपेक्षितम् । न हि "नशेर्वा"इति कुत्वमिह लभ्यते, पदान्ते एव तद्विधानात् । किं च कुत्वेन खः स्यात् । तथापि झषन्तत्वाभावात्तथोर्धत्वं दुर्लभमेव । नष्टं नष्टिरित्यादिप्रयोगाश्च लोकवेदप्रसिद्धा विरुद्धयेरन्निति भावः । **पुषादयस्त्विति** । केचित्तु इदं वृत्करणं रधादीनामिव पुषादीनामपि समाप्त्यर्थमिति व्याचक्षते । तद्भाष्यकैयटविरोधादुपेक्ष्यमिति भावः । **'भ्रमु अनव'** । **शेषमिति** । श्यनि दीर्घो लुङि अङ् च विशेष उक्तस्ततोऽन्यदित्यर्थः । **चक्षणवेति** । "म्वोश्च" इति नत्वे कृते णत्वम् ।

देवकृतं श्लोकार्द्धमुदाहरति–**अषितः क्षाम्यतेः क्षान्तिरिति** ॥

**इति दिवादयः** ॥

---

**ननु 'नशक्विन्प्रत्ययस्य कुः'इति वक्तव्ये पृथक्सूत्रकरणेनैव विकल्पलाभे वेति कथनं योगविभागेन झलि नित्यकुत्वार्थम् । कुत्वेन च महाप्राणत्वाद्त आह—किं चेति । खः स्यादिति । अघोषमहाप्राणरूपप्रय-**

**'वृञ्-वरणे'** ॥

**"बभूथ"** ॥ (१)"विज्ञातमुत्सं यत आबभूथ" । "येनान्तरिक्षमुर्वाततन्थ" । "जगृभ्मा ते दक्षिणमिन्द्रहस्तम्" । "यस्य मदे अपगोत्रा ववर्थ" । **अवारीदिति** । अवारिष्टाम् । अवारिषुः । "वृतो वा" इति दीर्घस्य "सिचि च परस्मैपदेषु" इति निषेधः ॥

**"हेरचङि"** । (२)अचङीति किम् ? अजीहयत् । यद्यपि ण्यन्तस्य धात्वन्तरत्वादवयवस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावात्प्राप्तिरेवेह नास्ति ; तथापि ण्यधिकस्यापि कुत्वं भवतीति ज्ञापनार्थमिदम् । तेन जिघ्रापयिषतीति सिद्धम् ।

**"राधो हिं-"** । एतत्सूत्रं प्राचा दिवादावुपन्यस्तम् । इहैव तूचितमकर्मकस्यैव दिवादित्वमिति "राधो ऽकर्मकात्" इत्यत्र निर्णीतत्वादिति भावः ।

**जिधृषा** । शूलेन धृष्णोति—प्रगल्भते शूलधृक् । शूलधृषौ । दधृगिति "ऋत्विक्" आदिसूत्रेण क्विनो विधानादन्यत्रापि पदान्तविषये कुत्वम् । **तृप प्रीणन इत्येक इति** । सेट्कः । अनुदात्तेषु श्यना निर्देशात् ॥

**इति स्वादयः** ॥

---

अभ्यासनिमित्तेति । **अभ्यासाक्षिप्तप्रत्ययाङ्गाक्षिप्तप्रत्यययोः प्रत्यासत्त्या यत्रैकयन्तत्रैवास्य प्रवृत्तिरिति भावः ।**

अकर्मकस्यैवेति । **हिंसा तु प्राणवियोगानुकूलव्यापारत्वात्सकर्मिकेति भावः । न च कर्मकर्त्तरि तत्सम्भवः । कर्मकर्तृप्रक्रियायां लेखस्यौचित्येऽपि विवादावनौचित्यात । अन्यथा तद्विषयशास्त्रान्तराणामपि तत्र तत्र लेखापत्तिरिति दिक् ॥**

इति स्वादयः ।

---

(१) बभूथाततन्थेति । भूधातोस्तनोतेश्च थलि इडभावो निपात्यते निगमे । भाषा-

**"भ्रस्ज"**। भ्रस्जो इत्यपपाठः। भ्रष्टः भ्रष्टवानित्यत्र निष्ठाया "ओदितश्च" इति नत्वप्रसङ्गात्।(१)**स्थानषष्ठीति**। स्थानं हि (२)प्रसङ्गः। तेन रोपधयोः प्रसङ्गे रम् प्रयुज्यते इत्यर्थः। प्रयुज्यमानो रम् मित्वादन्त्यादचः पर एव। यस्य हि देशान्तरे नास्ति विधानं स स्थानिदेश एवेत्युचितम्। देशविशेषे एव स्थानिनः प्रसक्तत्वेनोपस्थितं परित्यज्यानुपस्थितकल्पनायोगात्। इह तु मित्वेन न्यायो बाद्ध्यते। स्थानषष्ठीनिर्देशसामर्थ्यात्तु देशान्तरे प्रयुज्यमानोऽपि रोपधे निवर्त्तयति। तदिह रम (३)आदेशत्वागमत्वे द्व

स्थानिदेश एवेति। तस्यैवोपस्थितत्वादिति भावः। तदाह—देशेत्यादि।

---

( १ ) स्थानषष्ठी इति। स्थानपदार्थानुयोगिकसम्बन्धप्रतियोगिनी षष्ठीति तदर्थः॥

( २ ) स्थानं हि प्रसङ्ग इति। प्रसङ्गपदार्थस्तु ज्ञानमेव। विशेष्यत्वं विशेषित्वं वा षष्ठ्यर्थः। प्रकाराकाङ्क्षायां च विधेयभूतं विधेयविशेषणभूतं वा साधुत्वं प्रत्यासन्नत्वात् ज्ञाने प्रकारित्वेनान्वीयते। ज्ञानं च सामान्यशास्त्रकरणकमेव। तथा च अजव्यवहितपूर्वेकाविशेष्यकसाधुत्वप्रकारकेसामान्यशास्त्रकरणके ज्ञाने सति यण् साधुर्भवति इति वाक्यार्थः सम्पद्यते। एवं दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादावपि वाक्यार्थ ऊहनीयः।

एवं च विशेषशास्त्रेण उत्तरकालं यण्विशेष्यकसाधुत्वप्रकारकबोधजननात् पूर्वं सामान्यशास्त्रेण जातस्य ज्ञानस्य भ्रमत्वं कल्प्यते, पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति इति न्यायात्। ततश्च अजव्यवहितपूर्वत्वस्येकः साधुत्वभ्रमविषयत्वे सिद्धे साधुशब्दः प्रयोक्तव्य इति विध्यविषयत्वात् अप्रयोक्तव्यत्वं सिद्ध्यति। उत्तरकालजातस्य च ज्ञानस्य बाधकाभावात् प्रामाण्यमिति तद्विषयस्य यणः प्रयोक्तव्यत्वासिद्धिः। विकल्पस्थलेऽपि 'सर्वं वाक्यं सावधारणमि'ति न्यायात् जराशब्द इव साधुरिति जराशब्दमात्रविशेष्यकपूर्वशास्त्रजन्यसाधुत्वज्ञाने उत्तरकालजातेन उभयविशेष्यकसाधुत्वज्ञानेन अप्रामाण्यं बोधयितुं शक्यते एवेति नानुपपत्तिः। सामान्यशास्त्रस्य तु अन्यत्र प्रामाण्यमस्त्येवेति न शास्त्रत्वहानिः। यणः स्थाने इक्प्रयुक्तव्य इत्यस्य तु यणः प्रयोक्तव्यत्वज्ञाने मौख्यात् इक्प्रयुक्त इत्यर्थः। देवदत्तस्य स्थाने यज्ञदत्तोऽध्यापयति इत्यादौ तु स्थानपदार्थः कालरूपो देशरूपो वा। गदाधरेणापि प्रसक्तिरनुमितिराप्तिर्वा इति वदता प्रसङ्गस्य ज्ञानरूपत्वं स्पष्टीकृतम्। प्रकृते च योग्यतया शाब्दमेव ज्ञानं प्रहीतुमुचितमिति दिक्।

( ३ ) आदेशागमत्वे द्वेऽपीष्टे इति। भाष्यकृता हि—आदेशान्तराणां स्थानिवु-

अपीष्टे यथा श्नमः प्रत्ययत्वागमत्वे इति स्थितम्। भारद्वाजीयास्तु पठन्ति—"भ्रस्जो रोपधयोर्लोप आगमो रम्विधीयते" इति। अस्यार्थः—"सनः क्तिचि" इत्यतो लोपग्रहणमनुवर्त्तते। रम् तु आगम एवेति।

अत्र (१)हरदत्तः—'भ्रस्जो रसोरन्यतरस्याम्' इत्येव सूत्रमस्तु रम् इति यः सङ्घातस्तस्य ऋ इत्यादेशः स्यादित्यर्थः। तत्राकूङिति गुणे कृते भर्जनमित्यादि सिद्ध्यति। ऋकाराभावपक्षे भ्रज्जनमित्यादि। कूङिति तु ऋकारपक्षे भृष्टिरित्यादि; तदभावे संप्रसारणे तदेव रूपम्। एवञ्च पूर्वविप्रतिषेधो न वक्तव्यो भवतीति महल्लाघवम्।

किं च-यथान्यासे बरीभृज्ज्यते इत्यत्र रीको रेफस्य निवृत्तिं वारयितुमु-

---

भारद्वाजीयास्त्विति। अत्रारुचिबीजन्तु शबादेशाः श्यनादय इति भाष्योक्तपक्षे श्नमा शपो निवृत्तेरिव रोपधयोर्निवृत्तिसिद्धौ लोपपदानुवृत्तिर्व्यर्था गौरवावहा चेति।

रसोरन्यतरेति। रस इति षष्ठ्यन्तं, तद् व्यनयन्नाह—सङ्घातस्येति। समुदायस्य स्थानित्वेन निर्देशात् "अलोन्त्यस्य"इति न। न वक्तव्य इति। ऋकारविकल्पस्तु बभर्ज बभ्रज्जेत्यादौ चरितार्थ इति भावः।

---

भवतीति वाक्यार्थः सम्पद्यते। यस्य देशान्तरे नास्ति विधानं स स्थानिदेश एव भवति। तत्प्रसङ्गे तद्विधानाद्विशिष्टदेशश्च स्थानिनः प्रसङ्ग इति तद्देशेनैवादेशेन भाव्यम्। तदिहोभयत्वं सिद्धम्।

( १ ) अत्र हरदत्त इति। अत्रायं भावः—भाष्ये "भ्रस्जादेशात् सम्प्रसारणं विप्रतिषेधेन"इति वार्तिकंपठितम्, तत्रायमभिसन्धिः—भ्रस्जादेशस्यावकाशः भर्ष्टा भर्ष्टुम् सम्प्रसारणस्य वकाशं भृज्जति। इहोभयं प्राप्नोति भृष्टः भृष्टवान् 'सम्प्रसारणं भवति पूर्वविप्रतिषेधेन, पूर्वविप्रतिषेधवार्तिकप्रत्याख्यानाय पुनराह स तर्हि पूर्वविप्रतिषेधो वक्तव्यः, न वक्तव्यः, रसोर्वचनातिसिद्धमित्युक्तम्।

अत्रायमर्थः—साकच्चस्य रेफस्य सकारस्य च ऋशब्दो वा आदेशस्तत्र कृतेऽङ्किति गुण प्रवर्तते; भर्ष्टा इति ऋकाराभावपक्षे भ्रष्टेति ङ्किति तु ऋशब्दे भृष्टम् इति भवति तदभावपक्षेऽपि सम्प्रसारणे सति भृष्टमिति नार्थः पूर्वविप्रतिषेधेनेति।

मित्येवेति ।

अत्रेदं वक्तव्यम्-एषा कल्पना तावद्वार्त्तिकारूढैव । 'रसोर्वचन

इति वदता रस इत्यस्याप्युक्तप्रायत्वात् । किं तु भाष्यकृता गूढाभि

सूत्रं भिद्यत इत्युक्त्वोपेक्षिता । तथा तु न कृतमित्येतावन्मात्रन्तु हरद

तच्चात्रत्यभाष्याभिसन्धिपर्यालोचनविरहप्रयुक्तम् ।

तथा हि—

रस ऋच्चेदपि लिट्सन्लिङ्सिच्चङ्परणिक्षु ते ।
दोषो ऋत्वेर्भृजौ चैवं दोषो यङ्लुकि चाधिकः ॥ १ ॥
साभ्यासस्य हि भृजभावो भवेद्धन्तेर्विधिर्यथा ।
द्वित्वं पुनर्न लभ्येत स्थानिवत्त्वाद्वधेरिव ।
तस्मादस्तु यथान्यासं स्वातन्त्र्ये ऽस्तु रसोरिति ॥ २ ॥

अयं हि भगवतो गूढो ऽभिसन्धिः । रस ऋभावे पञ्च दोषाः

लिटि बभर्जतुः बभर्जुरित्यादीष्यते । बभृजतुर्बभृजुरित्यादि स्यात् '

न्त'' इतीड् विकल्पाद् बिभर्क्षतीत्यादीष्यते । बिभृक्षतीत्यादि स्यात्

न्ताच्च'' इति सनः कित्त्वात् । लिङ्सिचोस्तङि भर्क्षीष्ट, अभर्ष्टेत्याद

भृक्षीष्ट, अभृष्टेत्यादि स्यात् , ''लिङ्सिचावात्मनेपदेषु'' इति कि

चङ्परे णौ अबभर्जदितीष्यते । अबीभृजदित्यपि स्यात् ''उर्ऋत्

ऋत्वप्रवृत्तेः । इररारामपवादः स इति हि सिद्धान्तः । स्यादेतत् ।

वैकल्पिकत्वेनाबभर्जदित्यपि भविष्यति । अबीभृजदित्यनिष्टमिति चेत

'भ्रस्ज पाके' इति तुदादौ, 'भृजी भर्जने' इति भ्वादौ पाठेन तत्र रूपद्वयस्य दुर्वारत्वात् । त

---

इत्यादि स्यादिति । ऋभावे संयोगात्परत्वेन कित्त्वे गुणाप्राप्तेरिति

सम्प्रसारणस्य तु नात्र प्राप्तिः । संयोगात्परत्वेनाकित्त्वात् । सनः कि

इक्समीपहलः परत्वाभावेनाकित्त्वान्नात्र सम्प्रसारणप्राप्तिरिति

कित्त्वादिति । सम्प्रसारणप्राप्तिरुक्तयुक्त्यैवेति भावः । न च सन्निप

भाषयैव न दोषः । शब्दतोऽर्थतो वास्याकित्सन्निपातलक्षणत्वाभ

अत एव ''भ्रस्जादेशात्सम्प्रसारणं पूर्वविप्रतिषेधेन'' इति भाष्यं सङ्ग

इत्यपि स्यादिति । ऋत्वस्य वैकल्पिकत्वादिति भावः ।

ङ्परे णौ दोषोपन्यास इति चेत्? पाकस्यौदनादिविषयतया भर्जनस्य च तद्-व्यावृत्ततया अवान्तरार्थभेदमभिप्रेत्येति गृहाण । अर्थैक्याभ्युपगमे तु प्राचीनाश्चत्वार एव दोषाः । न हि तेऽपि धात्वन्तरेणापि सूद्धराः । अपिरिलटि तस्यापि गुणाभावात् । अनुदात्तत्वेन परस्मैपदासम्भवाच्च । सनूलिङ्सिचामिडागमश्रौव्याच्च । यदि तु भ्रस्जेर्भृजिरित्युच्येत; तत्राह—भ्रस्जेर्भृजौ चैवमिति । चत्वारो दोषा दृढाः, पाक्षिकः पञ्चमोऽपीत्यर्थः ।

स्थानिवत्त्वादिति । अनभ्यासत्वाभावादिति भावः । द्वित्वमभ्युपेत्यापि ब्रूमः—रुम्रिम्रीको दुर्वाराः । धात्वन्तरे तेषामावश्यकत्वेऽपि रुगादिविनिर्मुक्तं बाभार्जीता बाभर्जिष्यतीत्यादि रूपं न सिद्ध्यत्येव । तस्माद्यथान्यासमेवास्तु । अथ लाघवे पक्षपातेन स्वातन्त्र्यं चिकीर्षितम्; तर्हि भ्रस्जेरसोरिति पठित्वा अरेव विधीयताम् । तथा च न कोऽपि दोष इति भावः ।

---

चत्वारो दोषा इति । बरीभृज्ज्यते, भृज्ज्यादित्यादौ नित्यतया जश्त्वश्चुत्वार्थम् "ऋभावात्सम्प्रसारणं विप्रतिषेधेन" इत्यस्यावश्यकत्वमित्यपि बोध्यम् । ध्वनितश्चायं "सर्वथा पूर्वविप्रतिषेधान्न मुच्यामहे" इति भाष्येण । किं च हरदत्तोक्तन्यासो ऽसङ्गतः । "ऋ अन्यतरस्याम्" इत्यत्र यणि रस इत्यस्य "हशि च" इत्युत्वे "रसोरन्यतरस्याम्" इत्यस्यैवौचित्यात् ।

अनभ्यासत्वाभावादिति । यङ्लुकि द्वित्वे कृते साभ्यासस्यैवार्थवत्त्वेन धातुत्वाङ्गत्वयोः समुदाय एव सत्त्वेन समुदायस्य भृज्जादेशे स्थानिवत्त्वेन तत्त्वाभावादिति भावः । अत एव हन्तेर्यङ्लुकि वध्यादिति माधवादिभिरुदाहृतम् । अभ्युपेत्यापीति । साभ्यासत्वस्याशास्त्रीयत्वेनातिदेशाभावादिति भावः । अपिना ऽरुचिर्बोधिता; तद्बीजं तु 'लक्ष्ये लक्षणस्य' इति न्यायेन द्वित्वप्रवृत्तिर्दुरुपपादेति । दुर्वारा इति । ऋदुपधत्वादिति भावः ।

ननु अन्तरङ्गेषु रुगादिषु बहिर्भूताऽऽर्धधातुकनिमित्तभृज्भावस्य बहिरङ्गत्वेनासिद्धत्वान्नायं दोषः ।

किं च उत्तरखण्डस्यैवार्थवत्त्वमभ्यासस्तु साधुत्वार्थ एवेति "दयतेः" इति सूत्रस्थभाष्यसम्मततयोत्तरखण्डस्यैवादेशो न समुदायस्य यङ्लुकि वध्यादित्यपि माधवोक्तं चिन्त्यमेव । 'न सिच्यन्तरङ्गम्' इति तु नास्त्येवे-

**पूर्वविप्रतिषेधेनेति** । नित्यत्वादित्यपि सुवचम् । शब्दान्तरस्य प्राप्तावपि कृताकृतप्रसङ्गित्वमात्रेण नित्यताया लक्ष्यानुरोधेन क्वचित्स्वीकृतत्वात् ॥

**"विज इट्"** ॥ इह "वृद्धिर्यस्य" इति सूत्रान्मण्डूकप्लुत्या यस्यादिरित्यनुवर्त्तते । तेनेडादिः प्रत्ययो(१) लभ्यते । न तूत्तमैकवचनमेव, तथा हि सति विजिषीयेत्यत्रैव स्यात् । 'ओविजी, भयचलनयोः' इत्ययमेव गृह्यते; न तु पृथग्भावार्थ इरित् , तस्यानिट्कत्वादिति हरदत्तादयः । न च क्रादिनियमात् लिटीट् सम्भवत्येवेति वाच्यम् । तत्र कित्त्वेन गतार्थत्वादिति भावः ।

वस्तुतस्तु नेदं युक्तम् । विवेजिथेति थलीट्सम्भवात् । तत्र च पित्त्वेन कित्त्वाभावात् । न च पूर्वसूत्रे कुटादीनां प्रकान्तत्वात्कथञ्चित्तत्साहचर्यात्तुदादेरेव ग्रहणं; न जुहोत्यादेरिति वाच्यम् । रुधादावपि ङित्त्वादुद्विजितेत्युदाहरद्भिर्माधवादिभिः सह विरोधापत्तेः । तस्मादिह तुदादिरुधाद्योर्ग्रहणे जुहोत्यादेश्चाग्रहणे व्याख्यानमेव शरणम् । अत्र प्राचा ञिणद्रुज इति व्याख्यातम् । तन्निष्फलत्वान्निर्मूलत्वाच्चोपेक्षितम् । न ह्यस्य व्यावर्त्यं सम्भवति, न वा वृत्तिकारैरञ्णिदित्यनुवर्त्तितम् ।

**व्यचः, व्याजीं । पर्युदासेनेति** । प्रसज्यप्रतिषेधे हि वाक्यभेदोऽसमर्थसमासश्च प्रसज्येतेति भावः । तस्मात् स्यसिच्सीयुट्सन्तासिप्रभृतिषु नेदं प्रवर्त्तते । एतच्च हरदत्तमाधवादिग्रन्थे स्पष्टम् ।

---

दस्य प्रवृत्तिरित्यक्राक्षीदमार्क्षीदिति रूपद्वयसिद्धिरिति भावः ।

स्वीकृतत्वादिति । न च ऋकारान्तर्गतरेफमादाय रमपि नित्यो वर्णग्रहणे तदेकदेशाग्रहणात् । उपदेश इत्यनुवृत्तेश्च ।

यत्तु प्राचा अविचीदित्यादि सिजादीनां ङित्त्वं स्वीकृत्योदाहृतम्, तदाकरविरोधादुपेक्ष्यम् ।

यत्तु वदन्ति कातन्त्रे व्यचेः कुटादिषु पाठितत्वात्सिद्धम् । कुटादित्वमनूद्यासि निषेधमात्रमनेन क्रियते । लाघवात् । एवञ्च विधेयभेदाभावे क्व वाक्यभेदः । तस्मान्माधवादिग्रन्थ एवासङ्गत इति ।

अत्रेदं वक्तव्यम्—कातन्त्रे कुटादिषु पाठेऽपि पाणिनीये तदभावः स्पष्ट एव । तथा च कथन्तदनुवादेन वार्त्तिकं प्रवर्त्तताम् । एवञ्चाप्राप्तं कुटादित्वं विधीयत इति हरदत्तोक्तिस्तदनुवादिनी माधवोक्तिश्च निर्बाधैव । असमर्थसमासस्तु दुरुद्धर इत्युक्तमेव । तस्माद्यथाकरमेव ग्रहीतुमुचितम् । न त्वर्वाचीनेषु पक्षपातो युक्त इति दिक् ।

'उछि उञ्छे' 'उच्छी, विवासे' इमौ भ्वादिगणे पठितौ । इह पाठस्तु उच्छती उच्छन्तीत्यत्र "आच्छीनद्योः" इति नुम्विकल्पार्थः । पूर्वं पाठस्तु स्वरार्थः । तथा हि उञ्छति उच्छतीत्यादौ पिद्वचने शपिबादीनां पित्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं पदम् । शे तु प्रत्ययस्वरेण मध्योदात्तमिति ।

द्विहल्ग्रहणस्येति । न चोपलक्षणत्वे मानाभावः । अदुपधस्य चेदश्नोतेरेवेति नियममाश्रित्य द्विहल्ग्रहणं प्रत्याचक्षाणस्य भाष्यकारस्यैव तत्र मानत्वात् । लोभिता लोब्धेति । "तीषसह" इति वेट् ।

---

वार्त्तिकं प्रवर्त्तताम् इति । "व्यचेः कुटादित्वं वक्तव्यं, किं प्रयोजनं, ङिणति सम्प्रसारणार्थम्" इति भाष्यसन्दर्भविरोधस्तदनुवादेन प्रवृत्ताविति बोध्यम् ।

**कुर, शब्दे** । **करोतेरेवेति** । सुप्रसिद्धत्वात् । यथा गोशब्दस्यानेकार्थत्वेऽप्यर्थप्रकरणादिविशेषं विना स्वर्गरश्म्यादयो न गृह्यन्ते ; तथा कुरतेरपीति भावः ।

**मुर, संवेष्टने** । इगुपधलक्षणः कः । मुरो—दैत्यः । मुरारिर्विष्णुः । **घुर** । पचादित्वादच् । घोरः । **वृहू** । **दन्त्योष्ठ्यादिरिति** । 'उद्वृह रक्षः सहमूलमिन्द्र' इति प्रयोगात् । **इष इच्छायाम्** । केचिदुदितं पठन्ति । तत्फलन्तु इड्विकल्पे च्छविधौ च सानुबन्धस्यैव पाठादिष्वादिकक्त्यादिकयोस्तन्निवृत्तिरित्याहुः । अनुदित्पाठस्तु भाष्यवार्तिकसंमत इति क्त्वादौ स्फुटीभविष्यति । **तिल स्नेहने** । तिलति । कप्रत्यये तिलः । तेलतीति गतौ शपि । **चिल वसने** । पचादित्वादच् । चेलम् । चेलतीति शपि । **विल संवरणे** । **दन्त्योष्ठ्यादिरिति** । आविलमिति दर्शनात् । '**शिल षिल, उञ्छे**' । आद्यस्तालव्यादिः । द्वितीयो मूर्द्धन्यादिः । **मिल, श्लेषणे** । अयं स्वरितेत्स्वपि पठिष्यते । इह पाठस्तु कर्त्रगेऽपि फले परस्मैपदार्थः । '**लिख, अक्षरविन्यासे**' । लेखिता । लेखिष्यतीत्यादि । कथन्तर्हि—'लिखितु स्वयमेव लिखिष्यते' इति ? प्रमाद एवायम् । संज्ञापूर्वकत्वेनानित्यतया वा समाधेयम् ।

यत्तु केचित्—"गाङ्कुटादिभ्य"इत्यत्र कुटस्यादिः कुटादिः, कुट आदिर्येषामिति तत्पुरुषबहुव्रीह्योरेकशेषमाश्रित्य समादधुः, तन्न । लेखितस्यादौ गुणनिषेधापत्तेः । न चेष्टापत्तिः । वृत्तिकारहरदत्तादिविरोधात् । 'अपाच्चतुष्पाच्छकुनिष्वालेखने'इति सौत्रप्रयोगविरोधा(१)च्चेत्यास्तान्तावत् । कथं

---

"छ्वोः" इति सूत्रे सतुक्कनिर्देशेन तुग्विषये "वाणादाङ्गम्" इत्यस्या अनाश्रयणात् ।

लिखापयतीति । अत्रात्रेयः—लेखनं लिखः घञर्थे कः । 'तमाचष्ट'इति णिच्; आपुको दीर्घोच्चारणसामर्थ्यादन्यत्रापि प्रवृत्तिरिति, एतच्च भाष्यविरुद्धम् । भाष्ये आकारस्य प्रत्याख्यानात् । तस्मादित्थं समाधेयम्-आपनमापः—प्राप्तिः । आप्नोतेर्घञ्, लिखस्य आपो लिखापः, तत्करोतीति ।

**णू स्तवने** । 'परिणूत'इत्यादि भागवतम् । अत्र आर्षो दीर्घ इति श्रीधरोक्तिस्तु एतद्धातुवदर्शनप्रयुक्तत्वादुपेक्ष्येति भावः । **मृङ्** । (१)ङित्वं स्वरार्थम् । तथा हि—मा हि मृतेत्यत्र लसार्वधातुकानुदात्तत्वे कृते धातुरुदात्तः । सिज्लोपस्य पूर्वत्रासिद्धत्वन्तु न । ङित्वसामर्थ्यादित्येवेत्यन्यत्र विस्तरः । **रि पि गतौ** । लघूपधगुणमाशङ्क्याह—**अन्तरङ्गत्वादिति** । रिधातोः शप्रत्यये सति विकरणविशिष्टस्याङ्गत्वाल्लघूपधत्वम् । एवं पिधातोरपि बोध्यम् । **प्रच्छ ज्ञीप्सायाम्** । पृच्छा । भिदादेराकृतिगणत्वादङित्यात्रेयः । तत्करोतीति णिच् , ततो ण्वुल् । एवञ्च 'वक्तारं पृच्छकं श्रोतॄन्'इति प्रसिद्धपाठोऽपि निर्दोषः । प्रच्छकमिति पाठस्तु सुलभ एव । **किरादयो वृत्ता इति** । एते च "भूषाकर्मकिरादिसनाम्"इति वक्ष्यमाणे उपयोक्ष्यन्ते ।

**ससर्जिथेति** । "विभाषा सृजिदृशोः"इति थलि वेट् । **विच्छ गतौ** । तुदादिपाठसामर्थ्यात् आयप्रत्ययान्तादपि शो; न तु शप् । तेन विच्छायती विच्छायन्तीति नुम्विकल्पः ।

केचित्तु तुदादिपाठसामर्थ्यादायप्रत्ययस्यैव पाक्षिकत्वं वदन्तो विच्छ-

---

प्रत्याख्यानादिति । यस्याकारोच्चारणं विना न सिद्धिस्तत्र तत्सामर्थ्यात्तत्कल्पनसम्भवेऽप्यत्र तत्कल्पने न मानमित्यपि बोध्यम् ।

ननु मास्तु नियमत्वं विधित्वमेवास्तु, किं ङित्वेनेत्यत आह—ङित्वमिति । सामर्थ्यादेवेति । तत्सामर्थ्यादेकादेश इव तत्रासिद्धत्वबाधनमिति भावः ।

आयप्रत्ययान्तादपीति । न च ण्यन्तादपि स्यात्; सर्वथाप्राप्तेऽऽयप्रत्ययान्ते चारितार्थ्येनान्यत्र तत्कल्पने मानाभावात् । शीघ्रोपस्थितिकत्वेन विच्छिशब्दमुच्चार्य विहितप्रत्ययान्तस्यैव विच्छिशब्देन "तुदादिभ्य" इति सूत्रे ग्रहणादिति भावः ।

तीति विच्छन्तीति नुम्विकल्पमुदाजहुः, तेषां मते तुदादिपाठस्य केवले चरितार्थत्वादायप्रत्ययान्ताच्छवेव । तेन विच्छायन्तीति नित्यमेव नुम् ।

**षिच क्षरणे** । केचिदिदितं पठन्ति; तत्प्रामादिकम् , फलाभावात् । **दीपनायामपीति** । 'नक्षत्रेभिः पितरो द्यामपिंशन्'इत्यादौ दीप्त्यर्थावगतेः स्पष्टत्वात्तथैवाभियुक्तैर्व्याख्यातत्वाच्चेति भावः ॥

## इति तुदादयः ॥

---

**"रुधादिभ्यः श्नम्"** ॥ श्नमो मित्त्वादागमत्वेऽपि प्रत्ययसञ्ज्ञा न विरुध्यते । तत्फलन्तु प्रत्ययादित्वेन शस्येत्सञ्ज्ञा । शकारोच्चारणन्तु

---

तेषां मते इति । अत्रारुचिर्बीजन्तु अबाधेनोपपत्तौ बाधकल्पनस्यान्याय्यत्वम् ॥

इति तुदादयः ॥

---

न विरुद्ध्यत इति । प्रत्यय(१) इत्यधिकारादिति भावः । अत एव "शबादेशाः श्यनादयः करिष्यन्ते" इति भाष्यं सङ्गच्छते । प्रत्ययत्वे ऽपि तस्मिन्नाङ्गत्वम् , अवयवमुद्दिश्याविधानात् । तेन भनक्तीत्यादौ न दीर्घः । इत्सञ्ज्ञेति । अ-

---

(१) प्रत्यय इत्यधिकारादिति । श्नमित्यत्र शकारस्य किं फलमिति चेत् ? सार्वधातुकत्वार्थम् , अन्यथा'तिङ्शित्सार्वधातुकम्'इति न प्रवर्तते । तथा च "सार्वधातुकमपित्" इति ङित्वं न स्यात् । तथाच"क्ङिति"इति निषेधाप्रवृत्तौ भिनत्ति इत्यादौ गुणस्स्यात् । भिशब्दस्याङ्गसंज्ञासम्बन्धिनो गुणो मा भूदिति शित्त्वं कृतमिति तात्पर्यम् । न च सार्वधातुकार्धधातुकयोरङ्गस्य गुण इत्यर्थे यस्माद्विहितस्तदादित्वाभावेनानङ्गत्वात्कथमिह गुणव्यावृत्तिप्रयोजनमिति वाच्यम् । आर्धधातुकसंज्ञाव्यावृत्त्यर्थं तस्यावश्यकत्वात् । न चार्धधातुकसंज्ञायां

"श्नान्नलोपः" इत्यत्र विशेषणार्थम् । उच्छृदिर् । उकारः क्त्वायामिड्विकल्पार्थः । छृत्त्वा, छर्दित्वा ॥

"तृणह इम्" ॥ हलादौ पितीति । भाष्यकारीयनिष्कर्षे तु हलीति नानुवर्त्तते । न चैवन्तृणहानीत्यादावतिव्याप्तिः । अचि नेत्यनुवर्त्तनात् ॥

**इति रुधादयः ॥**

---

**क्षणु हिंसायाम् । क्षिणु च ।** द्वावप्येतौ दन्त्यान्तौ । णत्वन्तु लाक्षणिकन्तेन यङ्लुकि चंक्षन्ति चेक्षिन्तीत्यत्र "नश्च" इत्यनुस्वारः सिध्यति । "सम्पर्युपेभ्य" इति वृत्तिकारोक्तं पाठमुपेक्ष्य भाष्यवार्तिकानुसारेणाह— **सम्परिभ्यामिति** ॥

**इति तनादयः ॥**

---

गुणार्थस्तु न, तृणह इत्यादिनिर्देशात् । विशेषणार्थमिति । अन्यथा यत्तानामित्यत्रापि तदापत्तिः । "मिदचोऽन्त्यात्" इति त्वेकवाक्यतया सम्बध्यते रुधादिभ्यो रुधादीनामन्त्यादचः परो मित् श्नम्प्रत्यय इत्यर्थः । "परश्च" इत्यस्य तु मित्त्वसामर्थ्याद् बाधः । "शे मुचादीनाम्" इत्यादाविव यस्य विहितस्तस्यान्तावयव इति तत्र न सम्बध्यते । अयोग्यत्वादिति बोध्यम् ।

अनुवर्त्तनादिति । इदं "प्रत्यय(१)लोप" इति सूत्रे भाष्ये स्पष्टम् ॥

इति रुधादयः ॥

---

भाष्येति । "सम्परिभ्यां भूषणसमवाययोः करोतौ" इति "अत उत्सार्वधातुके" इति सूत्रे भाष्यादिति भावः ॥

इति तनादयः ॥

**एवं झस्येति** । आत्मनेपद इति भावः ॥

**"स्तम्भुस्तुम्भु"** ॥ नकारोपधः । **विष्टभ्नोतीति** । "स्तन्भेः" इति षः ॥

**"वेः स्कभ्नातेर्नित्यम्"** ॥ (१)**विष्कभ्नोतीति** । यत्तु प्राचोक्तं स्कभ्नातेरित्युक्तेः स्कभ्नोतेर्नेति; तदप्रामाणिकमिति भावः ।

तथा हि—स्कभ्नातेरित्यत्र यदि श्नाप्रत्ययविशिष्टं रूपं विवक्षितन्तर्हि विष्काम्भितमित्यादावपि न स्यात् । अथ धातुमात्रं विवक्षितन्तर्हि श्नुविशिष्टेऽपि तस्मिन्भवितव्यमेव षत्वेन । उदाहृतञ्च तत्रापि षत्वं माधवादिभिरिति दिक् ॥

**"हलः श्नः"** ॥ यत्तु प्राचो ग्रन्थं व्याचक्षाणैः सौत्रेभ्यः शानच् नास्तीत्युत्प्रेक्ष्य स्तभ्नीहीत्युदाहृतन्तद्यद्यपि प्राचो ग्रन्थस्यानुगुणम् । प्राचा "हलः श्न" इति सूत्रस्य गृह्णातावुपन्यासात् । अन्यथा प्रथमोपस्थितान् स्तम्भुप्रभृतीनुपेक्ष्य तावद्दूरगमनायोगात् । तथाप्यनाकरत्वात्तदुपेक्ष्यम् । तथा च माधवेन स्तभानेत्युदाहृतम् ॥

**"हलः"** ॥ अङ्गावयवात्किम् ? निरुतम्, दुरुतम् । **अन्थ** । **वक्तव्याविति** । तन्त्रान्तरोक्तौ इहाप्याश्रयणीयावित्यर्थः । संयुक्तहल्मध्यस्थ-

इत्यादावपीति । **किं च तद्विशिष्टस्यानुकरणे धातुनिर्देशाभावेन श्तिपो ऽनापत्तेरित्यपि बोध्यम्** । श्नुविशिष्टेऽपीति । **ननु "वेः स्कम्भेः" इति वक्तव्ये स्कभ्नातेरित्युक्तिरश्नोतेश्चेतिवदन्यविकरणधातुव्यावृत्त्यर्थेत्यरुचेराह—उ**दाहृतञ्चेति । **एवञ्च व्याख्यानादयं विकरणनिर्देशोऽदृष्टार्थ एवेति भावः** ।

तथा च माधवेनेति । **अत एव "हलः श्नः" इति सूत्रे श्नाग्रहणञ्चरिता-**

---

अजादौ न भवतीत्यर्थेन इमागमस्यानैमित्तिकत्वेन तत्र प्रत्ययलक्षणानावश्यकत्वेन दोषाभावादिति समाहितम् ।

न च 'तृह'इत्येव वक्तव्ये सश्नमो ग्रहणं व्यर्थमिति वाच्यम् । विशेषविहितेनेमा श्नमो बाधापत्तेः ।

स्वाद् ग्रन्थेरादेशादित्वाच्चाप्राप्तौ वचनम् ॥

**"ग्रहो ऽलिटि"** ॥ एकाचः किम् ? यङ्लुकि मा भूत् । न चेष्टापत्तिः । आकरग्रन्थविरोधादिति स्फुटीकरिष्यते । विहितस्येति किम् ? ग्राहितम् । न चात्र णिलोपस्य स्थानिवद्भावः । दीर्घविधौ तन्निषेधात् । **ग्रहीषीष्टेति** । "न लिङि" इति दीर्घनिषेधो नेह । वॄत इत्यनुवृत्तेः ।

**इति क्र्यादयः ॥**

---

**अचूचुरदिति** । प्रसादकृता "सन्वल्लघुनि" इति सन्वद्भाव इत्युक्तम् । तस्य प्रकृते क उपयोग इति स एव प्रष्टव्यः ।

---

र्थम् । अन्यथा 'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः' श्नुः 'श्ना' क्र्यादिभ्यः' 'हलः श्नानज्झौ' इत्येव कुर्यात् । श्नेत्यत्र स्तम्भ्वाद्यनुवृत्त्या क्र्यादिभ्य इत्यत्र श्नेत्यनुवृत्त्या हलः इत्यत्र क्र्यादिभ्य इत्यनुवृत्त्या प्रत्ययान्तरविधानेन सिद्धेः । मम तु तथा न्यासे स्तम्भ्वादिभ्यः सौत्रेभ्यः शानजनापत्तेर्न तथा न्यासः शक्यक्रियः । स्तम्भ्वादीनामप्यनुवृत्तौ श्नोरपि विषये तदापत्तिरिति दिक् । अत्रोभयत्रापि लक्ष्यनिर्णयो बहुदर्शिभिः कार्य इत्यलम् ।

अप्राप्तौ वचनमिति । भाष्यानुक्तत्वादिदमप्रमाणमिति मूले हरदत्तादय इत्यनेन सूचितम् ।

आकरेति । हरदत्ते(१)त्यर्थः । भाष्ये तु नैतद्दृश्यते । स्थानिवद्भाव इति । पञ्चमी(२)समासेन तत्प्राप्तिः । एवञ्च ग्रहेः परत्वाभावेन विहितविशेषणाभावेऽपि न क्षतिरिति भावः । दीर्घविधाविति । "चिण्णमुलोः" "कर्मणीङ्" इति सूत्रस्थभाष्यप्रामाण्यात् त्रैपादिकदीर्घस्यापि, "न पदान्त" इति सूत्रे ग्रहणम्, "वरे यलोपस्वरवर्जम्" इत्यत्र दीर्घोऽप्युपलक्ष्यत इति मते इदम् ॥

इति क्र्यादयः ॥

---

क उपयोग इति । सन्वद्भावविषये हि दीर्घो न तु तेनेति भावः ।

**सामान्यापेक्षमिति** । नन्वेवम् "आधृषाद्वा" इति व्यर्थमिति चेत् ? मैवम् । ज्ञापकासिद्धस्यासार्वत्रिकत्वात् । अन्यथा सञ्ज्ञापूर्वकस्य विधेरनित्यत्वाद्विकल्पविषयः प्रायेण व्यर्थाः स्युरिति सर्वोपप्लवः स्यात् । एवञ्चास्मिन्पक्षे आधृषीयाणामेव पाक्षिको विकल्पः । अन्येषान्तु शिष्टप्रयोगाद्व्यवस्थितिरित्यर्थः । **वृत्तिकृतेति** । तत्रैव न्यासकृता 'अनित्यण्यन्ताश्चुरादय' इति सामान्याकारेणाभिधानाच्चेति बोध्यम् । **न वैयर्थ्यमिति** । यद्यपि प्रथमपक्षेऽपि सार्थक्यमुपपादितम् , तथाऽप्यस्मिन्पक्षे वैयर्थ्यशङ्काऽपि नेत्यर्थः ।

**तच्चिन्त्यमित्यादि** । अयम्भावः—यन्त्रितन्त्रिमन्त्रिकुद्रयो हि संयोगान्ताः, तेषां नकारविशिष्टपाठेऽपि "अनिदिताम्" इति नलोपो न लभ्यते । नकारस्यानुपधात्वात् । तत्कथन्तेषामिदित्वं णिजभावं ज्ञापयेत् । चिन्त्यादित्यादौ णिजभावपक्षे नलोपव्यावृत्त्या सार्थकता लभमान इकारो णिजभावं ज्ञापयतीत्युचितम् । न चेह तथेति स्फुटं वैषम्यम् । अत एव कविकल्पद्रुमे— यन्त्रितन्त्रिमन्त्रिकुद्रयो नित्यणिजन्ता एवोक्ता इति ।

**ओकार इदित्येक इति** । लण्डयति । लण्डति । अस्मिन्पक्षे निष्ठायां रूपे विवदन्ते लण्डूनः । अनुबन्धबलान्नेडित्येके । लण्डितः । अनुबन्धबलादिड्व्यवधानेऽपि नत्वमित्यन्ये । ओदित्त्वमस्ति न वेति पक्षद्वयमपि माधवबोपदेवादिग्रन्थे स्थितम् । ओदित्त्वपक्षेऽपि निष्ठायामिडस्ति न वेति मतद्वयं काव्यकामधेनौ स्थितम् ।

'पॄ, पूरणे' । **तद्धीति** । एतच्च श्रीभद्रादीनां मतं माधवेनोपन्यस्तम् । न त्विदङ्क्षोदक्षमम् । धातुपाठकृता पाणिनिना विशिष्यैवोदात्तानुदात्तान्तपाठात् । न हि ॠकारान्ताः सेट्का इति तेन परिभाषितं, येनेत्थं तस्याशयः कल्प्येत । अत एव कविकल्पद्रुमे—पारयतेर्नित्यण्यन्तत्वमुक्तम् ॥

"उरृत्"॥ इररारामिति। दीर्घोपधे "उपधायाश्च" इति इर् प्राप्तः, मृजेर्वृद्धिः, इतरेषामृवर्णोपधानामर् इति विवेकः । नन्विह उरित्यनुवाद्यसमर्पकेण सावर्ण्याल्लृवर्णोऽपि गृह्यते । ऋदित्यनेन तु भाव्य(१)मानत्वान्न ग्राह्यः । तथा च अचीकृपदिति प्रसज्येतेति चेत्? मैवम् , लत्वस्यासिद्धत्वेन पूर्वमेव अरं बाधित्वा "उरृत्" इत्यस्य प्रवृत्तेः । यदि परं 'क्लृपू सामर्थ्ये' इति लृकारोपध एव पठ्येत, तदा स्यादेवोक्तदोषः । एतेन चलीक्लृप्यते

---

त्यये क्रियमाणं दीर्घोच्चारणं तदर्थज्ञापकमिति वाच्यम् , ऋकारान्तप्रयुक्तकार्यविशिष्टरूपाणामौहोत्यादिकमादाय सिद्धेर्ज्ञापितेऽपि चारितार्थ्यासम्भवेन ज्ञापकासम्भवादिति भावः ।

प्रवृत्तेरिति । ततः प्रवृत्ते ऋकारे लत्वप्रवृत्त्येष्टसिद्धिरिति भावः । लृकारोपध एवेति । कृपणः कृपेत्यादौ ऋकारश्रवणं तत्र लत्वाभाववद्बाहुलकेन सिद्धमिति भावः । स्यादेवोक्तदोष इति । न च तपरसूत्रेऽप्रत्यय इत्यस्यासम्बन्धेन भाव्यमानेन ऋकारेणापि लृकारग्रहणसत्त्वादन्तरतमपरिभाषया लृकारस्य लृकारेणेष्टसिद्धिः । तपरत्वं हि लृकारस्य दीर्घऋकारस्य च स्थानित्वे सार्थकमिति । ग्राहकसूत्रे परेणाण्ग्रहणेऽस्य तपरत्वस्य ज्ञापक-

---

( १ ) भाव्यमानत्वादिति । "भाव्यमानेन सवर्णानां ग्रहणं न" इतिपरिभाषेत्यर्थः । विधेयताप्रयोजकेन पदेन स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवतां ग्रहणं नेति परिभाषार्थः । स च धर्मः तद्व्यक्तित्वतत्पुरुषीयत्वातिरिक्तः स्वरत्वव्याप्य उदात्तत्वादिभिन्नश्च बोध्यः । तेन तत्तल्लक्ष्यघटकानां तत्तत्पुरुषोच्चारितानां स्वकारव्यक्तीनां विधायकाद्भेदेऽपि न क्षतिः । एवं "बहुवचने झल्येत्" इत्यादौ उदात्तायेकारस्योच्चारणेऽपि तद्भिन्नस्यानुदात्तादेरपि सर्वेभ्यो विश्वेभ्य इत्यादौ विधानं सिध्यति ।

ननु यण्पदेन स्वावृत्तिधर्मवतां वकारादीनां ग्रहणं न स्यादिति चेत् , न । स्वतादात्म्य स्वनिष्ठशक्तिनिरूपकतावच्छेदकसमुदायघटकत्वान्यतरसम्बन्धेन स्वविशिष्टावृत्तिधर्मवतां ग्रहणं नेति परिभाषार्थस्वीकारेण स्वं यण्पदं तन्निष्ठशक्तिनिरूपकतावच्छेदकसमुदायः वर्णसमाम्नायस्थयवरलेत्येवंरूपः तद्घटकत्वं तेष्वेव निरनुनासिकयादिष्विति तद्वृत्तिधर्मवतामनुनासि-

इत्यादौ रीगागमादेर्लत्वार्थं "कृपो रो लः" इति सूत्रमस्तु नाम। धा
लकारोपध एव पठ्यताम्। एवं हि प्रक्रियालाघवं लभ्यते। ऋकारैकदे
लकारैकदेश इति व्याख्यानक्लेशोऽपि न भवतीत्युत्प्रेक्षापि परास्ता। अ
वल्पदित्यत्र उक्तदोषस्य ध्रौव्यात्। एतच्च सर्वं कैयटे स्पष्टम्।

**स्मापयत इति**। आत्वन्तु नेह भवति। "नित्यं स्मयतेः"
निर्देशात्। हेतुमण्णावेव तद्विधानात्। **'शुल्ब, माने'**। पवर्गतृतीया
ऽयमिति वोपदेवः। तथा च प्रयुज्यते–'शुल्बसूत्रम्' इति। **'चुट, च्छेद**
चोटयति। चुटतीति शे गतम्। **'वज मार्गे'**। वाजयति। मार्गय
व्रजेत्येके। व्राजयति।

केचित्तु मार्गेति न धात्वन्तरङ्किन्तु मार्गसंस्कारो धात्वर्थ इत्याहुः। '
अन्वेषणे' इति कथादौ। 'मार्ग, अन्वेषण' इति युजादौ। **'क्षजि, कृच्छ्रजी**
क्षञ्जयति। क्षञ्जति। **'ज्ञप, मिच्च'। अयं ज्ञान इति**। प्रतिपज्ज्ञप्तिश्चे
प्रच्छ ज्ञीप्सायामित्यादौ तथा दर्शनात्। **'ज्ञापने चेति**। "श्लाघह्नुङ्
ज्ञीप्स्यमानो बोधयितुमिष्यमाण इति व्याख्या(१)नात्। **'यम च प**
**वेषणे'**। **परिवेषणमिहेति**। चन्द्रस्य परिवेष इत्यादौ तथा प्रसि

---

तापि भाष्योक्ता युक्तेति वाच्यम्। "उर्ऋत्" इत्यनेन 'अनन्तरस्य
न्यायेनाचीकृतदित्यादावित्वबाधानापत्तेः। ऋदुपधत्वे तु "उर्ऋत्"
लकारग्रहणे फलाभावेन दीर्घव्यावृत्त्यर्थतैव तपरत्वस्य वक्तव्येति त
मथ्यांद् बाध्यसामान्यचिन्तामाश्रित्यास्य सर्वबाधकत्वस्वीकार इत्यव
म्लृदादिभ्यो ऽनुकरणेभ्यो णिच् तु नानभिधानात्। ध्वनितञ्चेद
ऋकारोपधं ब्रुवता पाणिनिनेति तात्पर्यात्।

स्मयतेरिति निर्देशादिति। शपा निर्देशेन तत्प्रकृतिभूतस्मिधातोरेव
मिति भावः। युक्त्यन्तरमाह—हेतुमण्णावेवेति। "स्मयतेः" इति सूत्रे हे
इत्यनुवर्त्तते भय इति धात्वर्थोपलक्षणम्। एवञ्च प्रत्यासत्त्या हेतुव्याप

**न त्विति ।** तत्र घटादित्वादेव सिद्धेरिति भावः । **नापीति** । हेतुमण्ण्यन्तस्य हि सोऽर्थः । तत्र च घटादित्वादेव सिद्धेरिति भावः ।

**"नान्ये मितोऽहेतौ" ॥ ज्ञपादिभ्य इति ।** मुख्यमते–पञ्चभ्यः; मतान्तरे तु चपिरहिभ्यां सह सप्तभ्य इत्यर्थः । **पूर्णेत्येके, पुणेत्यन्ये इति ।** ईदृशेषु कोशशुद्धिः कीदृशीति चिन्त्यम् ।

उक्तञ्च स्वामिना—

पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः ।
न विद्मः किञ्जिहीमोऽत्र किमुपादद्महे वयम् ॥ १ ॥

**'चूर्ण, सङ्कोचे'** । पुनः पाठो ऽर्थभेदकृतः । **मर्च चेति** । अयन्धातुः "मिदचोऽन्त्यात्" सूत्रे कैयटेनोपन्यस्तः । प्रयुज्यते च–'मर्चो मर्चं मर्चयति द्वयेन' इति । तस्मात्केषाञ्चिदिहापाठमात्रेणाप्रामाणिकोऽयमिति न मन्तव्यम् ।

मैत्रेयमतमाह–**अर्द्दन इत्येक इति** । एक इत्यस्वरसोद्भावनम् । तद्बीजन्तु अनयोरिदित्वादेव लुम्पति तुम्बतीति सिद्धेरर्द्दने ऽर्थे भूवादौ पाठो व्यर्थः स्यात् । अदर्शने त्वर्थभेदात्सोऽपि सार्थक इति ।

---

च भुज्यनुकूलः पात्रे ऽदनीयवस्तुप्रक्षेपः । ण्यन्ताल्ल्युटि वेष्टनार्थ इति
बोध्यम् । घटादित्वादेवेति । भुज्यर्थयम्धातोर्हेतुमण्णौ घटादिपठितेन "जनसुर·
ञ्जोऽमन्ताश्च" इत्यनेन रूपसिद्धिः । "यमो ऽपरिवेषणे" इति निषेधस्तु न,
भोजनार्थत्वादिति भावः । हेतुमण्ण्यन्तस्येति । वेष्टनरूपार्थकाच्चुरादिण्यन्ता·
द्यमयतेर्हेतुमण्णौ सोऽर्थ इत्यर्थः । एवञ्च तत्र यमयतीत्यस्यान्यथैव सिद्धे·
श्चुरादिण्यन्ते वेष्टनायां मित्त्वविधानस्य वैयर्थ्यापत्तेः । "यमो ऽपरिवेष·
णे" इति निषेधस्तु 'अनन्तरस्य' इति न्यायेनामन्तत्वप्रयुक्तस्यैव । इह तु
वेष्टनरूपार्थनिमित्तश्चुरादिपठितवचनेन मित्त्वमिति भावः । युक्त्यन्तर·
माह–तत्र च घटादित्वादेवेति । "यमो ऽपरिवेषण" इति मित्त्वनिषेधसूत्रे भोज·
नावद्वेष्टनापि गृह्यत इति मते घटादिपठितामन्तत्वेनैव सिद्धेरित्यर्थः । तत्र

'चुटिं, छेदने'। चुण्टयति, चुण्टति। 'इल, प्रेरणे'। इ
'म्रक्ष, म्लेच्छने'। म्लेच्छनमपशब्दनम्। म्रक्षणेऽप्ययम्,
अभ्यञ्जनम्। म्रक्षयति। म्रक्षतीति सङ्घाते शपि। 'म्लेच्छ,
वाचि'। इहाव्यक्ता वागपशब्दनम्। म्लेच्छतीति भ्वादौ।
निकेतने'। पूर्वनिकेतन इति पठित्वा पूर्वनिवास इति के
पूर्वतीति पूरणे शपि गतम्। 'जसि, रक्षणे'। जस्यतीति
णे गतम्। इहैव हिंसायाञ्जासयतीति भविष्यति, तथा
'जसु, हिंसायाम्'। अस्य णिजनित्यः। क्त्वायामिड्विक
रणाल्लिङ्गात्। जासयति। जसति। जसित्वा। जस्त्वा। जस
पिण्डयति, पिण्डति। 'रुष, रोषे'। शपि हिंसायां रे
रुष्यतीति गतम्। 'डिप, क्षेपे'। सङ्घाते त्वाकुस्मीयः। डि
तीति श्यन्शपोर्गतम्। ष्टूप। स्तूपयति। अतुष्टुपत्।
इति। 'पितेव पुत्रं दसये वचोभिः' इत्यत्र भट्टभास्करेण दसे
'दस दसि दर्शनदंशनयोः' इति चौरादिकस्य व्यत्ययेन वृद्ध्य
नामनेकार्थत्वादभिमतार्थलाभ इति व्याख्यातत्वादिति भावः
स्पाशयते। अपस्पशत। "अत्स्मृदृत्वर" इत्यादिना ऽभ्यासस
वादः। स्पश बाधनस्पर्शनयोरिति भ्वादेर्गतम्। 'तर्ज,
यते। भर्त्सयते। कथन्तर्हि 'तर्जयन्निव केतुभिः' इति रघुक
दिकस्य तर्जतेर्हेतुमण्णिचि। 'बस्त, गन्ध'। अर्दनं हिंसा।
ष्ठ्यादिः। कूण सङ्कोचे। दीर्घोपधोऽयम्, ह्रस्वोपधस्तु क
ति। शब्दोपकरणयोः कुणतीति शे गतम्। भ्रूण। भ्रू
ऽर्भको गर्भश्च। यक्ष पूजायाम्। अच्। यक्षः। गूर।
गूरयते। ह्रस्वोपधस्तु दिवादौ तुदादौ च। किं च चुरादि

इति गृहाण । न चार्थासङ्गतिः । निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुत्पत्तेरिति सिद्धान्तात् । लक्षयतीति तु गतम् । **कुत्स** । "ण्यासश्रन्थ" इति युच्, कुत्सना । "यूनश्च कुत्सायाम्" इति निर्देशादङ् । कुत्सा । **त्रुट्** । अयं दिवादौ तुदादौ च । **'भल, आभण्डने'** । आभण्डनं निरूपणम् । पवर्गतृतीयादिरप्ययमिति वोपदेवः ।

**'कुट्ट, प्रतापने'** । कुट्टयते इति क्षीरस्वामी । मैत्रेयादयस्तु कुटेति पठित्वा कोटयते इत्युदाहरन्ति ।

**वञ्चु प्रलम्भने** । वञ्चयते । क्त्वायामिड्विकल्पार्थादुदित्करणाण्णिजनित्यः । वञ्चति । वञ्चिता । ऊदिदयमिति केचित्, तन्मते वङ्क्तेत्यपि । वञ्चित्वा । वचित्वा । वक्त्वा । "वञ्चिलुञ्च्यृतश्च" इति सेटः क्त्वः कित्त्वविकल्पनात्पक्षे लोपः, इडभावे तु नित्यम् । निष्ठायां तु वक्तम् । **'वृष, शक्तिबन्धने'** । केशवस्वाम्यादिमतमाह—**प्रजननसामर्थ्यमिति** । मैत्रेयमतमाह—**शक्तिसम्बन्ध इति** ।

**प्रातिपदिकमिति** । स्मयतेः कुशब्दपूर्वाद् "अन्येष्वपि दृश्यते" इति सूत्रेऽन्येभ्योऽपि वक्ष्यमाणत्वात् डप्रत्यये "कुगति" इति समासे निष्पन्नमित्यर्थः । यद्यपि कुस्मयते इत्यादि स्मिङो लडादिषु सिद्धम्, तथापि प्रकुस्मयत इत्यादि न स्यात् । उपसर्गस्य धातुव्यवधानायोगात् । किं च कुस्मयाञ्चक्रे इत्याम्न स्यात् । **'कण, निमीलने'** । काणः स्वभावादयमेकनेत्रनिमीलनवचनः । **काण्यादीनामिति** । ते च हेतुमण्णौ वक्ष्यन्ते । **चट स्फुट** । चाटयति । स्फोटयति । **निषेधालिङ्गादिति** । विशब्दनार्थादस्मादनन्तरा निष्ठा नास्तीति किं प्रतिषेधेनेति भावः । **लस शिल्पयोगे** । स्वामी तु शिल्पोपयोग इति पठित्वा लषेति मूर्द्धन्यान्तं केचित्पठन्तीत्याह । **यत निकारोपस्कारयोः** । स्वामी तु निकारस्थाने निरा-

कारेति पठित्वा निराकारः-परिभाव इति व्याख्यत्। क्रियानिषे

'यत्ने प्रैषे निराकारे यातयेदप्युपस्कृतौ' इति।

निसोऽयं धान्यधनयोः प्रतिदाने। ऋणं निर्यातयति; प्रतिद

रक लग। राकयति। लागयति। 'रके शङ्कायाम्, लगे सङ्गे' इ

अञ्चु विशेषणे। विशेषणं व्यावर्त्तनम्। वस स्नेहेत्य

निवासे भ्वादिः क्र्यादिश्च। वस्त इत्याच्छादने। वस्यते स्तम्

उपसेवायामिति दीर्घोपधः कथादौ।

**कृपेश्चेति।** क्षीरस्वामी तु कृपेस्तादर्थ्ये इति पठित्वा

प्रस्तुतस्य भुवोऽर्थे मिश्रीकरणे। अथवा तच्छब्देन कल्पिः

तस्य योऽर्थः सामर्थ्यलक्षणस्तस्मिन्निति द्वेधा व्याख्यत्।

**स्वदिमभिव्याप्येति।** क्षीरस्वामी तु आङ्पूर्वात्स्वदे

णिजिति व्याख्यत्। एतद् बहवो नाद्रियन्ते। आकुस्मा

त्राधृषादागर्वादिति परत्र चाङोऽभिविध्यर्थतायाः सर्वसम्मतत्वेन

पतितत्वेनात्रापि तथैव व्याख्याया उचितत्वात्। **पोषयतीति**

श्नासु पुष्टौ गतः। **घाटयतीति।** अयं सङ्घाते गतः; पुनः

भेदात्। एकदेशिमतेनाह—**लडि तड नल चेति।** लण्डय

ति। ताडयति। नालयति। **स्वाद इत्येके इति।** अस्मिन्

ऽपि आस्वादस्सकर्मकादिति दीर्घपाठो बोद्धव्यः। **दीर्घस्य**

इदमेव दीर्घपाठस्य फलम्। ह्रस्वपाठे ऽप्युपधावृद्धया आस्वा

रूपाणान्तुल्यत्वात्। सन्नन्तेऽपि सिस्वादयिषतीति रूपन्तुल्यमे

स्विदिस्वदिसहीनाञ्च" इति सूत्रेणाभ्यासेणः परस्य सकारो न

वक्ष्यमाणत्वात्। आस्वदीयाः समाप्ताः॥

अथाधृषीया युजादयः। **"आधृषाद्वा"**॥ योग्यताबलाण्णि

द्ध्यते। युजेर्णिजभावे ऽनिट्कतां स्पष्टयितुमुदाहरति-**अयौक्षीदिति**। **'षह, मर्षणे'**। अस्येह पाठो वृत्तिकारादीनामनभिमत इति दिवादौ षह षुह चक्यर्थ इत्यत्रावोचामेति माधवः। एतच्च प्राचीनस्वग्रन्थविरुद्धम्। तत्र हि स्वयमेवैतद्विपरीतं प्रतिपादितमिति सहृदयैराकलनीयम्।

**'ईर, क्षेपे'**। ईरयति। ईरति। अदादौ ईर्त्ते इति गतौ कम्पने च गतः। **लेतेति**। "विभाषा लीयतेः" इत्यात्वं न भवति "लिनातिलयित्योर्यका निर्देशः" इति भाष्यकारोक्तेः। **वरीतेति**। "वृतो वा" इति दीर्घः। **वृषीष्ट, वरिषीष्ट; अवृत, अवरिष्ट, अवरीष्ट**। "लिङ्सिचोरात्मनेपदेषु" इति वेट्। "न लिङि" इति दीर्घनिषेधः। अवारिष्टाम्। अवारिषुः। "सिचि च परस्मैपदेषु" इति दीर्घनिषेधः। **रिच**। अनिट्कतां स्पष्टयति-**रेक्तेति**। **अरिक्षादिति**। क्सः।

यत्तु देवेन सिचि इटि अशेषीदित्युक्तम्, तदस्यानिट्त्वादयुक्तमिति प्रामाणिकाः।

**तर्पितेति**। सेट्। अनिट्त्वसु श्यना निर्देशात्। छृ(१)दी। ईदित्वान्निष्ठायां नेट्। छृण्णः। छृण्णवान्। **ग्रन्थतीति**। ग्रथ्नातीति सन्दर्भे क्र्यादौ गतम्। **'वद, सन्देशवचने'**। **ववदतुरिति**। यजादेस्तु ऊदतुरिति गतम्। **वचतीति**। अदादौ वक्तीति गतम्। **अवाक्षीदिति** "अस्यतिवक्ति" इत्यङ् न; लुका निर्देशात्। "वचिस्वपि" इति सम्प्रसारणन्तु किस्तु स्यादेव। उच्यात्। **'मृष, तितिक्षायाम्'**। अयमदन्त इति वोपदेवः। तन्माधवादयो न मन्यन्ते। **'धृष, प्रसहने'**। शाकटायनस्त्व-

---

प्राचीनेति। **दिवादिस्थेत्यर्थः**। भाष्यकारोक्तेरिति। **लीयते(२)रिति रूपासम्भवाच्चेति बोद्धव्यम्**।

लुका निर्देशादिति। **ख्यातिसाहचर्येण तथा निर्णय इति भावः**। स्यादेवेति। "वचिस्वपि" **इति सूत्रे तु स्वपिसाहचर्यलुग्विकरणपरिभाषाभ्यां व्या-**

निडित्याह । तन्मते धृष्टः । मुख्यमते घृषितः । पृषु 'पश, बाधने' इति
ण्यान्तं मैत्रेयादयः पठन्ति । इत्याधृषीयाः ।

**अथादन्ता (१)इति** । वक्ष्यमाणेषु धातुष्वन्त्याऽकारो विवक्षि
तूच्चारणार्थो नापीत्सञ्ज्ञकः । अनुनासिकत्वाप्रतिज्ञानादित्यर्थः ।

यत्तु प्रसादकृतोक्तं धातुसूत्रमेतदिति; तन्न, धातुपाठे अनुप
तद्वृत्तिकारैरस्पृष्टत्वाच्च । एतेन अदन्तत्वविधानार्थमिदमिति प्रत्यु
यदि कचिदुपलभ्येत; तथाऽप्युक्तरीत्या अनुवादस्यैव न्याय्यत्वात् ।

**स्तनगदी** । अनेकाच्त्वेन षोपदेशत्वाभावात्षत्वं न । तिस्तन
**'कल, गतौ'** । कलयति । कलते इति शपि गतम् । ततो हेतुमण्णौ
यति । **साम(२)** । सामयति । धात्वन्तरेण गतार्थत्वभ्रमं व्यावर्तयि

---

ख्यानाद्वोभयोर्ग्रहणमिति भावः । मुख्यमते इति । "निष्ठा शीङ्" इत
साहचर्येणादित एव ग्रहणमिति ।

न तूच्चरणार्थ इति । 'उच्चारणार्थानामपीत्सञ्ज्ञा' इति भाष्यस्वमते नापी
क इति अस्यैव व्याख्यानं नापीत्सञ्ज्ञक इति बोद्धव्यम् । स्वोक्त
नफलन्तु उच्चारणार्थानामित्सञ्ज्ञ(४)त्वबोधनमेव । धात्वन्तरेति ।

---

(१)**अथादन्ता इति** । वक्ष्यमाणेषु धातुषु अन्त्यावयवो ऽकारो न तूच्चारणा
र्थः । नचैषु धातुषु अकारः किमर्थ इति वाच्यम् । "अचः परस्मिन्" इति स्था
वृद्धिनिषेधार्थत्वात् । न च स्थानिनि सति यत्कार्यं तत्स्थानिवदित्यनेनातिदिश्यते ।
नायकः पावकः इत्यादिर्न सिद्ध्येदिति वृद्धिरत्र दुर्वारेति वाच्यम् । "अचः प
इत्यत्र स्थानिवदित्यनुवर्त्य शब्दाधिकारपक्षाश्रयणेन भावाभावावुभावतिदिश्येते इति सि

तदुक्तं भाष्ये—"काममतिदिश्यतां सच्चासच्चापीति नेह भारोऽस्ती"ति स्थानिनि
न्त्या वृद्ध्याः भावादेशोऽपि अतिदेशात् । स्थानिनि सति यन्न भवति तदादे
भवति इत्यत्र तु "न पदान्त"सूत्रस्थयलोपादिग्रहणमेव लिङ्गमिति दिक् ।

( २ ) **साम सान्त्वने** । अयं धातुः इतः प्राक् मूलपुस्तकेषु न कापि दृष्टः
न्तरेषु मृग्यः ।

(३)**निष्ठाशीङित्यत्रेति** । ननु घृषित इत्यत्र "निष्ठाशीङ्"इत्यादिना सेट्निष्

इरति—असत्सामादिति । पल्पूल । 'नास्य पल्पूलनेन वासः पल्पूलयेयुः' इति तैत्तिरीयाणां संहिता । 'पल्पूलनं शोधनद्रव्यम्' इति भाष्यम् । "ऊन, परि" । अस्मा(१)ण्णौ चङि नशब्दस्य द्वित्वमिष्टन्तच्च दुर्लभम् । द्वित्वात्परत्वादल्लोपात् । न च "द्विर्वचनेऽचि" इति सूत्रेण द्वित्वे कर्त्तव्ये अल्लो-

सामप्रयोगे इत्यस्य स्थाने षाम सान्त्वप्रयोगे इति पठतां मतेनेदम् । पल्पूलेति । द्वावपि पवर्गीयौ । शोधनद्रव्यमिति । साबुनेति प्रसिद्धम् । द्वित्वात्परत्वा-

भाष्ये "एकान्ता अनुबन्धा" इति पक्षे आदेशानामनेकाल्त्वात् "दिव औत्" इत्यादौ सर्वादेशत्वं कुतो नेत्याशङ्कितम्, तत्र तकारस्योच्चारणार्थत्वेनेत्संज्ञा न स्यात् । तदा अनेकाल्त्वात्सर्वादेशत्वाशङ्का व्यर्था स्यादिति बोध्यम् । उच्चारणार्थेषु इत्संज्ञा भवतीति स्वीकारादेव "अद्ड्डतरादिभ्य" इति सूत्रे भाष्ये डित्वाभावे अदादेशे कतर अद् इत्यवस्थायाम् पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादिति समाहितम्, नतूच्चारणार्थत्वादिति दिक् ।

वस्तुतस्तु—उच्चारणार्थं इत्यस्य वर्णान्तरोच्चारणे मुखस्य क्लेशवारणार्थो नत्वन्यत्फलार्थोऽपीत्यर्थस्य बोधकत्वेन "दिव औत्" इति सूत्रे तकारस्यानेकाल्त्वसम्पादनेन सर्वादेशताफलकत्वेनोच्चारणमात्रार्थकत्वाभावाच्च तत्सूत्रस्थभाष्येणोच्चारणार्थेषु इत्संज्ञाप्रवृत्तिर्लभ्यते । एवम् "अद्ड्डतरादिभ्य" इति सूत्रे भाष्येऽपि अदादेशे डित्वाभावेऽकारस्य पूर्वसवर्णदीर्घत्वसम्पादनेनोच्चारणार्थत्वाभावादनुनासिकोपधत्वेन समाधानं युक्तमेवेति न तद्भाष्यमुक्तार्थगमकमिति बोध्यमिति पण्डितानां परामर्शः ।

(१) अस्माण्णाविति । अत्रायं भावः-ऊनधातोर्णिचि तदन्ताल्लुङि तिपि इत्संज्ञायां लोपे च्लेश्चङि आडागमे आ ऊन इ अत् इतिदशायाम् णिचो द्वित्वनिमित्तत्वाभावेन "द्विर्वचनेऽचि" इत्यस्याप्राप्त्या द्वित्वात्परत्वादन्तरङ्गत्वाच्चाल्लोपे कृते निशब्दस्य द्वित्वे औनिनदित्यनिष्टं प्रसज्येत तदर्थमयं यत्नः । "ओः पुयण्ज्यपरे" इत्यादि । बिभावयिषति अबीभवत् इत्यादौ अन्तरङ्गत्वाद्वृद्ध्यावादेशे "सन्यत" इत्येव सिद्धे पुनर्यौतेश्च सनि "स्मिपूङ्रञ्ज्वशां सनि" "सनीवन्तर्धभ्रस्जदम्भ" इत्यादिना इटि द्वित्वनिमित्तसद्भावात् "द्विर्वचनेऽचि" इति सूत्रप्रवृत्त्या पूर्वं गुणाप्रवृत्त्याभ्यासे उकारसत्वेऽपि पिपविषते यियविषति इत्याद्यर्थं पयर्योरित्यपेक्षितम् । न च पिपविषत इत्यादौ गुणावादेशयोः "अचः परस्मिन्" इति स्थानिवत्त्वेनावर्णपरयकारादिपरत्वाऽभावादित्वं न स्यादिति वाच्यम् । पयर्योरित्येतत्सूत्रारम्भसामर्थ्येन स्थानिवत्त्वाप्रवृत्तेः । एवं च वर्णादिग्रहणं व्यर्थं सण्णिचो द्वित्वनिमित्तत्वाभावे तन्निमित्ताचेऽप्यस्य द्वित्वे कर्त्तव्ये निषेधं ज्ञापयति—तताबयिषति अततवत् उर्णुनावयिषति और्णु-

पस्य स्थानिवद्भावो निषेधो वेह लभ्यते । णिचो द्वित्वनिमित्तत्वाभ
आह—**ओः पुयणित्यादि** । णिचो द्वित्वनिमित्तत्वाभावेऽपि तद्वि
कस्याजादेशस्य निषेधः स्थानिवत्त्वं वा लिङ्गेन साध्यते । लिङ्गञ्च—
पुयण्जि"इति यथाश्रुतग्राहिणः । तेषामयमाशयः । तेन हि सूत्रेण बिभ
षति; लिलावयिषति; जिजावयिषतीत्यादावभ्यासोवर्णस्येत्वं विधीयते;
णिच्येव पवर्गयणजानामवर्णपराणान्तत्रैव सम्भवादिति । न त्वेतद्युक्तम् ।
विषते यियविषतीत्यत्र सूत्रस्य चरितार्थत्वात् । तथा हि पूङो यौतेश्च
"स्मिपूङ्रञ्ज्वशाम्"इति "सनीवन्त"इति च सूत्राभ्यामिटि कृते "
ऽचि"इति सूत्रप्रवृत्त्या ऽत्तीहाभ्यासे उकारः । तस्मात् सम्पूर्णसूत्रस्य
कतोक्तिरसङ्गता । अत आह—**वर्गप्रत्याहारेत्यादि** । अबीभवत् । अ
वत् । अरीरवत् । अलीलवत् । अजीजवत् । बिभावयिषतीत्यादिसि
वर्गादिग्रहणस्य फलं वाच्यम् । तच्चाभ्यासे उवर्णस्य दुर्लभत्वाद् अ
"सन्यत" इतीत्वेन रूपासिद्धेश्च दुरुपपादम् । अतो वर्गादिग्रहणं व्यर्थं
क्तार्थे ज्ञापकमित्यर्थः । ज्ञापनफलन्तु यत्र "ओः पुयण्"इत्यस्याप्रा
बोद्धयम् । तद्यथा—चुक्षावयिषति । उड्डुरिवाचरति उडवति । त
सन् उडुडावयिषति । चङि औडूडवत् । तुतावयिषति । अतूतवत् ।
नावयिषति । और्णूनवत् । पुस्फारयिषति । अपुस्फुरदित्यादि । तदेतद
मभिप्रेत्य भगवता कात्यायनेनोक्तम् । "ओः पुयण्जिषु वचनं ज्ञाप
स्थानिवद्भावस्य"इति । पतञ्जलिना तु—'तुल्यजातीयस्य ज्ञापकम्' इति
–देरन्यस्मिन्नपि ह्रस्ववर्णपर एव स्थानिवत्त्वमित्यचिकीर्त्तिदित्यादौ नातिव
रिति सिद्धान्तितम् । अत्रावर्णपरत्वञ्च णित्वप्रवृत्तिवेलायां विवक्षितम्

---

दिति । अन्तरङ्गत्वादित्यर्थः । उक्तार्थे ज्ञापकमिति । उडुऋजुअञ्चुप्रभृ
आचारक्विबन्तेभ्यः सनोऽनभिधानम्; ज्ञापकपरभाष्यप्रामाण्यादि

वा परिनिष्ठिते रूपे ? नाद्यः, चुक्षावयिषतीत्यादौ तदभावात् । न द्वितीयः, औननदित्यादौ तदभावादित्याशङ्क्याह—प्रक्रियायामित्यादि । क्वचिदवर्णपरत्वं विवक्षितं, न त्वमुक्तत्रैवेत्यामहे बीजमस्तीति भावः ।

यत्तु प्राचा केचिदेवमाहुरित्यादिना उवर्णादेश एव स्थानिवत्त्वं नान्यत्रेति मतमुपन्यस्तम् । तत्र केचिदित्युक्त्यैव दुर्बलत्वं स्पष्टमवगम्यते । तद्बीजन्तु भाष्यादिविरोध एव ।

तथा हि—अस्मिन्पक्षे अचिकीर्त्तदित्यादौ स्थानिवत्त्वप्रसङ्ग एव नास्ति । उवर्णादेशत्वाभावात् । तथा चोत्तरभागे अवर्णाभावादिति भाष्यकारोक्तः परिहारो व्यर्थ एव स्यात् ।

किञ्च—"लोपः पिबतेः" इति सूत्रे अपीप्यदित्यत्र पिबतेर्णौ पुकि चङि उपधालोपे च तस्य स्थानिवत्त्वात् पापूशब्दस्य द्विरुक्तिरिति वृत्तिग्रन्थो विरुद्ध्येत ।

अपि च—"पूर्वत्रासिद्धम्" इति सूत्रे काशिकायां वहेः क्तान्ताण्णिचि चङि औजढदित्युदाहृत्य क्तिन्नन्तस्य तु औजिढदित्युक्तम् । तत्रैव न्यासकृता णौ कृतस्य टिलोपस्य स्थानिवद्भाव इति व्याख्यातन्तदुभयं विरुद्ध्येत ।

किञ्च—"शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा" इति वैयाघ्रपद्यवार्तिकमपि विरुद्ध्येतेति दिक् ।

यत्तु प्राचो ग्रन्थं व्याचक्षाणैरुक्तङ्काशिकाकारमतमुदाहृत्य त्रिमुनिमतमु-

---

च भाष्ये उक्तम्—"ओः पुयण्जिषु वचनञ्ज्ञापकं; णौ स्थानिवद्भावस्य । यद्येतज्ज्ञाप्यते ऽचिकीर्त्तदत्रापि प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयो यथाजातीयकाः पुयण्जयः । कथञ्जातीयकाश्चैते ? अवर्णपरा" इति ।

व्यर्थ एव स्यादिति । उवर्णादेशत्वाभावेन तत्र तदप्राप्तेरिति भावः ।

ननु परिहारबलादेवोवर्णादेश इत्यर्थलाभः । तथाहि, ज्ञापकस्य सजातीयापेक्षत्वेन पुयण्यजीनां परिनिष्ठितरूपे एवोवर्णादेशावर्णपरत्वस्य सम्भ-

... किं च लोप इति ।

त्तरपक्षयन्नाह—केचिदेवमाहुरिति । एवं वक्ष्यमाणं केचिद्भाष्यतत्त्वविद इत्यादि तत्सर्वं वोपदेवग्रन्थश्रद्धाजाड्यप्रवृत्तप्रसादग्रन्थमूलकमिति मूलाशुद्धेरेवोपेक्षणीयम् ।

तथा हि—वोपदेवेन काव्यकामधेनौ अङ्कधातोर्णिच्यदलोपे चङि स्थानिवत्त्वात् कशब्दस्य द्वित्वे आञ्चकदिति रूपमेकीयमतत्वेनोपन्यस्य मुनित्रयविरुद्धमिति दूषितम् । "द्विर्वचनेऽचि" इति हि पाणिनेः सूत्रम् । तच्च द्विर्वचनपदावृत्त्या कात्यायनेन व्याख्यातम् । तथा तुष्टावायिषतीत्यादावव्याप्तिस्तेनैव "ओः पुयण्" इति ज्ञापकबलेन परिहृता । पतञ्जलिना चावर्णपरे एव हलि स्थानिवत्त्वमित्याश्रित्याव्याप्तिरुद्धृता । एवञ्च वदता उवर्णादेशस्य स्थानिवद्भावो ऽभिप्रेतः ।

किञ्च कात्यायनेनोक्तपूर्वविप्रतिषेधखण्डनपरभाष्यस्वरसेनाप्ययमर्थो लभ्यते । षाष्ठद्वित्वप्रकरणान्ते हि पूर्वविप्रतिषेधः पठ्यते "द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्य" इति तथा च दध्यत्रेत्यादौ सावकाशो यण्, चयनञ्चायको लवनं लावक इत्यादौ चायवायावः, गोदः कम्बलद इत्यादावाल्लोपः, श्लेष्मघ्न इत्यादावुपधालोपः, कारणा हारणेत्यादौ णिलोपः, निपूर्त इत्यादावुत्वञ्चेत्येतानि नव बिभिदतुरित्यादौ सावकाशेन द्वित्वेन पूर्वविप्रतिषेधाद् बाध्यन्ते । तेन चक्रतुः, चिचाय, लुलाव, चिचयिथ, लुलविथ, पपतुः, तस्थतुः, जग्मतुः, जघ्नतुः, आटिटत्, तेरुः, जगुः, इत्यादि सिद्धम् ।

एवञ्च "द्विर्वचनेऽचि" इति सूत्रं नारम्भणीयमिति वार्त्तिकाशयः ।

भाष्यकारस्त्वाह—उक्तरीत्या चक्रतुरित्यादि सिद्ध्यतु । चुक्षावयिषतीत्यादौ त्वन्तरङ्गत्वाद् वृद्ध्यादौ कृते अभ्यासे इत्वं श्रूयेत । न ह्यन्तरङ्गेण

---

नत्वस्यासिद्धत्वात् "उदीचामात" इति विकल्पाभावः । द्वितीये "न कोप-

सह विप्रतिषेधः, अतुल्यबलत्वात् । तथाच त्वयेत्थं वचनं कर्त्तव्यम्—ओदौदादेशस्य चुट्टुशरादेरभ्यासस्यात उद्भवतीति । ओदौतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासश्चुट्टुशरादिस्तदकारस्योत्स्यादित्यर्थः । चुक्षावयिषति । उड्डावयिषति । तुतावयिषति । ऊर्णुनावयिषति । शुशावयिषति । पुस्फारयिषतीत्यादि । एवञ्च सूत्रमतमेव प्रबलमिति । एवं वदतो भाष्यकारस्य औजढदाञ्चकादित्यादावभ्यासे ऽकारो यदि सम्मतः स्यात्तर्हि तदर्थं यत्नान्तरमास्थेयमिति वार्त्तिककारं प्रति गौरवान्तरङ्कथं नापादयेत् । तस्मादल्लोपस्य स्थानिवत्त्वं भाष्यकाराणामनभिमतमिति निर्णीयते ।

वामनादयस्तु महाभाष्यविसंवादादुपेक्ष्या इति । एतच्च सर्वं वोपदेवग्रन्थपर्य्यालोचनया पर्य्यवस्यतीति सत्यमेव, किन्तु वोपदेवस्यैवेह महान्प्रमादः । न तु वामनादीनाम् ।

तथा हि, यत्तावदुक्तम्—अवर्णपर एव हलि स्थानिवत्त्वं वदता उवर्णादेशस्यैव तदभिप्रेतमिति । तन्न, आञ्चकदित्यादावपि द्विरुक्तौ प्रक्रियादशायामभ्यासोत्तरखण्डे ऽवर्णस्य सुलभत्वात् ।

ननु नासौ प्रयोगे समवैतीति चेत्? किन्ततः । न हि प्रयोगसमवायित्वं विशेषणं

---

विरुद्धं स्यात्, तत्रातोलोपस्याऽगणनादिति भावः । ओदौदादेशस्येत्यत्र समानाधिकरणबहुव्रीह्यङ्गीकारे चुक्षावयिषतीत्यादौ दोषः स्यादत आह—ओदौतोरिति । इदञ्च वचनम् "उत्परस्यातः" इत्युत्तरं पाठ्यन्तेनोक्तिति नापूर्वमिति बोध्यम् । यत्नान्तरम्—वचनान्तरकरणरूपम् । भाष्यकाराणामिति । ज्ञापकस्य सजातीयापेक्षत्वात्सूत्रकारस्याप्यसंमतामिति बोध्यम् ।

विशेषणं भाष्ये दत्तमिति । अपूर्वतद्दाने तु गौरवमिति भावः । "ओः पुयण्ज्यपरे" इत्यत्र ओ(१)रित्युक्तिस्तु सूत्रैकदेशग्रहणाभ्याधिकेति न तद्बलेन

---

(१) ओरित्युक्तिस्त्विति । नन्वत्र पुयणज्यपरे इत्येवास्तु; मास्तु ओर्ग्रहणम् । नचैतद्ग्रहणाभावे ऽकारादीनामपीत्वं स्यादिति चेत्? न । तथाहि—वर्गप्रत्याहारजग्रहणस्य

भाष्ये दत्तम् । एवञ्च नुनावायिषतीत्यादौ द्वित्वप्रवृत्तिवेल
भावेऽपि पश्चाद्भाविनन्तमाश्रित्य यथा स्थानिवत्त्वादिकं प्रवर्त्तते; त
तद्विरहेऽपि प्रक्रियादशायां सत्त्वादिति न कोऽपि दोषः । एतच्च
वृत्तौ कीर्त्तयतेर्धातुवृत्तौ च माधवग्रन्थे स्पष्टम् ।

यदप्युक्तं वार्त्तिकदूषणपरभाष्यस्वरसोऽत्र मानमिति ।
भाष्ये हि दूषणदिङ्मात्रमुक्तं न तु दूषणान्तरं नास्तीति । तथा
स्तत्र दोषाः । तद्यथा—विप्रतिषेध एव तावदयुक्तः । आल्लोपादी
त्वात् । द्वित्वस्यानित्यत्वेनातुल्यबलत्वात् । किंच पूर्वविप्रतिषेधे सर्व
स्यारम्भणीयत्वादिह तु सुतरान्तथेति क्व लाघवम् ?

अपि च क्रियमाणं वचनं नित्यानिवान्तरङ्गानपि बाधेत । त
वनीयिषति; दिदवनीयिषतीत्यादावप्यभ्यासे उकारः श्रूयेत । यदि तु
देशस्य'इत्यादि वचनं कृत्वा तदेवान्तरङ्गाणामबाधे ज्ञापकं ब्रूष; तर्हि त

कुकल्पनाभिनिवेशः कार्य इति बोध्यम् । विशेषणादाने च परिनि
शास्त्रारम्भेण तत्रत्यावर्णपरत्वमिव प्रक्रियादशायां शास्त्रप्रवृत्त्य
स्यापि ग्रहीतुमौचित्येन वार्त्तिके पुस्फारयिषतीति सिद्धये चु
त्वस्येवावर्णपरत्वस्याप्यनियतस्यैव ग्रहीतुमौचित्येन च विनि
हेण सर्वत्र प्रवृत्तिरित्याह—एवञ्चेति ।

बहव इति । निन्यतुरित्यस्य सिद्धये इयङ्पाठः कर्त्तव्यो ज
दिसिद्धये वृद्धिपाठः कर्तव्य इत्येवंरूपा इत्यर्थः । अन्यानप्या
आल्लोपादीनामिति । यणोऽपि नित्यता बोध्या । आरम्भणीयत्वादिति
विवेकस्य लक्षणैकचक्षुष्कैर्वचनमन्तरेण ज्ञातुमशक्यत्वादिति
सुतरामिति । नित्यबाधायेत्यर्थः । "एकाचः प्रथमस्य"इत्यादिसा
पेक्षया यणादीनामन्तरङ्गत्वात्तद्बाधायेत्यपि बोध्यम् ।

वाच्यम् । सनि परे सन्निमित्तकाभ्यासावयवस्यैवेत्वमित्यस्य प्रत्यासत्त्या फलने

नीनवनीयिषतीत्यादावपि प्रवर्त्तेतेति तद्दोषतादवस्थ्यम् । तद्वारणाय यत्नान्तर-मास्थेयम् । एवं स्थिते औजढदित्यादावभ्यासे अकारादेशो विधेयः स्य दित्यपि वार्त्तिकमते दूषणान्तरमस्तु । तस्मादित्थं वार्त्तिकं स्वय-मूहनीयम्-"ओदौदादेशस्य चुटुतुशरादेरभ्यासस्योत्सनि" ततः "अलोप-वतो णिचोऽत्" । अलोपवतो ऽङ्गस्याभ्यासस्य णिचो ऽत्स्यात् । औजढत् । आञ्चकत् । एवं स्थिते वामनन्यासकारादिग्रन्थाः वैयाघ्रपद्यवार्त्तिकञ्च भाष्य-विरोधेन समर्थितं भवति । सरस्वतीकण्ठाभरणग्रन्थोऽप्यत्रैवानुकूलः । यदपि वोपदेवेनोक्तं वैयाघ्रपद्यवार्त्तिके औजिढदित्येव पाठः साम्प्रदायिकः । श्रोत्रि-यास्तु प्रमादाज्जिस्थाने जं पठन्तीति, तदप्येतेन प्रत्युक्तम् । उक्तरीत्या सर्वसौ-ष्ठवे श्रोत्रियाणां प्रमाद इत्यस्यैव प्रामादिकत्वात् । यदपि वोपदेवेन स्वोक्ते-ऽर्थे उपष्टम्भकतयोपन्यस्तम्, दुर्गगुप्तेन दुर्गटीकायां, त्रिलोचनदासेन कात-न्त्रपञ्जिकायां, वर्द्धमानमिश्रेण कातन्त्रविस्तरे, हेमसूरिणा हैमव्याकरणे । एतच्च ज्ञापकमजन्तस्थापवर्गपरस्यावर्ण एव वेदितव्यमिति प्रदर्शितमिति । अभिनव-

---

यत्नान्तरमिति । अभ्यासविशेषणं सनीति पूरणीयम् । तेन (१)निर्दिष्टपरि-भाषया ऽनेकव्यवधानेन दोष इति भावः । (२)किं च जोः सौत्राण्णिचि सनि लुङि च जिजावयिषति अजीजवदित्यत्रौदौदादेशस्येत्यनेनाभ्यासे उत्वाप-त्तिः, तदर्थम् "ओः पुयण्"इत्यत्र जग्रहणं कार्यम् । न च तत्र वचने चकार एव पठनीयो; न चुशब्द इति वाच्यम् । गुङ्घुङ्भ्यां णिचि चङि सनि चाऽ-जूगवदित्यादौ दोषापत्तेः । (३)किञ्चा ऽभ्यासविशेषणे सनीति कृते ऽपि तु-ष्टावयिषतीत्यादौ चारितार्थ्येन तुष्टावयिषतीत्यादावनापत्तिः । षकारेणा-धिकेन व्यवधानादिति बोद्धव्यम् । एवं स्थित इति । दोषपरभाष्यस्य उपल-क्षणत्वावश्यकत्वे इत्यर्थः । णिच इति उपलक्षणं णिङोऽपि । तेनासस्य-दिति सिद्ध्यति । श्रोत्रियाः—यथाश्रुतग्राहिणः । अजन्तस्थेति । जकार—अन्तस्था-

---

( १ ) निर्दिष्टपरिभाषयेति । सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य

शाकटायनेन शब्दानुशासने णिच्निमित्तादपि प्राग् द्विः, तच्च
प्रदर्शितमिति । तदेतत्सर्वत्र वामनादीनां प्रतिकूलम् । प्रक्रियाद
परमस्तीत्युक्तत्वात् । तस्माद् 'आञ्चकाद्'इत्येव न्याय्यमिति स्थि

यत्तु अदन्तेषु ऊनधातोर्माधवीयधातुवृत्तौ "नोनयति ध्वनय
काशिकापदमञ्जर्योश्च औनिनादित्यभ्यासे इकारसहितश्चैश्चित् पठ
लिपिप्रमादप्रयुक्तमेव । स्थलान्तरस्थप्रागुक्तमाधववामनग्रन्थवि
तदेतत्सकलमभिप्रेत्याह—प्रकृते त्विति । औननदिति ।
तिध्वनयत्येलयत्यर्दयतिभ्यः" इति चङ्निषेधस्तु नेह कृतः ।
श्छन्दसि" इति पूर्वसूत्राच्छन्दसीत्यनुवृत्तेः । तस्योदाहरणन्तु—"
जरितुः काममूनयीः", "मा त्वाऽग्निर्ध्वनयीद्धूमगन्धिः"इत्य
सिचि वृद्धिर्न, "ह्म्यन्त"इति सूत्रे ण्यन्ते तन्निषेधात् ।

यत्तु प्राचा द्वयमपि लोक इत्युपनिबद्धम् । यच्च व्याचख्युः
नानुवर्त्तते "विभाषा धेट्श्व्योः"इति विभाषाग्रहणञ्चानुवर्त्तत इति
नञो वैयर्थ्यापत्तेः वृत्त्यादिसर्वग्रन्थविरोधाच्च । अत एव
नानुवर्त्तत'इति केषाञ्चिदुत्प्रेक्षाऽपि प्रत्युक्ता । तथाच भट्टिः—'ये
पुरम्पिनाकी'इति ।

**अतिस्तेनादिति** । अनेकाच्त्वेनाषोपदेशत्वात्षत्वन्न ।
यति । मार्गतीति मार्गेराधृषीयस्य । **अदन्तत्वसामर्थ्यादि**
भावः—कथयतिगणयतीत्यादावुपधावृद्धिनिवारणेन, अचकथदित्य
त्वाद्दीर्घसन्वद्भावविरहेण, सारभामप्रभृतीनामुपधाह्रस्वव्यावर्त्तनेन,
भृतीनामुपधागुणव्यावर्त्तनेन चादन्तत्वं सार्थकम् । गर्वादीनान्तु
प्रागुक्तफलासम्भवात् णिजिवकल्पोऽनुमीयते । युक्तञ्चैतत् ।
दित्वं सामान्यापेक्षज्ञापकमिति मते इहापि अकारफलस्य स्पष्टत्वा
षापेक्षज्ञापकमिति मतेऽपि तत्र तत्र आकार इकार ईकार उकार

नुबन्धा यथा ज्ञापकतया स्वीकृताः, यथा च अबिशब्दन इति निषेधः, तथा अदन्तताऽप्यस्तु, एवं सति मतद्वयेऽप्येकरूपफललाभात् ।

यत्तु वोपदेवेनोक्तमल्लोपित्वं स्थानिवत्त्वञ्चादन्तत्वप्रयोजनम् । यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनमिति । अत्रेदं वक्तव्यम्–विकल्पस्तावदनेकदोष-दुष्टो निर्मूलश्च, लोपाभावस्यैव सुवचत्वात् । वस्तुतस्तु सोऽपि न । अन्यत्र क्लृप्तेन णिज्विकल्पेनैव कृतार्थत्वेऽपूर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात् ।

यत्तु अदन्तत्वसार्थकत्वाय वा लोप इति प्राचो ग्रन्थं व्याचक्षाणैरुक्तं-वाचनिक एवात्र विकल्प इति, तद्व्याहतं निर्मूलञ्च । यदि वाचनिकस्तर्हि अदन्तत्वसार्थक्यायेति कथमन्वियात् । किं च कस्येदं वचनन्तद्बलेन वाच-निकतोच्यत इति न किञ्चिदेतत् । एवञ्च 'गर्वापयत' इत्याद्युदाहरणमप्यसा-ध्वेव । अङ्कापयतीत्यादि सुतराम् । अङ्कयतेरकारस्य प्रागुक्तरीत्या आञ्चकृ-दित्यभ्यासे ऽवर्णश्रवणेन कृतार्थत्वात् । एवमर्थापयते इत्यपि ।

यत्तु आर्त्तिथपतेति प्राचोदाहृतन्तत्सुतरामशुद्धम् । आर्त्तीथतेत्यत्राभ्यासे आकारश्रवणात् । 'चङ्परे णौ' इत्यस्याङ्गं लघुं प्रति वा विशेषणतेति पक्षद्वये ऽपि "दीर्घो लघोः" इति दीर्घस्य दुर्वारत्वाच्च । यदपि व्याचख्युः–हलादेरि-त्युक्तेर्न दीर्घ इति; तदपि न । हलादेरित्यस्य निर्मूलताया उक्तत्वात् । ननु 'अङ्गं यत्र द्विरुच्यते' इति माधवोक्तरीत्या नेह दीर्घ इति चेत्? न, तन्मत अल्लोपस्यावश्यकत्वादिति दिक् ।

---

इति । 'पक्ष, परिग्रहे' इत्यस्य स्थाने 'पक्षा परिग्रह' इति पठतां मत इदम् । इकारश्चिन्त्यादेः, ईकारो वृजी इत्यस्य, उकारो वञ्चु इत्यस्य, तस्यैव पाठान्तरे ऊकार इति बोध्यम् ।

ननु 'वाक्यशेषं समर्थयिष्यामहे सम्प्रश्नप्रार्थनेषु' इत्यादिप्रयोगाल्लो-पाभावस्यैव कल्पनानुचितेत्यत आह—वस्तुतः सोऽपि नेति । अल्लोपविक-

**परत्वाद् वृद्धाविति** । लोपः शब्दान्तरप्राप्त्या अनित्यः ।
रनित्येति तु स्पष्टमेव । उभयोरनित्ययोर्वृद्धौ कृतायामौकारस्यावादेशा
परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाच्च औलोप इत्यर्थः । एवञ्चानग्लोपित्वा(
र्घसन्वद्भावौ स्त एव । न च टिलोपस्य स्थानिवद्भावेन व्यवधानं शङ्क
तथाऽप्यङ्गस्य णिच्परत्वानपायात् । चङ्परे णौ यल्लघ्विति पक्षे क
चेद् ? अभ्यासस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति गृहाण
एव "मुण्डमिश्र"इति सूत्रे हलिकल्योरदन्तनिपातनं भाष्यवार्त्तिकयोः
मिति भावः । **वृद्धेर्लोप इति** । शब्दान्तरप्राप्तौ सत्यामपि कृताकृ
ङ्गित्वमात्रेणेह नित्यत्वं स्वीक्रियते भुवो वुको नित्यत्वादित्यत्र
भावः । इह भाष्यद्वयस्य परस्परविरोधे परत्वाद् वृद्धिरिति मुख्यः
"वृद्धेर्लोपो बलीयान्"इति तु प्रौढिवादमात्रमिति हरदत्तः । तद्विप
यटः । भाष्यद्वयप्रामाण्याद् वृद्धेः पूर्वं पश्चाद्वा कामचारेण टिलोपेन
यमपि साध्विति मतान्तरम् । मतत्रयमपीदं सुब्धातुवृत्तौ माधवेनोपनिब
अयञ्च मतभेदो णिज्भिन्नविषयः । णेर्णिचि तु "णयल्लोपौ"इति पूर्वविप्र

---

ल्लोपस्यैवाङ्गीकारादिति भावः । वृद्धाविति । परत्वादिति भावः । व्यव
ति । एवञ्च चङ्परणिपरलघुपरत्वासम्भव इति भावः । भाष्य
पक्षे दोषोऽस्त्येवेति शङ्कते—चङ्परे इति । गृहाणेति । द्विःप्रयोगपक्षे ऽन
दचः पूर्वत्वमस्त्येवेति यदि तदा ऽभ्यासस्य कार्ये कर्त्तव्ये धात्वव
शस्य तत्प्रतिबन्धकस्थानिवत्त्वं नेत्यर्थस्य "अभ्यासस्यासवर्णे" इति
स्थासवर्णग्रहणेन ज्ञापनान्न दोष इत्यवधेयम् । आश्रितमिति । एतद
नार्थमेवेति भावः । न च "यथेष्टं नामधातुषु" इति द्वितीयस्य द्वित्वेऽ
लदित्यभ्यासे ऽकारश्रवणार्थन्तच्चरितार्थम् । एकाच्त्रयसन्निधान ए
ष्टमित्यस्य प्रवृत्तेरित्यन्यत्र निरूपितम् । रूपद्वयमपीति । लक्ष्यभेदेनेति

---

( १ ) दीर्घसन्वद्भावौ स्त एव । केचित्तु—चङ्परे णौ यल्लघु इति पक्ष प
कारस्य वृद्धौ कृतायां णिच् परं लघु दुर्लभमिति सन्वद्भावाप्राप्त्या अपपटदित्येव
प्रथमं टिलोपः पश्चाद् द्विर्वचनम् इति मत्वा अभ्यासस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्व

न्निष्कर्षरीत्या अपवादत्वाद्वा प्रागेव णिलोपः । उपधाह्रस्वत्वे सन्वद्भाव-दीर्घयोश्च णेर्णिचीत्युपसङ्ख्यानात्, 'ण्याकृतिनिर्देशाद्वा' अवीवददित्येव रूपमित्यवधेयम् ।

**लङर्थास्त्विति** । तेन ण्यन्ताद्वाक्कर्मणो भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययाः सिध्यन्तीति भावः ।

**कंसवधमाचष्ट इति** । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्(१)कंसवधशब्दः कृदन्तः, ततो णिच्, अप्प्रत्ययस्य लुक्, तस्यैव या प्रकृतिः हन् इति तस्या विकारपरित्यागेन स्वेन रूपेणावस्थानम्; तदेतदाह—**हन् इ इति । स्थित इति ।**

**हेतुमण्णिचः प्रकृतेरिति** । न तु लुप्यमानस्य कृतः । तथा सति हेतुमण्णौ यादृशान्तस्यातिदेशो न लभ्येत, इष्यते च सः, तथैव भाष्यकारेणोदाहृतत्वादिति भावः । इह द्वयमतिदिष्टङ्कारकङ्कार्यञ्च । तत्राद्य-द्विर्वचने अतिदेशद्वयेनापि सिद्ध्यतः । असङ्कीर्णोदाहरणन्तु द्वितीयादिकम्,

---

ण्याकृतीति । "ते प्राग्धातोः" इत्यत्र गत्याकृतिनिर्देशवदिति भावः । न तु लुप्यमानस्य कृत इति । **तथा सति तत्प्रकृत्यर्थे यादृशं कारकन्तादृशं णिच्प्रकृत्यर्थेऽपीत्यर्थः स्यात्, स च दुष्टः कंसं घातयतीत्यत्र षष्ठ्यापत्तेस्तदाह**—तथा सतीति । अतिदेशद्वयेनापीति । **प्रकृतिवत्कारकमित्येतावतापि धातावन्तर्भूतत्वबोधनद्वारा तद्गहितागिजन्तस्य धातुत्वेन तयोः सिद्धिः, कार्यातिदेशेन तयोः सिद्धिस्तु स्पष्टैवेति भावः ।** असङ्कीर्णेति । **द्वितीयादिकङ्कार-**

---

( १ ) **कंसवधशब्द इति** । "आख्यानात्"इति वार्तिकस्यायमर्थः । आख्यानवाचकात् तदिति द्वितीयान्तात् कृत्प्रत्ययान्ताण्णिज् भवति आचष्टे वाच्ये । कृत्प्रत्ययस्य लुक् कृत्प्रत्ययप्रकृतिभूतस्य धातोर्यादृग् धातुपाठे रूपं पठितं तादृग्रूपस्यापत्तिः । अर्थात् आदेशादिकार्यनिवृत्तिः । कारकम् प्रकृतितुल्यम्, चकारेण कार्यं प्रकृतिवदिति वार्तिकार्थः । चो भिन्नक्रम इति भावः । कारकञ्च इत्यग्रे वेदितव्यः । एवञ्च धातु-

कुत्वतत्वादिकञ्चेति विवेकः । इह कंसवधसुभद्राहरणादिनिरूढोपाख्या णिजिति नाग्रहः ; किं तु प्रतिपादनमात्रे। तेन राजागमनमाचष्टे (१) मागमयति ।

यद्यपीह कृत्प्रकृतौ राजा कर्त्तास्ति तथापि गमेर्हेतुमण्णौ "गति इति कर्मीभूतः, तद्वचेहापि । राजानमित्यस्य प्रकृतिभागो यद्यप्यन्तव षष्ठ्याः प्रत्ययलक्षणेन पदम्, तथापि नकारश्रवणं भवत्येव, रूपाति लात् । देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीत्यत्र तृतीयैव भवति । बुद्धि"इति नियमेन कर्मत्वापहारे कर्तृत्वस्यैव स्थितेरिति दिक् ।

कर्तृग्रहणस्य फलमाह—**न त्विति** । **कार्त्रीति** । कर्तृग्रह चक्षुषा पश्यति चक्षयतीत्यादावेव स्यात्, न तु करिभिरवबध्नाति अ यतीत्यादौ, लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वादिति भावः

**सङ्ग्राम** । सङ्ग्रामेति प्रातिपदिकं युद्धार्थककृत्यर्थे णिचं **अनुदात्तेदिति** । "भृशादिभ्यो भुवि"इति सूत्रे कैयटहरदत्ताभ्यान्त त्वादिति भावः । एतेनास्यानुदात्तेत्त्वमपाणिनीयमिति माधवोक्तिः प्रत्यु न चैवं भाष्योक्तमुपसर्गपृथक्करणज्ञापकं भज्येतेति वाच्यम्। युद्धे यो ग्रा

---

कातिदेशस्य फलं, णिचो धातुप्रत्ययत्वादि कार्यातिदेशस्य फल भावः । द्वितीयादिकमित्यादिशब्दार्थो देवदत्तेन पाचयतीत्यादौ तृ कुत्वतत्वादिकमित्यादिना राजानमागमयतीत्यादावलोपाभावः ।

प्रातिपदिकमिति । प्रातिपदिकाधिकारादिदं लब्धम् । कैयटेति । "अ सङ्ग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या । असङ्ग्रामयत शूर इत्येवमर्थम

---

"धातोः कार्यमुच्यमानं तत्प्रत्यये भवति" इत्येव पाठः साधीयान् । तादृशपाठस्य रित्यादौ "अनुदात्तस्य चर्दुपधस्य" इत्यमापादनेन भाष्यकृता दूषितत्वादित्यलम्

( १ ) **राजानमागमयतीति** । केचित्तु—रुक्मिणीहरणमाचष्टे इत्यादौ रन्यतरस्याम्", इति विकल्पात् रुक्मिणीं रुक्मिण्या वा हारयति इति प्रयो

इत्युक्तस्यैव सामर्थ्यात्तत्पूर्वस्य लाभे तद्विशिष्टपाठो ज्ञापक इति भाष्याशयात् । नन्वेवमप्यससङ्ग्रामतेति न सिध्येत् । अग्लोपित्वाभावेनोपधाह्रस्वापत्तेरित्याशङ्क्याह—**अकारप्रश्लेषादिति** ।

**स्तोम श्लाघायाम्** । अग्निष्टोमः "अग्नेः स्तुत्स्तोम" इति षत्वम् । **सुखदुःख तत्क्रियायाम्** । तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ निर्दिश्येते । "प्रातिपदिकाद्धात्वर्थे" इति सिद्धे ऽनयोः पाठः सोपसर्गात्प्रत्ययार्थ इति मैत्रेयः ।

**रूप रूपक्रियायाम्** । निरूपयतीत्यनेकार्थत्वाद्विचारणेऽयम् । (१)**ग्रन्थान्त इति** । धातुपाठस्यान्ते इत्यर्थः ॥

**इति चुरादयः ॥**

---

यमार्थे सङ्ग्रामयतेरेव सोपसर्गान्नान्यस्मात्सोपसर्गात्" इति भाष्यमुपादाय तेनोक्तमित्यभिमानः । सामर्थ्यादिति । केवलग्रामशब्दस्य लोके युद्धे प्रयोगाभावादिति भावः । सामर्थ्येन समस्तस्य विशिष्टस्यैवोद्देश्यकोटौ प्रवेशात् "सनाद्यन्ता" इत्यत्र तदादिनियमसत्त्वेऽपि सङ्ग्रामेति विशिष्टस्य धातुत्वसिद्धिः । न चेदं णिजर्थमित्यनुबन्धासञ्जने मानाभावः "तत्करोति" इत्येव सिद्धेः । न चास्य समो नोपसर्गत्वङ्ग्रामशब्दार्थस्य क्रियात्वाभावादिति वाच्यम् । सोपसर्गादित्यस्य 'सोपसर्गसमानाकारादित्यर्थेनादोषात् । मैत्रेय इति । अत्रारुचिबीजन्तु अनयोरखण्डत्वेनैतद्घटकसुदुरोरुपसर्गसमानाकारत्वेऽपि पूर्वपदत्वाभावः । अत एव दुःखशब्दे "इदुदुपधस्य" इति षत्वं न, विसर्गान्तस्य पदत्वाभावात् । व्युत्पन्नत्वे सुधातोर्दुलधातोः खेऽन्त्ये धात्वन्तस्य विसर्गो बाहुलकाद् "बहुलमन्यत्रापि" इति णिलुगिति बोध्यम् । यदापि दुःपूर्वात्खनतेर्डे दुःखमिति तदा ऽपीत एव निपातनात्षत्वाभाव इति बोद्ध्यम् । एतेनात्र षत्वमङ्गीकृत्य दुष्खेनेत्यादौ णत्वाभावः "षात्पदान्तात्" इति निषेधादिति जिनेन्द्रादयस्तत्परास्तम् ।

इति चुरादयः ॥

(१)हेतुमति च ॥ प्रेरणादाविति । आदिशब्दादध्येषणे तत्समर्थाचरणे च । तत्र भृत्यादेर्निकृष्टस्य प्रवर्त्तना प्रेषणमाज्ञेत्यर्थः । गुर्वादेराराध्यस्य प्रवर्त्तना अध्येषणं प्रार्थनेत्यर्थः । तत्समर्थाचरणमपि बहुधा अनुमतिरुपदेशो ऽनुग्रह इति । तत्र यस्यानुमतिं विना क्रिया न निष्पद्यते ऽसौ अनुमतिमात्रेण प्रयोजकः, यथा—राजा । वैद्यादिस्तु ज्वरितः कषायं पिबेदिति उपदेशमात्रेण । यस्तु केनचिज्जिघांसितं पलायमानं निरुणद्धि ; सोऽपि हन्तुरनुग्राहकत्वेन । अमी च सर्वे विशेषा अर्थप्रकरणादिगम्याः । सर्वानुगतं प्रवर्त्तनासामान्यं णिचोऽर्थः ।

नन्वेवं णिचो लोडादीनाञ्च पर्यायत्वप्रसङ्गः, ततश्च पृच्छतु मा भवानिति वक्तव्ये णिजपि प्रयुज्येतेति चेत्, न । कर्तुस्तु प्रयोजको हि हेतुः प्रैषविषयो नाद्यापि कर्त्तृत्वेनावधारितः । तथा च प्रयोज्यप्रवृत्त्युपाहिता प्रयुक्तिर्णिजर्थः; केवला तु लोडर्थ इति विवेकः ।

---

अनुग्राहकत्वेनेति । अचेतनो ऽप्यनुग्राहकत्वेन (२)प्रयोजको यथा, भिक्षा वासयति कारीषो ऽग्निरध्यापयतीत्यादौ । पर्यायत्वप्रसङ्ग इति । लोडादिघटितशब्दप्रयोगरूपा प्रवर्तनैव प्रवर्तनात्वेन लोड्वाच्येति यद्यपि न पर्य्यायः प्राप्नोति, तथाऽपि कैयटानुसारेणेदम् । वस्तुतः समुच्चयप्रसङ्ग एवात्र पूर्वपक्षः । अत एव "लोटोक्तत्वात्प्रेषणस्य णिज् न" इति समाधानान्तरपरं भाष्यं सङ्गच्छते । न हि पर्यायस्य तथा युक्त्या वारणमिति तत्त्वम् । एतेनेष्टसाधनत्वं लोडाद्यर्थ इत्यपास्तम् , णिजन्ते तदभावात् । कर्त्तृत्वेनेति । स्वव्यापाराविष्टत्वेनेत्यर्थः । प्रवृत्त्युपहितेति । प्रयोज्याविष्टप्रवृत्त्यनुकूलेत्यर्थः । प्रवृत्त्याविष्टप्रयोज्यविषयेति यावत् । केवला त्विति । तदनाविष्टप्रयोज्यविष-

---

(१) हेतुमतिचेति । ननु कारणं सर्वत्रैव कारणाश्रितमेव भवति; न तु पुनः कारणं कार्ये ऽवतिष्ठते इति हेतुमतीति कथनमनुचितम् इति चेच्छृणु । स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन हेतुर्यत्रास्ति स हेतुमान् व्यापारः तस्मिन् वाच्ये णिजित्याहुः । एवं च

व्यमात्रस्य तु प्रैषे पृच्छयादेर्लोङ् विधीयते ।
स्य प्रयोगस्तु यदा स विषयो णिचः ॥ १ ॥ इति ।
प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः । अनियतकर्तृका णिजर्थः । पचे-
र प्रेरकः । पाचयतीत्यादौ तु कर्तृभिन्नोऽपीति दिक् ।
जिवादिति । जु गतौ सौत्रो धातुः "जुचङ्क्रम्य" इत्यत्र

तेशृ । अपरे इत्यनुवर्तते; न तु पुयण्जि इति । पवर्गजकारयो-
यणः सम्भवेऽप्यव्यभिचारात्तदाह—अवर्णपरे(२)धात्व-
। अक्षरशब्दो वर्णपरः । 'अक्षरन्न क्षरं विद्यात्' इत्युपक्रम्य,
पूर्वसूत्र' इति (३)भाष्योक्तेः ।
न्तरे इति । 'अङ्गं यत्र द्विरुच्यते' इति मते, चङ्परे णौ

---

यमात्रस्येति । व्यापारानाविष्टस्येत्यर्थः । सक्रियस्य—व्यापारावि-
ः—प्रेरणा । प्रयुक्तिः-प्रेरणा । वक्तैवेति । तादृशशब्दप्रयोगस्यै-
दिति भावः ।
ति । न तु 'चतुरश्छयतावाद्यक्षरलोपश्च' इत्यत्रेवाज्झल्समु-
ाख्यानादिति भावः ।

---

द्रव्यमात्रस्येति । अस्याः कारिकायाः अर्थः—कर्तृत्वेनावधारितस्य देवदत्ता-
क—शीप्सायामित्यादेर्लोङ् भवति । प्रयोज्यप्रवृत्त्युपहितप्रवृत्त्याश्रयस्य ( प्रयो-
त्त्यनुकूलस्येति ) प्रयुक्तिस्तु यदा स णिचो विषय इति । किञ्च प्रयोक्तृनिष्ठा
। प्रयोजकप्रयोक्तृकर्तृका तु णिजर्थः । पच देवदत्तेत्यत्र तु वक्तैव प्रेरकः ।
। वक्तृभिन्नः पाचयामीत्यादौ तु वक्तेति दिक् ।
धात्वक्षर इति । धात्वक्षरत्वं च पूर्वसूत्रोपस्थितत्वाद्यण्परम् । येन नाव्यव-
व्धानमपि सोढव्यमेवेत्यभिप्रायः ।
भाष्योक्तेरिति । "अक्षरं नक्षरं विद्यात् । अश्नोतेर्वा सरोऽक्षरम् ।
पूर्वसूत्रे"इत्युक्तम् । अस्यार्थः—व्याकरणान्तरे वर्णाः अक्षराणि इति वच-

यण्लघु इति मते चेत्यर्थः ।

यत्तु प्राचोक्तम्--सुळधातोरनेकाचश्च सन्वद्भावो वेति केचिदि
तत्रानेकाच इत्यंशे कामयतावुक्तो ऽङ्गस्येति कर्मणि षष्ठी अवयवषष्ठी
व्याख्यानभेदो मूलमिति बोध्यम् ।

यत्तु व्याचख्युः--णौ यदङ्गं, यल्लघु इति व्याख्याभेदोऽत्र मूलमि
तन्न, एवं हि सति अर्थमाख्यत् आर्त्तीथपदित्यत्र विकल्पो न लभ्येत
च मुख्यसिद्धान्तरीत्या इष्टापत्तिः । अनेकाच इति व्याख्येयग्रन्थविरोध

किं च सन्वद्भावेन सह दीर्घोऽपि तुल्ययोगक्षेमः, व्याख्याविकल्
पबीजसाम्यादितीहैव व्याचख्युः । एवञ्च ऊर्णोतेरपि चङ्परे णौ दीर्घः
त् । न चेष्टापत्तिः । "दीर्घो लघोः" इति सूत्रे प्राचा हलादेरिति व्याख्
त्वात् । अशुद्धमपि तद्ग्रन्थं समर्थयितुं प्रवृत्तैर्व्याख्यातृभिरपि तत्र न्याय
मिदमित्युक्तत्वात् । तत्रैव चकास्त्यूर्णोत्योः समकक्षत्वमभिप्रेत्य ऊर्णोतेश्च
र्घाभावं निश्चित्य चकास्तेर्दीर्घोदाहरणन्तु परमताभिप्रायेण कथञ्चिन्नेय
स्वयमेवोपसंहृतत्वाच्च । एवञ्च हलादेरपि दीर्घाभावे सिद्धे हलादेरित्य
द्धमिति परमोपक्रमविरोधेन 'अवयवावयवः समुदायं प्रत्यवयवो न' इत
तदुपन्यस्तन्यायस्य चातिशिथिलत्वेन तद्ग्रन्थस्यासङ्गतत्वान्तत्रैवावोचा

---

इति मते चेति । इदमेव भाष्यसम्मतमित्युक्तम् । व्याख्याभेद इति ।
चाविकृत इति भावः । विकल्पो न लभ्येतेति । त्वदभिमत इति शेषः । तत्र
रूपद्वयमुक्तम् । वस्तुतो ऽस्य लुङ्यनभिधानमेव । अत एव भाष्यो
डापुक्पक्षयोर्न फलभेद इति ध्येयम् । अस्य च न सुळधातुत्वं णिच
तिपादिकादेव विधानात् । अतो नानेकाजुपक्रमविरोधः । मुख्यसिद्धा
चङ्परे णौ यल्लघ्वित्यर्थरूपभाष्यसिद्धान्तेत्यर्थः । अनेकाच इति । अ
चो वेति मूलग्रन्थेत्यर्थः । दीर्घः स्यादिति । पक्षे दीर्घः स्यादिति भावः

इदानीन्तु तत्रत्यात्रत्यतदीयग्रन्थयोरेव परस्परविरोध इति ब्रूमः ।

यदपि वदन्ति—सन्वद्भवत्यस्मिन्निति व्युत्पत्त्या सन्वद्भावस्य निमित्तं यो लघुः स चेति व्याख्यानात् लघुत्वस्यैव विकल्पो ऽतिदिश्यते । तेन लघुत्वपक्षे दीर्घसन्वद्भावौ द्वावपि स्तः । तदभावे तु द्वावपि नेति । तदपि न । निर्मूलत्वात् । न हि प्रागुक्तव्याख्याभेदेन लघुत्वविकल्पो लभ्यते । वचनन्तु महतां नास्त्येव । अथाऽप्यर्वाचीनस्य कस्य चित् स्यात्तर्ह्यतिप्रसङ्गः । अजजागरदित्यत्रापि जाशब्दस्य लघुत्वापत्तेः ।

ननु प्राप्तविभाषेयमिति चेत्, न । उभयत्र विभाषात्वस्य दुर्वारत्वात् । लाघवपुरस्कारे तु भावतात्पर्यकतालाभेनाप्राप्तविभाषात्वस्यौव्यारुचेत्यास्तान्तावत् ।

**द्वयोरिति** । (१)ह्रस्वदीर्घयोरित्यर्थः । एतच्च प्रकृताभिप्रायम् । 'अवीवदद्वीणां परिवादकेन' इत्यादौ तु सन्वद्भावस्यापि इत्थमेव पूर्वपक्षसिद्धान्तौ द्रष्टव्यौ ।

**ण्याकृतीति** । तथा च णावङ्गस्य चुर् इत्यस्य नास्त्यग्लोप इति भावः ।

यत्तु प्राचा रूपान्तरमुदाहृतम्—अचुचोरदिति, तद्भाष्यविरोधादुपेक्ष्यम् ।

**औन्दिददिति** । अत्र प्रसादकृत्—अजादित्वात् "दीर्घो लघोः" इति नार्वाचीनमते, स्वमते तु स्यादेवेति । एवञ्च वदता आटिटत्, आशिशत् इत्यादौ सर्वत्र सिद्धान्ते दीर्घो भवतीत्युक्तम् । सोऽयं महान्प्रमादः । चङ्परे णौ यदङ्गम् उन्द् अट् इत्यादि तस्येह द्वित्वाभावात् तदीयस्य दीर्घभावात् ।

परस्परविरोध इति । ऊर्णोतेर्दीर्घस्तत्र बलेन वारितो ऽत्र च स्वीकृत इत्येवं विरोध इत्यर्थः ।

प्राप्तविभाषेयमिति । लघुत्वविकल्प इत्यस्य प्राप्तह्रस्वविकल्प इत्यर्थ इति भावः । भावतात्पर्यकतेति । प्राप्तविभाषायामभावे तात्पर्येण तज्ज्ञाने च प्रतियोगिज्ञानस्य कारणत्वेन गौरवमिति भावः । तद्भाष्येति । उभयत्रापि णेर्णिच्युपसङ्ख्यानस्य तत्रोक्तत्वादिति भावः । अर्वाचीनमत इति पूर्वान्वयि ।

(१) ह्रस्वदीर्घयोरिति । "नाग्लोपि"इति निषेधेन ह्रस्वाप्राप्तिः । दीर्घाप्राप्तिस्तु सन्वद्भावाभावेनेति विवेकः । स्वार्थणिच्प्रत्ययाको ह्रस्वेनाग्लोपित्वादिति भावः ।

आजो ऽभावाच्च, चङ्परे णौ यल्लघु तत्परत्वाभावाच्च । तदिह माधवहरदत्तकैयटादिसकलमतेऽपि दीर्घस्योक्तिसम्भवाभावे कथं दीर्घ इष्टापत्तिः कृतेति न विद्मः ।

स्यादेतत् । "द्विःप्रयोगो द्विर्वचनं षाष्ठम्" इति निर्विवादम् । अन्यथा आटिटदित्यादौ णिलोपो न स्यात् । एवं स्थिते द्वितीयप्रयोगविषयीभूतञ्चङ्परणिचम्प्रति तदादिग्रहणादाटिट् इत्यङ्गम् । एवञ्च चङ्परे यदङ्गन्तदीयो यो ऽभ्यासस्तस्येति पक्षे कथन्न दीर्घ इति चेत् ? अत्र वदन्ति——लघौ परे हि दीर्घः । लघुश्चेह णिच् तल्लोपः प्रथममेव प्रवृत्तः, नित्यत्वादन्तरङ्गत्वाच्च । वर्णाश्रयत्वाच्च प्रत्ययलक्षणत्वन्नास्ति । स्थानिवद्भावोऽपि न भवति, अभ्यासस्यादिष्टादचः पूर्वत्वात्, दीर्घविधौ तन्निषेधाच्चेति ।

तत्रेदं वक्तव्यम्——चङमेव लघुमाश्रित्य तर्हि दीर्घो ऽस्तु । किञ्च णिचः स्थानिवद्भावो ऽपि सुलभः । यत्तूक्तम्—अभ्यासस्यादिष्टादचः पूर्वत्वादिति । तन्न, टिशब्दस्य हि द्वित्वम् । ततो णिलोपः । एतच्च "द्विर्वचनेऽचि" इति सूत्रस्य व्याख्याद्वयेऽपि तुल्यम् । यदप्युक्तं दीर्घविधौ निषेधादिति । तदपि न, निषेधस्याष्टमिकदीर्घविषयत्वात् । अत एव हि "पूर्वत्रासिद्धीये न स्थानिवत्" इत्याश्रित्य दीर्घग्रहणं भाष्ये प्रत्याख्यातम् । तस्माद्दीर्घस्य दुर्वारतया नेदं प्रासादखण्डनं सम्यगिति । किं तर्हि सम्यगिति चेद् ? उच्यते——"दीर्घो लघोः" इत्यत्र चङ्परस्य णेः पृथगनुपादानात्तदितर एव लघुः कार्यी, तक्रकौण्डिन्यन्यायात् । यथा द्वित्वविधौ रहाभ्यामित्युपादानाद्रेफेतरस्यैव यरः कार्यित्वं तद्वत् । यथा वा "नलोपो नञः" इति सूत्रे नञ्भिन्नस्यैवोत्तरपदस्य निमित्तत्वात् "आबाधे च" इति द्वित्वे बहुव्रीहिव-

---

तत्परत्वाभावाच्चेति । **अभ्यासस्येति शेषः** । ततो णिलोप इति । **एवञ्चाभ्यासस्यानादिष्टादचः पूर्वत्वमस्त्येवेति भावः** ।

व्याख्याद्वये इति । **(१)रूपस्थानिवत्त्वे निषेधे चेत्यर्थः** । पृथगुपादानादिति । **निमित्तत्वेनोपादानादित्यर्थः** । आबाधे चेति द्वित्वे **बहुव्रीहिवद्भावेऽपीति**

---

( १ ) **रूपस्थानिवत्त्व इति** । द्वित्वनिमित्तघटके ऽचि परे द्वित्वनिमित्तघटकनिमित्तः अजादेशः स्थानिरूपं लभते द्वित्वे कर्तव्ये इत्येकोऽर्थः । यद्वा द्वित्वनिमित्तघटके ऽचि परे द्वित्वनिमित्तघटकनिमित्तः अजादेशो नत्वेव कर्तव्येति "द्विर्वचनेऽचि" इत्यस्य व्याख्यानभेदेनेत्यर्थः ।

द्भावेऽपि ननेत्यत्र नलोपो नेति हरदत्तादिभिरुक्तन्तथेहापि ।

वस्तुतस्तु आटिटदित्यादौ णिज्निमित्ताङ्गसञ्ज्ञा प्रथमणिचः प्राची-

---

पाठः । कर्मधारयवद्भावे ऽपीति क्वाचित्कः पाठो लेखकप्रमादात् ।

ननु(१) दधिदाने ऽवश्यं प्राप्ते तक्रस्य विधानादचः परे रेफे एवा-वश्यङ्कार्यित्वे प्राप्ते निमित्तत्वोक्तेर्बाध उचितः । प्रकृते णिचो लघोरित्यने-नाग्रहणे को न्यायः । अत एव करोतीत्यादौ गुणः । अन्यथा तेन न्याये-नेग्भिन्नस्यैवार्धधातुकादेर्निमित्तत्वं स्यात् । "नलोपो नञः" इत्यत्रापि नञो निमित्तत्वं नावश्यकप्राप्तमिति कथन्तत्रैतन्न्यायावसरः ।

किं च निमित्तभूतस्यापि प्रत्ययस्य भवामीत्यादावङ्गे प्रवेशो दृष्ट-

---

(१) दधिदानेऽवश्यं प्राप्ते इति । अत्रेदं बोध्यम्—तक्रन्यायेन हि विशेष्य-विशेषणदलप्रविष्टयावत्पदार्थसङ्कुचितव्याप्यतावच्छेदकरूपावच्छिन्नातिरिक्तत्वेन सङ्कोच आ-वश्यकः । अन्यथा "ह्रस्वनद्याप" इत्यत्रावर्णावधिकपरामतिरिक्तत्वेन सङ्कोचापत्तौ रामाणा-मित्यत्र नुडनापत्तेः । एवम् "एकाचो द्वे प्रथमस्य" इत्यत्राजादिधातुभिन्नत्वेन सङ्कोचाद् आटि इत्यत्र द्वित्वानापत्तिः । तथा "अनचि च" इत्यत्रापि यरवधिकपूर्वत्ववदजवधिकपर-त्ववद्रेफातिरिक्तत्वेन सङ्कोचात् अर्हेण इत्यत्र तादृशरेफातिरिक्तयरः सत्वेन रेफस्य "अन-चि" इति द्वित्वापत्तेः । तादृशसङ्कुचितयर्पदस्य सूत्रवार्तिकयोः सम्बन्धेऽपि मद्रह्रदो धात्रेश इत्यादौ रेफस्य द्वित्वापत्तेश्च दुर्वारत्वात् । किञ्च "अनचि" इति सूत्रस्य वैकल्पिकत्वात् "शेषाद्विभाषा" इति सूत्रभाष्यरीत्या रपदप्रयोज्यनिमित्तताख्यशाब्दविषयतायास्तत्प्राप्ति-योग्येऽचारितार्थ्यमपि दुर्वचमेव । तस्मादत्र तक्रन्यायादन्येन माठरपरिवेषणन्यायेनैव बाध्य-बाधकभावः । अत एव तत्र सूत्रे भाष्ये एतदुपष्टम्भमुररीकृत्य माठरपरिवेषणन्यायः प्रतिपादितः । शब्दरत्नादौ तक्रन्यायादभिन्नस्वरूपं माठरपरिवेषणन्यायं मत्वा तक्रन्यायेने-त्युक्तम् । तदयुक्तम्—'सर्वे ब्राह्मणा भोज्यन्ताम्' माठरकौण्डिन्यौ परिवेविष्टाम्, इति हि तत्प्रकारः । अनेन चैककार्यविनियोगोद्देश्येन प्रवृत्तवाक्यकदम्बघटकव्यापकपदार्थे तत्प्रक-रणघटकव्याप्यपदार्थातिरिक्तत्वेन सङ्कोचः क्रियते । अत एव "ष्णान्ताषट्" इति टान्तनि-र्देशः सङ्गच्छते । अन्यथा षष्शब्दे तक्रन्यायेन जश्त्वं बाधित्वा चर्त्वेन षकारे तदभावे जश्त्वेन डकारेऽपि टान्तनिर्देशसङ्गतिः । मम तु मते "वावसाने" इत्यत्रैव व्याप्यचर्त्वाति-रिक्तत्वेन तच्छास्त्रीयझलपदार्थे सङ्कोचेन 'वावसाने" इत्यस्याप्राप्त्या पूर्वजश्त्वेन डकारे तस्यैव चर्त्वेन टकारे उक्तनिर्देश उपपद्यते । अत एव "इको यणचि" इत्यत्रानेन बाधमा-शङ्क्य "तस्मादित्युत्तरस्य" इतिनिर्देशाज्ज्ञापकान्न बाध्यत इति कैयट आह । पाणिनेर्हि वर्णानां द्वित्वं वक्ष्यामीतीच्छायाः सत्वेन तादृशद्वित्वप्रकरणीयव्यापकपदार्थे परात्मके यणात्मके च रेफरूपव्याप्यपदार्थातिरिक्तत्वेन सङ्कोचात् अर्हेण मद्रह्रदः धात्रंश इत्यादिलक्ष्ये "अनचि च" "अचो रहाभ्याम्" "यणो मयो द्वे" इत्यादिभिर्द्वित्वं नेति सङ्क्षेपः ।

नस्यैव, न तु तद्विशिष्टस्य। एकस्यैव हि णिचो द्विःप्रयोगः। तथा चाङ्गसञ्ज्ञाया निमित्तभूतो णिच् कथङ्कार्यिकोटौ प्रविशेत्। सञ्ज्ञा वा प्रथमोपस्थितं कथं निमित्ततया न गृह्णीयात्। अन्तरङ्गस्योपेक्षायां बीजाभावात्। न च द्वित्वात्प्रागेव प्रवृत्ताऽङ्गसञ्ज्ञा तन्मध्यपतितत्वादाद्यणिचमप्यवगाहत इति युक्तम्। द्वितीये टकारान्तर्भावेण प्रत्ययतेति वैपरीत्यस्यापि सुवचत्वात्।

ननु यथा—उभयत आश्रये नान्तादिवद् विरोधात्, तथेहापि प्रत्ययांशे अङ्गांशे वा तन्मध्यपतितन्यायस्याप्रवृत्तिरिति चेत्? सत्यम्, तावताऽपि त्वदुक्तदोषस्योद्धृतत्वात्। युक्तञ्चैतत्। अन्यथा प्रतीषिषतीत्यादौ द्वितीयसनं प्रति प्राचीनसनन्तस्याङ्गत्वे "अज्झनगमाम्" इति दीर्घः स्यात्। किं बहुना जिगीषा जिघांसेत्यादावप्यभ्यासस्य दीर्घः स्यात्। सनः सकारेण विशिष्टस्य द्वित्वे धातोर्द्वितीयभागस्य सनन्तर्भावे हलादिःशेषे एकदेशविकृतन्यायेनाभ्यासोत्तरभागस्य प्रत्ययत्वे प्राचीनस्याङ्गताध्रौव्यात्। एवञ्च न्यायलब्धेऽर्थे दिवोऽविजिगीषायामित्यादिनिर्देशोऽपि लिङ्गं बोध्यम्। अत एवाटिटदित्यादौ लघूपधगुणोऽपि न। अन्यथा स्यादेव सः। न च "णौ चङि" इत्युपधाह्रस्वेन निर्वाहः। तक्रकौण्डिन्यन्यायेन दीर्घस्येव ह्रस्वस्यापि दुर्लभत्वादिति दिक्।

---

स्तथा णिचोऽपि तदादिग्रहणात्कार्यिकोटौ प्रवेशो दुर्वार इत्यरुचेराह—

सञ्ज्ञा वेति। उद्धृतत्वादिति। तन्मध्यपतितन्याय(१)प्रवृत्त्येत्यर्थः। अन्यथा—अन्तरङ्गत्वेन प्रथमोपस्थितमादायैवाङ्गत्वञ्च तद्द्वितीयमित्यर्थानङ्गीकारे। किं बहुनेति। तन्मध्यपतितन्यायाप्रवृत्त्येत्यर्थः। न्यायलब्धेति। विरोधन्यायलब्धतन्मध्यपतितन्यायाप्रवृत्तिरूपेऽर्थे इत्यर्थः। अत एवेति। अङ्गत्वाभावादेवेत्यर्थः। तक्रकौण्डिन्यन्यायेति। अङ्गत्वमङ्गीकृत्य यथा दीर्घस्तथाऽनेन न्यायेन वारितस्तथेत्यर्थः।

परे तु अन्तरङ्गस्य प्रथमोपस्थितस्याभ्यासावयवणिच आनर्थक्यात्प्रत्ययत्वाभावेन तमादायाङ्गत्वन्दुर्लभम्। किञ्चैवं प्रतीषिषतीत्यादावित्वानापत्तिः, प्रत्यासत्त्या सन्निमित्तकाङ्गावयवाभ्यासस्यातस्तेनेत्वविधा-

---

(१) तन्मध्यपतितन्यायाप्रवृत्त्या इति। स्वघटकाव्यवहितपूर्वत्व स्वघटकाव्यवहितोत्तरत्व स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्व इत्येतत्त्रितयसम्बन्धेन स्वविशिष्टत्वरूपतन्मध्यपतितत्वाभावादिति भावः।

**अजादेरित्येवेति**। "नन्द्राः" इति सूत्रे अजादेरित्यनुवर्त्तत एवेत्यर्थः। **अद्विरुपादिति**। ननु लावस्थायामेवाडिति भाष्यकारोक्तपक्षे अजादित्वमस्त्येव। न्याय्यश्च प्रथममट् परत्वादन्तरङ्गत्वाच्च। सत्यम्। द्वितीयस्येत्यप्यनुवर्त्तते, नित्यं द्वितीयस्येति तदर्थः। धातुसञ्ज्ञाप्रवृत्तिकाले इति यावत्। एतच्च तदनुवृत्तिसामर्थ्याल्लभ्यते। न चैवमजादेरित्यस्यानुवृत्तिर्मास्त्विति वाच्यम्। इन्दिद्रीयिषतीत्यत्र दकारस्यापि द्वित्वनिषेधापत्तेः। न चैवमपि चन्दिद्रीयिषतीत्यत्र दोषः स्यादेवेति वाच्यम्। अजादेरिति हि कर्मधारयात्पञ्चमीत्युक्तम्। इह च अच इत्येवानुवर्त्यमेकदेशे स्वरितत्वप्रतिज्ञानात्। अथवाऽऽदेरित्यप्यनुवर्त्तताम्, तच्च नावयवपरम्, किन्तु पूर्ववर्त्तिमात्रपरं, शब्दाधिकाराश्रयणात्। नन्वेवमुत्तरार्थतया द्वितीयग्रहणस्य सार्थकत्वे स्थिते 'द्वितीयस्येति न वक्तव्यं भवति'' इति भाष्यं विरुध्येतेति चेत्? न, यत्र सूत्रे पठितन्तत्र मास्त्विति तदाशयात्।

---

नात्। "अज्झन" इति दीर्घस्तु न, हनादिसाहचर्येणार्थवदजन्ताङ्गस्यैव तेन दीर्घविधानात्। द्वितीयशब्दपूर्वभागस्याङ्गत्वे ऽप्यनर्थकत्वात्। अङ्गत्वन्तु विकरणविशिष्टे ऽनर्थकेऽपि इष्टमेव। तस्मात् "एकाचो द्वे" इति सूत्रशेषभाष्योक्तन्यायेनोत्तरणिचमादाय प्राक्तनसमुदायस्यैवाङ्गत्वमुचितम्, द्विःप्रयोगत्वाद् द्वितीये ऽपि ततो विहितत्वबुद्ध्यनपायात्। न चैवं समुदायस्यैवेति कुतः पूर्वसनमादाय धातोरप्यङ्गत्वे "अज्झन" इति दीर्घापत्तिरिति वाच्यम्। तस्यानर्थकत्वात्। आटिटदित्यादौ गुणस्तु बहिरङ्गस्य चङ्निमित्तद्वित्वस्यासिद्धत्वान्न। "दीर्घो लघोः" इति दीर्घस्तु न, चङ्परे णौ यल्लघु इति भाष्यमते ऽप्राप्तेः, व्याख्यान्तरं त्वेतद्दोषादेवासङ्गतम्। अस्मादेव भाष्यप्रयोगाच्चङ्परणि भिन्न एव लघुस्तत्र गृह्यत इति न दीर्घ इत्याहुः।

लावस्थायामिति। द्विलकारकनिर्देशादिति भावः। प्रथममिति। द्वित्वादिति शेषः। द्वितीयस्येति। एकाच इति शेषः। अनुवृत्तिर्मास्त्विति। द्वितीयस्येत्यस्यावृत्त्या नित्यन्द्वितीयस्येत्यर्थलाभ इत्यभिमानः। दकारस्यापीति। रेफस्य तु निषेधे ऽप्यक्षतिरिति भावः। न चैवमपीति। धातोरादिभूतादचः परा नित्यन्द्वितीयस्यैकाचोऽवयवभूताः संयोगादयो न्द्रा द्विर्नेत्यर्थादिन्दिद्रीयिषतीत्यादौ न दोषः। प्रकृते च निषेधाप्रवृत्तिरूपो दोष इति भावः।

पूर्ववर्त्तिमात्रपरमिति। पूर्ववर्त्यचः परा न्द्रा इत्यर्थः। अवयवपरत्वे हि धातोरादिभूतादच इत्यर्थः स्यादिति भावः। अत्र केचित् चन्द्रीयतेः सनि "नन्द्राः" इति निषेधप्रवृत्तौ न मानम्। न च संयोगसञ्ज्ञासूत्रे भाष्ये,

**कणरणेत्यादि** । अत्र प्राचो ग्रन्थं व्याचक्षाणा आहुः । अजीहिठदित्यत्र उपधाह्रस्वे एच इकि तस्य स्थानिवत्त्वाद् द्वित्वेऽभ्यासह्रस्वदीर्घत्वादीति; तन्न, "ओः पुयण्" इति ज्ञापकस्य अचिकीर्तदित्यत्रातिव्याप्तिवारणाय विशेषविषयताया भाष्ये एव स्पष्टत्वेन स्वयमपि प्राक् तथैव वर्णितत्वेनेह स्थानिवद्भावायोगात् । विशेषश्चावर्णवदुत्तरखण्डत्वमुवर्णादेशत्वं वेत्यन्यदेतत् । एतेन "स्तौतिण्योः" इति सूत्रे सिषेचयिषतीत्यत्र सिचेर्हेतुमण्णौ गुणे सनि इटि गुणायादेशयोः कृतयोर्णौ कृतस्य स्थानिवत्त्वेन सिच्शब्दस्य द्वित्वमिति वदन् न्यासकारोऽपि प्रत्युक्तः ।

अत एव उक्तन्यासबलेन ज्ञापकस्य सामान्यविषयत्वम् , अचिकीर्तदित्यस्य सिद्धये अनित्यताञ्च शरणीकुर्वन् सीरदेवोऽपि प्रत्युक्तः । अजीहिठत् सिषेचयिषतीत्यादिरूपन्तु इकारैकारविशिष्टस्य द्वित्वेऽपि सिध्यतीति स्पष्टमेव । एतच्च सर्वं सुठधातौ प्रपञ्चितं माधवेनेति दिक् ।

**अपीप्यदिति** । णौ कृतस्योपधालोपस्य स्थानिवत्त्वात्प्यायशब्दस्य द्वित्वे हलादिःशेषे ईत्वम् । इहाग्लोपित्वादलघुपरत्वाच्च सन्वदित्वदीर्घाप्रसेरीत्वं विधीयते । **व्लेपयतीति** । व्ली वरणे । रीङ् क्षये । क्नूयी शब्दे । क्ष्मायी विधूनने ॥

**"तिष्ठतेरित्"** ॥ इहातिष्ठिपदिति प्राचो ग्रन्थं व्याचक्षाणाः णौ कृतस्य तिष्ठतेरित्त्वस्य स्थानिवद्भावात्स्थापूशब्दस्य द्वित्वमित्याहुः । तदस्मदुक्तरीत्या प्रक्रियायामवर्णवदुत्तरखण्डत्वेन वस्तुतः सम्यगेव । किं तु तेषां परस्परव्याघातावहम् । परिनिष्ठितरूपेऽवर्णपरतायास्तैरुपजीवनात् । कथमन्यथा उवर्णादेश एवेति बोपदेवमतं भाष्यमतत्वेन प्रागयूयुजन्निति सुधीभिराकलनीयम् । श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । अतस्थपत् ।

---

बहूनां सन्निपाते द्वयोः संयोगसञ्ज्ञायामिन्दिद्रीयिषतीत्यत्र दोषमाशङ्क्य न बाज्विधेरिति समाहितम् । अचः परस्य निषेधविधिरिति तदर्थं इति तदेव भाष्यं मानमिति वाच्यम् । अजादेरिति वर्तते इति तद्व्याख्यानभाष्ये उक्तत्वेन तस्यामानत्वात् तस्य भाष्यस्य भङ्ग्या व्याख्याने न मानमित्याहुः ।

णौ कृतस्येति । इदं वृत्त्यनुसारेण । अभ्यासेत्वसन्नियोगशिष्टोपधालोपस्य द्वित्वोत्तरमेव प्रवृत्तेरिति दिक् ।

**पुकोऽपवाद इति**। एवञ्च पाल रक्षणे इति धातुना पालयतीति रूपे सिद्धे लुगागमस्य पुग्निवृत्तिरेव फलमिति भावः। एवं 'धो विधूनने जुक्' इत्यत्रापि बोध्यम्। वाजयतीति रूपस्य वज गताविति धातुना सिद्धत्वात्।

**विभाषा लीयतेरिति**। आत्वविधायकं स्मारितम्॥

**"लीलोः"॥ लीयतेरिति**। ली, श्लेषणे क्र्यादिः। लीङ् श्लेषणे दिवादिः। उभयोरपि यका निर्देशो न तु श्यना। तथा हि सति लीङ् इत्येवावक्ष्यत्। एतच्च "विभाषा लीयतेः" इति सूत्रे प्राचाङ्ग्रन्थे स्पष्टम्। "लीलोः" इत्यस्य वृत्तावपि तथैवोचितम्। सूत्रे हि लीलीङोर्द्वयोरपि ग्रहणं निरनुबन्धकपरिभाषायाः प्रत्ययविषयत्वाद् इति वदन्ति।

**प्रयोज्यकर्त्रीति**। यद्यपि प्रथमणिजर्थं प्रति मनु(१)ष्यवागेव प्रयोजिका, अत एवात्वं प्रवृत्तम्, तथापि द्वितीयणिजर्थाभिप्रायेणेदमुक्तम्।

---

तथैवेति। यका निर्देश एवेत्यर्थः। इति वदन्तीति। अत्रारुचिः "दिव औत्" सूत्रस्थ(२)भाष्यविरोधः। अन्ये तु निरनुबन्धकत्वात् क्र्यादेरेव

---

(१) **मनुष्यवागेव प्रयोजिका इति**। अत्रेत्थं योजना-राजा विस्मयते तं मनुष्यवाक् प्रेरयते इति मनुष्यवाक् राजानं विस्मापयते। तत्र प्रथमणिचि आत्वपुकौ तां सिंहः प्रेरयति इति द्वितीयणिचि तु स्मिप्रकृतिकण्यन्तत्वाभावेनात्मनेपदाभावे सिंहो मनुष्यवाचा राजानं विस्मापयतीति रूपम्। ततः शतृप्रत्ययः विस्मापयन्निति रूपं भवतीत्यर्थः।

केचित्तु—प्रयोज्यकर्त्री इति मूले उक्तम्। तथाच प्रयोज्यस्य कर्त्री प्रयोज्यकर्त्रीति यावत् इति विगृह्य प्रथमणिजभिप्रायेणैवेदं सुयोजमित्याहुः।

(२) **भाष्यविरोध इति**। इत्थं च तत्र भाष्यम्। दिव औत्वे धातोः प्रतिषेधो वक्तव्यः। अक्षद्यूरिति। विशेषस्यानुपादानात्तत्र प्राप्नोति इति कैयटः। अक्षद्यूरित्यत्रोठि कृते एकदेशविकृतस्यानन्यत्वात् औत्वप्रसङ्गः इत्याशङ्क्य अधात्वधिकारात्सिद्धम्। अधातोरिति वर्तते, क्व प्रकृतम्। "उगिदचां सर्वनामस्थानेऽधातोः" इति। अधात्वधिकारात्सिद्धमिति चेत्? नपुंसके दोषो भवति। काष्ठतक्षि, कूटतक्षि। "नपुंसकस्य झलचः" अधातोरिति प्रतिषेधः प्राप्नोति इति दोषमभिधाय अननुबन्धकग्रहणे न सानुबन्धकस्येति समाहितम्। अस्यायं भावः—दिविति प्रातिपदिकमननुबन्धकमव्युत्पन्नम्। व्युत्पत्तिपक्षेऽव्यवयवानां प्रत्ययादीनां सानुबन्धकत्वं न प्रातिपदिकस्येति। सानुबन्धकपरिभाषायाः प्रत्ययविषयत्वस्वीकारे भाष्यविरोधः स्पष्ट एव।

यदि तु अथवा सम्बन्धमनुवर्तिष्यते इत्यग्रिमभाष्यं स्वीक्रियते। "उगिदचाम्" इत्यनेन "दिव औत्" इत्यत्र अधातोरित्यनुवर्तते। उगिदचामिति निवृत्तमिति च स्वीक्रियते। तदा परिभाषां विनैवेष्टसिद्धिरिति न भाष्यविरोध इत्याहुः।

**अध्यजीगपदिति ।** इह णिनिमित्तस्य गाङो द्वित्वे कर्तव्ये स्थानिवद्भावो निषेधो वा नास्ति, सति हि तस्मिन् "अजादेर्द्वितीयस्य" इति णिच एव द्वित्वं स्यात्, ततश्च न प्रक्रियायां न वा परिनिष्ठिते रूपे ऽवर्णवदुत्तरखण्डमस्तीति कीर्त्तयतिसाम्यात् ।

**अपादिरिति ।** तेन मित्त्वाद् ह्रस्व इति भावः । स्यादेस्तु मित्त्वं नास्तीत्युदाहरति—**चापयतीत्यादि ।**

**इति वार्थ इति ।** व्याख्यानद्वयस्यापि भाष्यारूढत्वादिति भावः । **षकारस्येति ।** रेफस्य "नन्द्राः" इत्यनेन वारणादिति भावः । **सन्नन्ते प्रवर्त्तेते इति ।** यद्यपि सन्नन्तं धात्वन्तरम्, तथापि वचनसामर्थ्यात्तत्र प्रवृत्तिरिति भावः । **तृतीयाभावेनेति ।** इहोपन्यासस्तु आद्यव्याख्यानमादाय प्रकृतोपयोगादिति भावः । इह मूल एव रूपद्वयव्युत्पादनेन प्राचो ग्रन्थोऽपि अर्थाद् व्याख्यातः । प्राचो ग्रन्थं व्याचक्षाणास्तु तद्ग्रन्थस्य तत्पौत्रग्रन्थस्य च प्रामादिकतां महता प्रबन्धेन प्रत्यपीपदन् । तथा च तदीयो ग्रन्थः, क्वचित्तु ऐर्षिष्यदिति षकारादेरपि द्वित्वमुदाह्रियते, तद्भ्रान्तप्रक्षिप्तत्वादुपेक्ष्यम् । भ्रमे च कारणमथवा तृतीयस्यैकाचः षकारस्येत्यर्थ इति प्राचो व्याख्यानम् ।

तथा हि—यदि तृतीयवर्णस्येति व्याख्यायेत, तदा ईर्ष्यिषिषतीति सनो द्वित्वन्न स्यात् । यदि तु तृतीयस्यैकाच इति यथाश्रुतं व्याख्यायेत ततः कथमैर्षिष्यदिति षकारादेर्द्वितीयस्यैकाचः स्यात् । न च तृतीयस्य वर्णस्येति व्याख्यातुमुचितम्, अध्याहारप्रसङ्गात् । तृतीयस्यैकाच इति ग्रन्थस्वारस्यभङ्गाच्च । तथा च कस्य तृतीयस्य, केचिदाहुर्व्यञ्जनस्येति । अपरे पुनराहुस्तृतीयस्यैकाच इति वृत्तिन्यासकारहरदत्तौ व्याख्याताम् । **तृतीयस्येति ।** तृतीयव्यञ्जनसहितस्यैकाच इत्यर्थः । अत्र षकारस्य द्विर्वचनन्न भवति ।

---

**लीत्यस्य ग्रहणे प्रतिपदोक्तत्वाच्च लातेरेव ग्रहणे धातुद्वयेन रूपद्वयसिद्धौ अन्यतरस्याङ्ग्रहणसामर्थ्यादत्र व्यवस्थापकन्यायाप्रवृत्तिरित्युभाभ्यामप्युभयग्रहणं लीलीङोर्लातेः कृतात्वलीयतेश्चेति । हेतुमण्णावेव पूर्वोत्तरसाहचर्येणास्य प्रवृत्तेश्चौरादिकस्य न ग्रहणमित्याहुः ।**

णिनिमित्तस्येति ।**विषयसप्तम्यामपि तद्धिते द्विगुनिमित्तत्वमस्तीति भावः ।**

भाष्यारूढत्वादिति । **"न न्द्राः" इति सूत्रस्थभाष्यारूढत्वादित्यर्थः ।**

अपरे पुनरित्यस्मिन् पक्षे ईर्ष्यतेः सनि कृते इति व्याख्येयम् । अन्यथा तत्सम्बन्धिनस्तृतीयस्यैकाचो ऽसम्भवात् । माधवोऽप्येवम् । तस्मादैर्ष्यियदित्येकमेवात्र रूपं साधीयो न त्वैर्षिष्यदिति, ण्यन्ते तृतीयस्यैकाचो ऽसम्भवात् । न चाटि कृते तमेवापेक्ष्य षकारादिस्तृतीय एकाजिति वाच्यम्, अन्तरङ्गत्वादाटश्चेति वृद्ध्या तद्विघातात् । अन्तरङ्गत्वादेव वृद्धेरसिद्धत्वमपि नास्ति । नापि स्थानिवद्भावः, वृद्धेः पूर्वस्य पूर्वस्माद्वा विधेरभावादिति युक्तमुत्पश्याम इति । इह क्व चित्त्वित्यादिना युक्तमुत्पश्याम इत्यन्तेन तदीयग्रन्थेन मूलटीकयोः को दोष उपन्यस्त इति विभावनायामुक्तरूपं प्रकृतवार्तिकेन न सिद्ध्यतीति मूले दोषः । टीकायास्तु षकारस्य तृतीयैकाच्त्वोक्तिरयुक्तेति दोष इति लभ्यते । तत्र न तावदाद्यः । प्रकृतवार्त्तिकस्य तत्राप्रवृत्तावपि "अजादेर्द्वितीयस्य," "न न्द्राः" इति सूत्राभ्यां रूपसिद्धेरप्रत्यूहत्वात् । नापि द्वितीयः । सन्नन्ताभिप्रायेण टीकाग्रन्थस्य सौष्ठवात् । सर्वञ्चैतदिह मूल एव ध्वनितम् । मात्सर्य्यमुत्सार्य गुणगृह्यैराकलनीयम् ।

**निवृत्तेति** । (१)तथा चोक्तम्—

"निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" इति ।

**तेनेति** यत्तु । चक्षिङो ङित्करणमनुदात्तेत्त्वप्रयुक्तस्यात्मनेपदस्यानित्यताञ्ज्ञापयतीत्युक्त्वा 'तेन प्रार्थयन्ति' इति सिद्धमिति माधवादिभिरुक्तं तदतिस्थवीयः, तस्यागर्वादात्मनेपदविधानात् । यदपि तरङ्गिण्याङ्गणकृतमात्मनेपदमनित्यमिति ज्ञापनार्थञ्चक्षिङो ङकार इति; तदपि न, चक्षिङो गणकृतात्मनेपदस्यासम्भावितत्तया मूलशैथिल्यात् ।

यदप्याहुः-प्रार्थनं प्रार्थः तत्कुर्वन्ति प्रार्थयन्तीति; तदपि न, धातुसञ्ज्ञानिमित्ते प्रत्यये कर्तव्ये उपसर्गाणां पृथक्करणस्य ज्ञापयिष्यमाणतया अर्थवेदसत्यानामित्यापुको दुर्वारत्वादिति दिक् ॥

इति हेतुमण्ण्यन्तप्रक्रिया ॥

सौष्ठवादिति । षकारस्येति एवकारइतिवत् समुदायात्पर इति भावः ॥

इति ण्यन्तप्रक्रिया ॥

(१) तथा चोक्तमिति । अर्थं उपयाच्यायाम् इत्यस्य आगर्वीयत्वादात्मनेपदेन भाव्यम् इति ।

"धातोः कर्मणः" ॥ इच्छायामिति श्रुतत्वात् कर्मत्वं समानकर्तृकत्वञ्च तदपेक्षमेव गृह्यत इत्याशयेनाह—इषिकर्मण इत्यादि । घिस्नोरिति । प्रागुक्तव्याख्याविकल्पादिति भावः ॥

"अज्झन" ॥ गमः सामान्येन ग्रहणाद् गम्लृ गतावित्यस्मात्सञ्जिगंसते इत्यत्रापि स्यादत आह—अजादेशगमेरिति । "सनि च" "इङश्च" इति सूत्राभ्यां विहितस्येणिङोरादेशस्य, "इणवदिक" इति इक आदेशस्य चेत्यर्थः । एतच्च सूत्रे ऽज्ग्रहणाल्लभ्यते । तथाहि, इह "सनि" इत्येव वक्तव्यम् । दीर्घश्रुत्योपस्थितेन "अचः" इत्यनेनाङ्गस्य विशेषणात् अजन्ताङ्गस्य दीर्घः । चिचीषति । ततः—हनिगम्योः । एवञ्चाज्ग्रहणमतिरिच्यमानं प्रवृत्तिभेदेन गमेर्विशेषणार्थमजन्तस्याङ्गस्य दीर्घो भवति । अजादेशगमेश्चेति ।

"इको झल्" ॥ ऋदन्तादिति । चिकीर्षतीत्यादौ तु "अज्झनगमाम्" इति दीर्घे कृते नेदं प्रवर्त्तते, उपदेशाधिकारात् लाक्षणिकत्वाद्वाऽत एवोदाहरति—दुध्वूर्षतीति । ध्वृ, कौटिल्ये । "अज्झन" इति दीर्घे "उदोष्ठ्यपूर्वस्य" इत्युत्वं रपरत्वं "हलि च" इति दीर्घः ।

---

प्रवृत्तिभेदेनेति । आवृत्त्येत्यर्थः । अजन्तस्येति । अत्रार्थे प्रत्याहारबहुवचनयोः प्रमाणत्वं बोद्ध्यम् ॥

लाक्षणिकत्वाद्वेति । (१)वर्णग्रहणेऽपि तत्प्रवृत्तेरेतत्सूत्रस्थभाष्यसम्मतत्वात्तत्राऽप्रवृत्तिज्ञापकस्यानित्यत्वे एव तात्पर्यमिति भावः । सन्निपात-

---

कण्ठसक्तमृदुबाहुबन्धनम् न्यस्तपादतलमग्रपादयोः ।
प्रार्थयन्ति शयनोत्थितं प्रियास्तं निशात्ययविसर्गचुम्बनम् ॥

इति १९ सर्ग० । २०वं० श्लोके प्रार्थयन्ति इतिप्रयोगोऽसाधुरेव स्यादिति तं समर्थयितुमुपक्रमते—निवृत्तेत्यादिना । वस्तुतस्तु प्रार्थयन्त इत्येवपाठः भूतार्थकप्रत्ययानामुपक्रमात् । तथाच न काप्यनुपपत्तिरिति दिक् ।

इति ण्यन्तप्रकरणम् ।

---

( १ ) वर्णग्रहणेऽपीति । "आदेच उपदेशेऽशिति" इति सूत्रस्थमुपदेशग्रहणमेतज्ज्ञापकम् । तद्यथा—"लिटि धातोः" इतिसूत्राद्धातोरित्यनुवर्त्य एजन्तस्य धातोरात्वविधानेन 'गोभ्याम्' 'नौभ्याम्' इत्यत्र दोषवारणे सिद्धे, पुनरुपदेशग्रहणम् 'अचैषीत्' 'अनैषीत्'

यत्तु प्राचा "ऋतश्च संयोगादेः" इत्यत्र "लिङ्सिचोः" इति प्रकृतेऽपि "इट् सनि वा" इत्यतो मण्डूकप्लुत्या सनीत्यप्यनुवर्त्य दिध्वरिषतीति रूपान्तरमुदाहृतम् ; तन्न, सनीत्यस्यानुवृत्तेरनाकरत्वात् आत्मनेपदेष्वित्यनुवृत्तेः परस्मैपदान्तोदाहरणस्योक्तिसम्भवाभावाच्च ॥

**"स्मिपूङ्"** ॥ स्मिपूङोर्ङकारोच्चारणं पूञो व्यावृत्त्यर्थं तेन तस्य पुपूषतीत्येव, "सनि ग्रह" इतीण्निषेधात् । अत्राञ्जेरशेश्च ऊदित्त्वाद्विकल्पे प्राप्ते ऋस्मिङोस्तु अनिट्त्वादप्राप्ते वचनम् । **सिस्मयिषत इति** । "स्तौतिण्योः" इति नियमान्न षः ।

**शैषिकादित्यादि भाष्यम्** । शेष भवः शैषिकः । अध्यात्मादित्वाट्ठञ् । मतुबर्थे भवो मतुबर्थीयः । गहादित्वाच्छः । मतुबर्थो ऽस्यास्तीति मतुबर्थिकः । "अत इनिठनौ" इति ठन् ॥

इति सन्नन्तप्रक्रिया ॥

---

परिभाषाविरोधान्नेत्यपि बोद्धव्यम् । ऋतश्च संयोगादेरित्यत्रेति । इड्विधायके सूत्र इत्यर्थः ।

भाष्यमिति । (१)सन्विधायकसूत्रे इति शेषः । शेषे-शेषाधिकारे ॥

इति सन्नन्तप्रक्रिया ॥

---

इत्यादौ आत्वाभावार्थं भवति । तत्रापि लक्षणप्रतिपदोक्तपरिभाषया वारणसम्भवे तु तद्न्यार्थं सदुक्तार्थज्ञापकम् । यदि च तत्सूत्रोक्तशेखरदिशा धातुग्रहणानुवृत्तेरनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव "न धातुलोप" इति सूत्रे धातुत्वोक्त्या "उदीचामातः" इत्यत्र इकारघटने धातुत्वाभावादात्वाप्राप्त्या दोषावहत्वेन एशिरेजित्यादौ च धातुपदाननुवृत्तावपि अशितीति प्रसज्यप्रतिषेधेन शित्परत्वयोग्यस्यैवात्वविधानेन दोषाभावाच्चात्र सूत्रे धातुग्रहणासम्बन्धेनोपदेशग्रहणस्य गोभ्यामित्याद्यर्थमावश्यकत्वेनोक्तज्ञापकत्वासम्भवे तु "ह्वामश्च" इति सूत्रज्ञापकं बोध्यम् ।

केचित्तु—उपदेशग्रहणेन वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिं ज्ञापयन्ति । तन्न समीचीनम् । अदोमवदित्यादौ "ओत्" इत्यनेन प्रगृह्यत्वमाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषासमाधानपरक-"ओत्" इति सूत्रस्थभाष्यविरोधादिति दिक् ।

**( १ ) सन्विधायकसूत्र इति** । "शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥१॥ इति "धातोः कर्मणः" इति सूत्रे भाष्ये उक्तम् ।

**"यस्य हलः"**॥ सङ्घातग्रहणमिति। तेन 'अहर्यीत्' 'अमव्यीत' इत्यादौ नातिप्रसङ्गः। किं च अर्थवद्ग्रहणपरिभाषया पुत्रकाम्येत्यत्र (१)नातिप्रसङ्ग इति भावः।

(२)यकारपरस्येति। एतेनार्य्यमाख्यत् आर्यत इति प्राचामुदाहरणं व्याख्यातम्, भाष्योदाहरणस्य सामान्यापेक्षज्ञापकत्वात्॥

**"नित्यङ्कौ"**॥ नित्यशब्दोऽवधारणार्थ इत्याह—**कौटिल्य एवेति**। तक्रकौण्डिन्यन्यायस्यानित्यताऽनेन ज्ञाप्यते। तेन "पूजितो यः

---

किञ्चेति। **अन्यच्चेत्यर्थः**।

अनित्यताऽनेनेति। **अन्यथा गत्यर्थेभ्यः कौटिल्ये विशेषविहितेन यङा क्रियासमभिव्याहारार्थयङस्तक्रकौण्डिन्यन्यायेन बाधे सिद्धे नित्यग्रहणव्यर्थं स्यादिति भावः। इदमत्रत्यकैयटानुरोधेन। परे तु क्रियासमभिव्याहारादेर्यङ्द्योत्यतया तद्वृत्तेर्धातोरित्यर्थेनानुवाद्यत्वान्न विधेयत्वं, तक्रकौण्डिन्यन्यायश्च विधेयविषयो ऽचरितार्थविषयश्चेति स्पष्टं मिदचोऽन्त्य-**

---

तत्र सन् प्रसङ्गेनान्योऽप्यनिष्टप्रत्ययो निवार्यते प्रतिव्यक्तिलक्षणप्रवृत्तौ वाचनिकोऽयन्निषेधः। आकृतिपक्षे तु सकृल्लक्षणप्रवृत्तौ तत्प्रवृत्तेः प्राक् तत्प्रत्ययान्तप्रकृत्यसम्भवात् तदन्तात्प्रत्ययोत्पत्तिर्न भवतीति न्यायानुवादोऽयं सम्पद्यते। तत्रशैषिकाच्छैषिकः सरूपो न भवतीति शालायां भवः शालीयो घटः, तत्र भवमुदकमिति पुनश्छो न भवति, विरूपस्तु स्यादेव अहिछत्रे भवः आहिछत्रः, आहिछत्रे भवः आहिच्छत्रीयः। तथा दण्डो अस्यास्तीति दण्डिकः सोऽस्यास्तीति पुनष्ठन् न भवति। विरूपस्तु—भवति। दण्डिमती सेनेति। सन्नन्ताच्च सनिष्यते। सरूप इत्यपेक्ष्यते। सारूप्यं चात्र सादृश्यं लक्ष्यते—तच्चार्थद्वारकम्—इति इच्छासन्नन्तादिच्छासन्नेति तदर्थः। स्वार्थसन्नन्तात्तु स्यादेव 'जुगुप्सिषते' इति।

इति सन्नन्तप्रक्रिया।

---

( १ ) **नातिप्रसङ्ग इति**। अन्यथा लुनातीत्यत्र लादेशमाशङ्क्य अर्थवत्परिभाषया समाधाय वर्णग्रहणादर्थवत्परिभाषाप्रवृत्तिर्न स्यादिति "लस्य" इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन पुत्रकाम्येत्यादौ दोषः स्यादेवेति भावः।

( २ ) **यकारपरस्येति**। "नन्द्राः" इति निषेधमाशङ्क्याह—यकारपरस्येति। यकारः परो यस्मादिति यकारपरः स चासौ रेफश्चेति कर्मधारयः। अत्रोपपत्तिमाह—आरार्य्यते इति भाष्यप्रयोगादिति। उक्तोदाहरणस्य द्वित्वं विनाऽसम्भवात्। 'नचोदाहरणमादरणीयम्' इति भाष्योक्तिस्तु 'सुष्पुपाख्य' इति प्रयोगादेव यण् 'सेत्स्यति' इति यण् विधायकसूत्रवैयर्थ्यमेवेति कुकल्पना प्रसङ्गावसरे संघटते इति न विरोध इति संक्षेपः।

सुरासुरैः" इत्यादौ भूते क्तः सिद्ध्यति । अन्यथा "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्त्तमाने क्तेन बाद्ध्येत । ततश्च कर्त्तरि तृतीया न स्यात् "क्तस्य च वर्त्तमाने" इति षष्ठ्या बाधात् ॥

**जपजभदह** । पस, गतौ सौत्रः । दन्त्यान्तोऽयमिति स्पश, बाधनस्पर्शनयोरिति धातौ माधवः । **सञ्चेस्क्रीयत इति** । अत्र प्राचो ग्रन्थे पठ्यते—सुटो बहिरङ्गत्वान्न संयोगादित्वेन गुण इति; तन्न, परत्वाद्यङि कृते ततो द्वित्वे "अड्भ्यासव्यवायेऽपि" इत्यभ्यासाङ्गस्यासंयोगादित्वमदन्तत्वञ्च नास्तीति गुणप्राप्तेरभावात् । न च संकृइत्यस्यामेवावस्थायान्द्वित्वात्र-

---

**सूत्रे भाष्ये । नाप्यन्नाऽचारितार्थ्यम्  क्रियासमभिव्याहाराविवक्षायां चारितार्थ्यात् । नित्यग्रहणन्त्वनभिधानमाश्रित्य भाष्ये (१)प्रत्याख्यातमित्याहुः ।**

परत्वादिति । **द्वित्वादित्यादिः(२) "पूर्वं धातुः साधनेन" इति भाष्यमते इदम् । पूर्वन्धातुरुपसर्गेणेति पक्षे शङ्कते**—न चेति । द्वित्वादिति । **द्वित्वनिमित्तयङ इत्यर्थः** । परत्वादिति । **उत्कृष्टत्वादन्तरङ्गत्वादित्यर्थः** । सुटि कृते इति ।

---

( १ ) **प्रत्याख्यातमिति** । उत्तरयोर्विग्रहणे विशेषासम्प्रत्ययाद्भिःयग्रहणानर्थक्यम् । न हि कुटिलं क्रामति इति 'चङ्क्रम्यते' इति गम्यते भाष्ये उक्तम् । अस्येदं तात्पर्यम्—चङ्क्रम्यते इत्यस्माद्योऽर्थः प्रतीयते नासौ कुटिलं क्रामतीति वाक्येन प्रत्याययितुं शक्यते इति तदर्थानभिधानादेव वाक्यं न भविष्यति । अर्थान्तरे च कौटिल्यमात्रप्रतिपादने वाक्यं निवारयितुमशक्यमिति नित्यग्रहणमनर्थकमित्यर्थः ।

( २ ) **पूर्वं धातुः साधनेनेति भाष्यमते इति** । अत्रायं भावः—प्राधान्येन क्रियाप्रथममुपतिष्ठते, तस्याः साधनांशे नित्यसाकाङ्क्षत्वेन ततः साधनत्वेन साधनमुपतिष्ठते, ततः साध्यविशेषः ततः साधनविशेषः ततस्तदवान्तरसाध्यसाधनोपस्थितिः क्रमेणैव-तत्तच्छब्दप्रादुर्भावस्तथा चोपसर्गप्रादुर्भावप्रयोजकानुभवादिरूपसाध्यविशेषोपस्थितेः पूर्वमेव लकारप्रादुर्भावप्रयोजकसाधनोपस्थितिरूपैकनिमित्तस्य पूर्वं सत्त्वेनोपसर्गप्रादुर्भावात् पूर्वमेव कर्मलकारप्रादुर्भावः । सञ्चस्कारेत्यादौ तु द्वित्वस्य शब्दमात्रनिमित्तकत्वेन ततः प्रागेव सुण्निमित्तकस्य भूषणाद्यर्थस्योपस्थित्या अन्तरङ्गत्वात् द्वित्वात्पूर्वमेव सुट् । तथा च "सुट् कात्पूर्वः" इत्यत्र भाष्यम् । "धातूपसर्गयोः कार्यमन्तरङ्गम्" कुत एतत्पूर्वं धातुरुपसर्गेण युज्यते, पश्चात् साधनेन, इत्युक्त्वा नैतत्सारं 'पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण' साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टीति । "इपञ्जमतिक" "गतिर्गतौ" इत्यादिसूत्रेषु भाष्येऽप्ययमर्थः स्पष्ट इति दिक् ।

रत्वात्सुटि कृते रीङ्प्रवृत्तेः प्राग् (१) गुणप्राप्तिः शङ्कनीया। "अडभ्यासव्यवायेऽपि" इत्यस्यारम्भेणाडभ्यासयोः कृतयोरेव सुट् न प्रागिति निर्णयात्। अत एव सञ्चस्करतुरित्यत्र संयोगादित्वाभावाद् गुणो न सिद्ध्यतीति संयोगोपधग्रहणं कर्त्तव्यमित्युपसंख्यायते। न च भाष्यकृता पूर्वंन्धातुरुपसर्गेणेति दर्शने सुटोऽन्तरङ्गत्वोक्तेः ससुट्कस्यैव द्वित्वाभ्युपगमात् गुणप्राप्तिरिति वाच्यम्, तन्मते सुटो बहिरङ्गत्वादिति परिहारविरोधादित्यास्तान्तावत्॥

---

ततो यङीति शेषः। रीङ्प्रवृत्तेः प्रागिति। अपवादत्वादिति भावः। द्वित्वाच्च परत्वादिति बोध्यम्। गुणेति। "यङि च" इत्यनेनेति भावः। कृतयोरेव सुडिति। गुणनिमित्तोपसर्गयोग इत्यर्थः। एवञ्च 'पूर्वं धातुः साधनेन' इति पक्षे एवेति पूर्वं यङि द्वित्वे रीङि सुट्प्राप्त्या दोष इति भावः। अत्रैवार्थे ज्ञापकान्तरमाह–अत एवेति। संयोगादित्वाभावादिति। पश्चात्सुटि अङ्गस्य संयोगादित्वाभावादित्यर्थः। भाष्यकृतेति। तेन ह्यडभ्यासव्यवायेऽपीति प्रत्याख्यायते। अत्र पक्षे स्वमते गुणाभावस्तु "यङि च" इत्यत्रापि नित्यग्रहणानुवृत्त्या बोध्यः, भाष्योक्तनिषेधवचनादेव वा। प्रत्ययोत्पत्तिवेलायां संयोगादित्वस्य विवक्षणात्सञ्चस्करतुरित्यादौ गुणसिद्धिः सस्वरतुरितिवदिति बोध्यम्।

---

(१) गुणः प्राप्तिरिति। न च 'सं कृ' इत्यस्यामवस्थायाम् द्वित्वात्परत्वात्सुटि कृते संयोगादित्वेन रीङ्प्रवृत्तेः प्राक् गुणे कृतेऽनिष्टं स्यादिति वाच्यम्। "अडभ्यासव्यवायेऽपि" इत्यस्यारम्भे अडभ्यासयोः कृतयोरेव सुट्, न तु ततः प्रागिति सिद्धान्तात्। एतेन सुटो बहिरङ्गत्वान्न संयोगादित्वेन गुण इति केषाञ्चित् समाधानं परास्तम्। अभ्यासात्परस्य सुटि कृते साभ्यासस्याङ्गस्य संयोगादित्वमृदन्तत्वं च नास्तीति गुणप्राप्तेरभावात्।

ननु "अडभ्यासव्यवायेऽपि" "सुट् कात्पूर्वः" इति वार्तिकप्रत्याख्यानाय "पूर्वं धातुरुपसर्गेण युज्यते" इति पक्षं स्वीकृत्य भाष्यकृता 'सञ्चस्करतुः' इत्यादौ अन्तरङ्गत्वात्सुटि ससुट्कस्यैव द्वित्वाभ्युपगमात् 'सञ्चेस्क्रीयते' इति न सिद्ध्येत्। तत्र हि सुटि कृते रीङं बाधित्वा परत्वात् "यङि च" इति गुणे 'सञ्चस्कर्यते' इत्यनिष्टरूपप्रसङ्गात्।

यदि तु इष्टानुरोधेन 'पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण' इति पक्षाश्रयणेन रीङादेशं द्वित्वं च कृत्वा पश्चात्सुटि इष्टं रूपं सिद्ध्यतीत्युच्यते; तर्हि "अडभ्यासव्यवायेऽपि" वचनं स्वीकर्तव्यमेव स्यात्, इति चेत्तत्राहुः—"अभ्यास" इत्यादि वार्तिकं विनापि 'सञ्चस्करतुः' इत्यादिसिद्धये "पूर्वंन्धातुरुपसर्गेण युज्यते" इति पक्षो भगवता आश्रितः "अडभ्यासव्यवायेऽपि" एतावतोंऽशस्यैव प्रत्याख्यानम्। "सुट्कात्पूर्वं" इत्यधिकारसूत्रेऽपि सुट् इत्यस्यावश्यकता इति 'सञ्चेस्क्रीयते' 'समचेस्क्रीयत' इत्यादिसिद्धिस्तु वार्तिकापरत्वेति सुधीभिराकलनीयम्।